३ बहिर्मातृकान्यासः-

मातृकाः बालापूर्विकाः 'नमः हंसः' इत्यन्ताः स्वाङ्गेषु न्यसेत्।

४. अं नमः हंसः (शिरसि)
४. आं,, (मुखवृत्ते)
४. इं,, (दक्षनेत्रे)
४. ईं (वामनेत्रे)
४. उं,, (दक्षकर्णे)
४. ऊं,, (वामकण)
४. ऋं,, (दक्षनासापुटे)
४. ॠं,, (वामनासापुटे)
४. ऌं,, (दक्षकपोले)
४. ॡं,, (वामकपोले)
४. एं,, (ऊर्ध्वोष्ठे)
४. ऐं,, (अधरोष्ठे)
४. ओं, (ऊर्ध्वदन्तपंक्तौ)
४. औं,, (अधोदन्तपंक्तौ)
४. अं,, (जिह्वाग्रे) (मूर्ध्नि)
४. अः,, (कण्ठे) (वक्त्रे)
४. कं,, (दक्षबाहुमूले)
४. खं,, (दक्षकूर्परे)
४. गं,, (दक्षमणिबन्धे)
४. घं,, (दक्षकराङ्गुलिमूले)
४. ङं,, (दक्षकराङ्गुल्यग्रे)
४. चं,, (वामबाहुमूले)
४. छं,, (वामकूर्परे)
४. जं,, (वाममणिबन्धे)
४. झं,, (वामकराङ्गुलिमूले)
४. ञं,, (वामकराङ्गुल्यग्रे)
४. टं,, (दक्षोरुमूले)
४. ठं,, (दक्षजानुनि)
४. डं,, (दक्षगुल्फे)
४. ढं,, (दक्षपादाङ्गुलिमूले)
४. णं,, (दक्षपादाङ्गुल्यग्रे)
४. तं,, (वामोरुमूले)
४. थं,, (वामजानुनि)
४. दं,, (वामगुल्फे)
४.धं,, (वामपादाङ्गुलिमूले)
४. नं,, (वामपादाङ्गुल्यग्रे)
४. पं नमः हंसः (दक्षपार्श्वे)
४. फं,, (वामपार्श्वे)
४. बं,, (पृष्ठे)
४. भं, (नाभौ)
४. मं,, (जठरे)
४. यं,, (हृदये)
४. रं,, (दक्षकक्षे)
४. लं,, (गलपृष्ठे)
४. वं,,(वामकक्षे)
४. शं,,(हृदयादिदक्षकराङ्गुल्यन्तं)
४. षं,, (हृदयादिवामकराङ्गुल्यन्तं)
४.सं,,(हृदयादिदक्षपादाङ्गुल्यन्तं)
४.हं,,(हृदयादिवामपादाङ्गुल्यन्तं)
४. ळं,, (कट्यादिपादाङ्गुल्यन्तं)
४. क्षं,, (कट्यादिब्रह्मरन्ध्रान्तं)

अन्तर्मातृकान्यासः ।

४. अं नमः हंसः, आं नमः हंसः ++ अः नमः हंसः ॥ कण्ठे विशुद्धिचक्रे षोडशदलकमले ॥ ४. कं नमः हंसः, खं नमः हंसः ++ ठं नमः हंसः ॥ हृदये अनाहते द्वादशदलकमले ॥ ४. डं नमः हंसः, ढं नमः हंसः ++ फं नमः हंसः ॥ नाभौ मणिपूरे दशदलकमले ॥ ४. बं नमः हंसः, भं नमः हंसः ++ लं नमः हंसः ॥ लिङ्गमूले स्वाधिष्ठाने षड्दलकमले ॥ ४. वं नमः हंसः, शं नमः हंसः + + सं नमः हंसः ॥ गुदोपरि मूलाधारे चतुर्दलकमले ॥ ४. हं नमः हंसः, क्षं नमः हंसः ॥ भ्रुवोर्मध्ये आज्ञाचक्रे द्विदले ॥ ४. अं नमः हंसः, आं नमः हंसः + + क्षं नमः हंसः ॥ (५० वर्णाः) मूर्ध्नि सहस्रारे ॥

रत्यादिन्यासः- ऐं क्लीं सौः रत्यै नमः, मूलाधारे, ३ प्रीत्यै नमः, हृदये, ३. मनोभवाय नमः, इति मुखे न्यसेत् ॥

मूलखण्ड सप्तदशकन्यासः- ऐं क्लीं सौः ऐं ह्रीं श्रीं ऐं क्लीं सौः नमः, ब्रह्मरन्ध्रे, ३. ॐ नमो नमः (ललाटे) ३. भगवति नमः (भ्रूमध्ये) ३. श्रीमातङ्गीश्वरि नमः (दक्षनेत्रे) ३. सर्वजनमनोहरि नमः (वामनेत्रे) ३. सर्वमुखरञ्जिनि नमः (मुखे) ३. क्लीं नमः (दक्षश्रोत्रे) ३. ह्रीं नमः (वामश्रोत्रे,) ३. श्रीं नमः (कण्ठे) ३. सर्वराजवशङ्करि नमः (दक्षांसे,) ३. सर्वस्त्रीपुरुषवशङ्करि नमः (वामांसे) ३. सर्वदुष्टमृगवशङ्करि नमः (हृदये) ३. सर्वसत्त्ववशङ्करि नमः (दक्षस्तने) ३. सर्वलोकवशङ्करि नमः (वामस्तने) ३. त्रैलोक्यं मे वशमानय नमः (नाभौ) ३. स्वाहा नमः (स्वाधिष्ठाने) ३. सौः क्लीं ऐं श्रीं ह्रीं ऐं नमः (मूलाधारे) (न्यसेत्,)

प्रतिलोममूलमन्त्रखण्डन्यासः- ऐं क्लीं सौः सौः क्लीं ऐं श्रीं ह्रीं ऐं नमः मूलाधारे, ३. स्वाहा नमः स्वाधिष्ठाने, ३. त्रैलोक्यं मे वशमानय नमः नाभौ, ३. सर्वलोकवशङ्करि नमः वामस्तने, ३. सर्वसत्त्ववशङ्करि नमः दक्षस्तने, ३. सर्वदुष्टमृगवशङ्करि नमः हृदये, ३. सर्वस्त्रीपुरुषवशङ्करि नमः वामांसे, ३. सर्वराजवशङ्करि नमः दक्षांसे, ३. श्रीं नमः कण्ठे, ३. ह्रीं नमः वामश्रोत्रे, ३. क्लीं नमः दक्षश्रोत्रे, ३. सर्वमुखरञ्जिनि नमः मुखे, ३. सर्वजनमनोहरि नमः वामनेत्रे, ३. श्री मातङ्गीश्वरि नमः दक्षनेत्रे, ३. भगवति नमः भ्रूमध्ये, ३. ॐ नमो नमः ललाटे, ३. ऐं ह्रीं श्रीं ऐं क्लीं सौः नमः ब्रह्मरन्ध्रे।

अथामृताम्भोनिधिमध्यस्थमणिद्वीपमध्यगते कदम्बोद्याने मुक्ताकुसुममालिकाहरितपट्टवितानास्तरणवन्दनमालिकाद्यलङ्कृतं धूपधूपितं प्रज्वलत्प्रदीपपरम्परं चतुर्द्वारं मरकतमण्डपं विचिन्त्य, तस्य प्रागादिषु द्वारेषु—

ऐं क्लीं सौः सां सरस्वत्यै नमः, लां लक्ष्म्यै नमः, अं शङ्खनिधये नमः, पं पद्मनिधये नमः, इति सम्पूज्य—

ऐं क्लीं सौः, लां इन्द्राय वज्रहस्ताय सुराधिपतये ऐरावतवाहनाय सपरिवाराय नमः, (पूर्वे,) ३. रां अग्नये शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय सपरिवाराय नमः, (आग्नेये,) ३. टां यमाय दण्डहस्ताय प्रेताधिपतये महिषवाहनाय सपरिवराय नमः (दक्षिणे) ३. क्षां निर्ऋतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय सपरिवाराय नमः, (नैर्ऋते,) ३. वां

वरुणाय पाशहस्ताय जलाधिपतये मकरवाहनाय सपरिवाराय नमः, (पश्चिमे) ३. यां वायवे ध्वजहस्ताय प्राणाधिपतये रुरुवाहनाय सपरिवाराय नमः, (वायव्ये) ३. सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय सपरिवाराय नमः (वायव्ये) ३. सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय सपरिवाराय नमः, (उत्तरे,) ३. हां ईशानाय त्रिशूलहस्ताय विद्याधिपतये वृषभवाहनाय सपरिवाराय नमः, (ऐशान्ये), इति प्रागाद्यष्टासु दिक्षु शक्रादीनभ्यर्च्य, ऐं क्लीं सौः ॐ ब्रह्मणे पद्महस्ताय लोकाधिपतये हंसवाहनाय सपरिवाराय नमः (इन्द्रेशानयोः मध्ये) ३. श्रीं विष्णवे चक्रहस्ताय नगाधिपतये गरुडवाहनाय सपरिवाराय नमः, (निर्ऋतिवरुणयोः दिगन्तरे,) ३. ॐ वास्तुपतये ब्रह्मणे नमः, इति वास्तुनि चार्चयेत्।

अथ चन्दनपङ्कप्रकृतिके मण्डले क्षीरमिश्रितेन सिन्दूरादिना बिन्दुत्रिकोणपञ्चकोणाष्टदलषोडशदलाष्टपत्रचतुष्पत्रचतुरस्रात्मकं चक्रं विलिख्य विलेख्य वा सुवर्णरजतताम्रस्फटिकमरकत-रत्नाद्युत्कीर्णं वा तत्समास्तीर्णपट्टवसने श्रीखण्डरक्तचन्दनादि-निर्मिते पीठे निवेश्य यन्त्रप्राणप्रतिष्ठां कुर्यात्।

यथा— ऐं क्लीं सौः श्यामा यन्त्रस्य प्राणाः इह प्राणाः, ३. श्यामायन्त्रस्य जीवः इह स्थितः, ३. श्यामायन्त्रस्य सर्वेन्द्रियाणि, ३. श्यामायन्त्रस्य वाङ्मनःप्राणाः इहायान्तु स्वाहा। इति मन्त्रेण यन्त्रे प्राणप्रतिष्ठां विदध्यात्। ततो मूलेन चक्रे पुष्पाञ्जलिं विकीर्य, सामान्यविशेषार्घ्ये आसादयेत्।

* * *

पात्रासादनम्।

वर्धनीकलशस्थापनम्।

स्वपुरतः वामभागे त्रिकोणवृत्तचतुरश्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य मण्डलं मूलेन समभ्यर्च्य, कर्पूरादिवासितजलपूरितं कलशं गन्धपुष्पाक्षतैः अलंकृत्य मण्डलोपरि संस्थापयेत्॥

ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः॥
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा।
ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः॥
अङ्गैश्च सहिताः सर्वे कलशाम्बु समाश्रिताः।
गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु॥
सर्वे समुद्राः सरितस्तीर्थानि च नदा ह्रदाः।
आयान्तु देवीपूजार्थं दुरितक्षयकारकाः॥

मूलेन अष्टवारमभिमन्त्र्य, धेनुमुद्रां प्रदर्श्य, तज्जलेन पूजोपकरणानि आत्मानं च प्रोक्षयेत्॥

सामान्यार्घ्यविधिः।

वर्धनीपात्रस्य दक्षिणतः वर्धनीपात्रगतेन जलेन बिन्दुत्रिकोण-षट्कोण-वृत्त-चतुरश्रात्मकं मण्डलं मत्स्यमुद्रया निर्माय, चतुरश्रे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च बालाषडङ्गैः संपूजयेत्। यथा— (४- ओं ऐं क्लीं सौः)

४. ऐं हृदयाय नमः। हृदयशक्तिश्रीपादुकां पूजयामि नमः॥
४. क्लीं शिरसे स्वाहा। शिरःशक्तिश्रीपादुकां ״

४. सौः शिखायै वषट्। शिखाशक्तिश्रीपादुकां ,,
४. ऐं कवचाय हुं। कवचशक्तिश्रीपादुकां ,,
४. क्लीं नेत्रत्रयाय वौषट्। नेत्रशक्तिश्रीपादुकां ,,
४. सौः अस्त्राय फट्। अस्त्रशक्तिश्रीपादुकां ,,

षट्कोणे स्वाग्रादिप्रादक्षिण्येन—

४. ऐं हृदयाय नमः। हृदयशक्तिश्रीपादुकां ,,
४. क्लीं शिरसे स्वाहा। शिरः शक्तिश्रीपादुकां ,,
४. सौः शिखायै वषट्। शिखाशक्तिश्रीपादुकां ,,
४. ऐं कवचाय हुं। कवचशक्तिश्रीपादुकां ,,
४. क्लीं नेत्रत्रयाय वौषट्। नेत्रशक्तिश्रीपादुकां ,,
४. सौः अस्त्राय फट्। अस्त्रशक्तिश्रीपादुकां ,,

त्रिकोणे स्वाग्रादिप्रादक्षिण्येन—

४. ऐं नमः ४. सौः नमः
४. क्लीं नमः ४. मूलं नमः (बिन्दौ)

ततः ४. अस्त्राय फट्-इति सामान्यार्घ्यपात्रस्य आधारं प्रक्षाल्य सामान्यार्घ्यपात्राधाराय नमः इति मण्डलस्योपरि संस्थाप्य रां रीं रूं रैं रौं रः रमलवरयूं अग्निमण्डलाय नमः इति अग्निमण्डलं विभाव्य दश वह्निकलाः संपूजयेत्। तद्यथा—

४. यं धूम्रार्चिष्कलायै नमः। ४. रं ऊष्मा कलायै नमः। ४. लं ज्वलिनी कलायै नमः। ४. वं ज्वालिनी कलायै नमः। ४. शं विस्फुलिङ्गिनी कलायै नमः। ४. षं सुश्री कलायै नमः। ४. सं सुरूपा कलायै नमः। ४. हं कपिला कलायै नमः। ४. ळं हव्यवाहिनी कलायै नमः। ४. क्षं कव्यवाहिनी कलायै नमः। ४. अस्त्राय फट्— इति क्षालितं शङ्खं गृहीत्वा— ४. उं

सूर्यमण्डलायार्थप्रदद्वादशकलात्मने सामान्यार्घ्यपात्राय नमः— इति संस्थाप्य ४. हां ह्रीं हूं हैं हौं हः । हमलवरयूम्। सूर्यमण्डलाय नमः— इति सूर्य मण्डलं विभाव्य द्वादश सूर्यकलाः संपूजयेत्।

तद्यथा—

४. कं भं तपिनीकलायै नमः । ४. छं दं सुषुम्नाकलायै नमः ।
४. खं बं तापिनीकलायै नमः । ४. जं थं भोगदाकलायै नमः ।
४. गं फं धूम्राकलायै नमः । ४. झं तं विश्वाकलायै नमः ।
४. घं पं मरीचिकलायै नमः । ४. ञं णं बोधिनीकलायै नमः ।
४. ङं नं ज्वालिनीकलायै नमः। ४.टं ढं धारिणीकलायै नमः ।
४.चं धं रुचिकलायै नमः । ४.ठं डं क्षमाकलायै नमः ।

४.मं सोममण्डलाय कामप्रदषोडशकलात्मने सामान्यार्घ्यामृताय नमः— इति वर्धनीसलिलमापूर्य क्षीरबिन्दुं दत्वा ४. सां सीं सूं सैं सौं सः समलवरयूं सोममण्डलाय नमः— इति सोममण्डलं विभाव्य षोडश सोमकलाःसंपूजयेत्।

तद्यथा—

४. अं अमृताकलायै नमः । ४. ऌं चन्द्रिकाकलायै नमः ।
४. आं मानदा कलायै नमः । ४. ॡं कान्ति कलायै नमः ।
४. इं पूषा कलायै नमः । ४. एं ज्योत्स्ना कलायै नमः ।
४. ईं तुष्टि कलायै नमः । ४. ऐं श्री कलायै नमः ।
४. उं पुष्टि कलायै नमः । ४. ओं प्रीति कलायै नमः ।
४. ऊं रति कलायै नमः । ४. औं अङ्गदा कलायै नमः ।
४.ऋं धुतिकलायै नमः । ४. अं पूर्णाकलायै नमः।
४. ॠं शशिनी कलायै नमः । ४. अः पूर्णामृता कलायै नमः ।

ततस्तस्मिन्शङ्खे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च क्रमेण षडङ्गैः संपूज्य, अस्त्राय फट् इति संरक्ष्य, कवचाय हुं इति अवकुण्ठ्य, धेनुयोनिमुद्रे प्रदर्श्य, मूलेन सप्तवारमभिमन्त्र्य, तत्सलिलपृषतैः पूजोपकरणानि आत्मानं च प्रोक्ष्य, शङ्खजलात् किंचित् वर्धन्यां क्षिपेत्।।

## विशेषार्घ्यविधिः ।

सामान्यार्घ्योदकेन तद्दक्षिणतः बिन्दु—त्रिकोण—षट्कोण- वृत्त-चतुरश्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य, बिन्दौ सानुस्वारं तुरीयस्वरं विलिख्य,

चतुरश्रे सामान्यार्घ्यवत् षडङ्गं विन्यस्य, षट्कोणे स्वाग्रकोणादिप्रादक्षिण्येन षडङ्गैरभ्यर्च्य, त्रिकोणे मूलत्रिखण्डैः अभ्यर्च्य, मूलेन बिन्दुं च अर्चयेत्।सामान्यार्घ्यवत् वह्निसूर्यकलाः पूजयेत्।

ततो विशेषार्घ्यपात्रे— ४. सौः स-४ मं सोममण्डलाय कामप्रदषोडशकलात्मने विशेषार्घ्यामृताय नमः— इति तत्वमुद्रया गृहीतनागरखण्डोपरि सबिन्दु अकारादिक्षकारान्तं क्षकाराद्यकारान्तं मातृकया अर्पितं क्षीरं आपूर्य अष्टगन्धलोलितं पुष्पं निधाय ''ब्रह्माण्डखण्डसंभूतं अशेषरससंभृतम्। आपूरितं महापात्रं पीयूषरसमावह।'' इति प्रार्थयेत्।

४. सां सीं सूं सैं सौं सः समलवरयूं सोममण्डलाय नमः— इति सोममण्डलं विभाव्य षोडश सोमकलाः पूजयेत् । विशेषार्घ्यबिन्दुभिः वरिवस्यावस्तूनि संप्रोक्षयेत्। (मूलं) तां चिन्मयीं आनन्दलक्षणां अमृतकलशपिशितहस्तद्वयां प्रसन्नां देवीं पूजयामि नमः स्वाहा इति सुधादेवीं समभ्यर्च्य तदर्घ्यात्किंचित्

पात्रान्तरेण ४. वषट् । इत्युद्धृत्य ४. स्वाहा। इति तत्रैव निक्षिप्य ४. हुं । इति अवकुण्ठ्य ४. वौषट्। इति धेनुमुद्रया अमृतीकृत्य ४.फट् । इति संरक्ष्य ४. नमः । इति पुष्पं दत्वा ४. मूलेन गालिन्या निरीक्ष्य ४. ऐं इति योनिमुद्रया नत्वा ४. मूलेन सप्तवारमभिमन्त्र्य, सुधादेवीं षोडशोपचारैः संपूज्य तद्बिन्दुभिः सपर्यासाधनानि प्रोक्ष्य सर्वं विद्यामयं विभावयेत् ।।

## चक्रदेवीपूजा

ऐं क्लीं सौः आधारशक्तिकमलासनाय नमः, इति पीठं पुष्पैरभ्यर्च्य, बिन्दुमध्ये ३. श्रीमातङ्गीश्वरीमूर्तये नमः, इति देव्याः मूर्तिं भावयित्वा, हृदि वक्ष्यमाणरूपां देवीं सञ्चिन्त्य, ३. श्रीमातङ्गीश्वर्यै लं पृथिव्यात्मकं गन्धं कल्पयामि नमः इत्यादिताम्बूलान्तं मानसोपचारैरभ्यर्च्य, तां तेजोरूपेण परिणतां ब्रह्मरन्ध्रं प्रापय्य वहन् नासापुटद्वारा कृतविनिर्गमां कुसुमगर्भिते अञ्जलौ सन्निहितां देवीं ३ श्रीमातङ्गीश्वर्या अमृत-चैतन्यमावाहयामीति चक्रे भावितायां मूर्त्यामावाह्य मूलान्ते श्रीमातङ्गीश्वरि आवाहिता भव इत्यादिरीत्या आवाहनसंस्थापन-सन्निरोधन-सम्मुखीकरणावगुण्ठनानि, तत्तन्मुद्राप्रदर्शनपूर्वकं विधाय, वन्दनधेनुयोनिमुद्राश्च प्रदर्शयेत् । ततः ऐं क्लीं सौः श्रीमातङ्गीश्वर्यै पाद्यं कल्पयामि नमः इत्यादि भङ्ग्या पाद्यार्घ्याचमनीय-स्नान-वासो-गन्ध-पुष्प-धूप-दीप-नीराजनच्छत्र-चामरयुगल-दर्पण-नैवेद्य-पानीय-ताम्बूलान्तान् षोडशोपचारान् परिकल्पयेत् । नैवेद्याङ्गत्वेन पूर्वोत्तरापोशन-करप्रक्षालन-गण्डूषाचमनीयानि च दत्वा ताम्बूलं समर्पयेत् । नैवेद्ये त्रिकोणवृत्तचतुरस्रमण्डलकरणं, मूलमन्त्रेण प्रोक्षणम्, वमित्यमृतबीजेनाभिमन्त्रणपूर्वं धेनुमुद्रया अमृतीकरणं मूलेन

सप्तवारमभिमन्त्रणं प्राणादिमुद्राप्रदर्शनञ्च कार्यम् । अथ मूलमन्त्रान्ते श्रीमातङ्गीश्वरीश्रीपादुकां पूजयामीति वामकर-तत्त्वमुद्रासन्दष्ट - द्वितीयशकलगृहीतक्षीरबिन्दुभिस्सह समर्पितैः दक्षकरोपात्तैः कुसुमैः देवीं त्रिस्सन्तर्प्य, देव्या अग्नीशासुरवा-युभागेषु मौलौ प्रागादिदिक्षु च प्रागुक्तषडङ्गमन्त्रान्ते क्रमेण—

ऐं क्लीं सौः हृदयाय नमः, हृदयशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः ३. शिरसे स्वाहा-शिरःशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः । ३. शिखायै वषट्-शिखाशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः । ३. कवचाय हुँ - कवचशक्ति - श्रीपादुकां पूजयामि तर्पयामि नमः । ३. नेत्रत्रयाय वौषट् - नेत्रशक्ति - श्रीपादुकां पूजयामि तर्पयामि नमः । ३. अस्त्राय फट् - अस्त्रशक्ति - श्रीपादुकां पूजयामि तर्पयामि नमः । इति लयाङ्गत्वेनाङ्गदेवता आराध्य, देव्याः पश्चात् प्रागपवर्गरेखात्रये दक्षिणसंस्थाक्रमेण गुर्वोघत्रयं वरिवस्येत् ।

(अर्चने सर्वत्र श्रीपादुकां पूजयामि तर्पयामि नमः इति योजनम्) ।

ऐं क्लीं सौः परप्रकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, परमेशानन्द, परशिवानन्द, कामेश्वर्यम्बा, मोक्षानन्द, कामानन्द, अमृतानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, इति दिव्यौघः ।

ऐं क्लीं सौः ईशानानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः, तत्पुरुषानन्द, अघोरानन्द, वामदेवानन्द, सद्योजातानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः, इति सिद्धौघः ।

ऐं क्लीं सौः पञ्चोत्तरानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, परमानन्द, सर्वज्ञानन्द, सर्वानन्द, सिद्धानन्द, गोविन्दानन्द, शङ्करानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, इति मानवौघः।

## आवरणार्चनम्

(अर्चने सर्वत्र नामादौ बाला, अन्ते श्रीपादुकां पू० त० नमः)।

त्र्यस्रे देव्यग्रकोणादिप्रादक्षिण्यक्रमेण—

ऐं क्लीं सौः रतिश्रीपादुकां पूजयामि तर्पयामि नमः, प्रीति श्रीपादुकां पू० त० नमः, मनोभव श्रीपादुकां पूजयामि तर्पयामि नमः इति प्रथमावरणम्।

पञ्चारस्याराणां मूलेषु- ऐं क्लीं सौः द्रां द्रावणबाणश्रीपादुकां पूजयामि तर्पयामि नमः, द्रीं शोषणबाण, क्लीं बन्धनबाण, ब्लूं मोहनबाण, सः उन्मादनबाणश्रीपादुकां पूजयामि तर्पयामि नमः,

पञ्चारस्याराणां अग्रेषु— ऐं क्लीं सौः ह्रीं कामराजश्रीपादुकां पूजयामि तर्पयामि नमः, क्लीं मन्मथ, ऐं कन्दर्प, ब्लूं मकरकेतन, स्त्रीं मनोभवश्रीपादुकां पूजयामि तर्पयामि नमः, इति द्वितीयावरणम्।

अष्टदलस्य दलानां मूलेषु- ऐं क्लीं सौः आं ब्राह्मीश्रीपादुकां पूजयामि तर्पयामि नमः, ईं माहेश्वरी, ऊं कौमारी, ॠं वैष्णवी, ॡं वाराही, ऐं माहेन्द्री, औं चामुण्डा, अः चण्डिकाश्रीपादुकां पूजयामि तर्पयामि नमः,

अष्टदलस्य दलानां मूलेषु- ऐं क्लीं सौः लक्ष्मीश्रीपादुकां पूजयामि तर्पयामि नमः, सरस्वती, रति, प्रीति, कीर्ति, शान्ति, पुष्टि, तुष्टिश्रीपादुकां पूजयामि तर्पयामि नमः, इति तृतीयावरणम्।

षोडशदले— ऐं क्लीं सौः वामाश्रीपादुकां पूजयामि तर्पयामि नमः, ज्येष्ठा, रौद्री, शान्ति, श्रद्धा, सरस्वती, क्रियाशक्ति, लक्ष्मी, सृष्टि, मोहिनी, प्रमथिनी, आश्वासिनी, वीचि, विद्युन्मालिनी, सुरानन्दा, नागबुद्धिका श्रीपादुकां पूजयामि तर्पयामि नमः, इति चतुर्थावरणम्।

द्वितीयाष्टदले— ऐं क्लीं सौः अं असिताङ्ग भैरवश्रीपादुकां पूजयामि तर्पयामि नमः, इं रुरु, उं चण्ड, ऋं क्रोध, लृं उन्मत्त, एं कपालि, ओं भीषण, अं संहार भैरवश्रीपादुकां पूजयामि तर्पयामि नमः, इति पञ्चमावरणम्।

चतुर्दले— ऐं क्लीं सौः मातङ्गीश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः, सिद्धलक्ष्मी, महामातङ्गी, महासिद्धलक्ष्मीश्रीपादुकां पूजयामि तर्पयामि नमः, इति षष्ठावरणम्।

चतुरस्रस्यान्तराग्नेयादिकोणेषु क्रमेण— ऐं क्लीं सौः गं गणपतिश्रीपादुकां पूजयामि तर्पयामि नमः, दुं दुर्गा, वं वटुक, क्षं क्षेत्रपालश्रीपादुकां पूजयामि तर्पयामि नमः।

देव्यग्रादिद्वारेषु प्रागाद्यास्वेकादशसु दिक्षु च— ऐं क्लीं सौः सां सरस्वत्यै नमः इत्यादि ऐं वास्तुपतये ब्रह्मणे नमः इत्यन्तैः मन्त्रैः प्रागुक्तैः वास्तुपतिपर्यन्तदेवताः समभ्यर्च्य, पूर्वरेखायां च—

ऐं क्लीं सौः हंसमूर्तिश्रीपादुकां पूजयामि तर्पयामि नमः, परप्रकाश, पूर्ण, नित्य, करुण श्रीपादुकां पूजयामि तर्पयामि नमः, इति सम्प्रदायगुरूंश्च पूजयेत्। इति सप्तमावरणम्।

(सर्वा अप्यावरणदेवताः देव्या अभिमुखासीनाः स्वयं तत्तदभिमुखः पूजयामीति भावयेत्)।

अथ स्वशिरसि ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्ख्फ्रें ह स क्ष म ल व र यूं, स ह क्ष म ल व र यीं, ह्सौः स्हौः श्रीशिवादिगुरुश्रीपादुकाः पूजयामीति सामान्यपादुकया शिवादिगुरून्, ऐं क्लीं सौः ह्स्ख्फ्रें ह स क्ष म ल व र यूं स ह क्ष म ल व र यीं ह्सौः स्हौः अमुकाम्बासहितामुकानन्दनाथश्रीपादुकां पूजयामीति च स्वगुरुमभ्यर्च्य, पुनर्देवीं त्रिः सन्तर्प्य प्राग्वत् बालया षोडशधा चोपचरेत्।

ततः श्रीक्रमोक्तेन क्रमेण होमं कृत्वा कारयित्वा वा (अकृत्वा वा) शुद्धजलेन त्रिकोणवृत्तचतुरस्रमण्डलत्रयं विधाय ऐं व्यापकमण्डलाय नमः, इति पुष्पैः समभ्यर्च्य अर्धान्नसलिलपूर्णं सक्षीरोपादिममध्यमं सगन्धकुसुमं साधारं पात्रं निधाय ऐं क्लीं सौः श्रीमातङ्गीश्वरि इमं बलिं गृह्ण गृह्ण हुँ फट् स्वाहा, ऐं क्लीं सौः श्रीमातङ्गीश्वरि शरणागतं मां त्राहि त्राहि हुँ फट् स्वाहा, ऐं क्लीं सौः क्षेत्रपालनाथ इमं बलिं गृह्ण गृह्ण हुँ फट् स्वाहा इति मन्त्रान् क्रमेण पठन् देव्याः दक्षिणभागे बलित्रयं प्रदाय तत्त्वमुद्रास्पृष्टं क्षीरं बल्युपरि निषिच्य, वामपार्ष्णिघातकरास्फोटान् कुर्वाणः समुदश्चितवक्त्रो नाराचमुद्रया बलिं भूतैः ग्राहयित्वा पाणी प्रक्षाल्य देव्यै प्रदक्षिणनतीर्विधाय पुष्पाञ्जलिं समर्प्य जपेत्।

## श्रीमातङ्गीश्वरीमन्त्रजपः

अस्य श्रीमातङ्गीश्वरीमहामन्त्रस्य दक्षिणामूर्त्यृषये नमः— शिरसि, गायत्रीच्छन्दसे नमः— मुखे, श्रीमातङ्गीश्वरीदेवतायै नमः— हृदये। ऐं बीजाय नमः— गुह्ये, सौः शक्तये नमः— पादयोः, क्लीं कीलकाय नमः— नाभौ, विनियोगाय नमः— इति करसम्पुटे, न्यस्य मूलेन त्रिर्व्यापकं कृत्वा न्यासोक्तैरङ्गमन्त्रैः कराङ्गन्यासौ कृत्वा—

मातङ्गीं भूषिताङ्गीं मधुमदमुदितां नीपमालाढ्यवेणीं
सद्वीणां शोणचेलां मृगमदतिलकामिन्दुरेखावतंसाम्।

कर्णोद्यच्छङ्खपत्रां स्मितमधुरदृशा साधकस्येष्टदात्रीं
वन्दे देवीं शुकाभां शुकमखिलकलारूपमस्याश्च पार्श्वे॥

इति ध्यात्वा मनसा पञ्चधोपचर्य पुरश्चरणे वक्ष्यमाण पूर्वोत्तराङ्गमन्त्र सहितं मूलं श्रीक्रमोक्तेन विधिना यथाशक्ति जपित्वा पुनः न्यासादि विधाय

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा॥ इति जपं समर्पयेत्।

श्यामे सङ्गीतमातः परशिवनिलये मुख्यसाचिव्यभारो-
द्वाहे दक्षे दयापूरितनिजहृदये मामकीं दैन्यवृत्तिम्।
श्रीमत्सिंहासनेश्यां भववनपतितान् दावदग्धान् नमस्ते
त्रातुं पीयूषवर्षैः कथय परिकरं बद्धवत्यां विविक्ते॥

इति प्रार्थयेत्।

## सुवासिनीपूजादिशेषकृत्यम्

अथ श्यामलां शक्तिमाहूय श्रीक्रमोक्तक्रमेण तामुपचर्य तच्छेषमुररीकृत्य हविःप्रतिपत्त्यादिक्रमशेषं समापयेत् । हविः-प्रतिपत्तौ मूलेन सर्वेण तत्त्वत्रयशोधनं विशेषः ।

## श्यामोपासकनियमाः

एतदुपासकस्यावश्यमनुष्ठेयाः नियमाः—

कदम्बतरुं न छिन्द्यात्, वाचा कालीति पदं नोच्चारयेत् । वीणावेणु- वादननर्तनगाथागोष्ठीषु प्रवर्तमानासु पराङ्मुखो न भवेत्, गायकान् न निन्द्यात्, इति ।

## पुरश्चरण-विधानम्

एवं नित्यसपर्यां निर्वर्तयन् पुरश्चरणं कुर्यात् । तच्च जपः होमः तर्पणं ब्राह्मणभोजनश्चेति चतुर्भिरङ्गैरुपेतम् । दीक्षाप्रकरणोक्तकाले श्रीगुर्वनुज्ञातो ब्राह्मणैः स्वस्ति वाचयित्वा, आचम्य, प्राणानायम्य, अमुकशर्मवर्मादिरहं श्यामामन्त्र-सिद्धिकामो लक्षचतुष्टयं जपं तद्दशांशहवनम्, तद्दशांशतर्पणम्, तद्दशांशब्राह्मणभोजनश्चेति पूर्णाङ्गं पुरश्चरणं करिष्य इति सङ्कल्प्य जपेत् ।

अथ सति सम्भवे तत्रान्तरदृष्टेन विधिना ग्रामात् बहिः क्रोशे नगराच्च क्रोशद्वये क्षेत्रं परिगृह्णीयात् । अथवा समुद्रमहानदीतीरयोः पश्चिमाभिमुखवृषशून्यशिवायतनयोः विष्णुगृहपुण्यक्षेत्रतीर्थारण्यपर्वतशिखराश्वत्थबिल्वमूलविविक्तनिज-गृहगोष्ठानां श्रीगुरुस्वेष्टदेवतासन्निध्योश्चान्यतमं देशमासाद्य दीपस्थानविन्यस्ते व्याघ्रचर्ममृगाजिनचित्रकम्बलकुशकटरक्त-

पटपट्टवसनोर्णावस्त्राद्यन्यतमे आसने उपविश्य, विघ्नानुत्सार्य, प्राणानायम्य, सङ्कल्प्य पूर्वाङ्गमन्त्रपूर्वकं प्रत्यहं सहस्रसंख्याकं मूलमन्त्रं तद्दशांशान् उत्तराङ्गमन्त्रांश्च जपित्वा पुनर्न्यासादिकं कुर्यात्। पूर्वाङ्गमन्त्रो यथा—

हसन्ति हसितालापे मातङ्गिपरिचारिके। मम भयविघ्नापदां नाशं कुरु कुरु ठः ठः ठः हु फट् स्वाहा। इति।

मूलमन्त्रश्च— न्यासोक्तसप्तदशखण्डसमष्टिरूपः।

उत्तराङ्गमन्त्रास्तु— ऐं नमः उच्छिष्टचाण्डलि मातङ्गि सर्ववशङ्करि स्वाहा, इति श्यामाङ्गं लघुश्यामा।

ऐं क्लीं सौः वद वद वाग्वादिनि स्वाहा, इति तदुपाङ्गं वाग्वादिनी।

ॐ ओष्ठापिधाना नकुली दन्तैः परिवृता पविः। सर्वस्यै वाच ईशाना चारु मामिह वादयेत्। इति तत्प्रत्यङ्गं नकुली।

## जपकालः

अयञ्च जपः अपराह्ने कर्तव्यः, अपराह्ने श्यामेति सूत्रेण अपराह्णस्य पूजाकालत्वविधानात्। अन्ये त्वामध्यन्दिनमेव। देशोपप्लवादिसम्भावनायामासायाह्नमपीति स्थितिः। जपाद्यन्तयोः प्रणवोच्चारः। वेदानधिकारिषु सबिन्दुकश्चतुर्दशस्वरः।

## पुरश्चरणाङ्गहोमः

एवं जपोत्तरं तस्मिन्नेवाहनि श्रीक्रमोक्तेन विधिना कुण्डस्थण्डिलान्यतरप्रतिष्ठापितेऽग्नौ देव्या उपचारान्ते

सर्वासामावरणदेवानां एकैकाहुतिं तत्तन्मन्त्रैः प्रधानदेवतायाः दशाहुतीश्च स्वाहान्तमूलेन उद्देशत्यागपूर्वकं एकैकेन त्रिमध्वक्तेन पलाशकुसुमेन हुत्वा, अथ जपदशांशञ्च हुत्वा होमशेषं समापयेत्। मन्त्रान्ते या वह्निजाया सा तु मन्त्रस्वरूपिणी। तदन्तेऽन्यां प्रयुञ्जीत सा होमाङ्गतया मता ॥ इति शक्तिसङ्गमतन्त्रवचनात् स्वाहान्तमन्त्रेष्वपि पुनः स्वाहाप्रयोगः कार्यः।

इदं च द्रव्यं इह नित्यं काम्यं च। सत्यां कामनायां अयमेव होमो द्रव्यान्तरैरपि वक्ष्यमाणैः कार्यः, काम्यस्य नित्य - बाधकत्वात्।

## पुरश्चरणाङ्गं तर्पणम्

ततो नद्यादौ चतुरस्रमण्डलं विधाय तत्र चिन्तिते श्यामायन्त्रे देवीमावाह्य पञ्चधा उपचर्य सुरभिलेन सुवर्णरजतताम्रादिपात्रगृहीतेन सलिलेन मूलान्ते श्रीमातङ्गीश्वरीं तर्पयामीति होम दशांशं तर्पयेत्। सत्यानुकूल्ये जपस्थान एव वा पूजाचक्रे तर्पयेत्। "तर्पणेऽपि तथैव स्यान्नमसोऽन्ते पुनर्नमः" इति सङ्गमतन्त्रोक्तेः नमोऽन्तेष्वपि मन्त्रेषु पुनः नमस्तर्पयामीति प्रयोगः। तन्त्रान्तरानुसारिणे मार्जनपक्षेऽपि नमोयोजनं तत्रैवोक्तम्॥

## पुरश्चरणाङ्गं ब्राह्मण भोजनम्

ततः तर्पणदशांशसंख्याकान् एतद्विद्यादीक्षितान्-अलाभे यथासम्भवं तत्तन्मन्त्रदीक्षितान्वा सदाचारान् प्रातः निमन्त्रिताभ्यञ्जितान् ब्राह्मणान् सुवासिनीः कुमारीश्च यथाविभवं वस्त्रगन्धादिभिः देवताधियाऽभ्यर्च्य मृष्टान्नेन

भोजितान् ताम्बूलदक्षिणापरितोषितान् प्रदक्षिणीकृतनमस्कृतान् आशिषो गृहीत्वा विसृजेत्।

तर्पणदशांशब्राह्मणभोजनाशक्तौ तु तर्पणोक्तवज्जले देवतामावाह्य उपचर्य च मूलान्ते आत्मानमभिषिञ्चामि नमः, इति कुम्भमुद्रया तर्पणदशांशवारं मूर्धन्यभिषेकं वा कुशैः मार्जनं वा विधाय तद्दशांशं ब्राह्मणान् भोजयेत् इत्येकः पक्षः । प्रतिलक्षान्ते सर्वान्ते वा होमादि कुर्यादित्यपरे।

होमप्रत्याम्नायो जपः— होमाशक्तौ ब्राह्मणानां पुरश्चरणजपसंख्याद्विगुणो जप इति मुख्यःपक्षः। होमसंख्या - द्विगुणो जप इति गौणः। क्षत्रियादीनां त्रयाणां त्रिगुणादिर्जपः। एवं तर्पणेऽपि । द्विजभक्तस्य शूद्रस्य द्विजस्त्रीणामपि होमप्रतिनिधिः जप एव । तेषां होमे तु नाधिकारः । ब्राह्मणभोजनस्य तु न क्वापि प्रतिनिधिः ॥

इदं च पुरश्चरणमारब्धं सत् आशौच प्राप्तावपि कार्यम् नित्यार्चनादि च।सूतकादौ नैमित्तिककाम्ययोः अनधिकार एव, साधकस्य प्रतिबन्धकबाहुल्यात्॥

सिद्धिपर्यन्तं पुरश्चरणस्य अभ्यासः। एकेन पुरश्चरणेन यदि न मन्त्रः सिध्यति तदा तस्य द्वयं त्रयं वा कुर्यात्। तथाऽपि तदसिद्धौ सिद्धिकारकाः प्रयोगाः ग्रन्थान्तरोक्ताः ग्राह्याः । मनोरथानामक्लेशः सिद्धेरुत्तमलक्षणम्, इत्यादि सिद्धिसूचकानि।

पुरश्चरणप्रत्याम्नायः— अतः पुरश्चरणप्रत्याम्नायाः कतिचित् लिख्यन्ते । शशिसूर्योपरागे त्रिरात्रमेकरात्रं वा पूर्वामुपोष्य एकभुक्तं वा विधाय ग्रहणारम्भघटिकार्धात् प्रागेव स्नातः समुद्रगाया नद्यास्तटादेर्वा नाभिमात्रजले तिष्ठन्, अशक्तौ

तु तट एवोपविष्टः, आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य ॐ अमुकराशिगते सवितरि सोमस्य सूर्यस्य वा ग्रहणे अमुकगोत्रोऽमुकशर्मवर्मादिरहं अमुकविद्यासिद्धिकामः स्पर्शमारभ्य विमुक्तिपर्यन्तं जपं करिष्य इति सङ्कल्प्य जपेत् । ततोऽपरेद्युः ग्रहणकालीनस्य जपस्य समसंख्याकं तद्दशांशं वा होमं, तर्पणं तत्समसंख्याकं वा ब्राह्मणभोजनञ्च सम्पादयेत् । यद्वा— ग्रहणपुण्यकाल एव मन्त्रानुसारेण जपस्य तत्समांशस्य तद्दशांशस्य वा होमस्य तदनुगुणस्य तर्पणस्य च कालं विभज्य जपाद्याचरेत् । परेद्युः तर्पणसमसंख्याकं तद्दशांशं वा ब्राह्मणभोजनं कारयेदित्येकः प्रकारः ॥

कृष्णाष्टम्यां प्रातः कृतनित्यक्रियः पूर्ववत् सङ्कल्प्य अयुतचतुष्टयं जपं सप्तधा विभज्य प्रत्यहं चतुर्दशोत्तरसप्त-शताधिकसहस्रपञ्चकसंख्यया (५७१४) तत्कृष्णत्रयोदशी पर्यन्तं (६ x ५७१४-३४२८४) जपित्वा चतुर्दश्यां षोडशोत्तर-सप्तशताधिक-सहस्रपञ्चकं (५७१६ + ३४२८४ =४००००) जपेत् । सङ्कल्पे चाद्य कृष्णाष्टमीमारभ्य एतच्चतुर्दशीपर्यन्तमिति विशेषः । होमादि विधिस्तु तद्दशांश एवेत्यन्यः ॥

प्रातः नित्यक्रियोत्तरं प्राग्वत् सङ्कल्प्य अकारादि क्षकारान्तान् आनुलोम्येनोच्चार्य मूलञ्च सकुदुच्चार्य पुनर्मातृका-वर्णान् विलोमानुच्चारयेत् । इत्येवं रीत्या प्रत्यहं कुर्यात् । अष्टोत्तरशतसंख्यया मासमात्रं जपित्वा होमादि कुर्यात् । सङ्कल्पस्तु एतदनुगुण एवोह्यः, इत्यपरः ॥

यथासम्भवं अनयोः प्रत्याम्नाययोः जपस्य चतुर्गुणितत्वं तर्पणादेश्च तद्दशांशत्वं बोध्यम् । प्रत्यहं रात्रौ त्रिकालं सर्वोपचारैरिष्टदेवतां साङ्गां सावरणामर्चयेत् । एवं षण्मासान्

मासमात्रं वा पूजयितुः पुरश्चरणमन्तरेणापि विद्यासिद्धिर्भवति। संकल्पश्चैतदनुरूप एवोह्यः, इति चापरः ॥

सूर्योदयं समारभ्य यावत्सूर्योदयावधि।
तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत्॥
सहस्रारे गुरोः पादपद्मं ध्यात्वा प्रपूज्य च।
केवलं देवभावेन जप्त्वा सिद्धीश्वरो भवेत्॥ इति चान्यः।
प्रकारान्तराणि च ग्रन्थान्तरेषु द्रष्टव्यानीति दिक्॥

## मालासंस्कारः

अक्षमालायाः संस्कारानपेक्षा- अक्षमाला हि ब्रह्मरन्ध्रस्य दक्षभागादिनाभिमभिव्याप्य वामभागपर्यन्तं अवरोहारोहण-क्रमेण ब्रह्मनाड्यां अन्योन्याभिमुखत्वेन ग्रथितैः आनुपूर्व्येणोच्चारितैः अकारादिभिः ळकारान्तैः पुनः प्रातिलोम्येनोच्चारितैः च ळकारादिभिः अकारान्तैः वर्णैः शतबीजात्मिका भवति। क्षकारस्य मेरुस्थानीयस्य ळकारद्वयस्य मध्य उच्चारणमात्रम्। न तु जपसंख्याऽन्तर्गणना। अत्रानुलोम्येन अवरोहारोहयोः प्रथमं मातृका ततो मन्त्रः। प्रातिलोम्येन अवरोहारोहयोस्तु प्रथमं मन्त्रः ततो मातृकेति तत्त्वम्। शतान्ते अ क च ट त प य श, आख्यवर्गाष्टकादित्वेन जपस्य अष्टोत्तरशतत्वं ज्ञेयम्। एवं सहस्रादौ च। अस्याः मालायाः न संस्कारापेक्षा॥

रुद्राक्षमालासंस्कारः - अष्टोत्तरशतं रुद्राक्षान् एकैक-मातृकोच्चारणपूर्वकं अन्तरान्तरा सग्रन्थिकं अन्योन्याभिमुखं गोपुच्छाकारेण सर्पाकारेण वा ग्रथयित्वा स्थूलमेकं रुद्राक्षमेकीकृते सूत्राग्रद्वये मेरुत्वेन ग्रथयित्वा नवसंख्याकैः अश्वत्थपत्रैः अष्टदलपद्मं विरच्य तत्र मालां निवेश्य मूलमन्त्रान्ते

गोमूत्रगोमयगव्यदुग्धदधिघृताख्येन पञ्चगव्येन, ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः ॥ - इति मन्त्रान्ते कुशोदकेन च प्रक्षाल्य, ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः -इति मन्त्रान्ते चन्दनागुरुकर्पूरादिभिराघर्षणं विधाय, ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ इति मन्त्रेण धूपयित्वा, ॐ तत्पुरुषाय विद्महे महादेवाय धीमाहि। तन्नो रुद्रः प्रचोदयात्-इति मन्त्रेण चन्दनकस्तूरीकुङ्कुमकर्पूरैः लेपयित्वा अक्षमालां वामकरपुटे निधाय, ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधि-पतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् - इति मन्त्रेण अष्टोत्तरशतवारमभिमन्त्र्य रुद्राक्षमालायाः प्राणाः इह प्राणाः । रुद्राक्षमालायाः जीवः इह स्थितः । रुद्राक्षमालायाः सर्वेन्द्रियाणि रुद्राक्षमालायाः वाङ्मनःप्राणाः इह आयान्तु स्वाहा। - इति मन्त्रेण प्राणप्रतिष्ठां कृत्वा उपास्यदेवतां तत्रावाह्य, मूलेन पञ्चधा उपचर्य, तेन मातृकावर्णैश्च अभिमन्त्र्य होमप्रकरणोक्तरीत्या अग्निमुखं विधाय, मूलेन अष्टोत्तरशताज्याहुतीः हुत्वा, सम्पाताज्यं मालायां निक्षिपेत्। अशक्तौ तु होमसंख्याद्विगुणं मूलमन्त्राभिमन्त्रणं, इति ॥ एवमन्या मालाः संस्कुर्यात्। यन्मन्त्रजपार्थं या माला संस्कृता तया तस्यैव जपः कार्यो नान्यस्य।

मालाभेदेन फलभेदः- यथा - मातृकाऽक्षमाला क्षिप्रं मन्त्रसिद्ध्यै । रुद्राक्षमाला मोक्षाय । मौक्तिकमाणिक्यमय्यौ

साम्राज्याय । स्फाटिकी सर्वेभ्यः कामेभ्यः । पुत्रजीवमयी सम्पत्सारस्वतावाप्त्यै । पद्मबीजमयी श्रीयशोभ्याम् । रक्तचन्दनमयी वश्यभोगाभ्याम् ।

अथ जपभेदाः- ज्ञानार्णवे -

निगदेनोपांशुना वा मानसेनाथवा जपेत् ।
निगदः परमेशानि स्पष्टं वाचा निगद्यते ।।
अव्यक्तश्च स्फुरद्वक्त्र उपांशुः परिकीर्तितः ।
मानसस्तु वरारोहे चित्तेनान्तररूपेवान् ।
निगदेन तु यज्जप्तं लक्षमात्रं वरानने ।
उपांशुस्मरणेनैव तुल्यं भवति शैलजे ।
उपांशुलक्षमात्रं तु यज्जप्तं कमलेक्षणे ।
मानसस्मरणेनैव तुल्यमेकेन सुन्दरि ।।

काम्यहोमद्रव्याणां मानं फलं च -तिलैश्चुलुकमितैः शतसंख्याकैर्वा प्रत्याहुतिहोमः शान्त्यै, आज्येन च कर्षप्रमाणेन। ग्रासमितैरन्नैरन्नाय। अमृतासमिद्भिः कनिष्ठास्थूलाभिः चतुरङ्गुलप्रमाणाभिः ज्वरोपशमनाय चूतपल्लवैश्च । दूर्वाभिः तिसृभिस्तिसृभिरायुषे । कृतमालकुसुमैः धनाय । उत्पलैः भोगाय। बिल्वदलैः राज्याय । समग्रैः पद्मैः साम्राज्याय । मुष्टिमितैः लाजैः कन्यायै । नन्द्यावर्तैः कवित्वाय । वञ्जुलमल्लिकाजातीपुन्नागैः भाग्याय। बन्धूकजपाकिंशुकमधूकैः ऐश्वर्याय । कदम्बैः वश्याय । शालितण्डुलैः अर्धमुष्टिमितैः धान्याय । कुंकुमगोरोचनादिभिः गुञ्जामितैः सौभाग्याय । पलाशपुष्पैः तेजसे कपिलाघृतेन चोक्तमानेन । इह च प्रथमं अभीष्टदेवतायै विज्ञाप्य अमुककर्मसिद्ध्यर्थं एतावदाहुतीः करिष्यामीति सङ्कल्पयेत् । कर्षस्तु षड्गुंजामितमाषषोडशक-

प्रमाणः। शुक्तिः कर्षद्वयम्। मुष्टिस्तु पलम्॥

पुरश्चरणकाले विहितानि - मनःस्थैर्य शौच मौन मन्त्रार्थचिन्तन निर्वेद श्रद्धोत्साह क्रोधाभाव सन्तोषेन्द्रियनिग्रह ब्रह्मचर्यगुरुप्रणति सुगन्धामलकस्नान सुवसनसुरभिलानुलेपन मध्यपत्र-वर्जपलाशपत्रालिमितैकवारभोजन प्रक्षालितद र्भास्तीर्णधौतवस्त्रशयन त्रिषवण-स्नानादीनि। अशक्तौ तु प्रातः स्नानमात्रम्।

निषिद्धानि अप्रियानृतभाषणकरञ्जविभीतकार्कस्नुहीछाया-क्रमण प्रतिग्रहादीक्षितस्त्री-शूद्रपतितनास्तिकसम्भाषण बह्वेक-मलिनवस्त्रधारण काम्यकर्माविहितकर्म कांस्य-भोजना-सत्संगोष्णजलस्नान कञ्चुकोष्णीषधारण प्राणिहिंसा पादुकायान शय्यारो हण-नग्नत्व कुशरहितकरत्वादीनि अतिभोजनञ्च॥

इत्थं कृतपुरश्चरणः सिद्धमनुः देवताप्रसादसम्पन्नः पूर्ण- मनोरथः सुखी विहरेदिति शिवम्॥

(उमानन्दनाथस्य नित्योत्सव निबन्धतः संगृहीतः)

श्री श्यामायन्त्रम् ब्लाक्

# श्रीहालास्यमाहात्म्यम्

## ग्रन्थपीठिका

(शताधिकेभ्यो वत्सरेभ्यः प्राक् मुद्रितस्यास्य ग्रन्थस्य पीठिकेयं राजगोपालरायेण तदा लिखिता । साऽत्र संगृह्यते कृतज्ञताविष्करणपूर्वकम् ।)

नयन युगं मीनाक्ष्याः शोभितमीनोपमं जयत्युचितम् ।
चित्रं तन्मुखमपि शोभि तमीनोपमं[1] यदाभाति ।। १

मातस्त्वां कमलेक्षणां झषदृशं मत्वा यतः पाण्ड्यराट्
मीनाक्षीत्यभिधां व्यधात्, अत इयं हेमाब्जिनी म्लायति ।
आमोदं नितरां तयोः अनघयोस्त्वं कुर्वती तीर्थयोः[2]
राजीवाक्ष्याभिधां दधासि विदुषी चित्रं चरित्रं तव ।। २

अजैषीच्छैशवे मर्त्यान् दिक्पालान् लीलयैव सा ।
सा मीनाक्षी महाराज्ञीत्येवं संस्तूयते बुधैः ।। ३

कदम्बवन ऋष्यर्थे चिदम्बरनटोऽस्ति यः ।
हृदम्बुजे मे स्ताद्भक्तकदम्बकसुरक्षकः ।। ४

सुनीलक[3]न्धराभिख्यं हरन्तं (हरं तं) वृषभासुरम् ।
श्रीधरं मधुरानाथं वन्दे श्री सुन्दरेश्वरम् ।। ५

(1) तमी रत्रिः, तस्या इनः प्रभुः चन्द्रः, तदुपमं मुखम् । (2) तीर्थयोः जनकस्य हेमाब्जिनीतीर्थस्य च आमोदाय राजीवाक्षीति नाम धत्से । राजीवोऽ रविन्दं, मीनश्च । अतः कमलेक्षणा मीनाक्षी च । (3) नीलः कन्धरः यस्य, नीलकन्धर इत्याभिख्या यस्येति, वृषे भासुरं भासमानमिति श्रियं विषं कण्ठे धरतीति, मधुराया हालास्यस्य नाथं तमिति शिवपक्षे, सुनीलं अतिकालं कं जलं धरतीति कन्धरस्य मेघस्य शोभा कीतिर्यस्येति, वृषभासुरस्य वृन्दावन गतस्य हरं संहारकतीरं, श्रीधरं लक्ष्मीधरं मधुरायाः लीलया मधुरीकृतायाः मथुराया नाथं इति विष्णु पक्षे ।

न राज्यासक्तिस्ते, प्रभवसि, विषादी विषमदृक्
सदा हालास्ये स्वे भवसि न हि काले प्रमुदितः ।
परं सुप्तो लुब्धः परशुगकरः सुन्दरविभो
तथाऽपि त्वां चित्रं कथयति जनो राजमकुटम्[1] ॥

## हालास्यमाहात्म्यपारायणक्रमः

आदौ संकल्प्य विधिवन्मीनाक्षीसुन्दरेश्वरौ ।
आवाह्य पुस्तके भक्त्या पूजनीयौ सुमाक्षतैः ॥

ततः पारायणं कार्यं अन्ते पूजां विधाय च ।
अत्रोल्लिखितपद्यानि पठनीयान्यतः परम् ॥

ईशं शैलसुतामिभास्य शरजौ चण्डेश्वरं नन्दिनं
वन्दे भृंगिरिटिं त्रिषष्टिमहितान् भक्तांश्च भक्त्युन्नतान् ।
श्रीकण्ठागमतत्त्व सौरभविदं श्रीभाष्यकारं गुरुं
शैवस्थापनधूर्वहं च हरदत्ताचार्यवर्यं भजे ॥

दूर्वासकौशिकविरिञ्चि मृकण्डु पुत्र-
देवेन्द्र बाण हरि शक्तिदधीचिरामान् ।
कण्वात्रि भार्गव बृहस्पति गौतमादीन्
पुण्यानिमान् परमपाशुपतान्नमामि ॥

1. विरोधाभासं वर्णयति-राजशेखर इति सुन्दरेशस्य तव राज्ञोऽपरा प्रशस्तिः । ते राज्ये न आसक्तिः इति विरोधः । नरस्य आजौ युद्धे आसक्तिः इत्याभासः । विषादी व्यसनभूयिष्ठत्वात् विषण्णः इति विरोधः । (विषमत्तीति) । विषमनयनः, प्रजासु न समदर्शी । (त्रिलोचनः) । सदा आस्ये मुखो हाला सुरा भवति । (स्वे हालास्ये मधुरायां भवसि ।) न काले समये प्रमुदितो भवसि । (काले यमे) । सदा सुप्तोभवसि । (सु शोभना प्ता जटा यस्य) लुब्धः कृपणो भवसि । (किरात वेषधरः।) परा शुक् शोको यस्य परशुगसि । अकरः, प्रजाभ्यः करं न गृह्णासि । तदा राज्य निर्वहणे भूयान् श्रमः ।) (परशुं आयुधं गच्छतीति परशुगः करो यस्य ।) एवं राजत्वानर्हं त्वां जनाः राजमुकुटं कथयन्ति ।)

# मङ्गलाचरणम्

मङ्गलं महदानन्ददायिने मुदितात्मने।
पाषण्डषण्डतिमिरमिहिरायास्तु मङ्गलम्।
तटातकाविवाहाय स्वयं पाण्ड्यमहीप ते।
काष्ठभारधरायास्तु ज्ञानरूपाय मङ्गलम्॥

त्रैवर्णिकाङ्गनाबृन्द वलयावलिदायिने।
कुलशेखरभूपालभावुकायास्तु मङ्गलम्॥

अरिमर्दन राजेन्द्र वेत्र मुद्राङ्किताय ते।
माणिक्यवाचकस्वान्त मन्दिरायास्तु मङ्गलम्॥

कल्याणाचलकोदण्ड कनत्करतलाय ते।
पद्मिनीपति दन्तालिदमनायास्तु मङ्गलम्।
मङ्गलं शाश्वतः शंभुः मङ्गलं मृत्युसूदनः।
मङ्गलं मे ललाटाक्षः मङ्गलं सोमसुन्दरः॥

मङ्गलं पार्वती गौरी मङ्गलं परमेश्वरी।
मङ्गलं ललिता देवी मङ्गलं मीनलोचना॥

श्रोतॄणां पठतां पुंसां माहात्म्यं मधुरापतेः।
शिवं भूयात् शिवं भूयात् शिवं भूयात् शिवाज्ञया॥

नमः सुन्दरनाथाय तस्मै हालास्यवासिने।
चतुः षष्टिविधा लीला येनाकारि भुवः स्थले।

धवलवपुषमिन्दोर्मण्डले सन्निषण्णं
भुजगवलयहारं भस्मदिग्धाङ्गलेपम्।
हरिण परशुपाणिं चारु चन्द्रार्धमौलिं
हृदयकमलमध्ये सन्ततं चिन्तयामि॥

॥ श्रीः ॥

श्रीमीनाक्षीसुन्दरेशाभ्यां नमः

# हालास्यमाहात्म्यम्

## मङ्गलाचरणम्

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २

ऐश्वर्यं परमं तत्त्वमादिमध्यान्तवर्जितम् ।
आधारं सर्वभूतानां अनाधारमविक्रियम् ॥ ३

अनन्तानन्दबोधाम्बुनिधिमद्भुतविक्रमम् ।
अम्बिकापतिमीशानमनिशं प्रणमाम्यहम् ॥ ४

वन्दे हालास्यनगरीं वन्दे हेमाब्जिनीमपि ।
वन्दे सुमीननयनां वन्दे सुन्दरनायकम् ॥ ५

शिवाय परिपूर्णाय शीतलाय चिदात्मने ।
चित्तनाथाय नाथाय तेजसे ब्रह्मणे नमः ॥ ६

आनङ्गसङ्गररसाकुलशैलकन्या -
वक्षोजकुंभयुगलीपरिरम्भणेन ।
रोमाञ्चकञ्चुकपरिष्कृतगात्रयष्टिं
देवं भजामि मधुरापुरनाथमीशम् ॥ ७

इक्षुकोदण्डपुष्पेषुपाशाङ्कुशकरोज्ज्वलाम् ।
उद्यत्सूर्यनिभां वन्दे महात्रिपुरसुन्दरीम् ॥ ८

नमः सुन्दरनाथाय तस्मै हालास्यवासिने।
चतुष्षष्टिविधा लीला येन प्रत्यक्षिताः क्षितौ ।। ९

श्रीमत्सुन्दरनाथस्य देवीं शफरलोचनाम्।
कलये हृदये नित्यं कदम्बवनवासिनीम्।। १०

कारुण्यमदनिष्यन्दं कैवल्यवनचारिणम्।
कालाम्बुदश्यामलाङ्गं कलभाननमाश्रये।। ११

आम्नायाश्वलमध्यस्थं आननैष्षड्भिरन्वितम्।
हिमाद्रितनयास्तन्यकुक्षिम्भरिमये शिशुम्।।१२

प्रथमोऽध्यायः-

श्रीकैलास इति ख्यातः श्रीमतां भूभृतां वरः ।
श्रीपतिप्रमुखैर्लेखैः श्रियै मुक्त्यै च सेवितः ।। १

श्रीदादीनामपि श्रीदः श्रीकण्ठप्रथमालयः ।
श्रियोऽपि हेतोःक्षीराब्धेः श्रियं जित्वा समुन्नतः ।। २

जनानां श्रवणादेव जन्ममृत्युभयापहः ।
सर्वतीर्थसमायुक्तः सर्वदेवनमस्कृतः ।। ३

स्मरणं कीर्तनं वापि कुर्वतां सर्वसिद्धिदः ।
तपोबलेन महता पश्यतामपवर्गदः ।। ४

विविधैर्भूतसङ्घातैः परितः परिरक्षितः ।
विबुधैरप्यगम्यस्सन् विश्वभर्तुर्विनाऽऽज्ञया ।। ५

विष्टपत्रयविख्यातो विधुमण्डलपाण्डरः ।
विद्यते भुवि दिश्यैश्यां विद्वज्जनमनस्स्वपि ।। ६

तस्य मध्ये महामेरोर्मध्ये शृङ्गं महत्तरम्।
प्रशस्तमस्ति शिखरं महोमण्डलमण्डितम्।। ७

तदूर्ध्वे पावनेऽत्यर्थं दर्पणोदरवत्समम्।
व्योमवद्विमलीभूतं विशालं भवति स्थलम्।। ८

तपोऽन्तरायैः कामाद्यैरपरैः परिपन्थिभिः।
अजेयं तत्स्थलं भाति मुनीन्द्राणां मनो यथा।। ९

काननैः कल्पवृक्षाणां फलपुष्पसमन्वितैः।
चिन्तामणिमयैश्शैलैः कामधेनुव्रजैरपि।। १०

पयोदधिघृतक्षौद्रसुधामयसरिद्वरैः।
नानारत्नविचित्रैश्च कुट्टिमैरतिमञ्जुलैः।। ११

प्रमथानां मन्दिरैश्च मेरोः शिखरसन्निभैः।
सूर्यकोटिप्रतीकाशैश्चन्द्रकोटिसमप्रभैः।। १२

विमानैरतिचित्रैश्च दिव्यस्त्रीभिस्सुशोभितैः।
राजिते तत्र शिखरे राजते राजते महान्।। १३

प्रासादस्तेजसां राशिर्दुर्निरीक्ष्यः पिनाकिनः।
रत्नप्रदीपवलयैरतितेजस्समन्वितैः।। १४

प्रासादस्यान्तरे तस्य चतुर्द्वारसुशोभिते।
नवरत्नमयं पीठं नवशक्तिध्रुवं महत्।। १५

तन्मध्ये राजते लिङ्गं शिवस्य परमात्मनः।
श्रीकण्ठपरमेशाख्यं लिङ्गमस्ति चिरन्तनम्।। १६

समकालोदितानन्तशुभ्रांशुनिभयाऽऽभया।
स्वयंभूतं च तल्लिङ्गं पीठिकोपरि मण्डितम्।। १७

पराशक्तिमयं तद्धि परञ्चिद्घनरूपकम् ।। १८
प्रधानभूता देवानां ब्रह्मविष्णुबिडौजसः ।
अन्ये देवाश्च दैत्याश्च यक्षाः किम्पुरुषा अपि ।। १९

विद्याधराश्च सिद्धाश्च गन्धर्वाः किन्नरा अपि ।
मुनीश्वराश्च योगीन्द्रा गुह्यकाद्या अनेकशः ।। २०

पदाप्तयेऽर्चयन्तीशं मोक्षाय च युगे युगे ।
अर्चयन्त्यात्मलाभाय भोगाय च निरन्तरम् ।। २१

स्थावरेण स्वलिङ्गेन मूर्त्या जङ्गमया स्वया ।
भक्तानीशोऽनुगृह्णाति जनान् कैलासपर्वते ।। २२

कर्मभूमौ विशेषेषु स्थानेष्वपि नगेषु च ।
स्थावरेण स्वलिङ्गेन मूर्त्या तादृशयाऽपि च ।। २३

पञ्चविंशतिसङ्ख्याका मूर्तयः सन्ति चेशितुः ।
कैलासस्थलमुख्येषु लोकानुग्रहहेतवे ।। २४

पूजयन्तीह ये लिङ्गं शाम्भवं शक्तितस्सकृत् ।
स्थलेषु मूर्तिमुख्येषु भक्त्या चाम्बिकया सह ।। २५

तेऽधिरुह्य विमानानि दिव्यस्त्रीशोभितानि च ।
अनुभूय सदा भोगानमराणां च दुर्लभान् ।। २६

कैलासे शङ्करावासे वसन्ति चिरभोगिनः ।
श्रीकण्ठपरमेशाख्यज्योतिर्लिङ्गस्य सन्निधौ ।। २७

कोटियोजनविस्तारे रत्नस्तम्भविराजिते ।
अग्रे चापि चतुर्दिक्षु वृषभेन विराजितम् ।। २८

किङ्किणीदामसंवीतं किङ्किणीरवशोभितम्।
शिववन्निर्मलतरमस्ति तीर्थं महत्तरम्।। २९

शिवानि दातुं शक्तत्वाद् वरत्वात्पावनत्वतः।
शिवतीर्थमिति प्राहुस्समस्तविबुधोत्तमाः।। ३०

तत्तीरे तपसा क्लृप्ते मण्टपे विश्वकर्मणा।
सहस्रस्तम्भसंयुक्ते चन्द्रकान्तशिलामये।। ३१

सिंहासनं भाति तत्र नवरत्नविचित्रितम्।
धनुःखण्ड इवेन्द्रस्य चन्द्रिकाधवळांबरः।। ३२

कम्बले गुरुपीठार्हे विस्तृतव्याघ्रचर्मणि।
उपविष्टं सूतमुनिं शिवध्यानपरायणम्।। ३३

भस्मरुद्राक्षमालाभिरलङ्कृतकलेबरम्।
सुप्रसन्नमुखाम्भोजं सर्वशास्त्रविशारदम्।। ३४

व्यासशिष्यं महाप्राज्ञं पौराणिकशिखामणिम्।
सर्ववेदार्थविज्ञानसुनिश्चितमहार्थकम्।। ३५

आगतास्सेवितुं भक्त्या ऋषयस्संशितव्रताः।
मुख्यस्थलानि ख्यातानि प्रष्टुं भूमौ विशेषतः।। ३६

शम्भुभक्तश्शतानन्दः सदानन्दः प्रभाकरः।
उग्रवीर्यो महावीर्यो महाकायो महोदरः।। ३७
महायोगी जितक्रोधः कैवल्यप्रिय उत्तमः।
देवनिष्ठो यज्ञनिष्ठस्तपोनिष्ठो महाव्रती।। ३८
देवभक्तश्शिवानन्दः शिवध्यानपरायणः।
जलाशी जीर्णपर्णाशी वायुभक्षः कलानिधिः।। ३९

इत्याद्या योगिनस्सर्वे शिवभक्त्या प्रचोदिताः ।
अष्टौ सहस्रसंख्याताः सदाशिवकथोत्सुकाः ॥ ४०

समागम्य समाधिस्थं सूतमग्निसमुद्भवम् ।
जयेत्युक्त्वा दण्डवच्च प्रणम्य च पुनः पुनः ॥ ४१

तत्पादपङ्कजं भक्त्या पङ्कजैः परिपूज्य च ।
स्तोत्रैः स्तुत्वा महात्मानं पप्रच्छुः परया मुदा ॥ ४२

ऋषयः -

वह्निकुण्डसमुद्भूत भगवन् भक्तवत्सल ।
समस्तशिवधर्मज्ञ सर्ववेदान्तपारग ॥ ४३

शिवक्षेत्राणि सर्वाणि भुक्तिमुक्तिप्रदानि च ।
मेरुमन्दरकैलासश्रीपर्वतमुखानि च ॥ ४४

संक्षेपतो विस्तरतो भवता कथितानि च ।
तत्तत्क्षेत्रस्य माहात्म्यमपि तत्रेशवैभवम् ॥ ४५

तेषु मुख्यानि चोक्तानि काश्यादीनि स्थलानि च ।
तेषु मुख्यतमं क्षेत्रमप्युक्तं पार्वतीशितुः ॥ ४६

अल्पबुद्धिभिरस्माभिस्तानि नावधृतानि च ।
उत्तमक्षेत्रमाहात्म्यमपि तद्विस्मृतं प्रभो ॥ ४७

तस्माद्विशिष्टं सर्वेषां स्थानानां यन्महत्तरम् ।
चिरन्तनञ्च तत्क्षेत्रं प्रीतिदं पार्वतीशयोः ॥ ४८

शम्भुनाऽधिष्ठितं नित्यं तदेकं वक्तुमर्हसि ।
इति पृष्टो मुनिवरैस्सूतः कारुण्यविग्रहः ॥ ४९

वक्तुमारभते तेषामुत्तरं ज्ञानसिद्धये।
सर्वज्ञं साम्बमीशानं देवदेवं जगद्गुरुम्।। ५०

श्रीमन्तं दक्षिणामूर्तिं त्रिनेत्रं चन्द्रशेखरम्।
व्याघ्रचर्मपरीताङ्गं शुद्धस्फटिकनिर्मलम्।। ५१

विद्यामुद्राञ्च वह्निञ्च ह्यभयञ्च भुजैर्धृतम्।
वीरासने समासीनं व्याघ्रचर्मावृते शिवम्।। ५२

सर्वाभरणभूषाढ्यं सर्पभूषणभूषितम्।
सनकादिमुनीन्द्राणां ज्ञानदं देशिकोत्तमम्।। ५३

योगिभिस्सनकाद्यैश्च सेवितं गणपुङ्गवैः।
ध्यात्वा तत्पादयुग्मञ्च विष्ण्वाद्यैर्हृदि भावितम्।। ५४

स्मृत्वा क्षेत्रोत्तमं शम्भोर्वक्तुमारभते मुदा।

श्रीसूतः-
शृणुध्वमृषयस्सर्वे शिवभक्तिपरायणाः।। ५५
विशिष्टतममेकं यत् स्थानं कैलासवासिनः।
सर्वसौभाग्यदं सद्यश्चतुर्वर्गफलप्रदम्।। ५६
ब्रह्मविष्णुमहेन्द्राद्यैः सेवितं स्वपदाप्तये।
पुराऽऽनन्दवने कुम्भसम्भवेन महर्षिणा।। ५७
प्रोक्तं तद्विस्तरेणैव वसिष्ठादिमहात्मनाम्।
स्कन्देन च पुरा प्रोक्तं तस्मै प्रोक्तं पिनाकिना।। ५८

ईशस्य च कुमारस्य भेदो नैव ऋतं द्विजाः।
तच्छ्रुत्वा गुरुणा चापि मम व्यासेन चेरितम्।। ५९

पुराणसंहितायाञ्च विशिष्टं स्थलमीरितम्।
वक्ष्ये पुराणं तत्पुण्यं श्रीमद्धालास्यसंज्ञितम्।। ६०

श्रवणादेव पापघ्नं वेदान्तार्थ प्रकाशकम्।
वेदादिषु निगूढार्थः पुराणेषु प्रदर्शितः ।। ६१

तस्मात्सर्वपुराणेषु हालास्यं प्रतिपादितम्।
तथापि तस्य माहात्म्यं स्कान्दे तु बहु दृश्यते ।। ६२

स्कान्दमद्य प्रवक्ष्यामि पुराणं श्रुतिसारजम्।
षड्विधं संहिताभेदैः पञ्चाशत्खण्डमण्डितम्।। ६३

आद्या सनत्कुमारोक्ता द्वितीया सूतसंहिता।
तृतीया शाङ्करी प्रोक्ता चतुर्थी वैष्णवी मता ।। ६४

पञ्चमी संहिता ब्राह्मी षष्ठी सा सौरसंहिता।
तृतीया शाङ्करी या तु संहिता संप्रकीर्तिता ।। ६५

सा चतुर्वेदसाराऽदौ श्रुता गौर्या हि शङ्करात्।
गौर्यङ्कवासी स्कन्दोऽपि संहितां तां समग्रहीत्।। ६६

स चावदत् स्वशिष्याय तामगस्त्याय पृच्छते।
तथाऽऽनन्दवने तेन मुनीनान्दीर्घदर्शिनाम्।। ६७

प्रोक्ता सा पृच्छतां प्रीत्या वसिष्ठादिमहात्मनाम्।
अगस्त्यसंहितेत्यासीत्तन्नाम्ना साथ संहिता ।। ६८

सर्वान् कामान् सा ददाति कामधेनुरिव श्रुता।
तामद्य वक्ष्ये युष्माकं लोकानाञ्च हिताय च ।। ६९

पुरा पुरातने पुण्ये पुराराते: पुरे शुभे।
वाराणसीति प्रथिते सर्वेषां मुक्तिसिद्धिदे ।। ७०

भागीरथीपयःपूरपावनीकृतभूतले।
विशालाक्षीविश्वनाथसान्निध्यात्सर्वसिद्धिदे ।। ७१

शिवलिङ्गप्रतिष्ठाञ्च कर्तुमुत्तममध्वरम्।
सत्यलोकात्समागम्य ब्रह्मा लोकपितामहः ।। ७२

पितामहेश्वरं लिङ्गं प्रतिष्ठाप्य स्वनामतः।
अकरोदश्वमेधानां दशकं तस्य सन्निधौ ।। ७३

तदानीं नैमिशारण्यप्रमुखक्षेत्रवासिनः।
आययुर्मुनयः सर्वे यज्ञविद्याविशारदाः ।। ७४

वसिष्ठवामदेवाद्या महात्मानश्चिरन्तनाः।
तस्यर्त्विजस्समभवन् प्रार्थिताः पद्मयोनिना ।। ७५

निर्वृत्तेऽवभृथस्नाने पितामहमहाक्रतोः।
सत्कृताश्च यथान्यायं दिव्यै रत्नैश्च काञ्चनैः ।। ७६

वासोभिर्भूषणैरन्यैर्महादानैश्च वेधसा।
ते सर्वे परमां तुष्टिं सम्प्रापुर्मुनिपुङ्गवाः ।। ७७

विधेरनुज्ञया पश्चात्तीर्थेषु स्नातुमुद्यताः।
देशकालविशेषज्ञा वसिष्ठाद्या मुनीश्वराः ।। ७८

वसिष्ठो वामदेवश्च गौतमो वरुणो भृगुः।
बोधायनः काश्यपश्च याज्ञवल्क्यः पराशरः ।। ७९

भरद्वाजोऽङ्गिरा अत्रिः कुत्सश्शक्तिः शुको महान्।
वेदव्यासः कहोलश्च वाल्मीकिः कुम्भसम्भवः ।। ८०

सनत्कुमारः सनकः सनातनसनन्दनौ।
पुलस्त्यः पुलहो गर्गो विश्वामित्रश्च नारदः ।। ८१

इत्याद्या मुनयस्सर्वे ज्ञानिनो ब्रह्मवित्तमाः।
स्नात्वा सर्वेषु तीर्थेषु ज्ञानवाप्यादिकेषु च ।। ८२

नत्वा विनायकान् सर्वान् डुण्ड्यादीन् भक्तितः क्रमात्।
विशालाक्ष्यादिदेवीश्च भक्त्या सर्वाः प्रणम्य च ।। ८३

संपूज्य कालराजश्च भैरवं कालभक्षणम्।
दण्डनायकमुख्यांश्च गणांस्तुत्वा विशेषतः ।। ८४

आदिकेशवमुख्यांश्च केशवान् परितोष्य च।
लोकादित्यादिसूर्यांश्च प्रणिपत्य पुनः पुनः ।। ८५

कृत्वा पिण्डप्रदानानि सर्वतीर्थेष्वतन्द्रिताः।
ओंकारेश्वरमुख्यानि दृष्ट्वा लिङ्गवराणि च ।। ८६

महापूजोपहारैश्च तानि सम्पूज्य भक्तितः।
सहस्रभोजनाद्यैश्च यतीन्विप्रान् प्रतर्प्य च ।। ८७

पुनर्मुनीश्वरास्सर्वे दृष्ट्वा तु मणिकर्णिकाम्।
त्यजन्ति तापत्रितयं जन्मजन्मान्तरार्जितम्।। ८८

स्नात्वाऽथ विधिना सर्वे कृतमाध्याह्निकक्रियाः।
सन्तर्प्य देवमुख्यांश्च कुशाक्षततिलोदकैः ।। ८९

रत्नैर्हिरण्यैर्वासोभिर्दिव्यैराभरणैरपि।
गन्धाद्यैरुपचारैश्च विश्वनाथं प्रपूज्य च ।। ९०

स्तोत्रैः स्तुत्वा महादेवं प्रणिपत्य पुनः पुनः।
मुक्तिमण्टपमासाद्य बभूवुर्विगतश्रमाः ।। ९१

ततस्तु मेरुपार्श्वस्थाः केचिद्वृद्धास्तपोधनाः।
शिवभक्ता महोत्साहाश्शान्तास्सत्यपरायणाः ।। ९२

विष्णुवृद्धादयस्सर्वे सम्भूय मुनिपुङ्गवाः।
आयाताः स्वर्धुनीस्नानं कर्तुं विश्वेशदर्शनम्।। ९३

तान्दृष्ट्वा विस्मितास्सर्वे वसिष्ठाद्या मुनीश्वराः ।
आहूय च मुनिश्रेष्ठानङ्गीकृत्यासनादिना ।। ९४

प्रलिप्य गन्धपङ्कैश्च शैत्यपानीयपानतः ।
गतश्रमान् समन्वीक्ष्य पप्रच्छुश्श्रद्धया सह ।। ९५

कुतः किमर्थं युष्माभिः प्राप्तमानन्दकाननम् ।
इति पृष्टास्तु ते सर्वे प्रत्यूचुर्विनयान्विताः ।। ९६

ऋषयः -

मुनीश्वरा वयं सर्वे मेरोरासन्नदेशतः ।
श्रीमद्ब्रह्मपुरात्प्राप्ता ब्रह्मणा तु पुरा कृतात् ।। ९७

पदवाक्य प्रमाणज्ञैः पुराणज्ञैः पुरातनैः ।
आनन्दवनमाहात्म्यं श्रुत्वा वाचामगोचरम् ।। ९८

पुण्यक्षेत्रेषु सर्वेषु परमानन्दकाननम् ।
पुण्यतीर्थेषु सर्वेषु विशिष्टा मणिकर्णिका ।। ९९

सर्वेषु शिवलिङ्गेषु श्रीविश्वेशो महानिधिः ।
सर्वेषु पुण्यकालेषु श्रेष्ठः सूर्येन्दुसङ्गमः ।। १००

सन्ध्यामठेषु सर्वेषु सर्वदेवालयेष्वपि ।
अस्मद्देशे पुराणज्ञा वदन्त्येवं बहुश्रुताः ।। १०१

आषाढमास्यमावास्या सोमवारेण संयुता ।
आगमिष्यति तत्काले श्रीमती मणिकर्णिका ।। १०२

उदग्वाहा विश्वनाथसन्निधौ कूर्मपृष्ठगा ।
स्नानमात्रेण पापघ्नी कैवल्यञ्च प्रयच्छति ।। १०३

भगवान्विश्वनाथोऽपि विशालाक्ष्या समन्वितः ।
ब्रह्मविष्णुमहेन्द्राद्यैः कुमाराभ्यां गणेश्वरैः ।। १०४

द्वितीयमिव कैलासमारुह्य वृषवाहनम् ।
प्रत्यक्षीभूय दयया भुक्तिमुक्ती प्रयच्छति ।। १०५

इति च श्रुतमस्माभिः शिवतीर्थाद्यतीश्वरात् ।
शनित्रयोदशी चाद्य परश्वस्सोमवासरे ।। १०६

दर्शे प्राप्ते महापुण्ये किञ्चिदभ्युदिते रवौ ।
यूयं सर्वे सहास्माभिः स्नातुमर्हथ तत्र तु ।। १०७

इति तेषां वचश्श्रुत्वा वसिष्ठादिमुनीश्वराः ।
महत्या श्रद्धया युक्ताः प्रोचुश्चैवं परस्परम् ।। १०८

व्यक्तीकर्तुं देशकालतीर्थलिङ्गविशेषकम् ।
पवित्रीकर्तुमस्मांश्च महात्मानस्समागताः ।। १०९

वसिष्ठस्तु ततः प्राह विलोक्य मुनिसत्तमान् ।
एतैर्मुनीश्वरैः प्रोक्तं वचस्तथ्यं न संशयः ।। ११०

सर्वेषु व्रतबृन्देषु शास्त्रोक्तं व्रतमुत्तमम् ।
शास्त्रोक्तेषु च सर्वेषु शिवव्रतमनुत्तमम् ।। १११

शिवव्रतेषु सर्वेषु सोमवारव्रतं महत् ।
सोमवारादपि वरा शिवरात्रिर्मुनीश्वराः ।। ११२

त्रिकोटिशिवरात्रैस्तु तुल्याऽमा सोमवारगा ।
तत्राप्याषाढमासस्थो दर्शः पुण्यो विशेषतः ।। ११३

तस्मादवश्यं सान्निध्यं शम्भोरमिततेजसः ।
भविष्यति न सन्देहः कृतार्थाश्च वयं ध्रुवम् ।। ११४

भविष्यामः प्रसादेन शिवस्य परमात्मनः ।
मध्ये योगीश्वराणां तु शिवतीर्थो महत्तरः ।। ११५

त्रिकालज्ञस्य तस्यापि वचनं तथ्यमेव हि ।
इत्युक्त्वा मुनिशार्दूलो वसिष्ठः करुणाकरः ।। ११६

आगतान्विष्णुवृद्धादीनभ्यङ्गस्नानपूर्वकम् ।
अन्नैश्च षड्रसैर्युक्तैः शर्कराघृतपायसैः ।। ११७

ताम्बूलैश्च सुवस्त्रैश्च सन्तोष्य मुनिपुङ्गवान् ।
प्रतीक्ष्य तत्पुण्यकालमास्ते सर्वैर्मुनीश्वरैः ।। ११८

अथागते पुण्यकाले सकलाश्च मुनीश्वराः ।
वसिष्ठविष्णुवृद्धाद्याः संप्राप्य मणिकर्णिकाम् ।। ११९
अघमर्षणमन्त्रैस्तु शिवं ध्यात्वा शिवामपि ।
निर्वर्त्त्य विधिना स्नानं नित्यकृत्यं विधाय च ।। १२०
श्रीमतो विश्वनाथस्य सन्निधिं प्राप्य भक्तितः ।

न्यायेन शास्त्रेणोक्तेन पञ्चशुद्धिमकुर्वत । १२१
ज्योतिर्मयं महालिङ्गं पञ्चगव्यपुरस्सरैः ।। १२२

पञ्चामृतैश्च रत्नोदैः पुष्पोदैर्गन्धतोयकैः ।
स्थापितैः स्वर्णकलशैः स्वर्धुनीजलपूरितैः ।। १२३

अष्टोत्तरसहस्रैश्च कूर्चवस्त्रादिसंयुतैः ।
स्नपनोक्तविधानेन क्षीरादिद्रव्यसंयुतैः ।। १२४

अभिषिच्य दशैकञ्च वारं पूजान्तरान्तरम् ।
संमृज्य शुभ्रवस्त्रेण महालिङ्गं सपीठकम् ।। १२५

दिव्यगन्धेन चालिप्य पुष्पैर्नीलोत्पलादिभिः ।
धूपैर्दीपैरनेकैश्च नैवेद्यैश्च महत्तरैः ।। १२६

नीराजनैर्विचित्रैश्च संपूज्य परमेश्वरम्।
विभज्य पञ्चवक्त्रैश्च पूजयित्वा पिनाकिनम्।। १२७

श्रीमत्पञ्चाक्षरं मन्त्रं सतारं सर्वसिद्धिदम्।
सर्वमन्त्रवरं नित्यं शतरुद्रीयमध्यगम्।। १२८

अचिरात्सर्वपापघ्नं भोगदं भोगकामिनाम्।
मुमुक्षूणां मुक्तिदञ्च जपित्वा तु सहस्रकम्।। १२९

सान्तं यान्तं त्रिरुच्चार्य (हरहरहर) प्रणवेन षडक्षरम्।
जपित्वा सकलीकृत्य साम्बं ध्यात्वा सदाशिवम्।। १३०

तारं महामनुर्यत्र वियत्पञ्चाक्षराण्यपि।
प्रोचुरुच्चैस्समं सर्वे वसिष्ठाद्या मुनीश्वराः।। १३१

अथाविरासीद्विश्वेशो मनोवाचामगोचरः।
सर्वज्ञः सर्वगः सर्वः सर्वभूतहिते रतः।। १३२

अनादिः सच्चिदानन्दलक्षणः साम्ब ईश्वरः।
तं दृष्ट्वा विस्मितास्सर्वे वसिष्ठाद्या मुनीश्वराः।। १३३

जयघोषं पुरस्कृत्य प्रणिपत्य पुनः पुनः।
स्तोतुमारेभिरे सर्वे भक्त्याऽवनतकन्धराः।। १३४

## श्रीविश्वनाथस्तुतिः

मुनयः -

नमस्ते देवदेवेश नमस्ते जगतां पते।
नमस्ते चन्द्रचूडाय नमस्ते शूलधारिणे।। १३५

नमस्ते कालकालाय नमस्त्रैलोक्यधारिणे।
नमस्ते वेदवेद्याय नमस्ते पुण्यमूर्तये।। १३६

नमस्ते ब्रह्मरूपाय नमस्ते विष्णुरूपिणे।
नमस्ते रुद्ररूपाय नम ईश्वररूपिणे ।। १३७

नमः सदाशिवायास्तु नमः परशिवाय ते।
नमो देवाय महते मङ्गलाय महात्मने ।। १३८

नमः पर्वतराजेन्द्रकन्यकापतये नमः।
योगानन्दाय योगाय योगिनां पतये नमः ।। १३९

प्राणायामरतानान्तु प्रत्यक्षाय नमो नमः।
विश्वाय विश्वनाथाय विश्वाधाराय ते नमः ।। १४०

नमो भक्तभयच्छेद कारणायामलाय ते।
नमस्ते रुद्र भगवन्मन्यवे ते चेषवे नमः ।।१४१

नमस्ते धन्विने तुभ्यं बाहुभ्यामुत ते नमः।
नमस्ते हरिकेशाय पत्तीनां पतये नमः ।। १४२

पुष्टानां पतये तुभ्यं नमस्ते परमात्मने।
नमश्शिवाय त्रिदशार्चिताय विनष्टदोषाय गुणार्णवाय ।।१४३

विमुक्तिमार्गप्रतिबोधनाय देवादिदेवाय नमश्शिवाय।
इति स्तुत्वा विश्वनाथं वसिष्ठाद्यास्तपोधनाः ।। १४४

प्रणेमुर्दण्डवद्भूमौ भक्त्या परमया युताः।
अथ विश्वेश्वरो देवस्तान्विलोक्य मुनीश्वरान् ।। १४५

प्राह गम्भीरया वाचा भगवान् करुणानिधिः।
प्रसन्नोऽस्मि मुनिश्रेष्ठाः भक्त्या स्तोत्रेण सुव्रताः ।। १४६

परं वेदान्तविज्ञानं कैवल्यप्राप्तिसाधनम्।
भवतां भवतु प्राज्ञा भवदुःखनिवृत्तये ।। १४७

पठति श्रद्धया यस्तु नित्यं स्तोत्रं भवत्कृतम्।
तस्मै धर्मार्थकामांश्च मुक्तिं दास्याम्यहं ध्रुवम्।। १४८

इति लब्धवरास्सन्तः प्राहुरित्थं मुनीश्वराः।
भगवन् पार्वतीनाथ सर्वाभीष्टप्रदायक।। १४९

इदमेकं प्रार्थितं नो वरं त्वत्पादपङ्कजे।
निश्चला परमा भक्तिः सततं भवतु प्रभो।। १५०

इत्युक्तो मुनिसङ्घैस्तु वसिष्ठप्रमुखैर्हरः।
तथा भवतु चेत्युक्त्वा लिङ्गमध्ये तिरोदधे।। १५१

अथ सर्वे वसिष्ठाद्या मेरुपार्श्वात्समागतैः।
मुनिबृन्दैस्तु सन्तुष्टा विश्वेशं लिङ्गरूपिणम्।। १५२

प्रणिपत्य विशेषेण स्तोत्रैः स्तुत्वा श्रुतीरितैः।
मुक्तिमण्टपमासाद्य तत्रस्थान् देवतागणान्।। १५३

प्रणम्य च यथान्यायं कुक्कुटानाश्चतुष्टयम्।
दृष्ट्वाऽथ दक्षिणामूर्तेरुपविश्य च सन्निधौ।। १५४

विविधैर्वेदवाक्यैश्च सेतिहासपुराणकैः।
शास्त्रैश्च विविधैरन्यैस्सर्वोपनिषदां गणैः।। १५५

परस्परं सल्लपन्तश्शम्भोश्चक्रुः परां मुदम्।
ततो मुनीश्वरास्सर्वे नारदं मुनिपुङ्गवम्।। १५६

कौतूहलसमायुक्ताः पप्रच्छुर्ब्रह्मणः सुतम्।
भगवन् शृणु देवर्षे तपसा धूतकल्मष।। १५७

भुवनेषु च सर्वेषु ब्रह्माण्डान्तर्गतेषु च।
बहिष्ठेषु च सर्वेषु चरतस्तपसो बलात्।। १५८

निरोधो नास्ति भवतः सर्वं त्वं वेत्सि तत्वतः ।
तेषु सर्वेषु लोकेषु यानि क्षेत्राणि सन्ति तु ।। १५९

तेषां मध्ये विशिष्टं यत् क्षेत्रं शम्भोः चिरन्तनम् ।
वयं तच्छ्रोतुमिच्छामः तस्मात्त्वं वक्तुमर्हसि ।। १६०

श्री नारदः -

पुरा सनत्कुमारेण सर्वज्ञेन महात्मना ।
कथितं क्षेत्रमाहात्म्यं वेदव्यासाय धीमते ।। १६१

स एव सर्वं युष्माकं वक्तुमर्हति सत्तमाः ।
इत्युक्ते नारदेनाथ मुदा सर्वे मुनीश्वराः ।। १६२

समीपस्थं महाभागं प्राहुः सत्यवतीसुतम् ।

मुनयः -
भगवन् सर्वधर्मज्ञ वेदव्यास महामुने ।। १६३

विदुषां शम्भुभक्तानामग्रगण्यस्त्वमेव हि ।
पुराणानि च सर्वाणि वेदान् साङ्गान् महामते ।। १६४

इतिहासान् भारतादीन् काव्यानि विविधानि च ।
अलङ्कारांश्च विविधान् नाटकान्यद्भुतानि च ।। १६५

प्रहेलिकाश्च विविधा सव्यंग्याः सरसास्तथा ।
ज्ञातुं वक्तुं बोधयितुं त्वत्समो नास्ति भूतले ।। १६६

तस्मात् क्षेत्रेषु सर्वेषु चिरन्तनमनुत्तमम् ।
वक्तुमर्हसि तत्क्षेत्रं भक्तानामनुकम्पया ।। १६७

इति श्रुत्वा वचस्तेषां वेदव्यासो महामुनिः ।
मुदा परमया युक्तः प्राह सर्वान्मुनीश्वरान् ।। १६८

श्री वेदव्यासः-

शृणुध्वमृषयः सर्वे युष्माकं हितमुत्तमम्।
अगस्त्यः शम्भुभक्तानामग्रगण्यः पुरातनः ।। १६९

सर्वज्ञसूनोः षड्वक्त्रात्सर्वज्ञादाप्तवेदनः ।
पुरा कैलासशिखरे शम्भुं नन्तुं समागताः।। १७०

इन्द्रादयो लोकपाला ब्रह्मविष्णुसमन्विताः ।
तदा भारेण महता भूमिश्च विनतोत्तरा ।। १७१

दक्षिणा चोन्नतिं प्राप्ता सर्वलोकभयावहा ।
तथाविधां समन्वीक्ष्य धरित्रीञ्च महेश्वरः ।। १७२

स्वभक्तानामग्रगण्यं तपोयोगसमन्वितम्।
अगस्त्यं चोदयामास स्थातुं मलयपर्वते ।। १७३

शिवाज्ञां शिरसा धृत्वा कुम्भयोनिस्तथाऽकरोत्।
तदाप्रभृति भूमिश्च सुसमा समवस्थिता ।। १७४

तस्मात्स एव मुख्यश्च भक्तानां विदुषामपि।
युष्माकमतुलं प्रश्नं श्रद्धया वक्ष्यति द्विजाः ।। १७५

इति व्यासवचश्श्रुत्वा मुनीन्द्राः प्रीतिसंयुताः ।
पुरोऽगस्त्यं समालोक्य जटाबन्धविराजितम्।। १७६

शिवध्यानरतं शान्तं वेदशास्त्रविशारदम्।
रुद्राक्षमालाभरणं भस्मोद्धूलितविग्रहम्।। १७७

सुप्रसन्नमुखाम्भोजं स्वभासा सूर्यसन्निभम्।
प्रणम्य मुनयः सर्वे तुष्टुवुः परया मुदा ।। १७८

जय त्वं भगवन् स्कन्दप्रसादादाप्तवेदन ।
जय त्वं भगवन् स्कन्दचरणासक्तमानस ।। १७९

जय त्वं स्कन्दभक्तानामग्रगण्य पुरातन।
जय त्वं सर्ववेदान्तपद्माकरदिवाकर।। १८०

स्कन्दविज्ञानदीपस्य वर्तीभूत जय प्रभो।
एवं स्तुत्वा महात्मानं पुनः प्राहुश्च तं मुनिम्।। १८१

महर्षे कुम्भयोने त्वं सत्यमीश्वरसन्निभः।
सुसमासीद्यतः पृथ्वी त्वया मलयवासिना।। १८२

आचम्य चतुरः सिन्धून्यथास्थानं विमुक्तवान्।
विन्ध्यस्य संस्तम्भयिता चन्द्रादित्यविरोधिनः।। १८३

समस्तलोकभयदवातापील्वलभक्षक।
ताम्रपर्णीजले नित्यं विधाय स्नानमुत्तमम्।। १८४

भस्मस्नानं ततः कृत्वा नित्यकृत्यं विधाय च।
षोडशेनोपचारेण शिवलिङ्गार्चनं यथा।। १८५

त्रिकालं नियमेनैव करोषीश्वरपूजनम्।
त्वया यत्त्वर्पितं शुद्धं जलं ब्रह्मगणैर्वृतम्।। १८६

मुनीश्वराश्च पितरो वदन्त्यात्महिताय च।
महेश्वरान्मूलसूत्रमधिगम्य त्वया पुरा।। १८७

अङ्गीकृत्य च तन्मूलं तद्गतेनैव वर्त्मना।
भाषां द्राविडजातीनां नादोत्पत्तिं ततः परम्।। १८८

वर्णोत्पत्तिं ततः पश्चात्तस्यार्थविवृतिं ततः।
अलङ्काररसैर्युक्तं वृत्तानां लक्षणं परम्।। १८९

एतत्सर्वं भवानेव चक्रे लोकोपकारतः।
तस्मात्त्वमेव मुख्यश्च सर्वेषां तु महात्मनाम्।। १९०

शिवक्षेत्राणि सर्वाणि तीर्थानि सकलान्यपि।
स्वायम्भुवानि लिङ्गानि विविधानि महान्त्यपि ।। १९१

वेत्सि शम्भोः प्रसादेन तेषां मध्ये महत्तरम्।
क्षेत्रं तीर्थं लिङ्गवरं भुक्तिमुक्तिप्रदायकम् ।। १९२

वक्तुमर्हसि सर्वज्ञ महत्कौतूहलं हि नः ।
इति तेषां वचश्श्रुत्वा कुम्भयोनिर्महातपाः ।। १९३

अङ्गेष्वशेषेष्वधिकं सम्प्राप्तपुलकाङ्कुरः ।
स्यन्दत्सलिलया दृष्ट्या मन्दस्मेरमनोहरः ।। १९४

हर्षगद्गदया वाचा प्रोवाच मुनिसत्तमान्।
युक्तो युष्माभिरधुना प्रश्नः पृष्टो महत्तरः ।। १९५

अहं वक्ष्यामि तत् सर्वं शृणुध्वमवधानतः ।।
इत्युक्त्वा कुम्भसम्भूतः समाहितमनास्तदा ।। १९६

ध्यात्वा विघ्नेश्वरं देवं स्वगुरुञ्च षडाननम्।
श्रीहालास्येश्वरं शम्भुः मनोज्ञां शफरेक्षणाम् ।। १९७

भक्त्या प्रणम्य सम्प्रार्थ्य मन्त्रमाद्यं षडक्षरम्।
जपित्वा दिव्यदृष्ट्या तु निरीक्ष्य मुनिपुङ्गवः ।। १९८

कृतप्रणामो मुनिभिः कुम्भयोनिर्मुनीश्वरः ।
वक्तुमारभते सर्वं सर्वलोकहितावहम् ।। १९९

प्रश्नाध्यायमिदं पुण्यं शृणुयाद्यः समाहितः ।
गङ्गास्नानफलं लब्ध्वा सर्वैः पापैः प्रमुच्यते ।। २००

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये प्रश्नविधिर्नाम प्रथमोऽध्यायः*

# ஹாலாஸ்ய மாஹாத்ம்யம்

## கருத்துச் சுருக்கம்

## அத்தியாயம்-1

ஸ்ரீ கைலாஸம் என்ற மலை மேருமலையின் நடுவே உள்ள பெருமலை. அதன் நடுவே வெள்ளியாலான சிகரம் ரஜதாசலம் (வெள்ளிமலை) எனப்படும். சிவபெருமான் கோயில் கொண்டுள்ள அரண்மனையின் நடுவே நவசக்திகளை ஆதாரமாகக் கொண்ட நவரத்தினத்தாலான பீடத்தின் மீது பரம்பொருளான சிவபெருமானது ஸ்ரீகண்டபரமேசம் என்ற லிங்கம் அமைந்துள்ளது. தானே தோன்றியது. பேரொளியும் பேராற்றலும் பேரறிவும் பேரானந்தமும் வடிவானது. பிரும்மா முதலிய தேவர்களும் யக்ஷர் கின்னரர் முதலிய மற்ற தேவரினமும் தம் தம் நலனுக்காகவும் முக்தி பெறவும் அவரை வழிபடுகின்றனர். அங்கு அசைவற்றலிங்க வடிவிலும் நடமாடும் தெய்வமாகவும் நின்று அருள்புரிகிறார். கைலாஸம் போன்று அதே பெருமையும் புகழும் பெற்ற இருபத்தைந்து ஸ்தலங்களில் அதே லிங்கவடிவிலும் நடமாடும் தெய்வமாகவும் அம்பிகையுடன் அருள் புரிகிறார்

கைலாஸத்தில் ஸ்ரீகண்டபரமேச்வரலிங்கத்தின் கோடி யோசனை பரப்புள்ள ரத்தினத் தூண்கள் கொண்ட மஹா மண்டபத்திற்கு எதிரே சிவதீர்த்தம் என்ற நீர் தேக்கம் மங்களங்களை வழங்குவதற்கென அமைந்துள்ளது. அதன் கரையில் விச்வகர்மா தன் தவப்பயனாகக் கட்டிய ஆயிரக் கால் மண்டபத்தில் அமைந்த ஆஸனத்தில் வ்யாஸ முனிவரின் சீடரான ஸூதர் சிவனைத் த்யானித்தவராக அமர்ந்துள்ளார். சிவன் ஆலயம் கொண்டுள்ள ஸ்தலங்களைப் பற்றி அறிந்து கொள்ள விரும்பிய சிவனடியார்களான எண்ணாயிரம் முனிவர்கள் அங்கு கூடி ஸூதரை வணங்கி விண்ணப்பித்துக் கொண்டனர்.

''ஸூதரே! மேரு, மந்தரம், கைலாஸம், ஸ்ரீசைலம் முதலிய பல சிவக்ஷேத்ரங்கள் உள்ளன. அவற்றில் சிறந்ததும் சிவனையும் தேவியையும் வழிபடுவதற்கேற்றதும்

சிவபெருமானும் பார்வதீ தேவியும் எப்போதும் அருள் புரிவதுமான ஸ்தலமொன்றை அறிமுகப்படுத்துவீராக. (42-55).

ஸூதர் கூறினார் - ஈசன் கோயில் கொண்டுள்ள ஸ்தலங்களைப் பற்றி ஸ்காந்த புராணம் விரிவாகக் கூறுகிறது. ஸநத்குமார ஸம்ஹிதை, ஸூதஸம்ஹிதை, சங்கரஸம்ஹிதை, பிரம்ஹஸம்ஹிதை, வைஷ்ணவ ஸம்ஹிதை, ஸௌர ஸம்ஹிதை என்று அதன் ஆறுபகுதிகளில் ஒன்றான சங்கர ஸம்ஹிதை சிவனால் பார்வதிக்கு உபதேசிக்கப்பட்டது. அதனைத் தாயின் மடியில் அமர்ந்து கேட்ட ஸ்கந்தன் அகஸ்தியருக்குக் கூற அவர் அதை முனிவர்களுக்குக் கூறினார். காசி சிவக்ஷேத்ரங்களில் மிகச் சிறந்தது. அங்கு கங்கையில் மணிகர்ணிகையில் நீராடி ஸ்ரீ ருத்ரத்தின் நடுவிலுள்ள சிவபஞ்சாக்ஷர மந்த்ரஜபம் செய்து விசுவேசுவரனை வழிபட்டு அவரது அருள் பெற்ற வஸிஷ்டர். முதலான முனிவர்கள் நாரதரிடம் சிவக்ஷேத்ரங்கள் பற்றிக் கூற விண்ணப்பித்தனர். நாரதர் வியாஸரைக் கூறப் பணிக்க வியாஸர் அகஸ்த்யரை அணுகும்படி சொன்னார்.

அகஸ்த்யர் சிவபக்தர்களில் சிறந்தவர். கைலாஸத்தில் சிவனைக் காணத் தேவரும் மற்றவரும் கூட, பாரத்தால் கைலாஸபூமி தாழ பாரதத்தின் தென் பகுதி உயர்ந்தது. அகஸ்த்யரைச் சிவபெருமான் தெற்கே அனுப்ப பூமி சம நிலை பெற்றது. விந்திய மலையைத் தாழ்த்தியும் வாதாபியையும் இல்வலனையும் அடக்கியும் தெற்கே வந்த அகஸ்தியர் தாமிரபர்ணியில் நீராடி சிவனை வழிபட்டு வந்தார். பரமேசுவரரிடமிருந்து மொழி இலக்கணம் கற்று தமிழ் மொழி சிறந்த சீர்மிக்க வடிவம் பெறச் செய்தார். முனிவர்கள் அவரைச் சென்றடைந்து மிகச் சிறந்ததும் புராதனமுமான சிவக்ஷேத்திரம் பற்றிக் கூறக் கோரினர். விக்நேசுவரரையும் ஹாலாஸ்ய நாதரையும் மீனாக்ஷியையும் வணங்கிவிட்டு மிகச் சிறந்த சிவக்ஷேத்திரமான ஹாலாஸ்யத்தைப் பற்றி அகஸ்த்யர் விளக்கினார்.

★ ★ ★

## द्वितीयोऽध्यायः

अगस्त्यः-

शृणुध्वमृषयस्सर्वे भाग्यवन्तस्समाहिताः।
श्रवणात्सर्वपापघ्नं क्षेत्रतीर्थेशवैभवम्॥ १
एतत्सर्वं भगवता देव्या पृष्टेन शम्भुना।
सर्वज्ञेन पुरा प्रोक्तं देव्याश्चाङ्के तदा स्थितः॥ २
कुमारः श्रुतवान् सर्वं धिया विमलया युतः।
स्वभक्तेन मया पृष्टः सर्वज्ञश्शिखिवाहनः॥ ३
कथयामास सम्प्रीत्या भगवान् भक्तवत्सलः।
तत्सर्वं कथयाम्यद्य युष्माकं मुनिपुङ्गवाः॥ ४
क्षेत्रं हालास्यसदृशं तीर्थं हेमाब्जिनीसमम्।
लिङ्गं श्रीसुन्दरेशेन तुल्यं नास्ति जगत्त्रये॥ ५
अथ तत्क्षेत्रमाहात्म्यं सङ्ग्रहेण वदाम्यहम्।
भुवनेषु च सर्वेषु पुण्यक्षेत्रं विशिष्यते॥ ६
पुण्यक्षेत्रेषु सर्वेषु शिवक्षेत्रं परं विदुः।
अष्टषष्टिमहाक्षेत्रं तेषां मध्ये महत्तरम्॥ ७
तेषु षोडश मुख्यानि कैलासप्रमुखानि च।
तेषु चत्वारि मुख्यानि क्षेत्राणि मुनिपुङ्गवाः॥ ८
तानि क्रमेण वक्ष्यामि काशीक्षेत्रादिकानि च।
श्रीमद्वाराणसी पुण्या देहान्ते मुक्तिदायिनी॥ ९
विश्वेश्वरमहालिङ्गसान्निध्यात्सर्वसिद्धिदा।
श्रीमद्दक्षिणकैलासो भक्तानां भुक्तिमुक्तिदः॥ १०
कालहस्तीश्वरं लिङ्गं तत्रास्ति सुरसेवितम्।
पुण्डरीकपुरं रम्यं दर्शनाद्भुक्तिमुक्तिदम्॥ ११

आनन्दताण्डवं कृत्वा तत्रास्ते भगवान् शिवः ।
श्रीहालास्यं शिवक्षेत्रं श्रवणात्सर्वसिद्धिदम्।। १२
तत्र स्वायम्भुवं लिङ्गं सोमसुन्दरसंज्ञकम्।
ब्रह्मविष्णुमहेन्द्राद्यैः सेवितं सर्वसिद्धिदम्।। १३
एतेषां तु प्रसिद्धानां स्थानानां तु चिरन्तनम्।
विशिष्टं परमं स्थानं श्रीमद्धालास्यसंज्ञितम्।। १४
हेमपद्माकरं तीर्थं पापेन्धनधनञ्जयम्।
तत्रास्ति सर्वतीर्थानामधिकं परमाद्भुतम्।। १५
स्वायम्भुवस्य लिङ्गस्य वैशिष्ट्यात्तीर्थवैभवात्।
तस्य क्षेत्रस्य माहात्म्यात् साम्बः परगतिश्शिवः ।। १६
सान्निध्यं कुरुते तत्र तस्मात् क्षेत्रं परात् परम्।
इत्युक्ताः कुम्भजेनाथ ते सर्वे मुनिपुङ्गवाः ।। १७
पुनर्विज्ञापयामासुः सन्देहविनिवृत्तये ।
ऋषयः -
भगवन् क्षेत्रतत्वज्ञ कुम्भयोने मुनीश्वर ।। १८
कथं भगवता प्रोक्तं श्रीमद्धालास्यसंज्ञितम्।
काश्यादिसर्वक्षेत्राणामधिकञ्चोत्तमोत्तमम्।। १९
इति पृष्टो मुनिवरैस्तदा वक्तुं प्रचक्रमे ।
अगस्त्यः -
साधु पृष्टं हि युष्माभिर्विशेषज्ञैर्बहुश्रुतैः ।। २०
कथयामि विशेषेण यथा स्कन्देन भाषितम्।
ब्रह्मणो द्वादशान्तत्वात् भूलोकशिवलोकतः ।। २१
शम्भोस्तु लीलास्थानत्वात् क्षेत्रमेतत्परात्परम्।
यदा न सन्ति क्षेत्राणि पुण्यानि भुवनेषु च।। २२

श्रीहालास्यं शिवेनैव विहर्तुं निर्मितं पुरा।
तस्मात्तत्क्षेत्रमाहात्म्यं जानात्येव महेश्वरः ।। २३

श्रवणाद्धर्मदं पुंसां स्मरणादर्थसिद्धिदम्।
दर्शनात्सर्वकामांश्च ददाति क्षेत्रमुत्तमम्।। २४

निरन्तरनिवासेन शिवसायुज्यदं परम्।
काश्यादिपुण्यक्षेत्रेषु देहान्ते मुक्तिरुच्यते ।। २५

श्रीहालास्य शिवक्षेत्रे जीवन्मुक्तिस्सदा नृणाम्।
तस्माद्धालास्यसदृशं नास्ति क्षेत्रं जगत्त्रये ।। २६

ब्रह्महत्याभिभूतश्च वृत्रारिरमरैस्सह।
हालास्यं प्राप्य मृगयाव्याजतो निरघोऽभवत्।। २७

महापातकतूलानां क्षेत्रं ज्वलनसन्निभम्।
तस्मात्सर्वाघशान्त्यै च प्राप्यं सर्वजनैरपि ।। २८

अज्ञानादथवा मोहाद्दैवगत्या मुनीश्वराः ।
प्रविष्टो मनुजस्सद्यः सर्वपापैः प्रमुच्यते ।। २९

पुरा कश्चिद्द्विजो गत्वा जननीं काममोहितः ।
पितरञ्च निहत्याथ खनित्रेणातिदुर्मतिः ।। ३०

छायारूपेण घोरेण पित्रा मुसलपाणिना।
अनुद्रुतस्तदा भीत्या स्थानानि सुबहून्यपि ।। ३१

गत्वा गत्वा दैवगत्या श्रीहालास्यमथाविशत्।
ब्रह्महत्याविनिर्मुक्तस्तत्रैव स विमोचितः ।। ३२

द्रव्यजातं लयं याति यथा लोहेऽग्निदीपिते।
तथा सर्वाणि पापानि लयं तत्रैव यान्ति च ।। ३३

पिपीलिकादिहस्त्यन्तं तत्र मुक्तिं प्रयाति च।
कश्चिदत्र विशेषोऽस्ति देवदेवस्य धूर्जटेः ।। ३४

जटाबद्धेन्दुशकलादुत्पन्नामृतधारया ।
सिक्ता विश्वंम्भरा नाम्ना तदासीन्मधुरापुरी ।। ३५

चिदम्बरे महाक्षेत्रे नृत्तमेकं तु दृश्यते ।
राजते तु सभामध्ये व्यत्यस्तमधिकं परम् ।। ३६

सन्ति स्थानान्यनेकानि शिष्टानि भुवनेषु च ।
श्रीहालास्यसमं क्षेत्रं कुत्रचिन्नैव विद्यते ।। ३७

हालास्याख्यं महास्थानं त्यक्त्वा गच्छति यो नरः ।
करस्थं पायसं त्यक्त्वा कूर्परं लेढि चात्मनः ।। ३८

सर्वेषां भुक्तिमुक्त्यर्थं शम्भुना निर्मितं तु तत् ।
ब्रह्मविष्णुमहेन्द्राद्यैः सेवितं सर्वसिद्धये ।। ३९

स्मृतमात्रेण तत्क्षेत्रं सर्वपापं व्यपोहति ।
ददाति भुक्तिं मुक्तिञ्च शाश्वतीं मुनिपुङ्गवाः ।। ४०

तत्र नित्यं निवसतां सर्वेषां प्राणिनां ध्रुवम् ।
न पुनर्भवजा भीतिर्नात्र कार्या विचारणा ।। ४१

तत्र नित्यं निवसते यः कश्चित्प्राकृतो जनः ।
पुत्रपौत्रादिसंयुक्तो नित्यश्च सुखमेधते ।। ४२

अश्वमेधैर्महायज्ञैः अग्निष्टोमैर्महाफलैः ।
अत्यग्निष्टोमयज्ञैश्च बृहस्पतिसवैरपि ।। ४३

अतिरात्रैर्महायज्ञैः सोमयागैश्च विश्रुतैः ।
दर्शैश्च पूर्णमासैश्च द्वादशाहैस्तथा परैः ।। ४४

षोडशाहैर्वाजपेयैः राजसूयैः क्रतूत्तमैः ।
विश्वजित्सर्वजिभ्द्यां च तथाऽखिलमखैरपि ।। ४५

एवमाद्यैर्विशिष्टैश्च तथा सर्वस्वदक्षिणैः ।
यत्फलं लभते यज्वा तद्वासी तत्समश्नुते ।। ४६

तिलैर्दत्तैर्घृतैश्चित्रैः वस्त्रैराभरणैरपि ।
गोभिश्च कपिलाद्याभिः केदारैस्सस्यमालिभिः ।। ४७
रत्नैस्सुवर्णरजतैः विविधैर्धान्यराशिभिः ।
दासीदासगजाश्वाद्यैः भवनैश्च मनोहरैः ।। ४८
रथैश्च कन्यकाभिश्च विशेषादन्नपानकैः ।
अनर्घैः कैश्चिदप्यन्यैः दानैर्विविधलक्षणैः ।। ४९
यत्फलं लभते तत्र वासी तत्फलमश्नुते ।
काश्यादिसर्वक्षेत्रेषु निरन्तरनिवासिनः ।। ५०
यत्फलं निवसंस्तत्र तत्फलं सर्वमाप्नुयात् ।
सुरापो ब्रह्महा चैव भ्रूणहा गुरुहा तथा ।। ५१
स्त्रीघ्नो भ्रातृहनश्चापि मातृहा गुरुतल्पगः ।
स्तेयी चान्ये च बहवो मन्दजाः पापकारिणः ।। ५२
श्रीहालास्यमुषित्वा ते मुच्यन्ते सर्वकिल्बिषैः ।
गङ्गा च यमुना चैव नर्मदा च सरस्वती ।। ५३
गोदावरी गोमती च तुङ्गभद्रा च पापहा ।
सरयूस्तमसा कृष्णा कावेरी च सरिद्वरा ।। ५४
वेगवती वेत्रवती ताम्रपर्णी सरिद्वरा ।
आसां नदीनां तीर्थेषु पावनेषु विशेषतः ।। ५५
स्नानश्च कुर्वतां पुंसां यद्यदस्ति फलं महत् ।
तत्तत्सर्वमवाप्नोति तत्र वासी नरोत्तमः ।। ५६
मासि मासि यदन्यत्र कृताच्चान्द्रायणात्फलम् ।
तत्फलं लभते मर्त्यो हालास्ये नक्तभोजनात् ।। ५७
मासोपवासादन्यत्र यत्फलं लभते नरः ।
श्रद्धयैकोपवासेन हालास्ये तदवाप्नुयात् ।। ५८

चातुर्मास्यव्रतात्प्रोक्तः यदन्यत्र फलं महत्।
अष्टम्यामुपवासेन हालास्ये तत्समश्नुते ।। ५९
षण्मासान्नपरित्यागाद्यदन्यत्र फलं लभेत्।
सोमवारोपवासेन हालास्ये तन्न संशयः ।। ६०
संवत्सरोपवासेन लभेदन्यत्र यद्व्रती।
शिवरात्र्युपवासेन हालास्ये तत्फलं लभेत्।। ६१
अनन्तो महिमा तस्य हालास्यस्य द्विजोत्तमाः।
कस्तं वर्णयितुं शक्तः शिवक्षेत्रोत्तमस्य च ।। ६२
यस्तत्र निवसेन्मर्त्यः संयतात्मा समाहितः।
त्रिकालमपि भुञ्जानो वायुभक्षसमो हि सः ।। ६३
मुष्टिमात्रप्रदानेन महादानफलं लभेत्।
सर्वं तपःफलं मुख्यं सर्वदानफलं महत्।। ६४
सर्वतीर्थफलञ्चैव सर्वयज्ञफलं तथा।
सर्वमन्त्रफलं पूर्णं योगज्ञानफलं तथा ।। ६५
तस्मात्तत्र वसेद्धीमानाकांक्षी हितमात्मनः।
बहुनात्र किमुक्तेन श्रीहालास्यं परात्परम्।। ६६
सर्वस्नानफलं पूर्णं सर्वपूजाफलप्रदम्।
ददाति नित्यं हालास्यं निरन्तरनिवासिनः ।। ६७
तस्माद्धालास्यसदृशं नास्ति क्षेत्रं पुरातनम्।
पवित्रञ्च विशिष्टञ्च सद्यस्सर्वफलप्रदम्।। ६८
शिवक्षेत्रोत्तममिति श्रीमद्धालास्यमित्यपि।
समष्टिविद्यानगरी मधुरापुरमित्यपि ।।
भूलोकशिवलोकञ्च जीवन्मुक्तिपुरं तथा ।। ६९

चतुष्कूटपुरश्चेति द्वादशान्तं विदुर्बुधाः।
इति नामान्यनेकानि सन्ति क्षेत्रस्य तस्य च ।। ७०
एवं क्षेत्रस्य माहात्म्यं सर्वक्षेत्रोत्तमोत्तमम्।
श्रीहालास्यं समाख्यातं मुनीन्द्रास्तत्र संशयः ।। ७१
इति श्रुत्वा मुनिश्रेष्ठा हालास्यक्षेत्रवैभवम्।
सर्वे विस्मयसंयुक्ताः प्रत्यूचुः कुम्भसम्भवम्।। ७२
सत्यमुक्तं भगवता क्षेत्रमाहात्म्यवेदिना।
सर्वे वयं कृतार्थाः स्मः श्रुत्वा तत्क्षेत्रवैभवम्।। ७३
अथ हेमाब्जिनीतीर्थमाहात्म्यं वक्तुमर्हसि।
इति तेषां वचश्श्रुत्वा सर्वज्ञः कुम्भसम्भवः ।। ७४
प्रभावं हेमपद्मिन्या वदति श्रद्धया सह ।।
अगस्त्यः-
वक्ष्ये हिरण्यपद्मिन्यास्समुत्पत्तिपुरस्सरम्।। ७५
माहात्म्यं श्रुतमात्रेण महापापहरं परम्।
जीवन्मुक्तिपुरेशस्य कोयष्टेर्मुक्तिदायिनः ।। ७६
आज्ञया तत्र तीर्थे तु न सन्ति जलजन्तवः।
न विद्यन्ते यदा मेघा गङ्गाद्याश्च सरिद्वराः ।। ७७
समुद्राश्चान्यतीर्थानि पुण्यक्षेत्रगतानि च।
तदा हालास्यनाथेन प्रार्थितेन गणेश्वरैः ।। ७८
मूललिङ्गाभिषेकाय निर्मितं शूलपाणिना।
पुरा कदम्बकान्तारनायकः करुणानिधिः ।। ७९
लीलया सकलो भूत्वा स्वभासा भासयन् दिशम्।
चन्द्रमौलिस्त्रिनेत्रश्च नागयज्ञोपवीतवान्।। ८०

त्रिशूलेन कपालेन विराजितभुजद्वयः ।
वामाङ्गासक्तया देव्या सहितो वृषवाहनः ॥ ८१
नन्द्यादिगणनाथैश्च चचार भुवनत्रयम् ।
तदानीं ब्रह्मविष्ण्विन्द्रप्रमुखा देवतागणाः ॥ ८२
स्तुवन्ति च महाभक्त्या हालास्येशं परात्परम् ।
अनुगृह्य ततो देवान् चिन्तितार्थप्रदानतः ॥ ८३
पुनः कदम्बविपिनं स्वस्थानं प्राप्य शङ्करः ।
कृपादृष्ट्या विलोक्याथ नन्द्यादिगणनायकान् ॥ ८४
अन्तर्धानं महालिङ्गे कर्तुं देवस्समुद्यतः ।
तदानीं गणनाथाश्च प्रार्थयन्ति स्म शङ्करम् ॥ ८५
जीवन्मुक्तिपुरेशान भगवन् भक्तवत्सल ।
पश्य पश्य महालिङ्गमभिषेकविवर्जितम् ॥ ८६
अस्माकमिच्छा महती सञ्जाता स्नानकर्मणि ।
महालिङ्गाभिषेकाय स्नानाय च शरीरिणाम् ॥ ८७
कुरु सद्यः पुण्यतमं तीर्थं भोगापवर्गदम् ।
गणैरेवं प्रार्थितस्सन् जीवन्मुक्तिपुरेश्वरः ॥ ८८
चखान च त्रिशूलेन लिङ्गस्याग्नेयदेशतः ।
भिनत्ति शूलमूलं तु ब्रह्माण्डाधःकटाहकम् ॥ ८९
ब्रह्माण्डानां तदाधारान्निर्मलाश्चातिपावनाः ।
आपस्समुद्गतास्तत्र तटाके शूलखातिते ॥ ९०
पुनरुच्चैरुद्गताश्च प्रवाहाश्च जलस्य च ।
स्तम्भिता देवदेवेन त्रैलोक्याभयदायिना ॥ ९१

उत्तमाङ्गधृतं गाङ्गं वारि गङ्गाधरः पुनः ।
संयोज्य तत्र तीर्थे च सर्वानाह गणेश्वरान् ।। ९२
ईश्वरः -
गणाश्शृण्वन्तु मद्वाक्यमिदं तीर्थं मया कृतम् ।
शिवतीर्थमिति प्रोक्तं शिवदत्वात्स्वभावतः ।। ९३
त्रैलोक्ये यानि तीर्थानि भविष्यन्ति गणेश्वराः ।
तेभ्योऽखिलेभ्यस्तीर्थभ्यः परत्वात्परतीर्थकः ।। ९४
तीर्थानामादिभूतत्वादादितीर्थमितीरितम् ।
महत्त्वाच्च महातीर्थं तीर्थानां महतामपि ।। ९५
दृष्टमात्रेण सर्वेषां सर्वपापहरं यतः ।
पापनाशनमित्युक्तं ततस्तीर्थं सुपावनम् ।। ९६
अस्य तीर्थस्य संस्पर्शादश्वमेधफलं यतः ।
महापुण्यप्रदमिति प्रोक्तं तीर्थवरं ततः ।। ९७
ज्ञानतीर्थं मुक्तितीर्थं कारणत्वात्तयोरिदम् ।
मद्गङ्गासङ्गतं त्वेतच्छिवगङ्गेति कीर्तितम् ।। ९८
उत्तमत्वाच्च तीर्थानामिदं तीर्थोत्तमोत्तमम् ।
वृत्रहत्याश्च वृत्रारेर्हरिष्यामि यदा तदा ।। ९९
हेमपद्माकरमिति नामाप्यस्य भविष्यति ।
सर्वधर्मप्रदमिति सर्वार्थप्रदमित्यपि ।। १००
सर्वकामप्रदमिति दीर्घायुष्करमित्यपि ।
देवखातं शूलखातं महामायार्णवामृतम् ।। १०१

यशस्करं पुष्टिकरं श्रीकरञ्च शिवत्वदम् ।
भयापहं तीर्थराजं सर्वतीर्थफलप्रदम् ॥ १०२
सर्वशत्रुहरञ्चेति सर्वापद्धरमित्यपि ।
सर्वरोगहरं चेति भवरोगहरं त्विति ॥ १०३
सर्वदोषहरञ्चेति वन्ध्यात्वहरमित्यपि ।
सर्वदुःखहरञ्चेति समस्तसुखकारणम् ॥ १०४
एवमाद्यान्यनेकानि नामानि प्रथितानि च ।
सन्ति सार्थानि सत्यानि मत्तीर्थस्यास्य मद्गणाः ॥ १०५
अस्मिन् तीर्थे तु यस्स्नात्वा देवादीन् परितर्प्य च ।
दत्वा दानं यथाशक्ति जप्त्वा पञ्चाक्षरं परम् ॥ १०६
प्रदक्षिणनमस्कारस्तोत्रैस्सन्तोष्य मामपि ।
कृतकृत्यो भवेज्जन्तुस्सत्यं सत्यं गणाधिपाः ॥ १०७
एतत्तीर्थजलैर्लिङ्गं सकृत्संस्नाप्य भक्तितः ।
सर्वतीर्थाभिषेकेण यत्फलं तदवाप्नुयात् ॥ १०८
भवन्तश्श्रद्धया सार्धं पवित्रे तीर्थवारिणि ।
स्नात्वाऽभिषेकं कुर्वन्तु नित्यं लिङ्गात्मनो मम ॥ १०९
इत्युक्त्वा देवदेवोऽपि सद्यस्सार्धं गणेश्वरैः ।
अवतीर्य महातीर्थे स्नात्वा हालास्यसुन्दरः ॥ ११०
दत्वाऽनुज्ञां गणादीनां स्नानाय परया मुदा ।
तत्र स्वायम्भुवे लिङ्गे तिरोधत्ते परश्शिवः ॥ १११
तदानीं शिववाक्यात्तु स्नात्वा लिङ्गं गणेश्वराः ।
अभिषिच्य विधानेन सर्वान् कामानवाप्नुयुः ॥ ११२

एवं सुवर्णपद्मिन्या उत्पत्तिः कथिता मया।
वक्ष्यामि तस्या माहात्म्यं सङ्ग्रहेण मुनीश्वराः ॥ ११३
तस्या दर्शनमात्रेण सर्वैरंहोभिरुज्झितः।
संस्नाय स्वर्णपद्मिन्यां श्रेयः प्राप्नोति पुष्कलम्॥ ११४
सर्वतीर्थेषु संस्नाय यत्पुण्यं समवाप्यते।
तत्पुण्यं प्राप्यते स्वर्णपद्मिन्यामेकमज्जनात्॥ ११५
शुद्धाभिर्मृत्तिकाभिश्च महातीर्थे विधानतः।
संस्नाय वारुणैस्सूक्तैश्श्रद्धया परया सह॥ ११६
सर्वतीर्थेषु यत्पुण्यं यत्फलं सर्वदानतः।
तत्सर्वं पुण्यमाप्नोति सत्यमुक्तं मुनीश्वराः ॥ ११७
अनिच्छयापि संस्पृष्टो जातवेदा यथा दहेत्।
अनिच्छयापि संस्पृष्टं शिवतीर्थं दहेदघम्॥ ११८
हेमपद्माकरे स्नाति यो वा को वा दिने दिने।
जीवन्मुक्तस्स विज्ञेयः कृतकृत्यो न संशयः ॥ ११९
वारुणादपि चाग्नेयान्माहेन्द्रान्मारुतात्पुनः।
मन्त्रस्नानादपि वरं हेमाब्जिन्यां तु मज्जनम्॥ १२०
यस्स्नात्वा शिवगङ्गायां सोमसुन्दरदर्शनम्।
करोति श्रद्धया तस्य श्रेयसोऽन्तो न विद्यते॥ १२१
यानि कानि पवित्राणि शास्त्रोक्तानि मुनीश्वराः।
तेभ्यः पवित्रममलं हेमपद्माकराम्बु च॥ १२२
अश्रद्धयाऽपि यस्स्नातो महातीर्थे तु मानवः।
सोऽपि स्वर्गमवाप्नोति तस्य तीर्थस्य वैभवात्॥ १२३

श्रद्धया विधिना स्नात्वा देवादीनाञ्च तर्पणम् ।
कुशाक्षततिलैः कृत्वा सर्वयज्ञफलं लभेत् ।। १२४
स्नात्वा हिरण्यपद्मिन्यां तत्तीरे काञ्चनादिकम् ।
यः प्रदद्याद्यथाशक्ति महादानफलं लभेत् ।। १२५
स्नानं व्रतं जपो दानं तपो वाऽन्यत्र यत्कृतम् ।
तत्सर्वं कोटिगुणितं भवेद्धेमाब्जिनीतटे ।। १२६
जन्मर्क्षे तु कृतस्नानो हेमाब्जिन्यां नरोत्तमः ।
जन्मजन्मान्तरकृतैः सर्वपापैः प्रमुच्यते ।। १२७
चैत्रे माघे कार्तिके च दुर्लभा हेमपद्मिनी ।
दर्शे पुण्यं शतगुणं सङ्क्रान्तौ तत्सहस्रकम् ।। १२८
उपरागे तु तल्लक्षं व्यतीपाते त्वनन्तकम् ।
अयुतं विषुवे पुण्यं नियुतं त्वयनद्वये ।। १२९
सोमवारे त्वमावास्या यदा भवति सुव्रताः ।
तदा स्नानं जपो दानं हेमपद्माकरे कृतम् ।। १३०
तदनन्तफलं प्रोक्तं पुण्यविद्भिः पुरातनैः ।
श्रद्धया स्वर्णपद्मिन्यां स्नानं कृत्वा विधानतः ।। १३१
ब्रह्महाऽपि विमुच्येत किं पुनस्त्वन्यपातकी ।
हेमपद्माकरं प्राप्य सकृत्पिण्डान्ददाति यः ।। १३२
उद्धृताः पितरस्तेन भवाम्भोधेस्तिलोदकैः ।
यावन्तश्च तिला मर्त्यैर्गृहीताः पितृकर्मणि ।। १३३
तावदब्दसहस्राणि पितरस्स्वर्गवासिनः ।
काम्यप्रदानि तीर्थानि त्रैलोक्ये यानि कानि च ।। १३४

तानि सर्वाणि सेवन्ते पवित्रां हेमपद्मिनीम्।
शिवलिङ्गार्चनात्सर्वदेवतार्चाफलं यथा ।। १३५
स्नानेन स्वर्णपद्मिन्यां सर्वतीर्थफलं लभेत्।
तस्मिन् तीर्थे नरः स्नात्वा यो नित्यं लिङ्गमर्चयेत्।। १३६
एकेन जन्मना मुक्तिं परां प्राप्नोति स ध्रुवम्।
अग्निहोत्राश्च वेदाश्च व्रतदानतपांसि च ।। १३७
तत्तीरे लिङ्गपूजायाः कोट्यंशेनापि नो समाः ।
जन्मान्तरकृतैर्दानैः तपोभिर्नियमैर्व्रतैः ।। १३८
हेमपद्माकरस्नानं लभ्यते च दिने दिने ।
योऽष्टमूर्तिर्महादेवश्शास्त्रेषु परिपठ्यते ।। १३९
तस्यैषांभोमयी मूर्तिर्ज्ञानदा हेमपद्मिनी ।
माघे मासे प्रयागे तु नित्यं स्नातस्य यत्फलम्।। १४०
तत्फलं स्वर्णपद्मिन्यामेकेन दिवसेन च ।
वन्ध्या वत्सरपर्यन्तं स्नात्वा हेमाब्जिनीजले ।। १४१
प्रणम्य देवीं देवञ्च लभते सद्गुणं सुतम्।
सन्ति तीर्थान्यनेकानि प्रसिद्धानि महान्त्यपि ।। १४२
हेमपद्माकराख्यस्य कोट्यंशेन समानि न ।
दर्शनाद्धर्मदं पुंसां स्पर्शनादर्थसिद्धिदम्।। १४३
सर्वकामप्रदं पानात् स्नानात्कैवल्यदञ्च तत्।
तीर्थानामादिभूतस्य तीर्थैस्संसेवितस्य च ।। १४४
पातकेन्धनकालाग्नेः पुण्यसस्यपयोमुचः ।
भोगापवर्गहेतोश्च हेमपद्माकरस्य च ।। १४५

माहात्म्यस्यैकदेशोऽयं कथितः कलुषापहः ।
हालास्यक्षेत्रमाहात्म्यं तीर्थमाहात्म्यसंयुतम् ।। १४६
सकृच्छ्रवणतः पुंसां भुक्तेर्मुक्तेश्च कारणम् ।।

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये क्षेत्रतीर्थमाहात्म्यं नाम*
*द्वितीयोऽध्यायः*

* * *

## அத்தியாயம் -2

## ஹாலாஸ்யமும் ஸ்வர்ண பத்மாகரமும்

**(மதுரையும் பொற்றாமரைக் குளமும்)**

*அகஸ்தியர் கூறுகிறார் - ஹாலாஸ்யத்திற்குச் சமமான க்ஷேத்திரமும் பொற்றாமரைக்குளத்திற்கு ஈடான தீர்த்தமும் ஸுந்தரேசருக்கு ஈடான தெய்வமும் மூவுலகிலும் இல்லை. 68 சிவக்ஷேத்திரங்களில் பதினாறு முக்கியமானவை. அவற்றிலும் விச்வேச்வரர் ஆலயம் கொண்டுள்ள காசீ, காளஹஸ்தீச்வரர் ஆலயம் கொண்ட தென்கைலாஸமெனும் காளஹஸ்தி, ஈசன் ஆனந்த நடனம் புரிகிற புண்டரீகபுரம் என்ற சிதம்பரம், இந்த ஹாலாஸ்யம் என நான்கும் மிகச் சிறந்தவை. அவற்றிலும் சிறந்தது ஹாலாஸ்யம். தானே தோன்றிய ஹாலாஸ்யேச லிங்கம், பாபத்தைப் பொசுக்குகிற பொற்றாமரைக்குளம் (ஹேம, பத்மாகரம், ஹேமாப்ஜினீ) இவை இரண்டும் மிகச் சிறந்தவை (1-17)*

*ஹாலாஸ்யம் பிரும்ஹாவின் பிரும்மரந்த்ரத்தின் அருகிலுள்ள த்வாதசாந்தமாகும். பூலோகத்திலுள்ள கைலாஸம். சிவனது லீலைகள் பல நிகழ்ந்த இடம். ஜீவன் முக்தி தருமிடம். பிரும்மஹத்தி பாபத்தால் நலிந்த இந்த்ரனது பாபம் நீக்கிய இடம்.*

பாபங்கள் அனைத்தையும் வாஸத்தால் நீக்கும். எறும்பும், யானையும் முக்தி பெற்றனர். சிவனது உடையிலுள்ள சந்த்ர கலையிலிருந்து பெருகிய அமுத தாரையில் நனைந்து பூமி இனிமை பெற்றதால் இது மதுரையானது. சிதம்பரத்தில் நிகழ்ந்த நடனத்தை விட மாறுதலாக சிவன் நடனமாடியஇடம். பெரும்வேள்விகளை முறைப்படி புரிவதால் பெறும் புண்ணியத்தை இங்கு வசிப்பதால் பெறலாம். கங்கை யமுனை, காவிரி முதலிய புண்ணிய நதிகளின்நீராடிய புண்யத்தையும் முறைப்படி உபவாஸமிருப்பதாலும் கடும் வ்ரதம் முதலிய வற்றாலும் பெறுகிற பாப நீக்கத்தையும் இங்கு வசிப்பதால் பெறலாம். இந்த க்ஷேத்ரத்திற்கு ஹாலாஸ்யம், பூலோக கைலாஸம், ஜீவன் முக்தி புரம், சதுஷ் கூடபுரம், துவாத சாந்தம் என்றவாறு பல பெயர்கள் உண்டு.

பிரும்மாதியர் அங்கிருந்த சிவலிங்கம் பல்லாண்டுகளாக நீராட்டம் பெறாததைக் கண்டு சிவனிடம் வேண்ட, தானிருக்குமிடத்தின்தென் கிழக்கு மூலையில் தன் சூலத்தால் குத்த அண்ட ஓட்டின் கீழிருந்து உலகின் காரணமாக இருந்த அமுத நீர் அந்த துவாரத்தின் வழியே பொங்கி வந்தது. சிவபெருமான் தன் தலையில் பெருகுகிற கங்கையின் நீரையும் அத்துடன் கலந்து பெரும் தடாகமாக்கினார். சிவ நிலை தருவதால் அது சிவதீர்த்தம். எல்லாவற்றிற்கும் மேலானதால் பரதீர்த்தம். எல்லா தீர்த்தங்களுக்கும் முதலானதாக மதிக்கப்படுவதால் ஆதி தீர்த்தம். கங்கையுடன் இணைந்ததால் சிவகங்கை. அவ்வாறே பாபநாசனம், ஞான தீர்த்தம் முக்தி தீர்த்தம் என்றுவாறு பல பெயர்கள் உண்டு. இதிலுள்ள நீரால் சிவனது ஆணைப்படி ஸுந்தரேசருக்குத் தினம் நீராட்டம் நடைபெறுகிறது. இதில் நீராடி சிவனை வழிபடுவதால் பாபமும் மனக் குறையும் நீங்கிப் பெருவாழ்வு பெறலாம். இங்கு செய்யப் பெறுகிற தானம் தவம் வழிபாடு முதலியவை எல்லையற்ற பலன்களைத் தருகின்றன.

★ ★ ★

## तृतीयोऽध्यायः

# सुन्दरेशस्य लीलाः

अगस्त्यः-

हालास्येश्वरलिङ्गस्य माहात्म्यं परमाद्भुतम्।
वक्ष्यामि सङ्ग्रहेणाथ शृण्वन्तु मुनिपुङ्गवाः ॥ १

मेरुमन्दरकैलासकाशीश्रीपर्वतादिषु।
शिवक्षेत्रेषु सर्वेषु महासिद्धिप्रदेषु च ॥ २

स्वायम्भुवानि लिङ्गानि न भवन्ति यदा पुरा।
तदाऽऽविरासीत्तल्लिङ्गं कदम्बवनमध्यके ॥ ३

तस्मादनेन सदृशं लिङ्गमन्यत्पुरातनम्।
श्रुतिस्मृतिपुराणेषु नास्ति नास्ति मुनीश्वराः ॥ ४

उमया नित्यसम्बन्धात् सुन्दरत्वात्स्वभावतः।
सोमसुन्दरसंज्ञान्तु पुरा चक्रुर्दिवौकसः ॥ ५

लिङ्गानां मूलभूतत्वान्मूललिङ्गमिति स्मृतम्।
स्वायम्भुवं तु तल्लिङ्गं विश्वं व्याप्य व्यवस्थितम् ॥ ६

तस्माद्वेत्रप्रहारस्तु सर्वत्र परिदृश्यते।
लिङ्गानां व्यष्टिभूतानां समष्टौ सोमसुन्दरे ॥ ७

सेविते श्रद्धया सार्धं सर्वक्षेत्रगतानि च।
लिङ्गानि सेवितानि स्युर्नात्र कार्या विचारणा ॥ ८

वृक्षस्य मूलसेकेन शाखाः पुष्टिं यथा ययुः।
मूललिङ्गे पूजिते तु पूजितान्यखिलानि च ॥ ९
चतुष्षष्टिविधा लीला येनाकारि दयालुना।
तेनैव सदृशो देवो न भूतो न भविष्यति ॥ १०

मृत्युञ्जयोपदेशेन भारद्वाजस्य पक्षिणः ।
सर्वेभ्यः पक्षिजातेभ्यः श्रेष्ठत्वं यः प्रयच्छति ।। ११
तेनैव सदृशो देवो न भूतो न भविष्यति ।
कोयष्टेरपि निर्वाणप्रदानं येन कारितम् ।। १२
तेनैव सदृशो देवो न भूतो न भविष्यति ।
मह्यश्च द्राविडं सूत्रमुपदिष्टं सलक्षणम् ।। १३
तेनैव सदृशो देवो न भूतो न भविष्यति ।
पिष्टार्थमुत्तमाङ्गेन मृद्भारं यो दधार च ।। १४
तेनैव सदृशो देवो न भूतो न भविष्यति ।
सृगालानामश्वरूपं परिकल्प्य स्वमायया ।। १५
विक्रीणाति च तानश्वान् पाण्ड्यभूपाय यश्शिवः ।
तेनैव सदृशो देवो न भूतो न भविष्यति ।। १६
शूलेष्वारोपिता येन क्षपणा वेदनिन्दकाः ।
तेनैव सदृशो देवो न भूतो न भविष्यति ।। १७
यो वराहशिशूनाञ्च स्तन्यन्दत्वा सुरक्षति ।
तेनैव सदृशो देवो न भूतो न भविष्यति ।। १८
अतस्सर्वैस्सुसंसेव्यं सर्वलिङ्गमयं परम् ।
धर्मार्थकाममोक्षाणामाधारं परमार्थतः ।। १९
यज्ञानामश्वमेधश्च पर्वतानां हिमालयः ।
व्रतानां सोमवारश्च मन्त्राणाञ्च षडक्षरी ।। २०
दानानामन्नदानञ्च वर्णानां ब्राह्मणो यथा ।
पात्राणां शिवभक्तश्च धर्माणां शिवधर्मवत् ।। २१
देवतानां महादेवो वृक्षाणां तु सुरद्रुमः ।
धेनूनां कामधेनुश्च तीर्थानां हेमपद्मिनी ।। २२

चिन्तामणिस्तु रत्नानां यथा मुख्यः प्रकीर्तितः ।
तथा सर्वेषु लिङ्गेषु लिङ्गं स्वायम्भुवं महत् ।। २३
स्वायम्भुवेषु लिङ्गेषु सोमसुन्दरसंज्ञिकम् ।
भूलोकशिवलोकेशं प्रोक्तं मुख्यतमं त्विति ।। २४
तल्लिङ्गं तु परं ज्योतिस्तल्लिङ्गं तु परात्परम् ।
तल्लिङ्गं जगतां मूलं तल्लिङ्गं सर्वसिद्धिदम् ।। २५
अनुग्रहाय लोकानां निष्कलः परमश्शिवः ।
श्रीहालास्ये लिङ्गरूपी सान्निध्यं कुरुते सदा ।। २६
स्वायम्भुवानि चान्यानि यानि लिङ्गानि सर्वतः ।
तानि सर्वाणि चायान्ति द्रष्टुं हालास्यसुन्दरम् ।। २७
येन दृष्टं महालिङ्गं भक्त्या विमलया दृशा ।
साक्षात्कारेण गिरिशो दृष्ट एव न संशयः ।। २८
भानूदये तमांसीव सिंहाग्रे तु यथा गजाः ।
अज्ञानानि शिवज्ञानान्नागास्तार्क्ष्यविलोकनात् ।। २९
महावातहता मेघाश्शैला वज्रहता यथा ।
तथा नश्यन्ति पापानि हालास्येश्वरदर्शनात् ।। ३०
कामेन च यथा बुद्धिः कोपेन च यथा तपः ।
गर्वेण च यथा विद्या रोगो दिव्यौषधेन च ।। ३१
लोभेन सद्गुणो यद्वत् तूलशैलः स्फुलिङ्गतः ।
प्रणश्यन्ति तथा दोषास्सोमसुन्दरदर्शनात् ।। ३२
हालास्येशं महालिङ्गं दृष्ट्वा प्रातस्सकृन्नरः ।
चतुस्समुद्रपर्यन्तभूमिदानफलं लभेत् ।। ३३
मध्याह्ने तु सकृद्दृष्ट्वा जीवन्मुक्तिपुरेश्वरम् ।
सहस्रकपिलादानफलं प्राप्नोति मानवः ।। ३४

सायंकाले सकृद्दृष्ट्वा कदम्बवननायकम्।
गवां कोटिप्रदानस्य फलं मर्त्यस्समश्नुते ।। ३५
अर्द्धयामे सकृद्दृष्ट्वा चतुष्कूटपुरेश्वरम्।
अश्वमेधादियज्ञानां फलं प्राप्नोति भक्तिमान्।। ३६
एवं विचार्य मतिमान् पुण्याधिक्यं दिने दिने।
समष्टिविद्यानगरीनाथं वेलासु तासु च ।। ३७
प्रदक्षिणनमस्कारस्तोत्राद्यैस्सेवते च यः।
सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः ।। ३८
इह भुक्त्वा महाभोगान् सायुज्यं लभते जनः।
श्रवणात्तस्य लिङ्गस्य दशजन्मार्जितं त्वघम्।। ३९
अवश्यं विलयं याति वह्निना तूलराशिवत्।
स्मरणान्मूललिङ्गस्य पातकं शतजन्मजम्।। ४०
अवश्यं नश्यति क्षिप्रं तमस्सूर्योदये यथा।
हालास्येश्वरसेवार्थं गृहान्निष्क्रमणे कृते ।। ४१
सहस्रजन्मजनितं पातकं तु विनश्यति।
कदम्बवननाथस्य दर्शनात् लिङ्गरूपिणः ।। ४२
अश्वमेधसहस्रस्य सुकृतं भजते जनः।
स्तोत्रैर्वा रुद्रसूक्तैर्वा स्तुते हालास्यसुन्दरे ।। ४३
राजसूयसहस्रस्य फलं भवति सर्वदा।
चुलुकोदकमात्रेण तल्लिङ्गं स्नापयेत्तु यः ।। ४४
अन्यत्र हेमकलशमहास्नानफलं लभेत्।
विधाय महतीं पूजां पञ्चगव्यपुरस्सरैः ।। ४५
पञ्चामृतैश्च शुद्धोदैर्गन्धाद्यैर्भक्तिमान्नरः।
हालास्येशस्य लभते पुरुषार्थचतुष्टयम्।। ४६

वस्त्रपूतैर्जलैः स्नाप्य तल्लिङ्गं भक्तितः सकृत्।
लक्षाश्वमेधजनितं पुण्यं प्राप्नोति मानवः ।। ४७
चन्द्रचन्दनकस्तूरीकुङ्कुमैर्वा मृगोद्भवैः ।
सुगन्धैर्वा समालिप्य सकृत्कर्पूरसुन्दरम्।। ४८
आलिप्यते दिव्यगन्धैस्सुवस्त्रैश्च महादरात्।
एकपुष्पप्रदानाच्च मूललिङ्गे मुनीश्वराः ।। ४९
अन्यत्र शतसौवर्णं पुष्पपूजाफलं लभेत्।
सकृद्धूपप्रदानेन क्षमते सोमसुन्दरः ।। ५०
सहस्रमपराधानां दयालुत्वात्स्वभावतः ।
कर्पूरवर्तिदीपेन सकृद्दत्तेन भक्तितः ।। ५१
कर्पूरनिर्मलतनुर्भवेत्फालविलोचनः ।
दत्वा नैवेद्यमात्रं तु सिक्थे सिक्थे युगं युगम्।। ५२
शिवलोके वसेद्धीमान्महाभोगसमन्वितः ।
हालास्येशाय ताम्बूलं यो दद्याल्लिङ्गमूर्तये ।। ५३
वर्षकोटिशतं दिव्यं शिवलोके महीयते ।
सोमसुन्दरपूजायै यो दद्याद्भक्तियोगतः ।। ५४
घण्टाभिषेककलशधूपदीपादिपात्रकम्।
स मुक्तस्सर्वपापैश्च सर्वान् कामानवाप्नुयात्।। ५५
नृत्तं गीतञ्च वाद्यं च तल्लिङ्गप्रीतये व्यधात्।
तस्याग्रतस्सदा कालं भवेत्तौर्यत्रिकं महत्।। ५६
हालास्येशं सकृन्नत्वा दण्डवत्पृथिवीतले।
त्रैलोक्यवन्दितपदो जायते वसुधाधिपः ।। ५७

जपो होमस्तपो दानं हालास्येशस्य सन्निधौ।
कृतमल्पं महापुण्यफलदं स्यान्न संशयः ।। ५८

समष्टिविद्यानगरीनायकस्य महाप्रभोः।
शम्भोर्माहात्म्यमखिलं को वा वक्तुं विचक्षणः ।। ५९

कदम्बकान्तारसमं तपोवनं हिरण्यपद्माकरतुल्यतीर्थकम्।
समष्टिविद्यानगरीमहेशितुर्लिङ्गेन साम्यं न हि लिङ्गमन्यत्।। ६०

मूलभूतं महालिङ्गं श्रीमद्धालास्यसुन्दरम्।
कर्पूरसुन्दरश्चेति कदम्बवनसुन्दरम्।। ६१

कल्याणसुन्दरश्चाभिषेकसुन्दरमित्यपि।
सुन्दरेशं मृगमदसुन्दरं सोमसुन्दरम्।। ६२

सत्सुन्दरं जनवधभीतसुन्दरमित्यपि।
आदिसुन्दरमानन्दसुन्दरं देवसुन्दरम्।। ६३

चाम्पेयसुन्दरश्चेति पाण्ड्यसुन्दरमित्यपि।
समष्टिविद्यानगरीनायकं मधुराधिपम्।। ६४

कन्यकानगरीनाथं चतुष्कूटपुरेश्वरम्।
भूलोकशिवलोकेशं जीवन्मुक्तिपुरेश्वरम्।। ६५

एवमाद्यैर्नामधेयैः स्तुवन्ति मुनिपुङ्गवाः।
कदम्बवन्यां शिवराजधान्यां सुधामयं यत्तु शिवस्य लिङ्गम्।
आसप्तपातालतलात्स्वयम्भु समुत्थितं तज्जगतां हिताय।। ६६

लिङ्गस्य माहात्म्यमिदं यथोक्तं स्कन्देन चास्मद्गुरुरूपिणैव।
तथैव चोक्तं तु मया समस्तं मुनीश्वरा वो जगतां हिताय।। ६७

इत्युक्ते कुम्भसम्भूते वसिष्ठाद्या मुनीश्वराः।। ६८
हालास्येशकृता लीलाश्श्रोतुकामाः परस्परम्।
विचार्य श्रद्धया युक्ताः प्रार्थयन्ति घटोद्भवम्।। ६९

मुनयः-

भगवन् सर्वशास्त्रार्थपरिज्ञानवतां वर।
श्रुत्वा च क्षेत्रमाहात्म्यं तीर्थश्रेष्ठस्य वैभवम्।। ७०

मूललिङ्गस्य माहात्म्यं श्रवणात्सर्वसिद्धिदम्।
अस्माकं महती भक्तिस्सञ्जाता सोमसुन्दरे।। ७१

चतुष्षष्टिविधा लीला याः कृतास्तेन शम्भुना।
भवता सूचितास्सर्वास्ताः क्रमादधुना वद।। ७२

इति सम्प्रार्थितस्सर्वैर्महात्मा कुम्भसम्भवः।
लीलानाञ्च चतुष्षष्टिं वक्तुमारभते तदा।। ७३

अगस्त्यः-

शृण्वन्तु मुनयस्सर्वे महाभाग्यसमन्विताः।
यासां श्रवणमात्रेण ब्रह्महत्यापि नश्यति।। ७४

लीलास्ताः क्रमशो वक्ष्ये सङ्ग्रहेण मुनीश्वराः।
हालास्यनायको देवो मनोवाचामगोचरः।। ७५

ब्रह्मविष्णुमहेन्द्राद्यैर्वन्द्यमानपदाम्बुजः।
दयालुस्सर्वभूतानामनुग्रहपरायणः।। ७६

सर्वज्ञस्सर्वदेवादिः सच्चिदानन्दविग्रहः।
अणोरणीयान् सर्वात्मा महीयान्महतः प्रभुः।। ७७

श्रीमत्कदम्बविपिने शिवक्षेत्रोत्तमे शुभे।
सदा करोति सान्निध्यं लिङ्गे स्वायम्भुवोत्तमे।। ७८

हिमांशु वंशप्रभवाः प्रवराः पाण्ड्यभूभुजः।
अतीव भक्तिसंयुक्ताः कदम्बवननायके।। ७९

सेवां प्रतिदिनश्चक्रुस्त्रिविधैः करणैर्धनैः।
पुनरन्ये महेन्द्राद्या भक्तिश्रद्धासमन्विताः॥ ८०

पूजयन्ति महालिङ्गं त्रिदशास्सर्वसिद्धये।
तेषां परमया भक्त्या परितुष्टः परात्परः॥ ८१

चकार विविधा लीलाः स्वभक्तानां हिताय च।
कृते षोडशलीलाश्च त्रेतायामपि षोडश॥ ८२

द्वापरे षोडश तथा षोडशैव कलौ युगे।
एवं लीलाश्चतुष्षष्टिस्तासां क्रम इहोच्यते॥ ८३

लिङ्गानामादिभूतस्य कदम्बवनवासिनः।
सोमसुन्दरनाथस्य सुमीनाक्षीपतेः प्रभोः॥ ८४

विचित्राश्च पवित्राश्च चतुष्षष्टिश्च संख्यया।
या लीला लोकविख्यातास्तासां क्रम इहोच्यते॥ ८५

प्रथमा प्रथिता लीला वृत्रारेर्वृजिनापहा।
द्वितीया सा मुनेश्शापान्मुक्तिरैरावतस्य च॥ ८६

तृतीया सा नीपवन्यामकरोन्मधुरापुरीम्।
तटातकाया जननश्चतुर्थी विदधाति सा॥ ८७

पञ्चम्यां पाण्ड्यदेवेन कृतं तत्पाणिपीडनम्।
षष्ठीशनृत्तं सुव्यक्तं स्वमित्रस्य पतञ्जलेः॥ ८८

सप्तमी सा कुण्डकुक्षेर्बह्वन्नादनशक्तिदा।
अन्नगतां नदीं तस्मै दर्शयामास साऽष्टमी॥ ८९

लीला सा नवमी सप्तसागरानयनक्षमा।
दशमी त्रिदिवाद्भूमिमानयन्मलयध्वजम्॥ ९०

उग्र इत्युग्रतनय एकादश्या तयाऽजनि।
द्वादशी सा ददौ तस्मै वलयाद्यायुधत्रयम्।। ९१

त्रयोदशी करोति स्म शक्त्या सागरताडनम्।
चतुर्दशी वृत्रहन्तुः किरीटमभिनद्दृढम्।। ९२

हेमाद्रेर्हेमजातं यद्राज्ञे पञ्चदशी ददौ।
व्यक्तीकरोति वेदार्थान् मुनिभ्यष्षोडशी तु सा।। ९३

राज्ञे सप्तदशी लीला किरीटार्थमदान्मणीन्।
मेघैस्सागरपानञ्च चकाराष्टदशी तु सा।। ९४

मेघैरेकोनविंशत्या त्वतिवृष्टिर्निवारिता।
विंशल्लीला तनोति स्म विचित्रं सिद्धवैभवम्।। ९५

जग्राह ग्रावदन्तीक्षुमेकविंशतिलीलया।
द्वाविंशल्लीलया नग्नमातङ्गो मरणं गतः।। ९६

द्विजकन्याऽनुग्रहोऽभूत्त्रयोविंशतिलीलया।
व्यत्यस्तं नृत्तमभवच्चतुर्विंशतिलीलया।। ९७

द्विजस्य पञ्चविंशत्या वधूवधनिरूपणम्।
मातृजारं पितृघ्नं तं षड्विंशतिरपालयत्।। ९८

भटार्थं सप्तविंशत्या त्वंकं छित्वाऽजयच्छिवः।
प्रशान्तमष्टाविंशत्या नग्ननागभवं विषम्।। ९९

एकोनत्रिंशिका लीला नग्नधेनुमपातयत्।
त्रिंशिका पाण्ड्यसेनान्यं पातुं सैन्यमदर्शयत्।। १००

राज्ञो हेममयी नीवी त्वेकत्रिंशिकयाऽजनि।
द्वात्रिंशिका वैश्यवीथ्यां कर्त्री वलयविक्रयम्।। १०१

यक्षस्त्रीभ्यस्त्रयस्त्रिंशल्लीला सिद्ध्यष्टकं ददौ।
चोलेन्द्राय चतुस्त्रिंशल्लीला द्वारविभेदिनी॥ १०२

पानीयं पाण्ड्यसेनायै सा पञ्चत्रिंशिका त्वदात्।
षट्त्रिंशिका पुष्पवने रसवादमदर्शयत्॥ १०३

सप्तत्रिंशिकया चोलमश्वसादी हरोऽजयत्।
अष्टत्रिंशिकया चासीद्वृषलस्त्वक्षयाक्षतः॥ १०४

नवाधिका त्रिंशिका साऽकरोद्वैश्यवटोर्जयम्।
राज्ञश्चत्वारिंशिका तु ब्रह्महत्यार्तिनाशिनी॥ १०५

एकचत्वारिंशिकया काष्ठभारं हरो ददौ।
द्विचत्वारिंशिका चेरं प्रति श्रीपत्रिकामदात्॥ १०६

भद्राय फलकादानं त्रिचत्वारिंशिकाऽकरोत्।
चतुश्चत्वारिंशिका तु तत्कळत्रजयप्रदा॥ १०७

पञ्चचत्वारिंशिका तु कोलपोतानपालयत्।
षट्चत्वारिंशिका तेषां सचिवत्वं प्रयच्छति॥ १०८

सप्तचत्वारिंशिकया खञ्जरीटोऽजयद्रिपून्।
अष्टचत्वारिंशिका सा कोयष्टेरपि मुक्तिदा॥ १०९

एकोनपञ्चाशिकया पुरसीमा स्फुटीकृता।
पञ्चाशिकाऽजयच्चोळमीशनामाङ्कसायकैः॥ ११०

एकपञ्चाशिका लीला सद्भ्यस्सङ्घपीठदा।
द्विपञ्चाशिकया शम्भुर्विप्राय स्वां कृतिं ददौ॥ १११

त्रिपञ्चाशिकया देवो नक्कीरं रक्षति स्म च।
चतुःपञ्चाशिका कर्त्री तस्मै सूत्रोपदेशनम्॥ ११२

प्रबन्धतारतम्यञ्च पञ्चपञ्चाशिकाऽकरोत्।
प्रापोत्तरश्रीहालास्यं षट्पंचाशिकया हरः ॥ ११३

सप्तपञ्चाशिका दाशकन्याकल्याणकारिणी।
अष्टपञ्चाशिका दीक्षां कर्त्री वातपुरेशितुः ॥ ११४

एकोनषष्टिः कुरुते राज्ञे मायाश्वविक्रयम्।
षष्टिश्च नद्याकृष्टिं चाकरोत्फेरुत्वमर्वणाम्॥ ११५

एकषष्ट्या तु पिष्टार्थं मृद्भारमवहच्छिवः।
द्विषष्टिः कुब्जपाण्ड्यस्य ज्वरपीडानिवारिणी॥ ११६

त्रिषष्ट्या तरुशूलैश्च नग्नान् संहरतीश्वरः।
चतुष्षष्टिश्शमीकूपशङ्करान् साक्षिणोऽनयत्॥ ११७

एवं चतुष्षष्टिविधा लीला नीपाटवीपतेः।
शृण्वन्तश्च पठन्तश्च लभन्ते सकलेप्सितम्॥ ११८

सङ्ग्रहश्लोकमात्रं ये लीलानां कालवैरिणः।
जप्त्वा कुर्वन्ति यत्कार्यं तस्य सिद्धिं प्रयान्ति ते॥ ११९

इति हालास्यनाथस्य लीलोद्देश उदाहृतः।
पुनस्ता आनुपूर्व्येण लीला वक्ष्ये त्वनुक्रमात्॥ १२०

यया तु लीलया मुक्तो देवेन्द्रो वृत्रहत्यया।
तां शृणुध्वं मुनिश्रेष्ठाः श्रवणात्तु शिवप्रदाम्॥ १२१

इतीदं लिङ्गमाहात्म्यं लीलोद्देशसमन्वितम्।
सकृत्समाहितास्सन्तो ये शृण्वन्ति पठन्ति वा॥ १२२

ते महापापनिर्मुक्ताः सर्वान् कामानवाप्य च।
लभन्ते शिवसायुज्यमन्ते शम्भोरनुग्रहात्॥ १२३

*इति श्रीस्कान्दे महापुराणे अगस्त्य संहितायां*

*हालास्यमाहात्म्ये लिङ्गमहिमानुवर्णनं नाम तृतीयोऽध्यायः*

* * *

## அத்தியாயம் - 3

## ஸுந்தரரின் திருவிளையாடல்கள்

மேரு, மந்தரம், கைலாஸம், காசி, ஸ்ரீசைலம் முதலான இடங்களில் ஸ்வயம்பு லிங்கங்கள் தானே தோன்றுவதற்கு முன்பே கடம்பம் காடான ஹாலாஸ்யத்தில் ஸ்வயம்புவாக லிங்கம் தோன்றியது. உமையுடன் எப்போதும் காட்சி அளித்ததாலும், மிகஅழகாகத் தோன்றியதாலும் ஸோம - (ஸ-உமா) ஸுந்தரர் என்று தேவர் பெயரிட்டனர். எல்லா லிங்கங்களுக்கும் மூலமானதால் மூலலிங்கம். எல்லாமானவரானபடியால் சிவன் மீதுபட்ட பிரம்படி எல்லா ஸ்தலங்களின் லிங்கங்களிலும் காணப்பட்டதால் அந்த வடு காணப் பெறுகிறது. 64 லீலைகளை இங்கு புரிந்துள்ளார். இவர் ஸமஷ்டி லிங்கவடிவினரானதால் இவரை வழிபடுவதால் மற்ற அனைத்து லிங்கங்களையும் வழிபட்டதாகிறது.

பரத்வாஜம் எனும் கருங் குருவிக்கு மிருத்யுஞ்ஜய மந்த்ரம் உபதேசித்து பறவைகளில் சிறந்ததென்ற புகழைத் தந்தவர். நாரைக்கு முக்தி தந்தவர், பிட்டுக்கு மண் சுமந்தவர். நரியைப் பரியாக்கிப் பாண்டிய மன்னனிடம் தந்தவர். வேதத்தை நிந்தித்தவர்களை சூலத்தில் ஏற்றியவர். பன்றிக் குட்டிகளுக்குத் தாய்ப் பன்றியாகி முலைப்பால் தந்தவர் - என்றிவ்வாறு அருள்புரிந்த தேவர் வேறு எவருமில்லை. எல்லா தேவர்களும் ஏனையவரும் இவரிடம் அருள்பெற இங்கு வந்து வழிபட்டுத் தன் நிலையில் உயர்வு பெறுகின்றனர். பாபங்களும் குறைகளும் நீங்கி நன்னிலை பெறுகின்றனர்.

இவரது வழிபாட்டு முறையில் புரிகிற செயல் ஒவ்வொன்றும் மனிதனுக்கு எல்லையற்ற நன்மைகளைத் தருகின்றன. ஹாலாஸ்ய க்ஷேத்ரத்தில் அவர் ஒருவரே அழகர் என்பதால் ஹாலாஸ்ய ஸுந்தரர்; கர்பூரம் போன்று ஒளி மிக்கவரானதால் கர்பூர ஸுந்தரர்; கதம்பக் காட்டின் அழகர் என கதம்பவந ஸுந்தரர். கஸ்தூரிப் பொட்டால் அழகியவர் கஸ்தூரி ஸுந்தரர். ஸோமஸுந்தரர், பாண்டிய ஸுந்தரர், என்று அமுதமான அவரது வடிவழகைக் கண்டு அவரிடம் லயிப்பர். அவரது அறுபத்து நான்கு லீலைகளையும் வரிசையாக இனி விளக்குவேன் எனக் கூறி வரிசையாக லீலைகளின் பெயரை அகஸ்த்யர் விளக்குகிறார்.

चतुर्थोऽध्यायः

# १. वृत्रासुरवधः

अगस्त्यः-

अथातः प्रथमां लीलां प्रथितां प्रमथेशितुः ।
प्रकृष्टपापशमनीं प्रवक्ष्ये मुनिसत्तमाः ।। १
पुरा कृतयुगे रम्ये पुरुहूतपुरे शुभे ।
तपोबलेन महता कृतिना विश्वकर्मणा ।। २
निर्मितायां सुधर्मायां रत्नसिंहासनोपरि ।
समासीनो देवराजो देवानां दर्शनं ददौ ।। ३
त्रयस्त्रिंशत्सुराणां या कोटिश्श्रुतिसमीरिता ।
सा सर्वा याति सेवायै प्रतीक्ष्यावसरं विभोः ।। ४
तदा चाप्सरसस्सर्वाः समागत्य सिषेविरे ।
नारदाद्या मुनिवरा आशीर्भिरभिनन्द्य तम् ।। ५
गायन्ति प्रीतये तस्य गानविद्याविशारदाः ।
नृत्यन्त्यप्सरसस्सर्वा रम्भाद्यास्तस्य सन्निधौ ।। ६
तिलोत्तमाऽप्सरोमुख्या तदा सर्वाङ्गसुन्दरी ।
अद्भुतं लास्यमकरोद्गायन्ती सर्वमोहनम् ।। ७
देवराजोऽपि तां वीक्ष्य क्षणं संमोहितोऽभवत् ।
देवाचार्योऽपि तत्काले देवेन्द्रं द्रष्टुमाययौ ।। ८
अभ्युत्थानप्रणामाद्यं न करोति पुरन्दरः ।
दृष्ट्वौदासीन्यमिन्द्रेण कृतं देवपुरोहितः ।। ९

अदृश्यो भवति क्रोधात्सुराणां सुदृशामपि।
तिलोत्तमाया लास्यं च दृष्ट्वा देवास्सुविस्मिताः ।। १०
देवेन्द्रोऽपि ददौ तस्यै दिव्यमाभरणादिकम्।
आगतान् देवतासङ्घान् नारदादिमुनीश्वरान्।। ११
सत्कृत्य च यथान्यायं दृशा मधुरया गिरा।
गन्तुमायतनं स्वं स्वं प्रेषयामास देवराट्।। १२
गतेषु देवसङ्घेषु देवाचार्यः समागतः।
स्फुरतीन्द्रस्य हृदये द्रोहश्च स्वात्मना कृतः ।। १३
गुरुद्रोहभयादिन्द्रो देवाचार्यस्य मन्दिरम्।
प्राप्तस्तत्र न दृष्टोऽभून्महायोगी बृहस्पतिः ।। १४
अदर्शनाद्गुरोरिन्द्रो दुःखेन महता वृतः।
पुनः स्वभवनं प्राप्य विषण्णस्तिष्ठति स्वराट्।। १५
गुरुद्रोहजपापेन सर्वपापाधिकेन च।
तेजः पराक्रमो विद्या क्षिणोति च दिने दिने।। १६
प्रतीक्ष्य दानवास्सर्वे देवेन्द्रस्य बलक्षयम्।
युयुधुर्देवबृन्दैश्च तदा देवाः पराजिताः ।। १७
ततः सवासवा देवा ब्रह्माणं शरणं ययुः।
देवाः-
नमो हिरण्यगर्भाय परब्रह्मस्वरूपिणे।। १८
अविज्ञातस्वरूपाय नमः कैवल्यमूर्तये।
गुणत्रयस्वरूपाय नमः प्रकृतिरूपिणे।। १९

अहङ्कारस्वरूपाय बुद्धिरूपाय ते नमः

नमो महास्वरूपाय नमश्शब्दादिरूपिणे ॥ २०

ज्ञानेन्द्रियस्वरूपाय नमः कर्मेन्द्रियात्मने ।

क्षित्यादिपञ्चभूताय नमो ब्रह्माण्डरूपिणे ॥ २१

समस्तभक्तरक्षार्थं स्वेच्छाविधृतविग्रह ।

नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं महात्मने ॥ २२

इति स्तुत्वा विधिं देवाः प्रणेमुर्भक्तिसंयुताः ।

परितुष्टस्तदा ब्रह्मा प्रत्युवाच सुरोत्तमान् ॥ २३

उत्तिष्ठत प्रसन्नोऽस्मि वृणीध्वं वरमुत्तमम् ।

इति श्रुत्वा विधेर्वाक्यं महेन्द्राद्या दिवौकसः ॥ २४

सर्वे विज्ञापयामासुर्ब्रह्माणं लोकनायकम् ।

सेन्द्रा देवगणास्सर्वे दानवैश्च पराजिताः ॥ २५

केनोपायेन जेष्यामो दानवान् बलगर्वितान् ।

इति विज्ञापितो देवैर्विजयोपायमब्रवीत् ॥ २६

यूयं गुरुविहीनाश्च ते सर्वे गुरुसंयुताः ।

गुरुसंसेवया नित्यं ज्ञानं वीर्यं यशो बलम् ॥ २७

वर्धते विपरीतं स्याद्गुरुद्रोहेण कर्मणा ।

गुरुस्त्वदृश्यो युष्माकमिदानीं नागमिष्यति ॥ २८

त्वष्टुः पुत्रं विश्वरूपं सर्वविद्याविशारदम् ।

पौरोहित्याय संप्रार्थ्य तेनोक्तं यच्छुभावहम् ॥ २९

कुर्वन्तु सर्वं तत्कर्म युष्माकं विजयस्तदा ।

भविष्यति न सन्देहो दानवानां पराजयः ॥ ३०

इति ब्रह्मगिरा देवा आहूय सहसा मुदा।
विश्वरूपं महात्मानं पौरोहित्ये नियोज्य च ।। ३१
तेनोक्तानि च कर्माणि चक्रुस्सर्वाणि सन्ततम्।
विश्वरूपान्महेन्द्रोऽपि वज्रपञ्जरसन्निभम्।। ३२
शिवाख्यं कवचं लब्ध्वा विजयप्रदमाहवे।
जित्वा सर्वान् दानवांश्च कवचस्य प्रभावतः ।। ३३
देवैरीड्यो यथापूर्वं सुखेनास्ते त्रिविष्टपे।
अथ त्वाष्ट्रो विश्वरूपो देवानां तु पुरोहितः ।। ३४
भागिनेयश्चासुराणां त्रिभिश्शीर्षैर्विराजितः।
देवेभ्यस्तु हविर्भागं प्रत्यक्षमददात्पुनः ।। ३५
परोक्षमसुरेभ्यश्च नित्यमध्वरकर्मणि।
ज्ञानदृष्ट्या परिज्ञाय देवेन्द्रः क्रोधसंयुतः ।। ३६
वज्रमादाय वेगेन तस्य शीर्षाणि चाच्छिनत्।
सोमपानकृतं वक्त्रमासीत्पक्षी कपिञ्जलः ।। ३७
सुरापानकृतं यत्तत्कलविङ्कखगायते।
अन्नादनं तु यद्वक्त्रं जायते तच्च तित्तिरिः ।। ३८
एवं शीर्षाणि तस्याशु विहङ्गमवपूंषि च।
धृत्वोड्डीय विहङ्गाश्च गच्छन्ति तपसो बलात्।। ३९
ब्रह्महत्या तु सम्भूता कृष्णाङ्गी विकृतानना।
दण्डकर्परहस्ता च बाधतेऽहर्निशं तदा।। ४०
तां बाधामनुभूयाथ वत्सरांते दिवस्पतिः।
साकं देवैश्च मुनिभिश्चतुर्धा तां विभज्य च।। ४१

भूम्यां जलेषु नारीषु वृक्षेषु च व्यनिक्षिपत्।
आवत्सराद्धरित्र्यास्तु खातानां पूरणां वरम्।। ४२
छेदने सति वृक्षाणां पुनरुद्भवनं वरम्।
वनितानामाप्रसवकालात्पुंयोगदं वरम्।। ४३
भूयो द्रवत्वं तोयानां प्रदाय वरमुत्तमम्।
सुखेन तिष्ठति स्वर्गे देवेन्द्रः पापवर्जितः।। ४४
विश्वरूपपिता त्वष्टा पुत्रशोकात्क्रुधा युतः।
इन्द्रस्य शत्रो वर्धस्व स्वाहेति मनुनाऽनले।। ४५
जुहोति श्रद्धया सार्धं तिलाज्यादिहर्वींषि च।
तस्मात्कृशानोस्सञ्जातो महान् वृत्रासुरो बली।। ४६
इषुमात्रं प्रतिदिनं समन्तात्परिवर्धयन्।
आवृणोत्सर्वलोकांश्च तपसा च बलेन च।। ४७
ततस्सवासवा देवा युद्धाय च समुद्यताः।
विविधानि च शस्त्राणि ग्रहीत्वा वाहनानि च।। ४८
आरुह्य कवचच्छन्नाश्चक्रुर्युद्धं महाद्भुतम्।
ऐरावतं समारुह्य वज्रपाणिस्समाययौ।। ४९
परस्परमभूद्युद्धं पश्यताश्च भयङ्करम्।
यथान्धकांतकार्योश्च वृत्रवासवयोस्तथा।। ५०
वज्रायुधेन देवेन्द्रो वृत्रं वक्षस्यताडयत्।
तदा वृत्रोऽपि रोषेण गजं देवेन्द्रवाहनम्।। ५१
मुसलेन प्रहृत्याशु कालदण्डोपमेन च।
तेनैव देवराजस्य भुजदण्डमताडयत्।। ५२

दृढताडननिस्सारभुजदण्डसमन्वितः ।
त्यक्त्वा वज्रायुधमपि गजेन सह देवराट् ।। ५३
भीत्या धावति वेगेन तदा त्यक्तायुधास्सुराः ।
धावन्ति परितो भ्रान्तास्ततस्सम्भूय कुत्रचित् ।। ५४
ब्रह्माणं शरणं गत्वा तेन सार्धं दिवौकसः ।
प्रापुर्वैकुण्ठभवनं महाविष्णोर्महाद्भुतम् ।। ५५
दृष्ट्वा सर्वे तत्र विष्णुं श्यामलं पीतवाससम् ।
शङ्खचक्रगदापद्मविराजितचतुर्भुजम् ।। ५६
किरीटकेयूरधरं वनमालाविभूषितम् ।
सहितश्च महालक्ष्म्या वाहनेन गरुत्मता ।। ५७
सिंहासने निविष्टं तं स्तोत्रैः स्तुत्वा प्रणम्य च ।
सर्वं विज्ञापयामासुर्वृत्रासुरविचेष्टितम् ।। ५८
श्रुत्वा वाक्यं विरिञ्चादिदेवानां गरुडध्वजः ।
वृत्रासुरवधोपायं प्राह सर्वदिवौकसाम् ।। ५९
श्रीविष्णुः -
वज्रं वलाङ्गसम्भूतं वलारातिभुजाच्युतम् ।
अग्राह्यमल्पसारत्वाद्वृत्रासुरनिषूदने ।। ६०
पुनर्वज्रं महासारं सम्पाद्यासुरराट् ततः ।
जेतव्य इति निश्चित्य युष्माभिरविलम्बितम् ।। ६१
मदुक्तं कर्म कर्तव्यमधुना तद्वधाय च ।
युष्माभिस्तत्र गन्तव्यं दधीचिर्यत्र तिष्ठति ।। ६२

पुरा देवाश्च दैत्याश्च क्षीरोदमथनोत्सुकाः ।
सर्वे सर्वाणि शस्त्राणि दधीचेश्च समीपतः ।। ६३
संस्थाप्य रक्ष रक्षेति प्रोक्त्वा देवास्सदानवाः ।
क्षीरोदधिञ्च ममथुर्बहुकालं सुरासुराः ।। ६४
तदा सर्वाणि शस्त्राणि भक्षितानि दधीचिना ।
तस्य पृष्ठगते चास्थ्नि वज्रायुधदृढोन्नते ।। ६५
निलीय तानि शस्त्राणि विद्यन्ते सुरसत्तमाः ।
तेनैव कीकसेनाशु वध्यो वृत्रो महान् ध्रुवम् ।। ६६
ये ये सन्ति त्यागिनश्च प्रथिताः शिबिपूर्वकाः ।
तेषां मध्ये महात्यागी दधीचिश्शिवभक्तिमान् । ६७
दधीचौ प्रार्थिते किं किं न ददाति दयानिधिः ।
तत्तं प्राप्य प्रार्थयन्तु दधीचिं कीकसाय च ।। ६८
इत्युक्त्वा प्रेषयामास ब्रह्मादीन् पङ्कजेक्षणः ।
श्रुत्वा वाक्यं महाविष्णोः प्राह ब्रह्मा पुरन्दरम् ।। ६९
तत्र गत्वा सुरैस्सार्धं दधीचिर्यत्र तिष्ठति ।
प्रार्थयास्थि महेन्द्र त्वमित्युक्त्वा स्वालयं ययौ ।। ७०
ततो देवास्तपस्यन्तं दधीचिं मुनिपुङ्गवम् ।
सम्प्राप्य जयघोषेण सन्तोष्य प्रार्थयन्ति तम् ।। ७१
वरन्देहि महायोगिन् सर्वेषां त्यागिनां वर ।
इत्युक्ते देवसङ्घाते दधीचिर्दयया युतः ।। ७२
युष्माभिः प्रार्थितं यत्तु तद्दास्यामि न संशयः ।
वचश्श्रुत्वा दधीचेश्च तदा सर्वे दिवौकसः ।। ७३

देहमध्यगतञ्चास्थि वीणादण्डाख्यमद्भुतम्।
वृत्रासुरवधाय त्वं प्रयच्छ मुनिपुङ्गव ।। ७४
इत्युक्त्वा ते मुनेरग्रे तस्थिरे वासवादयः ।
श्रुत्वा दधीचिर्वचनमिन्द्रादीनां दिवौकसाम्।। ७५
वस्तु नित्यमनित्यञ्च विचार्य परया धिया ।
स्थिरमात्मनि नित्यत्वं शरीरादौ त्वनित्यताम्।। ७६
निश्चित्य सर्वभावेन कीकसं दातुमुद्यतः ।
दधीचिः प्रीतिमान् भूत्वा प्राह वाचा प्रगल्भया ।। ७७
तथा भवतु गृह्णन्तु दास्याम्यस्थि दिवौकसः ।
इत्युक्त्वा स्थूलदेहञ्च त्यक्त्वा ब्रह्मबिलोद्गतः ।। ७८
लब्ध्वा शिवस्य सारूप्यं शिवलोकात्समागतम्।
विमानमधिरुह्याशु शिवलोकं स गच्छति ।। ७९
ग्रहीत्वा कीकसं देवा विश्वकर्मकरे ददुः ।
तेन वज्रायुधं कृत्वा सुदृढं निशितं महत्।। ८०
संहरानेन भगवन् वृत्रासुरमथोद्धतम्।
इत्युक्त्वा प्रददौ हस्ते विश्वकर्मा शतक्रतोः ।। ८१
अरिभिर्दुर्निरीक्ष्यं तं कालदण्डमिवापरम्।
आदाय बलवानिन्द्रो गजमभ्रमुवल्लभम्।। ८२
आरुह्य देवबृन्दैश्च यत्र वृत्रासुरो महान्।
महावेगात्तत्र गत्वा चकम्पे वज्रमायुधम्।। ८३
पतन्त्यशनिसङ्घाश्च पुरन्दरमहायुधात्।
निरीक्ष्य देवतासङ्घं देवेन्द्रं वज्रधारिणम्।। ८४

धावन् वेगेन वृत्रोऽपि गम्भीरेऽब्धिजले तदा।
निमग्नस्सन्नदृश्योऽभूदिन्द्राद्या विस्मितास्सुराः ॥ ८५
पुनर्विधिं समासाद्य प्राहुर्वृत्रविचेष्टितम्।
तेषां वचांसि चाकर्ण्य ब्रह्मा प्राह दिवौकसः ॥ ८६
समुद्रजलनाशाय कुम्भयोनिं महामुनिम्।
भवन्तः प्रार्थयन्तु द्रागिति तेन प्रचोदिताः ॥ ८७
पुरुहूतमुखा देवास्तदा मां प्रार्थयन्ति हि।
कालाग्निकोटिसदृशं ध्यात्वा हालास्यनायकम्॥ ८८
पारावारजलं सर्वं सव्यपाणितलेन च।
गृहीत्वा तु मया पीतं समुद्रो निर्जलोऽभवत्॥ ८९
वृत्रासुरस्तदा दृष्टो देवेन्द्रेण च दैवतैः।
समुद्रमध्ये कस्मिंश्च पर्वताग्रेऽतिविस्तृते॥ ९०
बद्धपद्मासनस्थस्सन् पाषाण इव निश्चलः।
इन्द्रियाणि च संयोज्य दृढं मनसि तन्मनः ॥ ९१
परब्रह्मणि संयोज्य योगध्यानपरायणः।
वज्रायुधेन तीक्ष्णेन जिष्णुस्तस्याच्छिनच्छिरः ॥ ९२
तदा वृत्रवधोद्भूता ब्रह्महत्याऽतिदारुणा।
तर्जयन्ती देवराजं दधती मुसलायुधम्॥ ९३
छायारूपेण परितस्सञ्चरन्त्यनिशं क्रुधा।
तां विलोक्य महाभीत्या धावन्वेगेन देवराट्॥ ९४
ऐशान्यान्दिशि सम्प्राप्य रुद्राणां लोकमद्भुतम्।
पद्मनालान्तरगतस्सूत्रलीनः पुरन्दरः ॥ ९५

चिरकालमदृश्योऽभूद्वृत्रहत्याभयाकुलः ।
तत्काले नहुषो राजा देवेन्द्रस्य पदं महत् ।। ९६
प्राप्य शप्तो मया सर्पो भूत्वा पतति भूतले ।
पद्मसूत्रान्तरगतश्शक्रो ध्यात्वा बृहस्पतिम् ।। ९७
तुष्टाव विविधैः स्तोत्रैर्भक्तिश्रद्धासमन्वितः ।
देवाचार्योऽपि दयया विहायादृश्यतां तदा ।। ९८
चकार सद्यः प्रत्यक्षं पुरतश्च शतक्रतोः ।
इन्द्रो वाचस्पतिं दृष्ट्वा महाप्रीत्या समुत्थितः ।। ९९
अपराधं क्षमस्वेति पुनः पुनरुदीरयत् ।
पादारविन्दयोस्तस्य दण्डवत्प्रणनाम च ।। १००
उत्थाप्यालिङ्ग्य देवेशं मा भैषीरित्युदीर्य च ।
ज्ञानदृष्ट्याऽथ संवीक्ष्य प्रायश्चित्तं महैनसः ।। १०१
वृत्रहत्याविनाशार्थमुपायं प्राह गीष्पतिः ।।
बृहस्पतिः-
महतां पातकानां तु शिवलिङ्गार्चनं विना ।। १०२
प्रायश्चित्तं मह्नास्ति तस्मात्तत् कुरु यत्नतः ।
चिरन्तनेषु स्थानेषु परिपूर्णः परश्शिवः ।। १०३
सान्निध्यं कुरुते नित्यं सर्वेषामिष्टसिद्धये ।
तेषु गत्वा महाभक्त्या कैलासप्रमुखेषु च ।। १०४
संस्नाय सर्वतीर्थेषु शिवलिङ्गानि पूजय ।
तेषां मध्येऽतिमुख्ये तु स्नाने शान्तिर्महैनसः ।। १०५

भविष्यति न सन्देहस्तस्मात् त्वं गन्तुमर्हसि ।
बोधयित्वेति देवेन्द्रं त्रिकालज्ञो बृहस्पतिः ॥ १०६
दृश्योऽभवत्सुराणां हि सकलानां यथा पुरा ।
इति वृत्रासुरवधं श्रुत्वा भूपस्समाहितः ॥ १०७
युद्धे शत्रुन्निहत्याशु सर्वत्र विजयी भवेत् ॥

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां हालास्यमाहात्म्ये वृत्रासुरवधोपाख्यानं नाम चतुर्थोऽध्यायः*

* * *

## அத்தியாயம் - 4

## லீலை-1. விருத்திரனின் வதம்

தேவர்களின் தலைவன் இந்த்ரன் விசுவகர்மாவால் அமைக்கப் பெற்ற ஸுதர்மா என்ற ஸபையில் அமர்ந்து மூவுலகையும் ஆண்டான். ஸபையில் நடனமாடிய திலோத்தமையின் அழகில் மயங்கியவன் தன் குரு பிருஹஸ்பதி ஸபைக்கு வந்ததை அறியாமல் அவரை வரவேற்று உபசரிக்காததால் மன முடைந்த பிருஹஸ்பதி தேவருலகைவிட்டகன்முர். நடனம் முடிந்ததும் மனம் தெளிந்த இந்த்ரன் குருவிடம் தவருக நடந்து கொண்டதையும் அவர் அகன்றுவிட்டதையும் உணர்ந்தான். இந்தச் செய்தி அறிந்த அஸுரர்கள் குருவை அவமதித்த இந்த்ரனையும் தேவர் படையையும் எளிதில் வென்றனர். தேவர்கள் இந்திரனுடன் பிரும்மாவிடம் சென்று உதவ வேண்டினர். (1-24)

த்வஷ்டாவின் புதல்வனும் மூன்று தலைகள் உள்ளவனுமான விசுவரூபனைக் குருவாகக் கொள்ளும்படி பிரும்மா கூறினுர். அவரிடம் சென்று அவரைக் குருவாக வரித்து அவரிடமிருந்து சிவகவசம் எனும் வஜ்ரக் கூடு போன்ற மந்த்ரம் பெற்று அதன் வலிமையால் அஸுரர்களைத் தேவர்கள் வென்றனர். விசுவரூபர் தன் ஸகோதரியின் புதல்வர்களான அஸுரர்களிடம் அன்பு பூண்டு மறைமுகமாக அவர்களுக்கு உதவுவதைக் கண்ட இந்த்ரன்

விசுவரூபனை வஜ்ராயுதத்தால் வெட்டினான். அவரது உடலிலிருந்து பறவைகள் வடிவில் உயிர் அகன்றது. இந்த்ரனுக்கு நேர்ந்த பிரும்ஹ ஹத்தி பாபத்தை அவன் பூமியிடமும், நீரிலும் பெண்களிடத்திலும் மரங்களிடத்திலும் பங்கிட்டுத் தந்தான். வெட்ட வெட்ட நிரம்புகிற ஆற்றலை பூமிக்கும், ப்ரசவிக்கும் வரை புருஷனுடன் உடலுறவு கொள்வதைப் பெண்களுக்கும், பனியாகிக் கெட்டியானாலும் இளகுவதை நீருக்கும் வெட்ட வெட்ட துளிர்ப்பதை மரங்களுக்கும் ஈடாக இந்த்ரன் தந்தான்.

விசுவரூபரின் தந்தை தன் மகனைக் கொன்ற இந்த்ரனுக்கு எதிரியாக ஒரு புத்திரனை வேண்டியாகம் புரிந்தார். விருத்திரன் தோன்றினான். தினமும் ஒரு வில்லடி வளர்ந்த அந்த அஸுரனை வெல்ல இந்த்ரனால் இயலவில்லை. வஜ்ராயுதமும் பயனற்றுப் போனது. திருப்பாற் கடலைக் கடைந்தபோது தேவரும், அஸுரரும் தம் தம் ஆயுதங்களைப் பாதுகாப்பாக வைத்திருக்கத் ததீசி முனிவரிடம் தந்தனர். இந்த்ரனின் மந்த்ரசக்தி மிக்க வஜ்ரமும் அதில் ஒன்று. ததீசி அதனை விழுங்கி முதுகின் நடு எலும்புக் கூட்டில் அவற்றைப் பதித்துக் காப்பாற்றி வந்துள்ளதை விஷ்ணு நினைவு படுத்த ததீசியிடம் சென்று இந்த்ரன் ஆயுதத்தைத் தரவேண்டினான். ததீசி தன் யோகபலத்தால் சிரமமின்றி உயிரை விட்டார். இந்திரன் அவரது முதுகெலும்பைக் கொண்டு வஜ்ராயுதம் அமைத்து அதனால் விருத்ரனை எதிர்த்தான். விருத்ரன் பயந்து கடலில் மூழ்கி மறைந்தான். நான் (அகஸ்தியர்) கடல் நீரைக் குடித்து வற்றச் செய்தேன். விருத்திரன் அங்கு யோக நிலையில் அமர்ந்து சித்த மடங்கி இருந்தான். இந்த்ரன் வஜ்ராயுதத்தால் அவனைக் கொன்றதும் அவனைப் பிரும்ம ஹத்திபாபம் நிழலாகத் தொடர்ந்தது. அதனைக் கண்டு பயந்த இந்திரன் கைலாஸம் சென்று தாமரைத் தண்டினுள் நுழைந்து மறைந்து வாழ்ந்தான். நஹுஷன் இந்திர பதவி பெற்றுத் தேவருலகை ஆண்டான்.

இந்திரன் துயருற்று பிருஹஸ்பதியைத் தியானித்ததும் அவர் நேரில் வந்தார். இந்திரனது குற்றத்தை மன்னித்தார். சிவலிங்க வழிபாடே இதற்குரிய கழுவாய் எனக் கண்ட குரு ஒவ்வொரு தீர்த்தத்திற்கும் சென்று நீராடி சிவனை வழிபடக் கூறினார்.

पञ्चमोऽध्यायः

## १. इन्द्रानुग्रहः

अगस्त्यः-

इति श्रुत्वा गुरोर्वाक्यं महैनश्शान्तिकारणम्।
महासन्तोष जननं महापत्तारणक्षमम्॥ १
वृत्रहत्याभयं त्यक्त्वा महेन्द्रः श्रद्धया सह।
गुरुणा सहितो भूत्वा सद्यो गत्वाऽमरावतीम्॥ २
आरुह्य चोच्चैश्श्रवसं सर्वैर्देवैस्समन्वितः।
देवाचार्यं पुरस्कृत्य मृगयाव्याजतस्तदा॥ ३
त्रिदिवादवतीर्याशु शरचापलसत्करः।
समन्तात्सञ्चरन् भूमिं पर्वतेषु वनेषु च॥ ४
सिंहव्याघ्रवराहादिदुष्टानि श्वापदानि च।
संहृत्य मृगयां चक्रे दर्शयन् हस्तलाघवम्॥ ५
कैलासादीनि मुख्यानि स्थानानि प्राप्य देवराट्।
सर्वतीर्थेषु संस्नाय दृष्ट्वा लिङ्गानि तानि च॥ ६
नाभूद्विमुक्तो देवेन्द्रो महत्या वृत्रहत्यया।
अञ्जनाद्रिनिभा घोरा वृत्रहत्या कृतान्तवत्॥ ७
मूर्ता मुसलहस्ता सा नामुञ्चद्वृत्रवैरिणम्।
तां विलोक्य महेन्द्रोऽपि महाभीतिसमन्वितः॥ ८
वेगेन प्राप तन्देशं यत्रास्ते सोमसुन्दरः।
तत्र दृष्ट्वा मृगान् हन्तुं नेच्छाऽभूद्वृत्रवैरिणः॥ ९

तदा विस्मयमापन्नस्त्रिदशान् प्राह देवराट्।
मृगयायां प्रवृत्तोऽपि बुद्धिरद्य मम ध्रुवम्॥ १०
अत्यन्तदयया युक्ता निवृत्ता वधकर्मणि।
अत्र देशे विशेषोऽस्ति सत्यमेव न संशयः॥ ११
इत्युक्त्वा मृगयाश्रद्धां त्यक्त्वा वृद्धश्रवाः पुनः।
श्रीहालास्यशिवक्षेत्रसीमां प्रविशति क्षणात्॥ १२
क्षेत्रप्रभावतो भीता वृत्रहत्याऽतिदारुणा।
बहिस्तिष्ठति निर्वीर्या किल्बिषैश्च बिडौजसः॥ १३
यत्रातिष्ठद्वृत्रहत्या त्यक्त्वेन्द्रं क्षेत्रवैभवात्।
वृत्रहत्यास्थितं स्थानं नाम्ना तद्विदितं द्विजाः॥ १४
सदा सहचरं वृत्रवधोत्थं कलुषं स्वराट्।
अदृष्ट्वा परया प्रीत्या सहितो गतसाध्वसः॥ १५
बृहस्पतिश्च सर्वज्ञं विलोक्य विबुधोत्तमान्।
विमुक्तोऽहं विमुक्तोऽहं महत्या वृत्रहत्यया॥ १६
अतिगम्भीरया वाचा प्राह चैवं पुनः पुनः।
श्रुत्वा वाक्यं महेन्द्रस्य बृहस्पतिमुखामराः॥ १७
विस्मिताश्चातिसन्तुष्टाः प्राहुस्सर्वे बिडौजसम्।
विशेषोऽस्तीति भवता विशेषज्ञेन धीमता॥ १८
प्रोक्तं पुराऽत्र तद्वाक्यं सत्यं स्यान्न कथं प्रभो।
मृगेन्द्राश्च गजेन्द्राश्च पक्षीन्द्राः पन्नगास्तथा॥ १९
अन्ये व्याघ्रमृगाद्याश्च त्यक्त्वाऽन्योन्यविरोधिताम्।
सञ्चरन्ति महापुण्ये कदम्बनिबिडे वने॥ २०
तस्मादवश्यमत्रास्ति वस्तु चात्यन्तनिर्मलम्।
देवाचार्यादिदेवानां श्रुत्वा वचनमादरात्॥ २१

किमद्भुतं वस्तु चात्र देशेऽस्तीति विचार्यताम्।
इत्युक्त्वा प्रेषयामास देवेन्द्रो देवतागणान्॥ २२
ते सर्वे परितो गत्वा सम्यगालोक्य सर्वतः।
दृष्ट्वा तटाकं गम्भीरं प्रसन्नसलिलान्वितम्॥ २३
सर्वे सम्भूय यत्तीरे तिष्ठन्ति विगतश्रमाः।
तत्तटाकस्य वायव्ये प्रदेशेऽत्यन्तपावने॥ २४
पुष्पितैश्च कदम्बैश्च श्रीवृक्षैश्च विराजिते।
श्यामळाः पञ्चवर्णाश्च कोमलाश्च शुकाः स्थिताः॥ २५
शिव शम्भो महादेव परमेश्वर शङ्कर।
चन्द्रशेखर भूतेश साम्ब श्रीकण्ठ शाश्वत॥ २६
आज्ञया देवदेवस्य नामान्येवं वदन्ति च।
श्रुत्वा शुकानां वचनं गत्वा तत्र दिवौकसः॥ २७
दृष्ट्वा शम्भोर्महालिङ्गं नीपवन्यान्तरोद्गतम्।
अमृतद्रवसंयुक्तं नयनानन्ददायकम्॥ २८
अतिविस्मयसंयुक्ता अभवन् दिविषद्गणाः।
सद्यः प्राप्य मनोवेगात् सहस्राक्षं प्रणम्य ते॥ २९
इति विज्ञापयामासुर्दृष्टं दृष्टं महाद्भुतम्।
निबिडे नीपबिल्वैश्च वनेऽस्मिन्वारिवर्जिते॥ ३०
महातीर्थं महालिङ्गमस्माभिः परिदृश्यते।
इति श्रुत्वा महेन्द्रोऽपि महातीर्थवाप्य च॥ ३१
गुरोर्वदनमालोक्य यत्कर्त्तव्यं मयाऽधुना।
वक्तव्यं तत् त्वया सर्वं पृच्छते प्रीतिसंयुतः॥ ३२
बृहस्पतिश्च सर्वज्ञस्तदाहाम्नायजं विधिम्।
स्नानमस्मिन्महातीर्थे विधाय विधिना पुरा॥ ३३

कारयित्वाऽस्य लिङ्गस्य विमानं तव नामतः ।
पूजय त्वं महालिङ्गं महापातकशान्तये ॥ ३४
गुरोरनुज्ञां लब्ध्वैवं महातीर्थेऽवतीर्य च ।
देवाचार्येण देवैश्च सहितो वैदिकैः परैः ॥ ३५
मन्त्रैरेनोहरैस्सम्यक् स्नात्वा सङ्कल्पपूर्वकम् ।
भस्मोद्धूलितगात्रस्सन्नित्यकृत्यं विधाय च ॥ ३६
ददर्श मूललिङ्गं तत्स्वयम्भूतं पुरन्दरः ।
दृष्टमात्रेण लिङ्गस्य वृत्रहत्या बहिः स्थिता ॥ ३७
नाशमायाति सहसा कालाग्नौ तूलशैलवत् ।
देवेन्द्रविग्रहे यस्तु पापभारो महान् स्थितः ॥ ३८
सोऽपि नश्यति तत्काले मूलनाशेन वृक्षवत् ।
ततस्तुष्टस्सुराधीशो वृत्रहत्याविवर्जितः ॥ ३९
विश्वकर्माणमाहूय विमानन्दिव्यमद्भुतम् ।
महालिङ्गस्य च कृते सहसा कल्प्यतां त्वया ॥ ४०
इत्याज्ञाप्य च सुस्नातान् महातीर्थे सुरोत्तमान् ।
प्रसूनानि समाहर्तुं प्रेषयित्वा बहूनि च ॥ ४१
चोदयित्वा च परितो वनानि निबिडानि च ।
दर्पणोदरवद्भूमिं कारयित्वा समन्ततः ॥ ४२
पुनः पुनश्च संवीक्ष्य लिङ्गं स्वायम्भुवं महत् ।
आत्मीयमातपत्रञ्च महालिङ्गस्य मस्तके ॥ ४३
स्वयं धर्तुं समुद्युक्तो यावदातपशान्तये ।
तावद्विमानं सम्प्राप्तं विहितं विश्वकर्मणा ॥ ४४

द्वितीयमिव हेमाद्रिं सुरैस्सर्वैरधिष्ठितम्।
गजाष्टकैर्दन्तिसिंहैश्चतुष्षष्टिगणेश्वरैः ।। ४५
सर्वैः कथञ्चिद्विधृतं सर्वरत्नैर्विचित्रितम्।
उद्यत्प्रभाकरनिभं हेमकुम्भविराजितम्।। ४६
वृषाङ्कितेन महता ध्वजेन परिशोभितम्।
वितानमुक्तामालाभिः पताकाकिङ्किणीगणैः ।। ४७
छत्रैश्च चामरैर्दिव्यैस्समलङ्कृतमद्भुतम्।
विलोक्य विस्मितो भूत्वा विमानं विबुधेश्वरः ।। ४८
सुमुहूर्त्ते गुरूक्ते तु स्थापयामास तत्स्थले।
अथ देवेन्द्रवचसा विश्वकर्मा च तत्क्षणे।। ४९
प्राकाराणां पञ्चकञ्च मण्डपानि बहूनि च।
गोपुराणि च सर्वाणि देव्याः प्रासादमुत्तमम्।। ५०
आलयं परिवाराणां विविधाः प्रतिमा अपि।
सोपानपङ्क्तीस्तीर्थस्य निर्ममे तपसो बलात्।। ५१
प्रसूनाहरणार्थञ्च ये देवास्तेन चोदिताः।
अलभ्यानि प्रसूनानीत्युक्त्वा सर्वे समागताः ।। ५२
तान् प्रत्याह सहस्राक्षो महालिङ्गार्चनोत्सुकः।
भवन्तोऽद्य दिवं गत्वा गन्धपुष्पादिकं बहु।। ५३
हिरण्मयानि पात्राणि पाद्यादिस्थापनाय च।
गृहीत्वाऽऽयान्तु शीघ्रेण भूषणान्यम्बराणि च।। ५४
इत्याज्ञाप्य स्वयमपि प्रविश्य गहनानि च।
विलोक्याक्ष्णां सहस्रेण न दृष्ट्वा कुसुमान्यपि।। ५५

श्रान्त्या महत्या संयुक्तस्तीर्थतीरं समाययौ।
आत्मार्चनेऽतितात्पर्यं श्रान्तस्यापि बिडौजसः ॥ ५६
बुद्ध्वेशः कृपया तत्र स्वर्णपद्मान्यदर्शयत्।
उत्फुल्लस्वर्णपद्मं तं तटाकं वीक्ष्य विस्मितः ॥ ५७
हेमपद्माकरमिति तीर्थनाम विधाय च।
पद्मान्यादाय सहसा स्वहस्तेन पुरन्दरः ॥ ५८
यावल्लिङ्गसमीपञ्च प्राप्तस्तावद्दिवौकसः।
आयान्ति जिष्णुनोक्तानि पूजाद्रव्याणि यानि च ॥ ५९
गृहीत्वा तानि सर्वाणि वायुवेगसमन्विताः ॥ ६०
ज्ञानशक्तिमये लिङ्गे क्रियाशक्तिस्वरूपिणीम्।
पीठिकां विधिनाऽऽयोज्य विश्वकर्मविनिर्मिताम्॥ ६१
देव्याश्च परिवाराणां प्रतिमानां महेशितुः।
प्रतिष्ठां कारयित्वाऽथ महालिङ्गस्य सन्निधौ ॥ ६२
श्रुतीरितानि सूक्तानि रौद्राणि निखिलानि च।
उच्चैरुच्चरति श्रद्धाभक्तिभ्यां मुनिपुङ्गवैः ॥ ६३
गानैश्च वाद्यघोषैश्च नृत्यन्त्यप्सरसस्तदा।
देवेन्द्रोऽपि महालिङ्गं गव्यैः पञ्चामृतैरपि ॥ ६४
अभिषिच्य विधानेन शुद्धैस्तीर्थजलैरपि।
दिव्यैश्च भूषणैर्वस्त्रैर्गन्धैस्सौवर्णपङ्कजैः ॥ ६५
पारिजातप्रसूनैश्च धूपैर्दीपैरनेकशः।
नैवेद्यैरपि ताम्बूलैर्भक्त्या पूजां विधाय च ॥ ६६

प्रदक्षिणानि कुर्वाणः प्रणिपत्य मुहुर्मुहुः ।
उत्थाय लिङ्गमालोक्य सौन्दर्यातिशयान्वितम् ।। ६७
अस्मिन् लिङ्गवरे यस्तु सन्निधत्ते सदाशिवः ।
सुन्दरेश इति प्रोच्चैरुच्चरन्नाम चाकरोत् ।। ६८
ततो विलोकयामास मध्ये लिङ्गं पुरन्दरः ।
तरुणारुणसङ्काशं करुणावरुणालयम् ।। ६९
स्वनामधेयसदृशं सौन्दर्येण समन्वितम् ।
परशुञ्च मृगं हस्तैर्दधानं वरदाभये ।। ७०
स्वर्धुनीचन्द्रशकलविराजितकिरीटकम् ।
हारकुण्डलकेयूरकटकादिविभूषणैः ।। ७१
विभूषितं महादेवं त्रिणेत्रं सुस्मिताननम् ।
दिव्याम्बरधरं दिव्यगन्धपुष्पैरलङ्कृतम् ।। ७२
युवत्या सहितं देव्या युवानं सोमसुन्दरम् ।
तमालोक्य स्तुतिश्चक्रे भक्त्या गद्गदया गिरा ।। ७३

### सोमसुन्दरस्तुतिः

इन्द्रः -

एकं ब्रह्माद्वितीयञ्च परिपूर्णं परात्परम् ।
इति यो गीयते वेदैस्तं वन्दे सोमसुन्दरम् ।। ७४
ज्ञातृज्ञानज्ञेयरूपं विश्वं व्याप्य व्यवस्थितम् ।
स्वयं सर्वैरदृश्यो यस्तं वन्दे सोमसुन्दरम् ।। ७५
अश्वमेधादियज्ञैश्च यस्समाराध्यते द्विजैः ।
ददाति च फलं तेषां तं वन्दे सोमसुन्दरम् ।। ७६

यं विदित्वा बुधास्सर्वे कर्मबन्धविवर्जिताः ।
लभन्ते परमां मुक्तिं तं वन्दे सोमसुन्दरम् ।। ७७
देवदेवं यमाराध्य मृकण्डुतनयो मुनिः ।
नित्यत्वमगमत्सद्यस्तं वन्दे सोमसुन्दरम् ।। ७८
निजनेत्राम्बुजकृतपूजया परितोष्य यम् ।
श्रीपतिर्लभते चक्रं तं वन्दे सोमसुन्दरम् ।। ७९
येन सृष्टं जगत्सर्वं रक्षितं संहृतं क्रमात् ।
सत्यं विज्ञानमानन्दं तं वन्दे सोमसुन्दरम् ।। ८०
यस्मै वेदाश्च चत्वारो नमस्यन्ति वपुर्धराः ।
ईशानं सर्वविद्यानां तं वन्दे सोमसुन्दरम् ।। ८१
यस्मात्परश्चापरश्च किञ्चिद्वस्तु न विद्यते ।
ईश्वरं सर्वभूतानां तं वन्दे सोमसुन्दरम् ।। ८२
यस्य प्रणाममात्रेण सन्ति सर्वाश्च सम्पदः ।
सर्वसिद्धिप्रदं शम्भुं तं वन्दे सोमसुन्दरम् ।। ८३
यस्य दर्शनमात्रेण ब्रह्महत्यादिपातकम् ।
अवश्यं नश्यति क्षिप्रं तं वन्दे सोमसुन्दरम् ।। ८४
उत्तमाङ्गश्च चरणं विधिना विष्णुनाऽपि च ।
न दृश्यते यस्य यत्नात् तं वन्दे सोमसुन्दरम् ।। ८५
त्वया नीपारण्यनाथ त्वदन्यान्
समानाहुर्दैवतान् पापिनस्ते ।
तदा शम्भो त्वत्समं दैवतं स्याद्
यदा योगो वाजिनो रासभस्य ।। ८६

अणोरणुस्त्वं महतो महांस्त्वं
सर्वात्मभावात्परिपूर्ण एकः ।
त्वयैव शम्भो महिमा त्वदीयो
विज्ञायते वक्तुमिमं क्षमः कः ।। ८७

अगस्त्य उवाच-

इति स्तुत्वा महादेवं भक्त्या परवशो वृषा ।
दण्डवत्सन्निधौ तस्य प्रणनाम महीतले ।। ८८
अथ गम्भीरया वाचा हरः प्राह शतक्रतुम् ।
उत्तिष्ठोत्तिष्ठ मघवन् वरं वरय सुव्रत ।। ८९
इत्याकर्ण्य वचश्शम्भोः समुत्थायाविलम्बितम् ।
प्रार्थयामास सम्प्रीत्या प्रबद्धकरसम्पुटः ।। ९०
पुरा दर्शनमात्रेण लिङ्गस्य महतस्तव ।
वृत्रहत्याऽपि विध्वस्ता मत्कृतैर्दुष्कृतैस्सह ।। ९१
इतः परं प्रार्थनीयो वरो नास्ति ममेश्वर ।
तथाऽपि प्रार्थयाम्यद्य क्षमस्व करुणानिधे ।। ९२
प्रसन्नो यदि देवेश भगवन् सोमसुन्दर ।
भवतश्चरणाम्भोजमकरन्दरसोत्सुकः ।। ९३
मन्मनोभ्रमरो भ्रान्तिं विहायास्तु सुनिश्चलः ।

श्रीशिवः-

अतीव मम भक्तोऽसि भक्तिस्तेऽस्तु दृढा मयि ।। ९४
पुनरन्यं वरं प्रीत्या प्रयच्छामि सुरोत्तम ।
त्वया मह्यं दीयते यद्विमानमतिशोभनम् ।। ९५

त्वन्नाम्ना प्रथितश्चैन्द्रविमानमिति चास्तु तत्।
महाप्रलयकालेऽपि ममेदं क्षेत्रमद्भुतम्।। ९६
न नश्यति शचीनाथ सत्यमेव मयोदितम्।
त्रिपुरे दह्यमाने तु मच्छरोत्थेन वह्निना।। ९७
तन्मध्यगाश्च मे भक्ता न दह्यन्ते यथा तथा।
क्षेत्रं ममैतत्कालाग्निज्वालयाऽपि न दह्यते।। ९८
उपपातकिनो वापि महापातकिनोऽपि वा।
प्रविश्य च मम क्षेत्रं भविष्यन्ति निरेनसः।। ९९
मदीयस्य च लिङ्गस्य दर्शनं त्वतिदुर्लभम्।
भोगमोक्षप्रदं सद्यः कथं भवति पूजनम्।। १००
इति श्रुत्वा शम्भुवाक्यं पुनः प्राह शतक्रतुः।
भगवन् पार्वतीनाथ त्वदीयं लिङ्गमद्भुतम्।। १०१
दृष्टमात्रेण हरति ब्रह्महत्यादि पातकम्।
तस्मादिदं महालिङ्गं पूजितुं प्रतिवासरम्।। १०२
ममेच्छा महती जाता तदर्थं कुर्वनुग्रहम्।
एवमुक्तस्सहस्राक्षं प्रत्युवाच महेश्वरः।। १०३
ऋतूत्तमो वसन्तस्तु मासानामुत्तमो मधुः।
तिथ्युत्तमा पूर्णमासी चित्रानक्षत्रमुत्तमम्।। १०४
एतत्सर्वं विद्यतेऽस्मिन् वत्सरेऽतीव शोभने।
यदाऽयं पुण्यकालस्तु भविष्यति पुनः पुनः।। १०५
तदा त्वञ्च सुरैस्सार्धमिदं क्षेत्रमवाप्य च।
महातीर्थे च संस्नाय सौवर्णैश्च महोत्पलैः।। १०६

मां पूजय विधानेन महालिङ्गस्वरूपिणम्।
तदा स्नानं जपो होमस्तर्पणं लिङ्गदर्शनम्॥ १०७
दानं यदन्यत्सत्कर्म तदनन्तफलावहम्।
इति ज्ञात्वा यथाशक्ति स्नानदानजपादिकम्॥ १०८
कुर्यादवश्यं मतिमान् सर्वपापप्रशान्तये।
तवापि दिव्यमैश्वर्यं पूर्वस्मादधिकं ततः॥ १०९
वीर्यं यशश्च तेजश्च प्रभावश्च भविष्यति।
इदानीं त्रिदशाधीश त्रिदिवं गम्यतां त्वया॥ ११०
सर्वत्र विजयी भूत्वा सर्वदेवैरभिष्टुतः।
तत्र भुक्त्वा महाभोगांश्चिरकालं मुदान्वितः॥ १११
कळेबरान्ते सायुज्यं मम प्राप्स्यसि दुर्लभम्।
त्वया कृतमिदं स्तोत्रं पठति श्रद्धया तु यः॥ ११२
धर्मादिपुरुषार्थांश्च तस्मै दास्याम्यहं ध्रुवम्।
इति दत्वा वरं त्र्यक्षस्सहस्राक्षाय सादरम्॥ ११३
आत्मीयमूललिङ्गे तु देवदेवस्तिरोदधे।
इति शम्भोर्वरं प्राप्य महाहर्षसमन्वितः॥ ११४
पुनः प्रदक्षिणं कृत्वा स्तुत्वा भक्त्या प्रणम्य च।
उपविश्य सहस्राक्षो मूललिङ्गस्य सन्निधौ॥ ११५
हृत्पुण्डरीकमध्ये तं साम्बं हालास्यनायकम्।
ध्यात्वा पञ्चाक्षरं मन्त्रञ्जपित्वाऽष्टोत्तरं शतम्॥ ११६
शम्भो शङ्कर देवेश भगवन् सोमसुन्दर।
अपराधं मया यत्तु कृतं तत् क्षम्यतां त्वया॥ ११७

इति विज्ञाप्य देवेशं पूजाकर्म समाप्य च ।
ततः प्रणम्य सर्वज्ञं स्वगुरुञ्च बृहस्पतिम् ।। ११८
आत्मानं निर्मलं बुध्वा गां प्रयाति सुरोत्तमैः ।
तदारभ्य महेन्द्रोपि दिवञ्च प्रतिवत्सरम् ।। ११९
आगत्य चित्रानक्षत्रे चैत्रे मासि समागते ।
करोति पूजां महतीं महालिङ्गस्य भक्तितः ।। १२०
समष्टिविद्यानगरीनायकस्य महेशितुः ।
इयं तु प्रथमा लीला महेन्द्रानुग्रहात्मिका ।। १२१
महासम्पत्तिजननी महापुण्यप्रदायिनी ।
महाव्याधिप्रशमनी महापातकनाशिनी ।
श्रोतव्या पठितव्या च भक्तिमद्भिर्जनैस्सदा ।। १२२

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां हालास्यमाहात्म्ये इन्द्रानुग्रहो नाम पञ्चमोऽध्यायः*

* * *

## அத்தியாயம் - 5

## லீலை-1 - இந்த்ரனுக்கு அருள் புரிதல்

*பெரும் பாபம் நீங்குவதற்காக குருவின் வாக்யத்தைக் கேட்ட இந்த்ரன் பயம் நீங்கியவனாகக் அமராவதி சென்று குருவுடன் உச்சை சிரஸ் என்ற தன் குதிரையேறி பூமியில் இறங்கி கைலாஸம் முதலிய க்ஷேத்திரங்களுக்குச் சென்று புனித நதிகளில் நீராடிச் சிவனை வழிபட்டான். பிரும்ம ஹத்தி எல்லா விடத்திலும் அவனைத் துரத்தியது. வழியில் வேட்டையாடுவதில் நாட்டத்தால் காடுகளில் சுற்றியவன் ஸோமஸுந்தரர் இருக்குமிடம் வந்தான். வேட்டையில் நாட்டம் குறைந்து தயை அதிகமாவதை உணர்ந்த இந்த்ரன் கடம்புக் காட்டில் நுழையும் போதே பிரும்ம ஹத்தி*

தன்னை விட்ட கன்று விட்டதை உணர்ந்தான். அங்கு எல்லா உயிரினங்களும் அன்புடன் பழகின. எதிரில் பெரும் தடாகம் தென்பட்டது. அதில் நீராடினன். அதன் வடமேற்கில் ஒரு லிங்கம் இருந்தது. அதனைச் சுற்றி வந்த கிளிகள் சிவ ! சம்போ மஹாதேவ ! சங்கர ! என்று இறைவனைப் பாடின. பிருஹஸ்பதியிடம் தான் செய்ய வேண்டியதைப் பற்றிக் கேட்டான்.

''இந்தத் தடாகத்தின் கரையில் ஒரு ஆலயத்தைக் கட்டி, அதில் இந்த லிங்கத்தை வைத்துப் பூஜிப்பாய்'' என்று குரு கூற உடன் விசுவகர்மாவை அழைத்து கோவில் கட்டச் செய்தான். பூக்களால் வழிபட விரும்பி காட்டிலிருந்து பூக்களைக் கொணரத் தன் தேவ கணங்களை ஏவினன். எங்கும் பூ கிடைக்கவில்லை. தன் வெண்குடையை லிங்கத்தின் மீது தாங்கினன். அதற்குள் விசுவகர்மா கோவிலைக் கட்டி முடித்தான். அந்த அழகிய அலங்கரிக்கப் பெற்ற கோவிலில் ஈசனை வைத்து வழிபடத் தொடங்கினன். புஷ்பங்களைக் கொணரச் சென்றவர்கள் பக்கத்திலுள்ள காடுகளில் தேடியும் பூ கிடைக்காமல் திரும்பினர்.

இறைவன் தன் அருளால் தடாகத்தில் தங்கத் தாமரைகளைத் தோற்றுவித்தார். அவற்றை கொண்டு வந்து ஈசனையும், தேவியையும் இந்த்ரன் வழிபட்டான். இந்த்ரன் முன்னே மிகவும் ஸௌந்தரனகத் தேவியுடன் இறைவன் காட்சியளித்தார். அதனைக் கண்டானந்தித்த இந்த்ரன் தேவனைத் துதித்து வணங்க, இறைவன் அதை ஏற்று அருள் புரிந்தார். தினமும் தனது வழிபாட்டை ஏற்க இந்த்ரன் வேண்டியதும், இறைவன் கூறினர். பிரும்மஹத்தி பாபம் நீங்கியது. இந்த உன்னல் அமைக்கப் பெற்ற விமானம் உன் பெயருடன் விளங்கட்டும். ப்ரளய காலத்திலும் இது அழியாதிருக்கட்டும். ஆண்டு தோறும் வஸந்த ருதுவில் சித்திரை மாதத்தில் சித்திரை நக்ஷத்திரம் கூடிய பௌர்ணமியில் தேவர்களுடன் வந்து பொற்றமரைக் குளத்திலுள்ள பொற்றமரைகளால் அர்ச்சித்து வழிபடுவாயாக என்றருளி மூலலிங்கத்தினுள் மறைந்தார்.

அதிலிருந்து இந்நாள் வரை சித்திரைத் திருநாளை இந்திரன் தேவர்களுடன் வந்து கண்டுகளித்துச் செல்கிறன். இந்திரனுக்கு அருள் புரிந்ததே மதுரையில் நிகழ்ந்த முதல் லீலை.

षष्ठोऽध्यायः

## २. ऐरावतशापविमोचनम्

सूतः-

इत्यगस्त्यात्समाकर्ण्य सर्वे तु मुनिपुङ्गवाः ।
पुनश्च प्रार्थयामासुः कुम्भयोनिं तपोनिधिम् ।। १
वयं सर्वे कृतार्थाः स्मः श्रुत्वा पुण्यां कथामिमाम् ।
पुनस्तु किं किं देवेन कृतं कर्म महाद्भुतम् ।। २
तत्सर्वं कथयास्माकं क्रमेण मुनिपुङ्गव ।
इति श्रुत्वा वचस्तेषां मुनीनां कुम्भसम्भवः ।। ३
दुर्वाससो मुनेश्शापात् मुक्तिमैरावतस्य च ।
वसिष्ठादिमुनीन्द्रेभ्यो वक्तुं समुपचक्रमे ।। ४

अगस्त्यः-

पुरा निर्जित्य सङ्ग्रामे जम्भादीनसुरेश्वरान् ।
महाविजयसम्पन्नो देवराजो मुदा युतः ।। ५
शैलराजेन सदृशमुन्नत्या धवलत्विषा ।
अत्यन्तधवलैर्दन्तैश्चतुर्भिश्च विराजितम् ।। ६
ऐरावतं समारुह्य गजराजं सुरेश्वरः ।
त्रयस्त्रिंशत्कोटिसंख्यैरमरैस्सिद्धचारणैः ।। ७
गन्धर्वैः किन्नरैरन्यैर्दिव्यैश्च मुनिपुङ्गवैः ।
जयघोषं प्रकुर्वद्भिस्तैस्सर्वैः परितो वृतः ।। ८
पुरीं प्राप महानिन्द्रो महतीममरावतीम् ।
तदा दिवौकसस्सर्वे सुवस्तूनि मुदा ददुः ।। ९

अनर्घाण्युपहाराणि दिव्यानि विबुधोत्तमैः ।
समर्पितानि जग्राह जम्भासुरनिषूदनः ॥ १०

दुर्वासास्तु महातेजाः काशीं सम्प्राप्य सादरम् ।
सर्वतीर्थेषु संस्नाय सर्वलिङ्गानि पूज्य च ॥ ११

नाम्ना कामेश्वरं लिङ्गं प्रतिष्ठाप्य प्रपूज्य च ।
प्रदक्षिणनमस्कारस्तोत्रैस्सम्पूज्य शङ्करम् ॥ १२

सन्निधौ तस्य देवस्य लिङ्गमालोक्य संस्थितः ।
तदा पतति लिङ्गस्य मस्तकस्थं महोत्पलम् ॥ १३

गृहीत्वा तन्महाप्रीत्या स्वेच्छया सञ्चरन्मुनिः ।
देवराजं तदा दृष्ट्वा चाशीर्भिरभिनन्द्य च ॥ १४

प्रसादश्शङ्करस्येति ददौ तस्मै महोत्पलम् ।
गृहीत्वा पाणिनैकेन तत्पुष्पं पाकशासनः ॥ १५

मोहितो जयलक्ष्म्या च न धृत्वा निजमौलिना ।
ऐरावतस्योत्तमाङ्गे स्थापयामास चोन्नते ॥ १६

तन्मस्तकस्य चाञ्चल्यादधः पतति तत्तदा ।
पतितश्च स्वपादेन मर्दयित्वा पुनः पुनः ॥ १७

क्रीडत्यमरमातङ्गो मदयुक्तो विधेर्वशात् ।
दुर्वासास्तु तदालोक्य कोपेन स्फुरिताधरः ॥ १८

महेन्द्रश्च गजेन्द्रश्च शप्तुं प्राह समुद्यतः ।
महेन्द्र त्वं गर्वितोऽसि दानवानां जयेन च ॥ १९

समानमन्यैर्मुनिभिर्मामपि प्रविचार्य च ।
न दधासि किरीटेन मया दत्तं महोत्पलम् ॥ २०

अन्यैस्समर्पितं सर्वं गृहीतश्च त्वयाऽदरात् ।
किञ्चिच्च मां न जानासि क्रुधा च तपसाऽतुलम् ॥ २१

तस्मात् त्वन्मस्तकस्याद्य भेत्ता पाण्ड्यो भविष्यति।
ऐरावतः क्षुद्रगजः पृथिव्यां सञ्चरिष्यति ।। २२
इति दुर्वाससा शप्ते देवेन्द्रे सहवाहने।
उक्तवन्तः क्षमस्वेति प्रणेमुश्च पुनः पुनः ।। २३
सुराः सर्वेऽनुसृत्यैनं प्रसन्नं चक्रिरे मुनिम्।
जलस्यौष्ण्यं शिखिस्पर्शान्न स्वभावस्तथा मुनेः ।। २४
कारणे सति रोषस्य प्रसन्नो दयया भव।
इति श्रुत्वा सुरवचो दुर्वासाश्च महामुनिः ।। २५
विहाय कोपं सहजमुवाचाथ सुरोत्तमान्।
मदुक्तमन्यथा कर्तुं न शक्तोऽहं दिवौकसः ।। २६
मच्छापमात्रसंयुक्तो न तु शक्रस्सवाहनः।
किं तु द्रोहेण शम्भोस्तु संयुक्तो महताऽधुनाः ।। २७
वाराणसीमहाक्षेत्रे मया संस्थापितस्य च।
कामेश्वराख्यलिङ्गस्य प्रसादस्तन्महोत्पलम्।। २८
शक्रेण न धृतं मूर्ध्ना पदा स्पृष्टं गजेन च।
औदासीन्यं लङ्घनं च प्रसादस्य महेशितुः ।। २९
सुमहत्पातकं प्रोक्तं शिवशास्त्रविशारदैः।
सुमहत्पातकानां तु प्रायश्चित्तं न विद्यते ।। ३०
तथाऽपि देवदेवेन रहस्येवं प्रभाषितम्।
सुमहत्पातकानां तु प्रायश्चित्तमनुत्तमम्।। ३१
तदहं कृपया वक्ष्ये पापशापनिवृत्तये।
वेदानां मस्तकैश्चैव प्रतिपादितमादरात्।। ३२
भूलोकशिवलोकाख्यं शिवक्षेत्रं महाद्भुतम्।
महापापहरं चास्ति महाशापहरं च तत्।। ३३

हेमपद्माकरस्तत्र महातीर्थं च विद्यते।
श्री हालास्येश्वरं लिङ्गमस्ति त्रैलोक्यविश्रुतम्।। ३४

ये पापभीरवो लोके ये महाशापभीरवः।
ये वाञ्छन्ति महाभोगान् मुक्तिं वाऽत्यन्तदुर्लभाम्।। ३५

ते सर्वे तत्र सम्प्राप्य भक्त्या च श्रद्धया सह।
महातीर्थे च संस्नाय दृष्ट्वा हालास्यनायकम्।। ३६

सर्वदोषविनिर्मुक्ताः सर्वान् कामान् प्रयान्ति हि।
गजेन्द्रोऽपि महेन्द्रोऽपि प्राप्य हालास्यमुत्तमम्।। ३७

मम शापात्तु निर्मुक्तौ भवेतां तावुभौ ध्रुवम्।
कृपया देवदेवस्य श्रीहालास्येश्वरस्य च।। ३८

किरीटमात्रमिन्द्रस्य पाण्ड्यभूपो भिनत्त्विति।
वत्सराणां शतं तावच्चरित्वा पृथिवीतले।। ३९

ऐरावतोऽपि तं नत्वा मुक्तो भवतु शापतः।
इत्युक्त्वा शिरसा धृत्वा गृहीत्वा तन्महोत्पलम्।। ४०

स्वच्छन्दगत्या संयुक्तः प्रययौ स महामुनिः।
ऐरावतो मुनेश्शापादतिनीलवपुर्धरः।। ४१

भुवि क्षुद्रगजो भूत्वा दन्तद्वयसमन्वितः।
वनेषु हस्तिभिस्सार्द्धं चचारातीव दुःखितः।। ४२

अनुभूय चिरं कालं दुःखं च मुनिशापजम्।
श्रीहालास्यं शिवक्षेत्रं दैवगत्या प्रविश्य च।। ४३

मुनिनोक्तं शापशान्त्यै स्मृत्वोपायं महत्तरम्।
महातीर्थे महाभक्त्या करोति स्नानमुत्तमम्।। ४४

स्नानमात्रेण शापोत्थं सद्यो नश्यति कल्मषम्।
चतुष्टयं च दन्तानां लब्ध्वा स्वस्य सितप्रभाम्।। ४५

प्रीत्या महत्या संयुक्तस्सम्प्राप्य शिवसन्निधिम्।
स्वकीयवर्गस्कन्धस्थविमानान्तरसुस्थितम्।। ४६
शिवलिङ्गं समालोक्य सर्वैर्देवैः प्रपूजितम्।
पुष्करेण गृहीतेन तीर्थोदेनाभिषिच्य च।। ४७
उपचारैश्च गन्धाद्यैर्मनसाऽऽराध्य पञ्चभिः।
स्तुत्वा नानाविधैः स्तोत्रैस्सुन्दरेशं प्रणम्य च।। ४८
उत्थाय लिङ्गमालोक्य हालास्येशमयाचत।
मद्वंश्या भागधेयेन त्वदायतनधारकाः।। ४९
सुखं तिष्ठन्त्यहमपि त्वदायतनधारकः।
वसेयमिति बुद्धिर्मे प्रसादः क्रियतां शिव।। ५०
तद्वचः शङ्करः श्रुत्वा प्राह सान्निध्यकृद्गजम्।
शङ्करः-
महाभक्तो महेन्द्रो मे तदीयस्त्वं च तत्समः।। ५१
तं धारय तथैव त्वं तदेवाद्य मम प्रियम्।
इत्युक्तो देवदेवेन गजेन्द्रः पुनरब्रवीत्।। ५२
भगवन् पार्वतीनाथ भक्तवत्सल शङ्कर।
दुर्वाससो मुनेश्शापमनुभूय महावने।। ५३
पुनस्त्वहं त्वामभ्येत्य शिव मुक्तोऽस्मि शापतः।
गजेन्द्रेषु यथा शम्भो श्रीमत्प्रासादधारिषु।। ५४
अनुग्रहस्त्वया कार्यो मय्यपि त्वं तथा कुरु।
इत्युक्तो गजराजेन शम्भुः प्राह गजेश्वरम्।। ५५

तथास्तु गज गच्छ त्वमित्युक्त्वाऽन्तर्दधे हरः ।
सर्वपापप्रशमनं सर्वशापहरं परम् ।। ५६
भूलोकशिवलोकाख्यं शिवक्षेत्रं पुरातनम् ।
त्यक्त्वा गन्तुमनिच्छन् सन् देवपश्चिमभागतः ।। ५७
खात्वा तीर्थं स्वपादेन तत्तीरे तु गणाधिपम् ।
शिवलिङ्गञ्च संस्थाप्य स्वनाम्ना सादरेण तु ।। ५८
विनायकञ्च तल्लिङ्गं प्रपूज्य प्रतिवासरम् ।
यथा तिष्ठति नाके च सन्तोषेण गजेश्वरः ।। ५९
भूलोकशिवलोके तु तथा तिष्ठति वै चिरम् ।
ऐरावतं मुक्तशापं परिज्ञाय सुरेश्वरः ।। ६०
दूतं सम्प्रेषयामास सम्प्राप्तुममरावतीम् ।
देवेन्द्राज्ञाभयात्सद्यो निर्गत्य मधुरापुरात् ।। ६१
प्रस्थानं सुन्दरेशस्य पूर्वभागे विधाय च ।
तत्रापि लिङ्गमतुलं कृत्वा स्वस्वामिनामतः ।। ६२
इन्द्रेश्वराख्यलिङ्गं च प्रतिष्ठाप्य प्रपूजयन् ।
नीपारण्यं महत् क्षेत्रं न विहाय च सुस्थितः ।। ६३
पुनः प्रेषितदूतेन देवेन्द्रेण महागजः ।
त्रिदिवं च ययौ सद्यस्स्वाम्याज्ञां नैव लङ्घयन् ।। ६४
खातितं गजपादेन तटाकं तीर्थमुत्तमम् ।
गजपुष्करिणी चेति प्रथितं नामधेयतः ।। ६५
विनायकोऽपि तीरस्थ ऐरावतविनायकः ।
ऐरावतेश्वरं लिङ्गं तत्प्रतिष्ठितमिष्टदम् ।। ६६

दृष्टमात्रेण हरति शापपापभयं महत्।
गजपुष्करिणीतीर्थे स्नात्वा चैरावतेश्वरम्।। ६७
दृष्ट्वा विमुच्यते पापैःशापैस्सर्वामयैरपि।
प्रस्थानञ्च यया वीथ्या करोत्यैरावतो गजः ।। ६८
नाम्ना प्रसिद्धा सा वीथी गजधावनवीथिका।
प्रस्थितं यद्गजेन्द्रेण देवेन्द्रस्य महाज्ञया।। ६९
नाम्ना चैरावतपुरं प्रसिद्धमधुनाऽपि च।
इन्द्रेश्वरं तत्र दृष्ट्वा पुरुषार्थमहानिधिम्।। ७०
इन्द्रलोके वसेद्धीमान् यावदिन्द्राश्चतुर्दश।
एवमैरावतं शापान्मोचयित्वा महामुनेः ।। ७१
अनुगृह्णाति देवेशो जीवन्मुक्तिपुरेश्वरः।
इति द्वितीया या लीला कृता हालास्यवासिना।
तां तु श्रुत्वा नरो धीमान् महापापैः प्रमुच्यते।। ७२

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये ऐरावतशापविमोचनं नाम षष्ठोऽध्यायः*

* * *

## அத்தியாம் — 6

## 2 - ஐராவதத்தின் சாபநீக்கம்

*அகஸ்தியர் கூறுகிறார் - போரில் ஜம்பன் என்ற அஸுரனை வென்ற இந்த்ரன் நான்கு தந்தங்கள் கொண்ட தனது ஐராவதத்தின் மீது அமர்ந்து தேவர்களின் வெற்றி முழக்கத்துடன் அமராவதி திரும்பினான். துர்வாஸர் காசிக்குச் சென்று தீர்த்தங்களில் நீராடி காமேச்வரலிங்கத்தை ஸ்தாபித்து வழிபட்டார். அப்போது*

சிவனது தலையிலிருந்து தாமரையொன்று கீழே விழுந்தது. அதனைப் ப்ரஸாதமாகத் தலையால் ஏற்றுத் திரும்புகையில் வழியில் இந்திரனைக் கண்டதும் அவனிடம் அந்தத்தாமரையை அளித்தார். இந்த்ரன் வெற்றி இறுமாப்பால் மதர்த்தவனாக, அதனைப் பெற்றதும் ஐராவதத்தின் மீது போட்டான். அது பூவைக் கீழே தள்ளிக் காலால் மிதித்து நசுக்கி விளையாடியது சிவப் ப்ரஸாத்தை அவமதித்த இந்த்ரன் பாண்டியனின் பிரம்பால் தலையில் அடிபடட்டும் என்றும் ஐராவதம் தெய்வத் தன்மையை இழந்து இரு தந்தங்களுடன் காடுகளில் சுற்றி வரட்டும் என்றும் துர்வாஸர் சபித்தார். தேவர்கள் வேண்டியதும் ஹாலாஸ்யத்தில் பொற்றாமரைக் குளத்தில் நீராடி ஸோமஸுந்தரரை வழிபட்டு ஐராவதம் தன் முன் நிலையைப் பெற அருள் புரிந்தார். அவ்வாறே கிரீடத்தில் பாண்டியனின் பிரம்படியைப் பெற்று இந்த்ரனும் சாபத்திலிருந்து மீளட்டும் என்றார்.

ஐராவதம் இரண்டு தந்தங்களுள்ள காட்டு யானையாகி பூமியில் சுற்றி மதுரையையடைந்தது. பொற்றாமரையில் நீராடியதும் நான்கு தந்தங்களைப் பெற்று, இழந்திருந்த தெய்வத் தன்மையையும் பெற்றது. தன் இனத்தவரால் தாங்கப் பெற்ற விமானத்தின் கீழுள்ள ஸுந்தரேச்வரரைப் பொற்றாமரைகளால் வழிபட்டது. அதில் மனம் நிரம்பி அங்கேயே வசிக்கத் தீர்மானித்தது. இறைவன் அதனை மீண்டும் இந்த்ரனது வாஹனமாகப் பணிபுரியப் பணித்தார். மதுரையை விட்டகல மன மின்றி அங்கே தன் கால்களால் குளம் தோண்டி அதன் கரையில் விநாயகரையும், ஈசனையும் கோயிலில் ஸ்தாபித்து ஐராவத தீர்த்தம், ஐராவத விநாயகர், ஐராவதேசுவரர் எனப் பெயரிட்டது. தேவேந்த்ரன் மறுபடி தேவப் பணிக்கு வரும்படி ஐராவதத்திற்கு ஆணையிட்டான். ஐராவதம் தேவரை வழிபட்டு அங்கிருந்து அமராவதி நோக்கிக் கிளம்பியது. அது கிளம்பிய இடம் ஐராவத புரம் (யானையடி) எனப்படும். இது இறைவனின் இரண்டாவது லீலை.

★ ★ ★

## सप्तमोऽध्यायः

# ३. मधुरानगरनिर्माणम्

अगस्त्यः -

यया कदम्बकान्तारं पुरीणां प्रवरं भवेत्।
तां लीलां सुन्दरेशस्य शृण्वन्तु मुनिपुङ्गवाः ॥ १
यदा विमानं संस्थाप्य संपूज्य च पुरन्दरः।
त्रिविष्टपं संप्रयाति तदारभ्य दिवौकसः ॥ २
स्वयम्भूतं मूललिङ्गं लिङ्गानां लिङ्गमैश्वरम्।
अहर्निशं पूजयन्ति भोगमोक्षप्रसिद्धये ॥ ३
विशेषतस्सोमवारे निशि तौर्यत्रिकान्वितम्।
अर्हणश्चक्रुरमराः प्रतियामं महेशितुः ॥ ४
एवं चिरं गते काले श्रीवृक्षैश्च हलिप्रियैः।
अन्यैरभ्रंलिहैर्वृक्षैरभूत्तन्निबिडं वनम् ॥ ५
मनुष्याणां च सञ्चारो यदा नास्ति महावने।
तदा कदम्बवन्यां च नगरीं कर्तुमादरात् ॥ ६
कालकाले महादेवे बालचन्द्रावतंसके।
नीलकण्ठे विरूपाक्षे जीवन्मुक्तिपुरेश्वरे ॥ ७
कपालिनि कृपाराशौ देव्या सम्प्रार्थिते सति।
कश्चिद्वैश्यवरः श्रीमान् सार्थनामा धनञ्जयः ॥ ८
शिवभक्तिसमायुक्तः शिवपूजापरायणः।
धनानि शिवभक्तेभ्यः प्रददात्यार्जितानि च ॥ ९

शिवव्रतेषु सर्वेषु सोमवारव्रतप्रियः ॥
नियमेनोपवासं च प्रतियामं शिवार्चनम् ॥ १०
करोति श्रद्धया रात्रौ शिवरात्रौ यथा तथा।
एवं भक्त्या च वित्तेन धर्ममेव सदाऽकरोत् ॥ ११
निर्गत्य कल्याणपुरात् स्वस्थानाच्च धनञ्जयः ।
व्यापारार्थं समुद्युक्तः प्रययौ पश्चिमां दिशम् ॥ १२
तत्र देशान् परिभ्रम्य बहुळं धनमाहरत्।
आदाय तद्धनं वैश्यस्स्वपुरं प्रति निर्ययौ ॥ १३
विश्रम्य विश्रम्य ततो दिनैः कतिपयैश्च सः ।
प्राप दैववशात्तत्तु कदम्बवनमद्भुतम् ॥ १४
वैश्ये गच्छति तस्मिन्वै वनमध्ये महामतौ ।
जगामास्तं दिनमणिः पद्मिनीप्राणनायकः ॥ १५
पक्षिणश्च मृगाद्याश्च स्ववासं सहसा ययुः ।
सञ्जाते चान्धकारे तु सिंहव्याघ्रवराहकैः ॥ १६
सदा सञ्चरितेऽरण्ये निर्जनेऽतिभयङ्करे।
सोमवारोपवासेन श्रान्त्या भीत्या च संयुतः ॥ १७
धनञ्जयो वैश्यवरो दिग्भ्रमीमनुभूय च।
श्रीमद्धालास्यनाथस्य महालिङ्गस्वरूपिणः ॥ १८
विमानस्य च दिव्यस्य समीपं सम्प्रविश्य च।
गन्तुं कुत्राप्यशक्तस्सन् तत्र तिष्ठति चिन्तया ॥ १९
सोमवारे महालिङ्गं समाराधयितुं सुराः ।
समागम्य महातीर्थे स्नात्वा च श्रद्धया सह ॥ २०

आरेभिरे तदा पूजां तौर्यत्रिकपुरःसरम्।
हालास्यनाथो देवेशो भक्तानामभयङ्करः ॥ २१
धनञ्जयस्य भक्तस्य दिव्यदृष्टिं ददौ ततः।
सुराणां तु स्वरूपाणि विलोक्यातीव विस्मितः ॥ २२
देवैस्सह महातीर्थे भक्त्या संस्नाय सादरम्।
स्वकीयं नियमं सर्वं निर्वर्त्य प्रीतिसंयुतः ॥ २३
प्रदक्षिणक्रमेणैव गत्वा प्रासादमद्भुतम्।
दृष्टमात्रेण पापघ्नं दृष्ट्वा भक्तोत्तमोरुजः ॥ २४
सहसाऽन्तः सम्प्रविश्य महालिङ्गं सुरार्चितम्।
आलोक्य दण्डवद्भूमौ लिङ्गाय प्रणिपत्य च ॥ २५
उत्थाय सन्निधौ तस्थौ पश्यन् पूजां सुरैः कृताम्।
स्वसम्भारात् स्वयमपि कस्तूरीकुङ्कुमादिकम् ॥ २६
गन्धद्रव्यं समानीय पेषयित्वा हिमोदकैः।
लिङ्गमालेपयामास दिव्यगन्धविलेपितम् ॥ २७
पुनः स्तुत्वा नमस्कृत्य सन्निधौ मण्डपे शुभे।
स्वयञ्च गुरुणा दत्तं लिङ्गञ्च प्रतियामकम् ॥ २८
पूजयामास सुप्रीत्या सोमवारव्रतप्रियः।
पुनः पुनश्च दृष्ट्वा तु हालास्येशं सुरार्चितम् ॥ २९
कृतार्थोऽहं कृतार्थोऽहमिति बुद्ध्या विचारयन्।
तौर्यत्रिकेण दिव्येन देवानां दर्शनेन च ॥ ३०
निनाय क्षणवद्रात्रिं वैश्यवर्यो धनञ्जयः।
ततः प्रभाते विमले स्वच्छन्दस्सोमसुन्दरः ॥ ३१

दिव्यदृष्टितिरोधानं लीलया तस्य चाकरोत्।
लिङ्गमात्रं विमानं च विलोक्य वनमध्यगम्॥ ३२
आश्चर्याविष्टचित्तोऽभूत् किमेतदिति चिन्तयन्।
भक्तातिवत्सलेनैव हालास्येशेन रक्षितः॥ ३३
उदिते सति तिग्मांशौ परिज्ञाय महापथम्।
कल्याणपुरमासाद्य स्वगृहं सम्प्रविश्य च॥ ३४
सोमवंशप्रसूतानामग्रगण्यो महीक्षिताम्।
सोमवत् स्वच्छहृदयश्चाख्यया कुलशेखरः॥ ३५
अतुलश्शिवभक्त्या च वीर्येण यशसा श्रिया।
तत्र कल्याणनगरे पालयन्निखिलाः प्रजाः॥ ३६
राज्यं चकार नीत्या यस्तं सम्प्राप्य धनञ्जयः।
निखिलं रात्रिवृत्तान्तं दृष्टं राज्ञे व्यजिज्ञपत्॥ ३७
प्रोक्तं वैश्येन वृत्तान्तं श्रुत्वा पाण्ड्यमहीपतिः।
शिवप्रभावं सञ्चिन्त्य रात्रौ सुष्वाप भूपतिः॥ ३८
कदम्बवनवासीशः कृपया परया युतः।
तदा स्वप्नेऽवदद्राज्ञे गिरीशस्सिद्धवेषवान्॥ ३९
राजन् शशिकुलाधीश कुलशेखर सुव्रत।
कदम्बकाननं नाम्ना पश्चिमेऽस्ति वनं महत्॥ ४०
मत्प्रासादश्च तत्रास्ति महेन्द्रेण विनिर्मितः।
तद्वनं ते पुरं भूयादित्युक्त्वा स तिरोदधे॥ ४१
राजा प्रभाते मन्त्रिभ्यः स्वप्नवृत्तान्तमब्रवीत्।
श्रुत्वा ते विस्मितास्सर्वे प्रत्यूचुः पृथिवीपतिम्॥ ४२

यथाभाषितमीशेन कर्त्तव्यं च त्वया तथा।
एवमुक्तेष्वमात्येषु सद्यो गत्वा महावनम्॥ ४३
अपश्यदैन्द्रं प्रसादं प्रसन्नां हेमपद्मिनीम्।
भूपतिस्सचिवैस्साधँ तीर्थे स्नात्वाऽऽदरेण च॥ ४४
स्वायम्भुवं महालिङ्गं दृष्ट्वा भक्त्या प्रणम्य च।
बहिर्निर्गत्य परितो विलोक्य निबिडं वनम्॥ ४५
नगरीं कर्तुमुद्युक्ते भूपाले कुलशेखरे।
सिद्धरूपी शिवस्स्वप्ने यथा दृष्टो महीभुजा॥ ४६
तथाविधं वपुर्धृत्वा शङ्करश्चित्रवैभवः।
पुरसीमां दर्शयित्वा तत्रैवान्तर्धिमाप सः॥ ४७
अमात्येभ्यस्तदा प्राह राजा कौतूहलेन च।
स्वप्ने यस्तु मया दृष्टस्सिद्धरूपी महेश्वरः॥ ४८
स एव तत्स्वरूपेण प्रत्यक्षीकृत्य चाधुना।
अज्ञातां पुरसीमाञ्च व्यक्तीकृत्य तिरोहितः॥ ४९
इति भूपवचःश्रुत्वा सचिवाद्यास्सुविस्मिताः।
प्राहुस्सर्वे महीपालं तव श्रेयोऽभिवृद्धये॥ ५०
अनुग्रहाय सर्वेषां जनानां च महेश्वरः।
अदृश्यो ब्रह्मविष्ण्वोश्च दृश्योऽभूदिह कानने॥ ५१
तस्मादवश्यं कर्तव्यमिदं नीपवनं पुरम्।
गणैश्च दन्तिभिस्सिंहैर्विमानं च विराजितम्॥ ५२
विद्यते दोषरहितं प्राकारं गोपुरादिकम्।
खण्डस्फुटितसंस्कारं कर्त्तव्यमधुना त्वया॥ ५३

सचिवैरेवमुक्ते तु महाप्रीत्या महीपतिः ।
क्षणेन काननं सर्वं छेदयित्वा परश्वथैः ।। ५४
निम्नोन्नताभ्यां रहितं भूतलं च समन्ततः ।
कारयित्वा शिवस्यापि प्राकारं गोपुरादिकम् ।। ५५
नवीचकार मतिमान् दशभिर्दिवसैर्नृपः ।
काननं नगरीं कृत्वा मन्दिरश्रेणिमण्डिताम् ।। ५६
प्रतिद्वारं वितर्दिस्थपूर्णकुम्भसुशोभिताम् ।
तोरणैश्च पताकाभी रम्भास्तम्भैरलङ्कृताम् ।। ५७
फुल्लारविन्दकल्हारमकरन्दसमुत्सुकैः ।
भ्रमरैः शोभमानानि तटाकानि विधाय च ।। ५८
पूगैश्चूतैर्नालिकेरैश्चम्पकैः पनसैरपि ।
मातुलङ्गैश्च जम्बीरैर्नारङ्गैर्बिल्ववृक्षकैः ।। ५९
अन्यैश्च पुष्पवृक्षैश्च विधायोपवनानि च ।
यायजूकैर्भूसुरैश्च सर्वविद्याविशारदैः ।। ६०
वीरैश्च बाहुजैर्वैश्यैर्वृषलैरपरैर्जनैः ।
प्रतिलोमानुलोमाद्यैर्निबिडीकृत्य तत्पुरम् ।। ६१
महालिङ्गस्य पूजार्थं शिवसृष्टान् द्विजोत्तमान् ।
गङ्गातीरस्थितान् धीरान् समाहूय महीपतिः ।। ६२
सिद्धान्तैः कामिकाद्यैश्च महालिङ्गं निरन्तरम् ।
पूजयन्त्विति सम्प्रार्थ्य वृत्तिं तेभ्यः प्रदाय च ।। ६३
तैः पूजां कारयामास महाविभवविस्तरैः ।
देवालयेशदिग्भागे स्वस्य हर्म्यं महाद्भुतम् ।। ६४
सम्पाद्य तत्र निवसन् शिवभक्तिपरायणः ।

श्रीहालास्येश्वरं लिङ्गं त्रिकालमभिवन्द्य सः ।। ६५
सुखेन तिष्ठति पुरे देवेन्द्रस्त्रिदिवे यथा ।
तत्काननं नृपः कृत्वा पुरीमत्यमरावतीम् ।। ६६
व्याघ्रसिंहर्क्षशरभैस्सत्वैस्संचरितं वनम् ।
केन शुद्धं भवेत्सद्यः केन रक्षां च यास्यति ।। ६७
शिवभक्तो महीपालो मनस्येवमचिन्तयत् ।
एतद्बुद्ध्वा दयाम्भोधिः श्रीहालास्येश्वरश्शिवः ।। ६८
जटाशशाङ्कविमलज्योत्स्नातिधवलेन च ।
गङ्गाजलेन सहसा वृष्टिजेन तत्पुरम् ।। ६९
प्रक्षाल्य पावनीकृत्य रक्षार्थं नगरस्य च ।
पूर्वस्यान्दिशि शास्तारं सप्त मातृश्च दक्षिणे ।। ७०
पश्चिमे तु महाविष्णुं भद्रकालीं तथोत्तरे ।
राजन् संस्थापयेत्याशु शैवी वाक् खादभूत्तदा ।। ७१
तां वाचं पाण्ड्यभूपालः श्रुत्वा तेषु स्थलेषु च ।
देवतानामायतनं कृत्वा संस्थाप्य देवताः ।। ७२
पूजां च कारयामास नित्यं शास्त्रोक्तमार्गतः ।
ततः पुरी विश्रुता सा चतुरालयसंयुता ।। ७३
दिव्ये विमाने नगरीमध्यस्थे सोमसुन्दरः ।
न्यवसत्परया प्रीत्या भक्तानां भुक्तिमुक्तिदः ।। ७४
कुलशेखरभूपालः सम्पदा यक्षराण्णिभः ।
अनुग्रहेण महता जीवन्मुक्तिपुरेशितुः ।। ७५
विजित्य समरे शत्रून् सार्वभौमत्वमाप्य च ।

मलयध्वजनामानं गुणरूपपराक्रमैः ॥ ७६
निस्तुलं चात्मजं लब्ध्वा जयन्तमिव देवराट्।
षट्सहस्रं वत्सराणां परिपाल्य वसुन्धराम्॥ ७७
स्वप्ने शिवाज्ञां लब्ध्वा च मलयध्वजमात्मजम्।
सिंहासनोपरि स्थाप्य तीर्थोदैरभिषिच्य च ॥ ७८
मकुटादीनि सर्वाणि राजचिह्नानि यानि च।
तानि सर्वाणि तस्मै स प्रदाय पुनरब्रवीत्॥ ७९
मलयध्वज हे वत्स महालिङ्गस्वरूपिणः।
कदम्बवननाथस्य श्रीमत्पादारविन्दयोः ॥ ८०
भक्तिरेव सदा भुक्तिप्रदा मुक्तेश्च कारणम्।
इति सम्यग्बोधयित्वा पुत्रस्य च पुनः पुनः ॥ ८१
श्रीमद्धाम प्रविश्याथ गर्भगेहं प्रविश्य च।
लिङ्गं प्रदक्षिणीकृत्य राजर्षिः कुलशेखरः ॥ ८२
सशरीरं च सायुज्यं प्राप्नोत्यालोकितो जनैः।
इत्थं तृतीया लीला तु श्रीहालास्येश्वरस्य च ॥ ८३
वर्णिता च महापुण्या सर्वपापक्षयंकरी।
शृण्वतां पठतां पुंसां सर्वसम्पत्करी सदा ॥ ८४

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये मधुरापुरीनिर्माणं नाम सप्तमोऽध्यायः*

* * *

## அத்தியாம்—7

### 3. மதுரா நகரம் அமைத்தல்

*அகஸ்தியர் கூறுகிறார் :- பார்வதீ தேவி பரமேசுவரனை அடர்ந்த அந்தக் கடம்புக் காட்டை நகரமாக்க வேண்டினாள். தனஞ்ஜயன் என்ற வைசியன் சிறந்த சிவபக்தன். தான் சேமிக்கிற செல்வத்தைத் தர்ம வழியில் பயன்படுத்திவந்தான். செல்வம் திரட்ட, வியாபார நோக்குடன் மேற்கு திக்கில் சென்று திரட்டிய செல்வத்தை எடுத்துக் கொண்டு திரும்புகையில் அடர்ந்த கடம்பம் காட்டினுள் புகுந்தான். ஸூர்யன் மறைந்ததும் காரிருளில் பொற்றாமரைக் குளத்தருகே சிவலிங்கத்தைக் கண்டதும் நீராடி வழிபட நினைத்தான். ஈசனருளால் அவனுக்குத் தெய்விகப் பார்வை கிட்ட தேவர்கள் அங்கு ஈசனை வழிபடுவதைக் கண்டு மெய் சிலிர்த்துத் தான் கொணர்ந்த கஸ்தூரி குங்குமப்பூ சந்தனம் முதலியவற்றை அரைத்து லிங்கத்தின் மீது பூசித் தன் பாக்யத்தை உணர்ந்து மகிழ்ந்தான். உடன் அவனது தெய்விகப் பார்வை மறைந்தது. காடும் தனித்த கோயிலும் லிங்கமும் மட்டும் காணப்பட்டன. வியப்பில் ஆழ்ந்த அவன் அன்றிரவு தங்கி கல்யாணபுரம் (மணவூர்) என்ற நகரை அடைந்து அங்கு அரசாட்சி புரிகிற, குலசேகர பாண்டியனிடம் இரவு நிகழ்ந்ததைத் தெரிவித்தான்.*

*அன்றிரவு குல சேகரனது கனவில் ஈசன் ஸித்தர் வேடத்தில் தோன்றி அந்தக் காட்டை நகரமாக்கி அதனைத் தலைநகராகக் கொள்ளும்படி ஆணையிட்டார். மறுநாள் அரசன் அமைச்சர்களுடன் கலந்தாலோசித்து கடம்பங்காட்டை நகரமாக்கத் தொடங்கினான். அரசர் கனவில் கண்ட அதே சித்தர் வேடத்தில் ஈசன் தோன்றி நகரின் எல்லையை அரசருக்குக் காட்டி மறைந்தார். இந்திரன் அமைத்த ஆலயத்தைச் சுற்றியிருந்த காடு நகரமாகியது. சிவபெருமான்தன் சடையிலிருந்த கங்கை தாரையை மழையாகப் பெய்து நகரைத் தூய தாக்கினார். நகரப் பாதுகாப்பிற்காகக் கிழக்கில் சாஸ்தாவையும் தெற்கில் ஏழு மாதாக்களையும் மேற்கில் மகாவிஷ்ணுவையும் வடக்கில் பத்திர காளியையும் இறைவனின் கட்டளைப்படிக் கோயில்களில் அரசன்*

ஸ்தாபித்தான். குல சேகர அரசன் தான் அமைத்த மதுரா நகரில் ஆறாயிரம் ஆண்டுகள் ஆண்டு, பின் தன் மகன் மலயத்வஜனிடம் அரசுப் பொறுப்பை ஒப்படைத்தான். இறைவனின் அருளால் சிவபெருமானுடன் இரண்டறக் கலந்தான். இது இறைவனின் மூன்றாவது லீலை.

## अष्टमोऽध्यायः

# ४. तटातकाजननम्

अगस्त्यः -

यया देवी सुमीनाक्षी कदम्बवननायिका ।
तटातकेति नाम्नाऽभूत् सा लीला श्रूयतां शुभा ।। १
कुलशेखरपाण्ड्यस्य तनयो मलयध्वजः ।
परिभूतरिपुस्सद्यः पाण्ड्यान्वयविशेषकः ।। २
पद्मिनीसेव्यमानश्च पद्मोभिद्रविलोचनः ।
महाबाहुर्महेष्वासो मदनप्रख्यकान्तिमान् ।। ३
सदा दयानिवासात्मा सदा दीनजनार्तिहा ।
भुजे विधृतभूभारः पुरुहूतसमद्युतिः ।। ४
पुण्यवृत्तः पुराणज्ञो बुधसेवासमुत्सुकः ।
चतुष्षष्टिकलादक्षः सर्वशास्त्रविशारदः ।। ५
प्रहृष्टः प्रयतः शश्वत्प्रजारञ्जनतत्परः ।
शिवार्चनरतः श्रीमान् शिवभक्तप्रपूजकः ।। ६
शिवध्यानैकनिरतः शिवधर्मपरायणः ।
अनेकलक्षतुरगैरमरेन्द्राश्वसन्निभैः ।। ७
ऐरावतसमानैश्च गजेन्द्रैः परिसेवितः ।
महासेनापरिवृतो महदैश्वर्यसंयुतः ।। ८

विचारदक्षैस्सचिवैः भूसुरैश्च समावृतः ।
सर्वां वसुन्धरां जित्वा सार्वभौमत्वमेयिवान् ।। ९
पृथिवीं मनुवत्तस्मिन् पालयत्यमितद्युतौ ।
व्यस्मरन् प्राक्तनान् भूपान् जनास्सर्वे मुदान्विताः ।। १०
राज्ञां कुमार्यो बह्व्यश्च तेनोढास्सुमनोहराः ।
तासां मध्ये मुख्यतमा सर्वावयवसुन्दरी ।। ११
सूर्यवंशसमुद्भूतशूरसेनमहीभुजः ।
कन्या काञ्चनमालाख्या महिषी भूपतेरभूत् ।। १२
तया सार्धं महीपालः सत्कर्माणि सदाऽकरोत् ।
कुलशेखरपाण्ड्येन पित्रा सम्यक्प्रबोधितः ।। १३
न विहाय महाभक्तिं सोमसुन्दरपादयोः ।
त्रिकालं प्रत्यहं नत्वा श्रीहालास्येश्वरं विभुम् ।। १४
राजकार्याणि सर्वाणि पश्चादेव करोति हि ।
एवं समानामयुतमनपत्यस्य भूभुजः ।। १५
प्रययौ सोमवंशोत्थभूपचूडामणेस्ततः ।
व्रतानि चक्रेऽपत्यार्थं शाम्भवानि बहूनि सः ।। १६
कृष्णायाश्च चतुर्दश्यामष्टम्यां सोमवासरे ।
नियमेनोपवासश्च दानानि विविधानि च ।। १७
शिवस्यापि महापूजां विधिवच्च विधाय सः।
शिवभक्तांश्च सम्पूज्य धनेनान्नेन सुव्रतः ।। १८
करोति पारणां पश्चात्परितोषेण पाण्ड्यजः ।
पुनश्चान्यानि कर्माणि शिवप्रीतिकराणि च ।। १९
चकार तानि सर्वाणि मलयध्वजभूपतिः ।
श्रीमद्धालास्यनाथस्य शम्भोरग्रे समाहितः ।। २०

शतकश्चाश्वमेधानां न्यूनमेकेन भूपतिः ।
विधाय प्रार्थितः पश्चादिन्द्रेणैकं विहाय च ।। २१

ततस्तु पुत्रकामेष्टिमकरोद्बहुदक्षिणाम् ।
तदा शम्भोरष्टमूर्त्तेर्या मूर्तिरतिपावना ।। २२

पावकाख्या दीप्तिमती व्याप्तसर्वचराचरा ।
मलयध्वजभूपेन सप्ततन्तोः कृतस्य च ।। २३

सर्वकर्मप्रपूरिण्या पूर्णाहुत्या प्रवर्धिता ।
हुतानि यजमानेन हवींषि प्रतिगृह्य च ।। २४

तत्तत्फलानि सर्वाणि या ददाति शिवाज्ञया ।
तस्या मूर्त्तेस्समुत्पन्ना सुमीनाक्षी निजांशतः ।। २५

श्यामला कोमलाकारा त्रिसंवत्सररूपिणी ।
भृङ्गालिकल्पचिकुरा पूर्णचन्द्रनिभानना ।। २६

अर्द्धचन्द्रालिका लीलारेचितभ्रूलतायुता ।
वित्रस्तहरिणीप्रख्यविपुलायतलोचना ।। २७

विद्युद्वलयसंकाशताटङ्काभरणोज्वला ।
तिलपुष्पसमघ्राणा वृत्तद्विजविभूषिता ।। २८

विशदामृतसंपूर्णकुमुदाधरशेभिता ।
शङ्खपूगसमच्छायकन्धरा मञ्जुभाषिणी ।। २९

कीचकप्रतिसङ्काशमेचकाभभुजद्वया ।
किञ्चिदङ्कुरिताश्चर्यकुचत्रयसमन्विता ।। ३०

महादेवविनिर्दग्धमन्मथाङ्गाभमध्यमा ।
मदबृंहितमातङ्गकुम्भबिम्बनितम्बिनी ।। ३१

कुम्भिनः करसच्छायरम्भास्तम्भनिभोरुयुक् ।
कन्दर्पशरधिप्रख्यजंघाकाण्डाभिशोभिनी ।। ३२

कन्दर्पशरधिप्रख्यजंघाकाण्डाभिशोभिनी ।। ३२
विभातोन्निद्रपद्माभविमलाङ्घ्रिविराजिता ।
दिव्याम्बरधरा दिव्यगन्धपुष्पविभूषिता ।। ३३
एवमुज्ज्वलवेषा सा लीलया परमेश्वरी ।
मलयध्वजभूपालयजमानसमीपगाम् ।। ३४
पत्नीं काञ्चनमालाञ्च समालिङ्गय सुविस्मिताम् ।
अङ्कं तस्याश्चारुरोह बाला लोकविमोहिनी ।। ३५
कुचेनैकेन विकृतां तां विलोक्य सुकन्यकाम् ।
मलयध्वजभूपालस्तदा खिन्नमना ह्यभूत् ।। ३६
तत्खेदशान्तये सद्यस्सञ्जाता शङ्करस्य वाक् ।
मा शुचस्त्वं महीपाल महती देवता तव ।। ३७
सपत्नीकस्य महते श्रेयसे जगतामपि ।
अङ्गीकृत्य पुत्रीत्वमाविर्भवति नामतः ।। ३८
तटातकेयं कल्याणी यदा भर्त्रा विलोकिता ।
तदा निमग्नं भवति विकृतं कुचमण्डलम् ।। ३९
जातकर्मादि यत्कर्म तत्सर्वं सहसा कुरु ।
इति खादभवद्वाणी श्रीहालास्येश्वरस्य च ।। ४०
तां श्रुत्वा देवदेवस्य प्रसाद इति चिन्तयन् ।
यजमानो महीपालो विद्वद्भिर्जातकर्म च ।। ४१
दानैश्च विविधैस्सार्द्धं सद्यो निर्वर्त्य कन्यकाम् ।
नाम्ना तटातकां कृत्वा पत्न्या काञ्चनमालया ।। ४२
मद्भागधेयमधुना कन्यावेषं प्रगृह्य च ।
वंशत्रयं मदीयञ्च समुद्धर्तुं भवाम्बुधेः ।। ४३

पत्न्यै पुनः पुनस्त्वेवं कथयित्वा महादरात्।
पुनस्सर्वैराभरणैरलङ्कृत्य विलोक्य ताम्।। ४५
सन्तोषसागरे मज्जन्नास्ते सर्वैस्सुहृज्जनैः।
देवी काञ्चनमाला च पुत्रीं लब्ध्वा मनोहराम्।। ४६
मेने रमां सुसंहृष्टा तां नित्यमुपलाल्य च।
अनुभूय महाभोगान् भर्त्रा सार्धं सुखं स्थिता।। ४७
अनाद्यन्ता परा शक्तिरद्वैता शम्भुनाऽनिशम्।
लीलयांशेनावतीर्य मलयध्वजमन्दिरे।। ४८
वर्धते शुक्लपक्षे च यथा चन्द्रकला तथा।

ऋषयः

पुरा दाक्षायणी देवी पितरं शिवनिन्दकम्।। ४९
त्यक्त्वा हिमाद्रेस्सञ्जाता त्वधुना केन हेतुना।
मलयध्वजपुत्र्यासीन्मुने तत्कारणं वद।। ५०

अगस्त्यः-

पुरा गन्धर्वराजस्य कन्या विश्वावसोरभूत्।
नाम्ना विद्यावती कन्या गीतेनाखिलमोहिनी।। ५१
बाल्ये वयसि वैराग्यं देवीभक्तिमवाप्य च।
सुगन्धालेपनं त्यक्त्वा भस्मोद्धूलितविग्रहा।। ५२
भूषणान्यपि सन्त्यज्य रुद्राक्षैः कल्पितानि च।
हारकुण्डलकेयूरप्रमुखाभरणानि च।। ५३
दधाति सुमहत्प्रीत्या ध्यात्वा हृदयपङ्कजे।
अहर्निशं पूजयति पार्वतीमेव भक्तितः।। ५४
मूलविद्यां च जपति प्रस्तौति स्तुतिभिस्सदा।
देवीपरायणा भूत्वा पितरं ज्ञानिनां वरम्।। ५५

विश्वावसुं सा पप्रच्छ सादरं मुनिपुङ्गवाः ।

विद्यावती-

आर्याणामार्य भगवन् तात त्वं ब्रूहि तत्वतः ।। ५६

कर्मभूमौ विशिष्टानि महादेव्या बहूनि च ।
सन्ति स्थानानि तेषां तु मध्ये सारतरं वद ।। ५७

विश्वावसुः -

शृणु विद्यावति सुते रहस्यं स्थानमुत्तमम् ।
शतानन्देन कथितमस्माभिः प्रार्थितेन च ।। ५८

निश्चेतुं क्षेत्रमाहात्म्यं ब्रह्मणा तुलितं पुरा ।
पुण्यक्षेत्रमशेषञ्च श्रीहालास्यमभून्महत् ।। ५९

मेरुमन्दरकैलासकाशीश्रीपर्वतादि च ।
सर्वमेकत्र संस्थाप्य श्रीहालास्यमथापरे ।। ६०

स्थापितं चाधिकतरं सद्यस्सिद्धिकरं ततः ।
स्वर्गद्वारं सदैवास्ते सोद्घाटित कवाटकम् ।। ६१

सुमीनाक्ष्याः पूजनार्थं विज्ञाप्य त्रिदिवेश्वरम् ।
शच्यादिदिव्य नारीभिरहर्निशमतोऽधिकम् ।। ६२

श्रीहालास्ये महाक्षेत्रे महातीर्थस्य तीरके ।
दिव्ये हर्म्ये परा शक्तिः परिपूर्णा परात्परा ।। ६३

अनाद्यंता जगन्माता सच्चिदानन्दरूपिणी ।
स्मृतमात्रेण पापघ्नी सर्वैश्वर्यप्रदायिनी ।। ६४

देवी सा करुणामूर्तिः श्रीहालास्येश्वरस्य च ।
मनोज्ञा शफराक्षी च महादेवी मनोन्मणिः ।। ६५

सदा करोति सान्निध्यं भक्तानामिष्टसिद्धये ।
देवीपीठान्यनेकानि सन्ति लोकत्रयेषु च ।। ६६

तेषां मध्ये चतुष्षष्टिपीठानि च महान्ति च।
तेषु मुख्यतमं पीठं कदम्बवनपीठकम्।। ६७
वसुपूर्णः स्वच्छविद्यो यक्षो विद्याधरः क्रमात्।
पञ्चस्वरो मतिपिता च तत्र सिद्धिं परां ययुः ।। ६८
इति विश्वावसुवचश्श्रुत्वा विद्यावती तदा।
अहं च तत्र गत्वा तां समाराध्य त्रिकालतः ।। ६९
आशु सिद्धिमवाप्स्यामीत्याशया परया युता।
विश्वावसुं च जनकं सम्यक्सम्प्रार्थ्य तस्य च ।। ७०
लब्ध्वानुज्ञां सुमीनाक्षीदर्शने भाग्यवत्यहम्।
इति सञ्चिन्त्य मनसा मनोवेगेन कन्यका ।। ७१
औत्तरेण पथा गन्तुमुद्युक्ते द्वादशात्मनि।
सङ्क्रान्तिपुण्यकाले तु श्रीहालास्यं समाविशत्।। ७२
तदानीमेव नियमं पुरुषैरपि दुष्करम्।
मनस्विनी च जग्राह संवत्सरमहाव्रतम्।। ७३
स्वर्णपद्माकरे स्नात्वा विघ्नेशं सम्प्रपूज्य च।
देवीं नत्वा सुमीनाक्षीं श्रीहालास्येश्वरं शिवम्।। ७४
प्रणम्य भक्त्या सम्प्रार्थ्य तपस्सिद्ध्यर्थमादरात्।
देव्याश्च सन्निधिं प्राप्य हृदि ध्यात्वा मनोन्मणिम्।। ७५
श्यामलां द्विभुजां देवीं द्विनेत्रां सर्वमङ्गलाम्।
दधतीं पुल्लकल्हारं मकरन्दपरिप्लुतम्।। ७६
रक्तवस्त्रधरां दिव्यगन्धमाल्यैरलङ्कृताम्।
अन्तर्यज्ञविधानेन प्रत्यहं परिपूज्य च ।। ७७
अष्टोत्तरशतैः कुम्भैः पुण्यतीर्थोदपूरितैः।
सुमीनाक्षीं च संस्नाप्य दिव्यैरम्बरभूषणैः ।। ७८

गन्धाद्यैरुपचारैश्च प्रत्यहं सा तपस्विनी।
सपर्यां महतीं कृत्वा गन्धर्वप्रभुकन्यका ।। ७९

अष्टाधिकसहस्रैस्तु सुमनोभिस्सुनिर्मिताम्।
नीलोत्पलमयीं मालां समर्पयति साऽन्वहम्।। ८०

एकाहारेणैकमासमेकं नक्ताशनेन च।
अयाचिताशनेनैकमन्यं शाकफलाशनात्।। ८१

तिलपिष्टेनैकमासमन्यश्चान्द्रायणेन च।
पञ्चगव्याशनेनैकमन्यं पानीयपानतः ।। ८२

पयोव्रतेनैकमासं कुशाग्राम्बुव्रतेन च।
वाय्वाहारेणैकमासं निराहारेण च क्रमात्।। ८३

निनाय नियमेनैव दुष्करेण मुनीश्वरैः।
मासाश्च द्वादशैवं च व्यतीताश्च मुनीश्वराः ।। ८४

अथ त्रयोदशे मासि प्रत्यूषे निर्मलाशया।
हेमपद्माकरे स्नात्वा सुमीनाक्ष्याश्च सन्निधिम्।। ८५

यावदायाति सा कन्या तावद्देवी दयावती।
त्रिवर्षरूपिणी बाला मन्दस्मितमनोहरा ।। ८६

कल्हारकमनीयेन पाणिना परिशोभिता।
श्यामला कोमलतनुश्श्रीहालास्येश्वरी शिवा ।। ८७

आकर्णपूर्णनयना सर्वाभरणभूषिता।
पीताम्बरधरा पीतगन्धपुष्पैरलङ्कृता ।। ८८

वरं ब्रूहि वरं ब्रूहीत्येवं सम्भाष्य चासकृत्।
गर्भगेहात्तु निर्गत्य रङ्गमण्टपमाययौ ।। ८९

विद्यावती विलोक्याथ दृगानन्दकरीं शिवाम्।
साष्टाङ्गं प्रणिपत्याशु स्तुतिं चक्रे सुभक्तितः ।। ९०

## मीनाक्षीस्तुतिः

विद्यावती :-

या देवी जगतां कर्त्री शङ्करस्यापि शङ्करी ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ।। ९१
सकृदाराध्य यां सर्वमभीष्टं लभते जनः ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गळमूर्तये ।। ९२
यस्याः प्रसादलेशेन भोगमोक्षौ न दुर्लभौ ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ।। ९३
यया शिवोऽपि युक्तस्सन् पञ्चकृत्यं करोति हि ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ।। ९४
यस्याः प्रीत्यर्थमनिशं लास्यं कुर्वन् शिवो बभौ ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ।। ९५
लक्ष्मीसरस्वतीमुख्या यस्यास्तेजःकणोद्भवाः ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गळमूर्तये ।। ९६
या देवी मुक्तिकामानां ब्रह्मविद्याप्रदायिनी ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ।। ९७
यस्याःप्रणाममात्रेण वर्धन्ते सर्वसम्पदः ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ।। ९८
या स्तुता सर्वपापघ्नी सर्वोपद्रवनाशिनी ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ।। ९९
या ध्याता परमा शक्तिस्सर्वसिद्धिकरी शिवा ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ।। १००
यया देव्या विरहितश्शिवोऽपि हि निरर्थकः ।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ।। १०१

चराचरं जगत्सर्वं यस्याः पादसमुद्भवम्।
नमस्तस्यै सुमीनाक्ष्यै देव्यै मङ्गलमूर्तये ।। १०२
इति स्तुत्वा महादेवीं प्रणम्य च पुनः पुनः ।
अनुज्ञया सुमीनाक्ष्याः प्रार्थयामास कन्यका ।। १०३
मातस्तव पदध्याने मनो निश्चलमस्तु मे।
इदमेव वरं मुख्यमपरैः किं प्रयोजनम्।। १०४
इति सम्प्रार्थिता देवी कन्यया सर्वमङ्गळा।
कन्यारूपा कन्यकां च प्राह कोकिलवद्गिरा ।। १०५
तवास्तु मनसः स्थैर्यं मम रूपस्य शीलने।
पुनः प्रार्थय कल्याणि दुर्लभं वरमुत्तमम्।। १०६
देवीवाक्यमिदं श्रुत्वा प्राह पश्चादभीप्सितम्।
मत्पुत्री भवती भूत्वा रूपेणैवंविधेन च ।। १०७
आलिङ्गनादिकृत्येन सन्तोष्य प्रतिवासरम्।
मुक्तिं पुनः प्रयच्छार्ये सुमीनाक्षि महेश्वरि ।। १०८
विद्यावत्या चैवमुक्ता पुनः प्राह महेश्वरी।
भविष्यज्जन्मनि त्वं च चन्द्रवंशशिरोमणिम्।। १०९
मलयध्वजभूपालं पतिं लब्ध्वा महौजसम्।
अनुभूय चिरं कालं तेन सार्धं महासुखम्।। ११०
ततस्तु पुत्रकामेष्ट्यां सञ्जातां जातवेदसः।
कुचत्रययुतां पुत्रीं मां लब्ध्वा मदनुग्रहात्।। १११
कैवल्यमथ ते भूयान्मलयध्वजभूभुजा।
त्वया कृतमिदं स्तोत्रं पुत्रपौत्रधनप्रदम्।। ११२
स्त्रिया वा पुरुषेणापि नियमान्मम भक्तितः।
जप्तं चेत्सर्वसौभाग्यप्रदं स्याच्च न संशयः ।। ११३

इति विद्यावतीं कन्यामनुगृह्य महेश्वरी।
पुनश्च गर्भगेहं च प्राप्यादृश्याऽभवच्छिवा।। ११४
निरवद्या सुमीनाक्षी हेतुनानेन निष्कला।
देव्याः काञ्चनमालाया मलयध्वजभूपतेः।। ११५
पुत्री तटातका नाम्ना सञ्जाता सर्वमङ्गला।
भवत्कृतायाः पृच्छायाः प्रतिवाक्यं प्रकीर्तितम्।। ११६
यस्याश्श्रवणमात्रेण भुक्तिमुक्ती न दुर्लभे।
मलयध्वजभूपालस्तां कन्यामतिसुन्दरीम्।। ११७
पुत्रवत्सततं मत्वा स्ववंशोद्धारणाय च।
विद्यास्सर्वा बोधयित्वा धनुर्वेदपुरस्सराः।। ११८
कृतार्थोऽहमिति ज्ञात्वा सुखेनास्ते श्रिया तया।। ११९

नित्यं स राज्यमनुशास्य निजान्तकाले
पुत्रीममात्यसहितो विधिनाऽभिषिच्य।
तस्यां तदात्मविधृतां धुरमर्पयित्वा
त्यक्त्वा तनुं विबुधसंसदमाससाद।। १२०

ततः स्वर्गं गते तस्मिन् पुत्राभावात्सुतैव सा।
और्ध्वदैहिकमातेने पुरोहितमतानुगा।। १२१
तटातका कन्यका च समर्था सर्वकर्मसु।
राज्यं चकार युद्धं च नीत्या शक्त्या स्वशत्रुभिः।। १२२
सर्वदेशाधिपत्यं च सर्वैश्वर्यमवाप्य च।
शशास महती देवी कन्यका कन्यकापुरीम्।। १२३
लीला तुरीया देवस्य कथिता या मयाऽधुना।
तां श्रुत्वा च सकृद्धीमान् महत्या सम्पदा युतः।
दीर्घमायुश्च पुत्रांश्च लब्ध्वाऽन्ते स्वर्गमाप्नुयात्।। १२४

तां श्रुत्वा च सकृद्धीमान् महत्या सम्पदा युतः।
दीर्घमायुश्च पुत्रांश्च लब्ध्वाऽन्ते स्वर्गमाप्नुयात्॥ १२४

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये तटातकाजननं नाम*
*अष्टमोऽध्यायः॥*

* * *

## அத்தியாயம் - 8
## 4. தடாதகா ஜனனம்

*மலயத்வஜ பாண்டியன் பாண்டிய நாட்டை மிகச் சிறப்புடன் ஆண்டான். அவனது பல மனைவிகளில் ஸூர்ய வம்சத்தில் தோன்றிய சூரஸேன அரசனின் மகளான காஞ்சனமாலை பட்டத்துராணி. அவளுடன் ஸோமஸுந்தரரின் வழிபாட்டில் பேரரசன் மிகுந்த ஈடுபாடு கொண்டான். தனக்கு வம்சம் தொடர மகப் பேறின்மையை உணர்ந்த அரசன் பல வ்ரதங்களையும் பூஜைகளையும் செய்தான். நூறு அச்வ மேதயாகங்களைச் செய்ய முற்பட்டு, இந்திரனின் வேண்டுகோளால் 99 வேள்விகள் செய்து முடித்தான். கடைசியில் புத்ர காமேஷ்டி வேள்வி புரியும் போது அந்த அக்கினியிலிருந்து மீனாக்ஷி எனும் ச்யாமளா தேவி மூன்று வயதுப் பெண்ணாக, மிக அழகும் ஒய்யாரமும் கொண்டு ரத்தின அணிகள் பூண்டு வெளிப்பட்டாள். மலயத்வஜனது அருகில் வந்தவள் காஞ்சன மாலையின் மடி மீதேறி அமர்ந்தாள். அவளது மார்பில் மூன்று ஸ்தனங்கள் காணப்பட்டன. அதனால் அரசன் சற்று கவலையுற்றான். ஆகாச வாணியாக சிவன் கூறினார். அரசே! கவலைப்படாதே! இவள் உனது கணவனை முதலில் காணும் போது மூன்றாவது ஸ்தனம் மறைந்துவிடும்'' என்றார். சிவ பெருமானின் அருளால் பெற்ற மகளுக்கு ஜாதகர்மம், நாமகரணம் முதலிய வற்றை முறைப்படி அரசன் செய்தான். நாட்டு மக்கள் மிகவும்*

மகிழ்ச்சியுற்றனர். காலமும் தேசமும் ஏனையதும் கட்டுப்படுத்த இயலாத பராசக்தி பாண்டியனின் வீட்டில் பெண்ணாகப் பிறந்துள்ளாள்.

விசுவாவஸு எனும் கந்தர்வனின் மகள் வித்யாவதி என்பவள் பால்யத்திலேயே பற்றற்றுப் பார்வதியையே த்யானித்து வழிபட்டாள். தன் தந்தையிடம் பாரத பூமியில் உள்ள தேவியின் வழிபாட்டுக் குரிய ஸ்தலங்களைப் பற்றிக் கேட்டாள். ஹாலாஸ்யமே மிக உயர்ந்த க்ஷேத்திரம். தேவியின் 64 பீடங்களில் கதம்பவன பீடமே மிகச் சிறந்தது. அங்கு சியாமளையாக இரு புஜங்களுடன் மீனாக்ஷியாக ஸுந்தரேச்வரரின் சக்தியாகத் தேவி அருள்புரிகிறாள் என உணர்ந்த வித்யாவதி ஓராண்டு காலம் கடும் நியமங்களுடன் தேவியை வழிபட்டாள். வித்யாவதிக்கு அருள்புரிவதற்காக மூன்று வயதுச் சிறுமியாக கர்ப்பக் கிருஹத்திலிருந்து தேவி வெளிப்பட்டாள். மிகுந்த பரவசத்துடன் வணங்கித் துதித்த வித்யாவதிக்கு அவள் விரும்பியதைத் தர தேவி முன் வந்தாள். தேவியின் திருவடிகளில் என்றும் அசையாத பக்தி ஒன்றையே வேண்டிய வித்யாவதி தேவியால் தூண்டப் பெற்றதும், நீ எனக்கு மகளாவாய். உன்னை மடிமீதமர்த்தி அணைத்து மகிழ்கிற பாக்யத்தை அருள்வாய் என வேண்டினாள். "நீ அடுத்த பிறவியில் மலயத்வஜனின் மனைவியாகி என்னை மகளாகப் பெற்று மகிழ்வாய் என அருளி கருவறையில் சென்று மறைந்தாள். அந்த வித்யாவதியே காஞ்சனமாலை. ச்யாமளாதேவியே தடாதகை.

மலயத்வஜன் தடாதகையைத் தன் மகளாகவே கருதி அரசியாகத் தகுதி பெற உதவுகிற தனுர்வேதம் முதலியதையும் கற்பித்து அவளை அரசியாக்கி அவளிடம் ஆளும் பொறுப்பை ஒப்படைத்து மறைந்தான். தடாதகையும் மந்திரி புரோஹிதர் முதலானோரின் ஆலோசனைப் பெற்று அரசை மிகவும்சிறப்புடன் ஆண்டு வந்தாள். தடாதகையின் தோற்றமே நான்காவது லீலை.

★ ★ ★

नवमोऽध्यायः

## ५. तटातकासुन्दरेश्वर विवाहः

अगस्त्यः-

ब्रह्मविष्ण्वादिदेवानामदृश्यः सोमसुन्दरः ।
स्वांशेन लिङ्गान्निर्गत्य सर्वावयवसुन्दरः ।। १

तटातकामुद्वाह्याथ स्वयं पाण्ड्यमहीपतिः ।
देवः सुन्दरपाण्ड्योऽभूत्तां लीलां वर्णयाम्यहम् ।। २

तटातका कन्यका सा स्वयं सिंहासने स्थिता ।
साम्राज्यलक्ष्मीसौन्दर्यलक्ष्म्यभिन्नैव राजते ।। ३

नवरत्नविचित्रेण किरीटेन सितेन च ।
छत्रेण चामराभ्यां च पुनरत्यन्तशोभिता ।। ४

विचारदक्षैः सचिवैः सततं संवृता सती ।
दुष्टानामपि शिष्टानां शिक्षणं रक्षणं क्रमात् ।। ५

करोति शास्त्रनीत्या च राज्यभारं दधाति च ।
यौवनं प्राप्य कालेन मात्रा काञ्चनमालया ।। ६

चिन्तयामास सा कन्या कदा भर्ता भविष्यति ।
कदा विकृतवक्षोजं निमग्नं च भविष्यति ।। ७

न लभ्यतेऽत्र स्थितया मया चैतदभीप्सितम् ।
दिशां च विजयव्याजात् भ्रान्तिः कार्या मया ध्रुवम् ।। ८

इति निश्चित्य मनसा रथैश्च तुरगैर्गजैः ।
सेनाभिरतिशूराभिर्मीनध्वजयुतं रथम् ।। ९

मनोवेगसमैरश्वैः चतुर्भिश्शुभ्रवर्णकैः ।
शोभितं चाधिरुह्याशु यथा देवो दिवाकरः ।। १०
मेरुं प्रदक्षिणीकृत्य तमस्संहरति प्रभुः ।
तथा सर्वाणि देशानि दुर्गमानि वनादिभिः ।। ११
जित्वा विंशोत्तरशतवर्णयुक्तं च काञ्चनम् ।
विविधानि च रत्नानि विचित्रांस्तुरगान् गजान् ।। १२
अम्बराणि विचित्राणि भूषणान्यद्भुतानि च ।
गन्धद्रव्याणि दिव्यानि वस्तूनि रसवन्ति च ।। १३
तत्तद्देशाधिपैर्भीत्या प्रदत्तानि महान्ति च ।
उपायनानि सर्वाणि लब्ध्वा कन्या तटातका ।। १४
चक्रवाळमहाशैलं कृत्वा प्राकारमद्भुतम् ।
स्वराज्यस्य धनैर्धान्यैः समृद्धस्य सुवस्तुभिः ।। १५
लोकपालपदं जेतुमुत्सुकाऽतिपराक्रमात् ।
श्रीमत्पञ्चाक्षरं मन्त्रं समुच्चार्य चतुर्विधम् ।। १६
बलं विलोक्य तेभ्यश्च ददौ दिव्यं पराक्रमम् ।
दिव्यदृष्टिं खेचरत्वमपि देवी तटातका ।। १७
महेन्द्रस्य पुरीं पूर्वं परिवृत्यामरावतीम् ।
पराभवं देवतानां कारयामास कन्यका ।। १८
त्यक्त्वा वज्रं वाहनं च नत्वा शक्रेण भीरुणा ।
समर्पितं कल्पवृक्षं कामधेनुं प्रगृह्य च ।। १९
चिन्तामणिकृतां मालाममराणां च दुर्लभाम् ।
पश्चादग्नेः पुरीं जित्वा प्रदत्तानि हविर्भुजा ।। २०

दिव्यवस्त्राणि सर्वाणि महादीप्तियुतानि च।
वाहनानि च रत्नानि काञ्चनानि बहूनि च ।। २१
गृह्यानुगृह्य ज्वलनं धर्मराजपुरीमथ।
पराक्रमेण जित्वा तं महाभोगोचितानि च ।। २२
नीलकौशेयकस्तूरीनीलरत्नादिकानि च।
अनर्घाणि प्रगृह्याशु महाधीरा तटातका ।। २३
नैर्ऋतिं लोकपालं च वरुणं च सदागतिम्।
कुबेरं च क्रमेणैव जित्वा तल्लोकभाञ्जि च ।। २४
सुवस्तूनि समस्तानि समादाय तटातका।
ऐशानीन्दिशमालोक्य महातेजोवर्ती पुरीम्।। २५
कैलासमध्यशृङ्गस्थां शिवेनाधिष्ठितां पुरीम्।
जेतुं तटातका देवी गजाश्वरथपत्तिभिः ।। २६
बहिः प्राकारमावृत्य रक्षिणस्तान् गणान् बहून्।
जित्वा क्रमेण सर्वांश्च प्राकारांश्च क्षणेन च ।। २७
प्रथमावरणद्वारे स्थितं तं नन्दिकेश्वरम्।
युद्धेन देवी जयति शिवतुल्यपराक्रमम्।। २८
यदा तटातका देवी निर्गता दिग्जयाय च।
तदानीमेव सहसा हालास्येशो दयानिधिः ।। २९
स्वयमंशेन निर्गत्य महालिङ्गान्महेश्वरः।
तप्तकाञ्चनसङ्काशो महातेजस्समन्वितः ।। ३०
सौन्दर्यसागरोद्भूतपूर्णचन्द्रनिभाननः।
तटातकातिसौन्दर्य समानवरवेषवान्।। ३१

षोडशाब्दाकृतिश्शम्भुः सर्वलक्षणलक्षितः ।
किरीटकुण्डलाद्यैश्च भूषणैस्समलङ्कृतः ॥ ३२
दिव्याम्बरैर्दिव्यगन्धैः दिव्यपुष्पैः सुशोभितः ।
दिव्यं विमानमारुह्य वृषभध्वजचिह्नितम् ॥ ३३
सर्वैरदृश्यमानस्सन् सुन्दरेशः स्वमायया ।
तटातकाया देव्याश्च पाणिग्रहणलोलुपः ॥ ३४
यत्र यत्र च सा कन्या जयार्थं त्वरया ययौ ।
हालास्यनाथो भगवान् तत्र तत्र च गच्छति ॥ ३५
यदा शंकरसामीप्यं गत्वा स्वस्य पराजयम् ।
अभूद्वक्तुं समुद्युक्तो नन्दीशो गणनायकः ॥ ३६
तदाऽदृश्यत्वमात्मीयमाययोत्थं विहाय च ।
आविर्भवति देवेशः पुरो नन्दीश्वरस्य च ॥ ३७
क्रन्दन्तो रक्ष रक्षेति कैलासतटवासिनः ।
नन्दिना शम्भुपादाब्जे निपेतुर्गणनायकाः ॥ ३८
त्रिस्तनी कन्यका काचित्सायुधाऽस्मान् प्रबाधते ।
भगवन्शरणापन्नान् पाहि सद्यः कृपानिधे ॥ ३९
एवं गणेश्वरैस्सर्वैः प्रार्थितः प्राह सुन्दरः ।
तूष्णीं भवन्तस्तिष्ठन्तु विजेष्याम्यहमेव ताम् ॥ ४०
इति तान्निर्भयान् कृत्वा तत्पाणिग्रहणोत्सुकः ।
गत्वा तटातकां पश्यन् तस्थौ चापधरो मुदा ॥ ४१
तस्य दर्शनमात्रेण तस्यास्तु विकृतः कुचः ।
अदृश्यतां द्रुतं प्राप मदग्रे विन्ध्यशैलवत् । ४२

निकटस्थास्सर्व एव तां दृष्ट्वा विस्मिताः स्थिताः ।
सार्धं गच्छन् महामन्त्री सुमतिश्च पुरातनः ।। ४३
अयमेवानघे भर्ता तवेत्यकथयद्रहः ।
श्रुत्वा तटातका कन्या विलोक्यात्यन्तसुन्दरम् ।। ४४
सुन्दरेशं सुन्दरास्यं सुन्दरायतलोचनम् ।
सुन्दराभ्यां भुजाभ्याञ्च सुन्दरावयवैः परैः ।। ४५
समुज्ज्वलन्तं सर्वज्ञं युवानं चन्द्रशेखरम् ।
अतीव मोहिता भूत्वा शरचापौ करस्थितौ ।। ४६
विसृज्य च महत्या च लज्जया विनतानना ।
स्वपादाङ्गुष्ठमुद्वीक्ष्य मलयध्वजकन्यका ।। ४७
निश्चला तिष्ठति रथे प्रतिमा चित्रगा यथा ।
तदा नीपवनाधीशः प्राह देवीं तटातकाम् ।। ४८
अनवद्याखिलाङ्गि त्वां स्वीचिकीर्षुः समागतः ।
तदर्थमानुकूल्यञ्च कुरु सद्यस्सुकन्यके ।। ४९
इति देववचश्श्रुत्वा राजपुत्री तटातका ।
प्राह प्रगल्भवचना युक्तियुक्तं वचस्तदा ।। ५०
पाण्ड्यदेशोऽस्ति मधुरा पुरी पुरहर प्रभो ।
तत्र तिष्ठति मन्माता मलयध्वजभूपतेः ।। ५१
महिला महता युक्ता तपसा दुश्चरेण च ।
तस्याः काञ्चनमालाया आज्ञया मत्करग्रहः ।। ५२
कर्तव्यो भवता स्वामिन्निति सम्प्रार्थितस्तया ।
प्राह नीपवनाधीशो मलयध्वजकन्यकाम् ।। ५३

इतोऽष्टमे तु दिवसे भविष्यत्सोमवासरे ।
अनुज्ञया च त्वन्मातुः त्वत्पाणिग्रहणं मुदा ।। ५४
कन्यकेऽहं करिष्यामि गच्छ त्वमविलम्बितम् ।
इत्युक्त्वा प्रेषयित्वा तां कन्यकां स्वपुरीं प्रति ।। ५५
स्वयमन्तर्दधे शम्भुर्जीवन्मुक्तिपुरेश्वरः ।
विकृतोरोजविलयात् सद्भावान्नायकस्य च ।। ५६
अत्यन्तप्रीतहृदया सहसा मधुरापुरीम् ।
सम्प्राप्य सर्ववृत्तान्तं जनन्यै प्रोच्य कन्यका ।। ५७
तया सम्प्रीतया सार्धमाहूय सचिवोत्तमान् ।
शासनं प्रेषयामास सद्यः सर्वमहीभुजाम् ।। ५८
प्रपां सर्वत्र विस्तीर्णां लाङ्गलीभिर्महोन्नतैः ।
पूगैस्तालैः कारयित्वा वितानाद्यैरलङ्कृताम् ।। ५९
साऽऽशु सम्पादयामास सर्वोपकरणानि च ।
अम्बराणि विचित्राणि भूषणान्यद्भुतानि च ।। ६०
प्रददौ कल्पवृक्षश्च देवेन्द्रेण पुरार्पितः ।
पयोदधिघृतक्षौद्रशर्कराप्रमुखञ्च यत् ।। ६१
रसवस्तु च तत्सर्वं कामधेनुः प्रयच्छति ।
चिन्तामणिश्च रत्नानि विविधानि धनानि च ।। ६२
हिरण्यादीनि सर्वाणि प्रददावक्षयाणि च ।
एवं समस्तसम्भारं कृत्वा सम्भृतमाशु च ।। ६३
वरागमनमिच्छन्ती मुहूर्तागमनञ्च सा ।
महाराजकुमारी तां मधुरां तोरणादिभिः ।। ६४

प्रपाभिः पूर्णकुम्भैश्च प्रतिद्वारमलङ्कृताम्।
कारयित्वा कदाऽऽयाति वरवेषधरो हरः ॥ ६५
इति सञ्चिन्त्य सा शश्वन्मात्रा काञ्चनमालया।
महदैश्वर्यसंयुक्तैर्मण्टपैः परिमण्डिते ॥ ६६
पताकाभिर्ध्वजैश्छत्रैः मुक्तादामवितानकैः।
सर्वत्रालङ्कृते हर्म्ये महिते मङ्गलालये ॥ ६७
कन्यापुरेश्वरी कन्या सुखेनास्ते तटातका।
आयाते सुमुहूर्ते तु कदम्बवननायकः ॥ ६८
कल्याणोचितसौन्दर्यं वपुषा परिगृह्य च।
सर्वैरवयवैस्तत्तद्भूषणैरतिसुन्दरैः ॥ ६९
अत्यन्तसुन्दराकारो भगवान् सोमसुन्दरः।
महावृषभमारुह्य रजताद्रिमिवापरम् ॥ ७०
मकुटेन च दण्डेन नवरत्नमयेन च।
सुशोभितेन महता कुण्डोदरधृतेन च ॥ ७१
पाण्डरेणातपत्रेण विचित्रेण विराजितः।
पुरो गतेन महता गणानां प्रवरेण च ॥ ७२
सहस्रवदनैश्शङ्खान् सहस्रं चैककालतः।
नानावाद्यध्वनिसमं चित्रं ध्वनयता तदा ॥ ७३
सहस्रवदनेनापि गणनाथेन संयुतः।
शूलायुधं स्वकीयञ्च धारयित्वा करेण च ॥ ७४
कुम्भोदरेण बलिना पृष्ठभागगतेन च।
आविर्बभूव हालास्ये हालास्येशः परात्परः ॥ ७५

शङ्कुकर्णमहाकर्णघण्टाकर्णमुखैर्गणैः ।
स्थूलकर्णादिभिर्भक्तैः पार्षदैः प्रमथैस्तदा ॥ ७६
शिवेन प्रेषितैर्ज्ञात्वा शिवकल्याणमद्भुतम् ।
श्रिया सार्धं महाविष्णुः स्वकीयैश्च गणैरपि ॥ ७७
समायाति महावेगाद्वाहनेन गरुत्मता ।
पितामहोऽपि देव्या च सरस्वत्या समन्वितः ॥ ७८
दिव्यैर्मुनिगणैः सार्धं हंसयानेन चाययौ ।
देवेन्द्रोऽपि शचीदेव्या देवविद्याधरादिभिः ॥ ७९
अप्सरोभिर्लोकपालैः सद्यस्तत्र समाययौ ।
मेरुमुख्याः पर्वताश्च सप्तद्वीपाश्च सागराः ॥ ८०
नद्यो नदाश्च विविधाः स्थावरा जङ्गमानि च।
वपूंषि धृत्वा चायान्ति सोपहाराश्शिवोत्सवे ॥ ८१
देवादीनां कन्यकाश्च रत्नैस्सम्पूरितानि च ।
कनत्कनकपात्राणि गृहीत्वा करपल्लवैः ॥ ८२
शोभनानि च गायन्त्यस्तदा तत्र समाययुः ।
तटातकाशङ्करयोः कल्याणार्थं समागतैः ॥ ८३
मुनिबृन्दैर्देवबृन्दैः निबिडा मधुरा पुरी ।
तटातकाया राज्ञ्याश्च शासनाद्बहवो नृपाः ॥ ८४
देशान्तरात्समायाताः तदा मकुटवर्धनाः ।
स्वैरमात्यैश्च सहिताः सद्यः प्रापुर्वृषध्वजम् ॥ ८५
सर्वे प्रणम्य साष्टाङ्गं सर्वैर्देवैस्समागतैः ।
मधुराया नगर्यास्तु कारयित्वा प्रदक्षिणम् ॥ ८६

ततश्च भवनद्वारमायाते वृषभध्वजे।
ववर्षुः पुष्पवर्षाणि देवाश्च परया मुदा॥ ८७
अवतीर्याथ भगवान् वृषभाद्वृषभध्वजः।
नन्दिहस्तं समालम्ब्य वेदिकामारुरोह सः॥ ८८
नवरत्नालङ्कृतायां कल्पितायाञ्च कर्बुरैः।
पट्टवस्त्रावृतायाञ्च वेदिकायां निवेशिते॥ ८९
कटकाभ्यां नूपुराभ्यां मण्डिते तत्पदाम्बुजे।
महता तपसाऽऽ चार्यैरप्यदृश्ये च कोमले॥ ९०
संक्षाल्य हिमतोयैश्च सुगन्धैरनुलिप्य च।
सम्पूज्य नवरत्नैश्च सौवर्णैश्च प्रसूनकैः॥ ९१
नीराजनानि चित्राणि सुरस्त्रीभिः कृतानि च।
तदा काञ्चनमाला सा कुङ्कुमोदकमिश्रितान्॥ ९२
मुक्ताफलान्यनर्घाणि गृहीत्वाऽञ्जलिना मुदा।
देवदेवपदाम्भोजे समर्प्याथ प्रणम्य च॥ ९३
इति सम्प्रार्थयामास जीवन्मुक्तिपुरेश्वरम्।
भगवन्मम पुत्रीं तां विधिना प्रतिगृह्य च॥ ९४
त्वं च पाण्ड्येश्वरो भूत्वा रक्ष सर्वां वसुन्धराम्।
मन्दस्मितेन तद्वाक्यमङ्गीकृत्य दयानिधिः॥ ९५
विधिविष्ण्वोः पञ्चशाखौ तदा पार्श्वगयोः स्पृशन्।
अन्तःपुरं प्रविश्याथ महिते मण्टपोत्तमे॥ ९६
रत्नैर्विचित्रिते हैमे महासिंहासने शुभे।
उपविश्याप्सरोभिश्च कृतनृत्तमवेक्ष्य च॥ ९७

श्रीमीनाक्षीसुन्दरेश्वरविवाहः

संवृतो देवबृन्दैश्च स्तूयमानो मुनीश्वरैः ।
नारदाद्यैर्गीयमानो यदा नेत्रोत्सवो बभौ ॥ ९८
तदा देवी महालक्ष्मीस्समलङ्कृत्य कन्यकाम् ।
स्नापिताञ्च पुरा देव्या सरस्वत्या तटातकाम् ॥ ९९
पार्श्वे निवेशयामास कदम्बवनवासिनः ।
ब्रह्मा शिवाज्ञया होममकरोदस्य सन्निधौ ॥ १००
महाविष्णुर्महीपाला मदंशा इत्युदीर्य च ।
स्वयमेवाकरोद्धारां मात्रा काञ्चनमालया ॥ १०१
उदकेन प्रदत्तेन भृङ्गारान्निस्सृतेन च ।
समन्त्रं चैव माङ्गल्यं सर्वलोकादिमङ्गलम् ॥ १०२
बबन्ध बन्धुरे कण्ठे कण्ठभूषानिरन्तरे ।
तदा रेजे महादेवी लता कुसुमिता यथा ॥ १०३
लाजहोमश्च कन्यायाः पदारोपणमश्मनि ।
सप्तधा पदविक्षेपं स्वयमेवाकरोच्छिवः ॥ १०४
अथ कुङ्कुमपङ्केन समालिप्तैश्च मौक्तिकैः ।
मुनिबृन्दैर्देवबृन्दैः कृतेष्वाशीर्वचस्सु च ॥ १०५
कलत्रकन्यापुत्रादिसमन्वितसुपर्वणाम् ।
विष्ण्वादीनाञ्च दिव्यानि सर्वाण्याभरणानि च ॥ १०६
अम्बराण्यप्यनर्घाणि दुर्लभानि वराणि च ।
दत्वा सम्प्रेषयामास मधुरापुरनायकः ॥ १०७

देवः पाण्ड्येश्वरो जातो लोकानां भागधेयतः ।
त्यक्त्वा शम्याकमालां च धृत्वा नीपप्रतानकम् ।। १०८
कपर्दश्च तिरोधाय नवरत्नकिरीटवान् ।
चर्माम्बरं परित्यज्य धत्ते दिव्याम्बरं वरम् ।। १०९
भूषणान्यपि सन्त्यज्य भुजङ्गमकृतानि च ।
स्वर्णरत्नविचित्राणि दधात्याभरणानि च ।। ११०
आत्मीयमङ्गरागं च भस्मना परिकल्पितम् ।
विहाय गन्धपङ्केनाकरोद्गात्रं सुशोभनम् ।। १११
वृषभांकध्वजपटं परित्यज्य स्वलीलया ।
स्वयं मीनध्वजो भूत्वा बभौ हालास्यनायकः ।। ११२
यः कश्चनापि पुरुषो भाग्याच्चेत्पृथिवीपतिः ।
शिवलिङ्गार्चनादेव चिरेण सुखमेधते ।। ११३
इति निश्चित्य मनसा पाण्ड्यराट् सोमसुन्दरः ।
मधुरायां मध्यभागे ब्रह्मस्थानेऽतिपावने ।। ११४
कर्षणादिप्रतिष्ठान्तं कारयित्वा विधानतः ।
पश्चिमाभिमुखं लिङ्गमिहाभीष्टप्रदेश्वरम् ।। ११५
पूजयामास देवेशो राजवेषधरो हरः ।
तटातकायाः कल्याणं यस्मिंस्तु दिवसे कृतम् ।। ११६
इहाभीष्टप्रदश्शम्भुस्तद्दिने सुप्रतिष्ठितः ।
आत्मीयमूललिङ्गस्य श्रीहालास्येश्वरस्य च ।। ११७
नित्यं पूजा च महती महोत्सवमुखानि च ।
नैमित्तिकानि कर्माणि भवन्ति च यथा तथा ।। ११८

स्वप्रतिष्ठितलिङ्गस्य सद्योऽभीष्टप्रदायिनः ।
कारयामास कर्माणि महाविभवविस्तरैः ॥ ११९

देवाद्यैः स्थापितानाञ्च लिङ्गानां महिमा महान् ।
शिवस्थापितलिङ्गस्य महिमोत्कर्षमद्भुतम् ॥ १२०

को वा वर्णयितुं शक्तः शक्तस्तु शिव एव सः ।
इहाभीष्टप्रदेशस्य महतीं महिमामिति ॥ १२१

बुध्वा नित्यं सेवते यस्सर्वाभीष्टमवाप्नुयात् ।
लीला तटातकायाश्च विवाहाख्या च पञ्चमी ॥ १२२

मयाऽद्य सम्यक्कथिता सर्वसम्पत्करी सदा ।
सकृच्छ्रवणमात्रेण सर्वकल्याणकारिणी ॥ १२३

सर्वोपद्रवसंहर्त्री श्रोतॄणां पठतां सदा ।

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये तटातकाविवाहो नाम*
*नवमोऽध्यायः*

## ஒன்பதாம் அத்தியாம்

## 5. தடாதகா - ஸுந்தரேச்வர விவாஹம்

அகஸ்தியர் கூறுகிறார் - தடாதகை சிங்காதனமேறி நீதியுடன் அரசாண்டு வந்தாள். யௌவனம் நெருங்கும்போது "கணவர் எப்போது வருவார்? என் மூன்றாம் ஸ்தனம் என்று மறையும் எனக் கவலை கொண்டாள். இங்கிருந்தால் கணவர் கிடைப்பது அரிது என திக்விஜயத்திற்குக் கிளம்பினாள். மேருவைச் சுற்றி அனைத்து தேசங்களையும் வென்று அரசர்கள் அளித்த காணிக்கைகளைப் பெற்றாள். திக்பாலர்களை வெல்கிற நோக்கத்துடன் சிவபஞ்சாக்ஷர மந்த்ர ஜபம் செய்து தன் படை

வீரர் அனைவருக்கும் தெய்விக உடையையும் தேவர்களை நோக்கும் பார்வையையும் அளித்தாள். இந்த்ரன், அக்னி, யமன், நிர்ருதி, வருணன், வாயு, குபேரன் என திக்பதிகளை வென்று ஈசான திக்கில் கைலாஸத்தின் நடுவேயுள்ள சிவபுரியை முற்றுகையிட்டாள். முதல் மதிற்சுவற்றின் காவலிலிருந்த நந்தியை வென்றாள்.

தடாதகை வெற்றி யாத்திரைக்காகப் புறப்பட்டவுடனேயே ஸுந்தரேசரும் தடாதகையை மணக்க விரும்பியவராக அவளைப் பின் தொடர்ந்தவர் கைலாஸத்தில் நந்தி தனது தோல்வியை சிவபெருமானிடம் தெரிவிக்க உள்ளே நுழையும்போது அவரது முன் நின்று, அவரை ஸமாதானப்படுத்தித் தானே வில்லேந்திப் போரிடத் தடாதகையின் முன் நின்றார். அவரைக் கண்டதும் தடாதகையின் மூன்றாவது ஸ்தனம் மறைந்தது. அதனைக் கண்ட ஸுமதி எனும் மந்திரி தடாதகையிடம் எதிரே நிற்கிற ஈசனே தங்களது மணாளராக விருப்பவர் என நினைவூட்டியதும் அந்த அழகிய யுவனாக வந்த ஸுந்தரேசரை உற்று நோக்கினாள். கையிலிருந்த வில்லும் அம்பும் நழுவின. வெட்கமுற்ற அவள் அசையாமல் பொம்மை போல் நின்றாள். ''அழகியே ! உன்னை ஏற்பதற்கு வந்துள்ளேன். நீ இதற்கு உதவுவாய்'' என சிவபெருமான் கேட்க, ''மதுராநகரிலுள்ள என் தாய், மலயத்வஜ பாண்டியரின் மனைவி காஞ்சனமாலையின் அனுமதி பெறுவீர்'' என்று தடாதகை கூற, உன் தாயின் அனுமதி பெற்று இன்றிலிருந்து எட்டாவது நாள் திங்கள்கிழமையன்று உன்னை மணப்பேன் என்று சிவன் கூறி அவள் மதுரை திரும்ப அனுமதித்தார்.

உடன் மதுரை திரும்பிய தடாதகை தன் தாயிடம் நிகழ்ந்ததைத் தெரிவித்தாள். திருமணத்திற்கான ஏற்பாடுகளனைத்தையும் காஞ்சனமாலா செய்தாள். காமதேனுவும் கல்பக மரங்களும் சிந்தாமணியும் கூட நின்று ஆடைகள் அணிகள் உணவு வகைகள் அலங்காரங்கள் என எல்லா வற்றையும் தெய்விகச் சிறப்புடன் தந்தன. வரனின் வருகையை மதுரை எதிர்ப்பார்த்து நின்றது. பரமேச்வரன்

வெள்ளி மலைபோன்ற தன் விருஷபத்தில் அமர்ந்து விஷ்ணு-லக்ஷ்மி, பிரும்மா-ஸரஸ்வதி, கந்தர்வர்கள், தேவர்கள் முதலானோர் பின் தொடர மதுரை நகரம் வந்து சேர்ந்தார். மதுரை நகரை வலம் வந்து நகரில் நுழைகிற ஸுந்தரரை காஞ்சனமாலா தன் அமைச்சர் ப்ரதானிகளுடன் எதிர் கொண்டு வரவேற்று "என் மகளை முறைப்படி மணந்து பாண்டிய அரசனாகி உலகைக் காக்க வேண்டும்" எனக் கோரினாள். புன் சிரிப்புடன் அதனை ஏற்ற ஸுந்தரர் திருமண மண்டபம் வந்து சேர்ந்தார். லக்ஷ்மியும், ஸரஸ்வதியும் மணமகளை நீராட்டி அலங்கரித்து மணமண்டபத்திற்கு அழைத்து வந்து ஸுந்தரரின் பக்கத்திலமர்த்தினர்.

சிவனது ஆணையால் பிரும்மா அக்கினி வளர்த்து ஹோமம் செய்தார். அரசரனைவரும் என் அம்சமே என விஷ்ணு தானே பெண்ணை ஸுந்தரரது கையில் தாரை வார்த்துத் தந்தார். திருமண நாணை சுந்தரர் தடாதகையின் கழுத்தில் கட்டினார். லாஜஹோமம், ஸப்தபதீ முதலியவை முறைப்படி நிகழ்ந்தன, அன்றிலிருந்து கொன்றைப் பூமாலை, சடை, பாம்பணி, சாம்பல் பூச்சு, விருஷபக் கொடி, முதலிய சிவனது அடையாளங்கள் மறைந்தன. கதம்பமாலை, நவரத்ன கிரீடம், ரத்தின ஆபரணம், சந்தன நறுமணப் பூச்சு மீனக் கொடி இவை சிவனிடம் இடம்பெற்றன. அவர் பாண்டிய அரசராகப் பதவி ஏற்றார். ஸுந்தரேச லிங்கத்தை மறுபடி பெருவிழாவில் ஸ்தாபித்துத் தானே அரசராக வழிப்பட்டார். இது ஐந்தாவது லீலை.

## दशमोऽध्यायः

# ६. रजतसभानर्तनम्

**अगस्त्यः -**

**अनादिभूतमात्मीयं परमानन्दताण्डवम् ।**
**पश्यतां सर्वभूतानां निदानं भोगमोक्षयोः ॥ १**

हालास्यनाथो भगवान् सच्चिदानन्दविग्रहः ।
पतञ्जलिव्याघ्रपादप्रमुखानां महात्मनाम् ।। २
भक्तानां दर्शयामास लीलया चित्रया यया ।
तामिदानीमहं वक्ष्ये शृणुध्वं मुनिपुङ्गवाः ।। ३
कल्याणार्थं समायाता भूपा मकुटवर्द्धनाः ।
सोमवंशप्रसूताश्च सूर्यवंशसमुद्भवाः ।। ४
मुनीश्वराश्च राजेन्द्राश्चान्ये ये च बुभुक्षिताः ।
ते सर्वे तस्थिरे तत्र मण्डपेषु यथासुखम् ।। ५
मध्यं गते सहस्रांशौ सुन्दरेशमहीभुजः ।
अनुज्ञया महेन्द्राद्याः कर्तुं माध्याह्निकक्रियाः ।। ६
हेमपद्माकरं तीर्थं प्राप्य संस्नाय सादरम् ।
स्नानं समन्त्रमाग्नेयं ततः कृत्वा विधानतः ।। ७
तर्पयित्वा देवतादीन् कुशाक्षततिलोदकैः ।
तत्तीरस्थं विघ्नराजं नत्वा सिद्धिविनायकम् ।। ८
देवीं नत्वा सुमीनाक्षीं हालास्येशं प्रणम्य च ।
ततो भूपालदेवेशं प्रणिपत्य तदाज्ञया ।। ९
सर्वेषु तेषु गच्छत्सु भोक्तुं भोजनमण्डपम् ।
पतञ्जलिरिति ख्यातः परमेश्वरभक्तिमान् ।। १०
व्याघ्रपादेन मित्रेण तदा स्वेष्टं व्यजिज्ञपत् ।
परात्परतरेशान परमेश्वर भास्कर ।। ११
पद्मयोनिशिरश्छेदपर्याप्तकरपङ्कज ।
भक्ताभक्तपरिच्छेदरहिताह्वयपद्धते ।। १२

चराचराणां भूतानां सृष्टिस्थित्यन्तकारण ।
काञ्चने सदसि ख्यातं तव ताण्डवमन्वहम् ।। १३
दृष्ट्वाऽहं नियमेनैव भोजनञ्च करोम्यतः ।
किं कर्तव्यं मयोदानीमेवमाह पतञ्जलिः ।। १४
प्राह गम्भीरया वाचा हालास्येशो महेश्वरः ।

सुन्दरनायकः -

इदं मदीयं हालास्यं क्षेत्रमत्यन्तपावनम् ।। १५
विश्वरूपविधातुश्च द्वादशान्तमुदीरितम् ।
चिदम्बरं हृदाकाशं विश्वरूपस्य वेधसः ।। १६
ततश्चिदम्बरान्मुख्यं विद्धि क्षेत्रमिदं मुने ।
अत्र नृत्तमपि मुख्यमद्भुतं भुक्तिमुक्तिकरमिष्टसिद्धिदम् ।
द्वादशान्तककदम्बकानने दर्शयामि सहसा विलोकय ।।
एवमुक्तवतीशेऽथ श्रीमद्धालास्यनायके ।। १८
पतञ्जलिर्भाष्यकर्ता प्राह तं देवनायकम् ।

पतञ्जलिः -

जीवन्मुक्तिपुरीनाथ करुणाकर शङ्कर ।। १९
हालास्यं द्वादशान्तस्थं विराड्रूपप्रजापतेः ।
हृत्पुण्डरीकं सम्प्रोक्तं पुण्डरीकपुरं त्वया ।। २०
अन्यानि यानि मुख्यानि कैलासप्रमुखानि च ।
तानि तस्य विधातुश्च सन्त्याधारेषु केषु च ।। २१
कृपया कथयास्माकं कदम्बवनसुन्दर ।
इति तस्य वचः श्रुत्वा प्राह सुन्दरनायकः ।। २२

पतञ्जले महाविद्वन् त्वया पृष्टं जगद्धितम् ।
कथयामि क्रमेणाहं भावनार्थं महात्मनाम् ।। २३
ब्रह्माण्डं ब्रह्मणो गात्रं जानीयान्मतिमान् जनः ।
कट्यधः सप्तपातालं तदूर्ध्वे सप्तलोकका: ।। २४
अङ्गुष्ठे प्रपदे गुल्फे जङ्घायां जानुदेशके ।
ऊरुमध्ये चोरुमूले पातालानि स्थितानि हि ।। २५
भूरादिसप्तलोकाश्च मूलाधारादिषु क्रमात् ।
आधारेषु च तिष्ठन्ति ब्रह्मरन्ध्रान्तकेषु च ।। २६
मूलाधारस्थभूलोके सर्वलोकगतानि च ।
मल्लिङ्गानि च मद्भक्तानुग्रहार्थं मदिच्छया ।। २७
सदा कुर्वन्ति सान्निध्यं तथाऽपि मतिमान् जनः ।
भूरादिसप्तलोकेषु तदाधारकेषु च ।। २८
भावयेत्तानि लिङ्गानि स्वशरीरगतेषु च ।
मूलाधारं विरिंचस्य प्रथितं कमलालयः ।। २९
अहमेव त्यागराजस्तत्र तिष्ठामि सादरम् ।
स्वाधिष्ठानं विधातुश्च गजारण्यं महास्थलम् ।। ३०
जम्बुनाथो ह्यहं तत्र निवसामि मुदान्वितः ।
विश्वसृण्मणिपूरं च ह्यनलाचलनामकम् ।। ३१
अनलाचलनाथोऽहं भक्तानामिष्टसिद्धिदः ।
हृत्पुण्डरीकं धातुश्च चिदम्बरमुदीरितम् ।। ३२
सभापतिरहं तत्र प्रयच्छामि सदीप्सतम् ।
श्रीमद्दक्षिणकैलासो विशुद्धिस्थानमद्भुतम् ।। ३३

कालहस्तीश्वरस्तत्र तिष्ठाम्यहमभीष्टदः ।
वाराणसी महाक्षेत्रमाज्ञास्थानं स्वयंभुवः ॥ ३४
विश्वनाथाभिधस्तत्र स्थित्वा मुक्तिं ददाम्यहम् ।
ब्रह्मणो ब्रह्मरन्ध्रं तु श्रीकैलासं महत्स्थलम् ॥ ३५
श्रीकण्ठपरमेशोऽहं तत्र सान्निध्यकृत्सदा ।
आधारातीतमव्यक्तं हालास्यं द्वादशान्तकम् ॥ ३६
अत्राहं सुन्दरेशाख्यः सर्वानुग्रहतत्परः ।
स्थानानामादिभूतत्वाद्विशिष्टं परमाद्भुतम् ॥ ३७
द्वादशान्ते मम पदे जीवन्मुक्तिपुरं स्थितम् ।
यथा परशिवश्चाहं जगतो मूलकारणम् ॥ ३८
तथा मदीयक्षेत्राणां हालास्यं मूलकारणम् ।
मदीयानां च मूर्तीनां मूर्तिस्ताण्डवमण्डिता ॥ ३९
परमा पावनी प्रोक्ता साऽपि स्थानविशेषतः ।
अत्यन्तमहती शुद्धा वेदान्तैः प्रतिपादिता ॥ ४०
आधाराणां समस्तानां द्वादशान्तं महत्तरम् ।
द्वादशान्ते शिवक्षेत्रे ताण्डवं च महत्तरम् ॥ ४१
द्वादशान्तस्थमव्यक्तं ज्योतिर्मयमनादिमत् ।
योगिभिर्ध्यानगम्यं तत्ताण्डवं तत्र भावयेत् ॥ ४२
एवंभूतं महानृत्तं तत्वातीतं परात्परम् ।
निष्कलं सकलं चास्तु पश्य पश्य पतञ्जले ॥ ४३
इत्युक्त्वा सुन्दराधीशः शम्भुस्ताण्डवतत्परः ।
प्रासादस्य पुरोभागे रम्ये महति मण्डपे ॥ ४४

सभां सङ्कल्पमात्रेण कृत्वा रौप्यमयीं शुभाम्।
रत्नैर्विचित्रवेद्यां तु नवरत्नविनिर्मिते ।। ४५
सौवर्णे भद्रपीठे च प्रभामण्डलमण्डिते ।
कृत्वा कोपोपरक्ताक्षमपस्मारमधोमुखम् ।। ४६
तस्योपरि महादेवो लोकानामभयप्रदः ।
दक्षिणं पादमास्थाय किञ्चित्कुञ्चितमुन्नतम् ।। ४७
अनुग्रहकरं वामपादं कृत्वा दयानिधिः ।
अत्यन्तसुन्दराकारो दशदोर्भिर्विराजितः ।। ४८
अभयप्रदहस्तं च कृत्वा शूलेन शोभितम्।
प्रसृतं वरदं पाणिमलंकृत्याहिपाशतः ।। ४९
डमरुं च शरं खड्गं परशुं दक्षिणैः करैः ।
कृशानुं कार्मुकं खेटं दण्डं हस्तैरदक्षिणैः ।। ५०
दधानस्सन्महादेवस्त्रिपुरान्तक ईश्वरः ।
गङ्गाचन्द्रकलाभ्यां च विराजितकपर्दवान् ।। ५१
नागयज्ञोपवीती च त्रिलोचनधरो हरः ।
शरच्चन्द्रांशुधवलस्सर्वाभरणभूषितः ।। ५२
ध्वनयन्त्या तदा तालं देव्या सादरमीक्षितः ।
पतञ्जलिमुखानां च मुनीन्द्राणां मुहुर्मुहुः ।। ५३
दर्शयामास भगवान् सुन्दरेशः स्वताण्डवम्।
दृष्ट्वा पतञ्जलिर्व्याघ्रपादमुख्यैर्मुनीश्वरैः ।। ५४
पुलकाङ्कितसर्वाङ्गः सानन्दजललोचनः ।
भक्त्या गद्गदया वाचा स्तोत्रं चक्रे मुनीश्वरः ।। ५५

## श्रीपतञ्जलिकृतं रजतसभेशस्तोत्रम्।

पतञ्जलिः -

सुवर्णपद्मिनीतटान्तदिव्यहर्म्यवासिने
सुपर्णवाहनप्रियाय सूर्यकोटितेजसे।
अपर्णया विहारिणे फणाधरेन्द्रधारिणे
सदा नमश्शिवाय ते सदाशिवाय शम्भवे॥ ५६

सुतुङ्गभङ्गजह्नुजासुधांशुखण्डमौलये
पतङ्गपङ्कजासुहृत्कृपीटयोनिचक्षुषे।
भुजङ्गराजकुण्डलाय पुण्यशालिबन्धवे
सदा नमश्शिवाय ते सदाशिवाय शम्भवे॥ ५७

चतुर्मुखाननारविन्दवेदगीतभूतये
चतुर्भुजानुजाशरीरशोभमानमूर्तये।
चतुर्विधार्थदानशौण्डताण्डवस्वरूपिणे
सदा नमः शिवाय ते सदाशिवाय शम्भवे॥ ५८

शरन्निशाकरप्रकाशमन्दहासमञ्जुला -
धरप्रवालभासमानवक्त्रमण्डलश्रिये।
करस्फुरत्कपालमुक्तविष्णुरक्तपायिने
सदा नमश्शिवाय ते सदाशिवाय शम्भवे॥ ५९

सहस्रपुण्डरीकपूजनैकशून्यदर्शनात्
सहस्रनेत्रकल्पितार्चनाच्युताय भक्तितः।
सहस्रभानुमण्डलप्रकाशचक्रदायिने
सदा नमश्शिवाय ते सदा शिवाय शम्भवे॥ ६०

रसारथाय रम्यपत्रभृद्रथाङ्गपाणये
रसाधरेन्द्रचाप शिञ्जिनीकृतानिलाशिने।
स्वसारथीकृताजनुन्नवेदरूपवाजिने
सदा नमश्शिवाय ते सदाशिवाय शम्भवे ॥ ६१
अतिप्रगल्भवीरभद्रसिंहनादगर्जित -
श्रुतिप्रभीतदक्षयागभोगिनाकसद्मनाम्।
गतिप्रदाय गर्जिताखिलप्रपञ्चसाक्षिणे
सदा नमश्शिवाय ते सदाशिवाय शम्भवे ॥ ६२
मृकण्डुसूनुरक्षणावधूतदण्डपाणये
सुगण्डमण्डलस्फुरत्प्रभाजितामृतांशवे।
अखण्डभोगसम्पदर्थिलोकभावितात्मने
सदा नमश्शिवाय ते सदाशिवाय शम्भवे ॥ ६३
मधुरिपुविधिशक्रमुख्यदेवैः अपि नियमार्चितपादपङ्कजाय।
कनकगिरिशरासनाय तुभ्यं रजतसभापतये नमश्शिवाय ॥
हालास्यनाथाय महेश्वराय हालाहलालङ्कृतकन्धराय।
मीनेक्षणायाः पतये शिवाय नमो नमस्सुन्दरताण्डवाय ॥ ६५
इति स्तुत्वा महादेवं सोमसुन्दरताण्डवम्।
दण्डवत्सन्निधौ नत्वा भक्त्या परवशोऽभवत् ॥ ६६
ततस्ताण्डवमूर्तिस्तं शिवः प्राह मुनीश्वरम्।
उत्तिष्ठोत्तिष्ठ मद्भक्त वरय त्वदभीप्सितम् ॥ ६७
तत् प्रयच्छाम्यहं सद्यः प्रार्थय त्वं पतञ्जले।
इति श्रुत्वा सुन्दरेशवचनं स पतञ्जलिः ॥ ६८

अविलम्बितमुत्थाय प्रार्थयामास साञ्जलिः ।
भगवन् देवदेवेश त्वदीयमिदमद्भुतम् ।। ६९
ताण्डवं च सदाकालं द्रष्टुमिच्छामि शङ्कर ।
अन्तर्धानं विहायात्र सान्निध्यं दयया कुरु ।। ७०
पुण्डरीकपुरे पूर्वं व्याघ्रपादयुतस्त्वहम् ।
संस्नाय शिवगङ्गायां नित्यकृत्यं विधाय च ।। ७१
मूलनाथं महालिङ्गं परिपूज्य सुभक्तितः ।
सभानाथं हृदाकाशे चिरं ध्यात्वा सुखं स्थितः ।। ७२
तत्पुण्यपरिपाकेन त्वत्ताण्डवमिदं परम्'।
व्याघ्रपादेन मित्रेण चान्यैरपि मुनीश्वरैः ।। ७३
मया दृष्टमभूद्यस्मात्कृतार्थोऽस्मि न संशयः ।
इति विज्ञापितो देवो भगवान् भक्तवत्सलः ।। ७४
कृपया वीक्ष्य भक्तं तं पतञ्जलिमभाषत ।
ईश्वरः -
त्वया यत्प्रार्थितं विद्वन् तत्तथैव भविष्यति ।। ७५
सदा मद्भक्तियुक्तस्त्वं भक्तानामग्रणीर्भव ।
यद्यदिच्छन्ति मे भक्तास्त्रैलोक्येऽपि च दुर्लभम् ।। ७६
तत्तत्सद्यस्साधयिष्ये व्रतमेतत्सदा मम ।
मदीयां महतीमेतां मूर्तिं ताण्डवतत्पराम् ।। ७७
द्वादशान्ते पदे ध्यात्वा तिष्ठ त्वं मम सन्निधौ ।
हिरण्यगर्भः परमस्सर्वेषां जगतां मुने ।। ७८

ब्रह्मणश्च परो विष्णुर्विष्णोरपि हरः परः ।
ईश्वरस्तु हराच्छ्रेष्ठः ईश्वराच्च सदाशिवः ॥ ७९
सदाशिवात्परो बिन्दुर्बिन्दोर्नादः परः स्मृतः ।
परनादात् परा शक्तिः पराशक्तेः परश्शिवः ॥ ८०
एतानि नव तत्त्वानि लीयन्ते यत्र वस्तुनि ।
तद्वस्तु द्वादशान्तस्थं परमानन्दताण्डवम् ॥ ८१
तस्मात्ताण्डवमूर्तेस्तु परं किंचिन्न हि ध्रुवम् ।
इति सञ्चिन्त्य मतिमानन्यत्सर्वं विहाय च ॥ ८२
भावयेद्भोगमोक्षार्थं मूर्तिं ताण्डवतत्पराम् ।
सूक्ष्मपञ्चाक्षराख्यस्य प्रणवस्य महामनोः ॥ ८३
महाताण्डवमूर्त्तेश्च पञ्चकृत्यविधायिनः ।
वाच्यवाचकसम्बन्धो नित्य एव न संशयः ॥ ८४
तस्मात्समष्टिभूतस्य वेदमूलमहामनोः ।
अर्थोऽहमेव व्यष्टेश्च ब्रह्माद्या देवताः स्मृताः ॥ ८५
द्वादशान्ते मम पदे ममेदं ताण्डवं क्षणम् ।
ये ध्यायन्ति च ते सर्वे जीवन्मुक्ता न संशयः ॥ ८६
यो वा को वा पुण्ययोगान्मध्येजन्म सकृज्जनः ।
दर्शयेद्यदि मन्नृत्तं भुक्तिमुक्त्योस्स भाजनम् ॥ ८७
त्वया कृतमिदं स्तोत्रं यः पठेत् भक्तिसंयुतः ।
तस्यायुर्दीर्घमारोग्यं सम्पदश्च ददाम्यहम् ॥ ८८
मासोत्तमे मार्गशीर्षे मन्नक्षत्रे च पुण्यदे ।
यः कश्चित्स्वर्णपञ्चिन्यां भास्करेऽनुदिते सति ॥ ८९

संस्नाय दर्शयेद्यत्र मम सुन्दरताण्डवम्।
सर्वपापविनिर्मुक्तस्सर्वैश्वर्यसमन्वितः ॥ ९०
इह भुक्त्वाऽखिलान् भोगानन्ते सायुज्यमाप्नुयात्॥
हेमपद्माकरे तीर्थे संस्नाय प्रतिवासरम्॥ ९१
सुमीनाक्षीं महादेवीं महालिङ्गं मदीयकम्।
प्रदक्षिणनमस्कारस्तोत्रैस्सन्तोष्य भक्तिमान्॥ ९२
सभां रौप्यमयीं प्राप्य महामण्डपमध्यगाम्।
मदीयां महतीं नित्यां मूर्तिं ताण्डवमण्डिताम् ॥ ९३
प्रणिपत्य च मन्मन्त्रमष्टोत्तरसहस्रकम्।
मदग्रस्थो जपेद्यस्तु स मुक्तस्सर्वपातकैः ॥ ९४
धनुर्मासगताद्रार्यां समारभ्य विशुद्धधीः ।
स्नानादिनियमं सर्वं वत्सरान्ते समापयेत्॥ ९५
विद्यार्थी लभते विद्यां कन्यार्थी कन्यकां लभेत्।
पुत्रार्थी पुत्रवान् रोगी लभेदारोग्यमुत्तमम्॥ ९६
यं यं काममभिध्यायन् संवत्सरमहाव्रतम्।
करोति नियमेनैव तं तं कामं लभेन्नरः ॥ ९७
त्वमप्यत्र चिरं कालं मत्पुरे मधुरापुरे।
अनुभूयातुलं सौख्यं ततो मुक्तो भविष्यसि॥ ९८
अतिरहस्यमिदं मम ताण्डवं भवमहोदधितारणकारणम्।
शिवकरं च सकृत्परिपश्यतामिह सदा परिदृश्यमभूत्त्वया॥९९
इति वाचा कृपादृष्ट्याऽप्यनुगृह्य पतञ्जलिम्।
सर्वान् सम्प्रेषयामास भोजनाय मुनीश्वरान्॥ १००

तदाप्रभृति हालास्ये ताण्डवं महदद्भुतम् ।
रौप्यसंसदि सुव्यक्तमभूत्सच्चित्सुखात्मकम् ।। १०१
इति हालास्यनाथस्य षष्ठी लीला प्रकीर्तिता ।
श्रोतॄणां पठतां पुंसां सर्वाभीष्टप्रदायिनी ।। १०२

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये नृत्तदर्शनं नाम दशमोऽध्यायः*

## அத்தியாயம் - 10

## 6. வெள்ளியம்பலத்தில் நர்த்தனம்

*அகஸ்த்யர் கூறுகிறார் :-திருமண விழாவிற்கு வந்திருந்தவர்களுக்குப் பெரு விருந்தளிக்கப் பெற்றது. பதஞ்ஜலியும் வியாக்ர பாதரும் கனக ஸபையில் (சிதம்பரத்தில்) நடராஜரின் நடனத்தைக் கண்டுகளித்த பிறகே பகலுணவு ஏற்பதை வழக்கமாகக் கொண்டுள்ளனர். அவர்கள் இங்கு உணவேற்கத் தயங்கவே ''ஹாலாஸ்யத்திலேயே என் நடனத்தைக் கண்டுகளிக்கலாம். சிதம்பரம் விராட் புருஷனின் இதயம். ஹாலாஸ்யமோ துவாதசாந்தம். அதனால் சிதம்பரத்தை விடச் சிறந்த இங்கு என் நடன தரிசனம் சிறந்தது'' என்று ஸுந்தரேசன் விளக்கினார்.*

*''பிரும்ஹாண்டமே பரம் பொருளின் உடல். கட்டை விரல் முன்னங் கால், கணுக்கால், முழங்கால், தொடையின் நடுப்பகுதி, தொடை இடுப்புடன் சேருமிடம் என்ற ஏழு இடங்களில் ஏழு பாதாளங்கள். மூலாதாரம், ஸ்வாதிஷ்டானம், மணிபூரகம், அநாஹதம், விசுத்தி, ஆஜ்ஞா, பிரும்மரந்திரம் என்ற ஏழிடங்கள் பூமி முதலிய மேலுலங்கள் ஏழும். விராட்புருஷனின் மூலாதாரம் கமலாலயம் (திருவாரூர்). அங்கு த்யாகராஜராக உள்ளேன். கஜாரண்யம் (திருவானைக்கா) ஸ்வாதிஷ்டானமாகும். அங்கு நான் ஜம்புநாதர். மணிபூரகம் அருணாசலம்*

(திருவண்ணமலை). அங்கு அருணாசலேசர். இதயம் சிதம்பரம். அங்கு ஸபாபதி. தக்ஷிண கைலாஸமெனும் காளஹஸ்தி விசுத்தி ஸ்தானம். அங்கு நான் காளஹஸ்தீசர். காசி ஆஜ்ஞையாகும். அங்கு நான் விச்வநாதர் பிரும்ஹரந்திரம் கைலாஸமாகும். அங்கு நான் ஸ்ரீ கண்டபரமேச்வரர். ஆறுதாரங்களுக்கும் அப்பாற்பட்ட த்வாதசாந்தமே ஹாலாஸ்யம். அதில் நான் ஸுந்தரேச்வரர். த்வாதசாந்தமே மிகச் சிறந்த இடம். இங்கு நடனத்தைக் காண்பீர் எனக் கூறி ஸங்கல்பத்தால் வெள்ளியாலான அம்பலத்தை அமைத்து நவரத்னத்தாலான பத்ரபீடத்தில் கோபத்தால் கண் சிவந்த அபஸ்மாரனை தலை கவிழ்த்துக் கிடத்தி அதன் மீது வலது காலை ஊன்றி இடதுகாலைத் தூக்கி நடனமாடினர். தேவி நடனத்திற்கு ஏற்பத்தாளம் போட்டாள். வியப்பும் பரவசமும் ஆனந்தமும் மிகுந்து பதஞ்ஜலி அவரைத் துதித்தார்.

பதஞ்சலியும் வியாக்ரபாதரும் வேண்டியதற்கேற்ப இனி இங்கு எப்போதும் அடியார்களுக்கும் நடனத்தைக் காண்பிப்பதாக அருள்புரிந்தார். மஹாதாண்டவம் புரிகிற அவரைப் பிரணவமும் ஸூக்ஷ்ம பஞ்சாக்ஷர மந்த்ரமும் அறிவிக்கின்றன. எல்லா வேதங்களும் அவரையே பொருளாகக் கொண்டவை. எல்லா தேவர்களின் ஸமஷ்டி உருவம் ரஜதஸபேசர்.

''பொற்றாமரைக் குளத்தில் நீராடி, மீனாக்ஷியையும் என்னையும் வழிபட்டு வெள்ளியம்பலத்தில் எனது தாண்டவத்தைக் கண்டு வணங்கிப் பஞ்சாக்ஷரத்தைத் தினமும் 1008 தடவை ஜபம் செய்பவன் முக்தி பெறுவான். மார்கழி மாதத்துத் திருவாதிரையில் தொடங்கி அந்த ஆண்டு முடியும் வரை வழிபடுபவன் விரும்பியதைப் பெறுவான்'' என ஸுந்தரேசர் அருளினர். இது ஆறுவது லீலை.

एकादशोऽध्यायः

# ७. कुण्डोदरक्षुधा

अगस्त्यः-

अथ हालास्यनाथस्य लीलया चित्रया यया।
कुण्डोदरो ह्रस्वभूतः सर्वाण्यन्धोमुखानि च।। १
पक्वापक्वानि वस्तूनि सहसा समभक्षयत्।
तां लीलां कथयाम्यार्याः शृणुध्वं शोभनप्रदाम्।। २
पतञ्जलिमुखास्सर्वे शिवज्ञानविशारदाः।
मुनीन्द्राश्च नरेन्द्राश्च फणीन्द्राश्च जनाः परे।। ३
ये चान्ये प्रथितास्सन्तो भोक्तुं योग्यास्तदुत्सवे।
उपविष्टाश्चासनेषु यथार्हं कल्पितेषु च।। ४
सौवर्णेषु च पात्रेषु प्रत्येकं स्थापितेषु च।
समर्पितानि सर्वाणि सुपक्वानि फलानि च।। ५
रसवन्ति सुगन्धीनि सितापूपादिकानि च।
पायसादीनि भक्ष्याणि सुभोज्यानि बहूनि च।। ६
घृतक्षौद्रपयोभिश्च षड्रसैश्च युतानि च।
भुक्त्वा कर्पूरताम्बूलं लब्ध्वा सन्तुष्टमानसाः।। ७
सुगन्धालिप्तगात्राश्च सुन्दरेशं प्रणम्य च।
स्वं स्वं निवेशं प्रापुस्ते सत्कृता भूषणाम्बरैः।। ८
ततस्तेषु च सर्वेषु गतेषु स्वालयं प्रति।
ऐश्वर्यस्मयसंयुक्ता मुदिताशा महोत्सवा।। ९

प्रद्योतनकरस्पर्शफुल्लपद्मसमानना।
महाराजकुमारी सा मधुरानायकेशितुः ॥ १०
तटातका धर्मपत्नी महिते मणिमण्डपे।
सुप्रीतया जनन्या च सहिताऽऽस्तेऽतिसुन्दरी ॥ ११
तदा महानसाध्यक्षास्समागम्य प्रणम्य च।
सर्वे विज्ञापयामासुः समर्थास्सर्वकर्मसु ॥ १२
चन्द्रान्वयसमाश्वासहेतुभूते शुभाकृते।
झषकेतनशास्तुश्च संमोहनतनुप्रभे ॥ १३
अन्नं बहुविधं चातिबहुळं त्वदनुज्ञया।
वयं पचामहे देवि सव्यञ्जनमनुत्तमम् ॥ १४
अनेकधाऽपि भुक्तं तत् पुरुषैरप्यखण्डितम्।
आगमिष्यति भूतेशो भूतसङ्घसमावृतः ॥ १५
तेषामभ्यवहारार्थं भक्तं सर्वमखण्डितम्।
उच्छ्रितं विविधश्चान्नं सर्वोपस्करसंयुतम् ॥ १६
सन्ति किं भोक्तुमायाताः कतिचित्पुरुषाः पुनः।
तच्छ्रुत्वा वचनं तेषां प्रहर्षोल्लसितानना ॥ १७
उत्थाय सहसा देवी सखीभिश्च समावृता।
सम्पादितं सर्वभूतभुक्त्यै भक्तं विलोक्य च ॥ १८
भर्तारमुपगम्याथ सुविनीता सुमध्यमा।
वाचा मधुरया प्राह देवी देवं तटातका ॥ १९
आत्मनायक भूतेश सर्वलोकेश्वरेश्वर।
मन्मनोभ्रमरस्यास्य मकरन्दप्रवाहद ॥ २०

कृपया मम विज्ञप्तिं शृणु कल्याणसुन्दर।
मुनीन्द्राद्याश्च ते सर्वे भुक्त्वेदानीं गता मुदा ।। २१
भूतानाञ्च गणानाञ्च त्वदीयानाञ्च भुक्तये।
अन्नं बहुविधं पक्वं स्वामिन् केभ्यः प्रदीयते ।। २२
क्षणात्तदन्नमखिलं वैगन्ध्यं हि समावहेत्।
तटातकावचः श्रुत्वा शङ्करः सोमसुन्दरः ।। २३
प्राहेदानीं मदीयस्तु जनो नास्ति बुभुक्षितः ।
त्वयैश्वर्यप्रभावेन भक्तं सोपस्करं बहु ।। २४
सम्पादितश्चेद्भुक्त्यै च मया कस्मै प्रदीयते।
इत्युक्त्वा देवदेवस्तु शर्वस्सर्वान्तरस्थितः ।। २५
कुण्डोदरं समालोक्य दहनं तस्य चौदरम्।
सद्यस्संवर्धयामास बडबानलसन्निभम् ।। २६
तदा कुण्डोदरो भूतो जाठराग्निप्रपीडितः ।
पिपासितश्च क्षुधितः क्षीणदेहो महाबलः ।। २७
सुन्दरेश जगन्नाथ मह्यमाहारमाशु च।
देहि देहीति संजल्पन् समागत्याविलम्बितम् ।। २८
प्रणिपत्य महादेवं प्रार्थयामास सादरम्।
कल्याणोचितसौन्दर्य कल्याणाद्रिधनुर्द्धर ।। २९
कल्याणार्थं त्वयि प्राप्ते निर्धूतविधिकन्धरे।
त्वदीयमातपत्रञ्च गृहीत्वाऽतिबलेन च ।। ३०
श्रीमत्सुन्दरपाण्ड्येश वेगात्त्वदनुधावनात्।
अथवा हेतुनाऽन्येन नानुभूता मया पुरा ।। ३१

महती क्षुच्च संजाता श्रान्त्या चातुलया सह।
कृपया परया शम्भो मां भुंक्ष्वेति समादिश॥ ३२
इति कुण्डोदरवचःश्रुत्वा हालास्यसुन्दरः।
स्मृत्वा तस्याः प्रभुत्वञ्च महदैश्वर्यसंयुतम्॥ ३३
तथा कुर्विति देवेशः कटाक्षेणान्वयुङ्क्त तम्।
इत्याज्ञां देवदेवस्य लब्ध्वा कुण्डोदरो बली॥ ३४
भूतानामग्रगण्यश्च वामनो जानुमात्रकः।
धूम्रवर्णोऽतिरक्ताक्षो दंष्ट्राभ्याञ्च विराजितः॥ ३५
भ्रूविकारं सदा कुर्वन् पश्यताञ्च भयङ्करः।
तटातकाया देव्याश्च कटाक्षकृतयाऽऽज्ञया॥ ३६
महानसमथ प्राप्य महावेगसमन्वितः।
भूतो भोक्तुं समुद्युक्तस्सम्प्राप्यान्तिकमन्धसाम्॥ ३७
सपादलक्षशैलैश्च हिमाचलमिवावृतम्।
स्वशोभापाण्डरैश्शैलैः कैलासमिव चापरम्॥ ३८
अन्नराशिं तमखिलं समालोक्य सुविस्मितः।
संहारकाले रुद्रस्तु ब्रह्माण्डान्यखिलानि च॥ ३९
पाणिभ्याञ्च समादाय क्षणेनाभक्षयद्यथा।
तथा भूतोऽपि पाणिभ्यां कबलीकृत्य रंहसा॥ ४०
आननं विवृतं कृत्वा महागह्वरसन्निभम्।
अन्नराशिमशेषञ्च भक्षयामास तत्क्षणात्॥ ४१
सूपशाकघृतक्षीरदधिक्षौद्रादिकानि च।
वस्तूनि तत्तत्पात्रैश्च भक्षितान्यखिलानि च॥ ४२

पुनस्त्वकृतपाकानि कूश्माण्डादिफलानि च ।
सर्वाणि सद्यस्सञ्जग्ध्वा काश्चित्तृप्तिं च नाययौ ।। ४३
विविधानां तण्डुलानां राशिं च बहुधा स्थितम् ।
गोधूममुद्गमाषादिराशिं चाभक्षयत्पुनः ।। ४४
नानाविधं धान्यराशिं महान्तःपुरमध्यगम् ।
तत्सर्वं भक्षयित्वाऽपि भूतश्चाभूदभुक्तवत् ।। ४५
अत्यद्भुतं ह्रस्वभूतकृतं कर्म विलोक्य च ।
अन्तःपुरगतास्सर्वे विस्मिताश्चाभवन् जनाः ।। ४६
तटातका ह्रिया युक्ता महता विस्मयेन च ।
भर्तुस्समीपमागत्य स्थिताऽभूद्विनतानना ।। ४७
अथ नीपाटवीनाथः सर्वज्ञः शङ्करःप्रभुः ।
स्वयं तद्भूतवृत्तान्तमज्ञात इव भावयन् ।। ४८
देवीवदनमालोक्य लज्जाविस्मयसंयुतम् ।
प्राह प्रगल्भया वाचा किञ्चिन्नोक्तां तटातकाम् ।। ४९
महाराज्ञ्या भवत्याश्च मन्दिरे मङ्गलालये ।
बह्वन्नमस्तीत्यज्ञाय समस्तोपस्करान्वितम् ।। ५०
नाहूतो विविधो देवि भूतानान्तु गणो मया ।
आतपत्रं च मे धृत्वा कश्चिद्भूतस्समाययौ ।। ५१
तद्भूतभुक्तशेषं च भोक्तुं भूतगणान् बहून् ।
आनयिष्यामि सहसा तव प्रीत्यै तटातके ।। ५२
इति भर्तुर्वचः श्रुत्वा मन्दस्मितमनोहरा ।
देवी विज्ञापयामास जितकोकिलकूजिता ।। ५३

भगवंस्त्वन्तु सर्वज्ञस्तथापि किमिदं वचः ।
आकारणं तु भूतानां मास्तु मास्तु दयानिधे ।। ५४
ह्रस्वभूतचरित्रं च विचित्रं पश्यतामभूत् ।
पुनर्भूतगणाश्चान्ये समायास्यन्ति चेदिह ।। ५५
संहाररुद्र इत्याख्या तव सार्थवती भवेत् ।
तद्भूतकृत्यमखिलं ज्ञातमेव यतस्त्वया ।। ५६
ततश्चाहं न वक्ष्यामि भूत एव प्रवक्ष्यति ।
इत्युदीर्य महाराजकुमारी सा तटातका ।। ५७
कुण्डोदरस्य भूतस्य कथं तृप्तिर्भविष्यति ।
चिन्तयन्ती मुहुर्भर्तुर्मुखमालोक्य तिष्ठति ।। ५८
तद्दृष्ट्वाऽस्य च कर्म देहमतुलं निम्नोदरं साम्प्रतम्
साश्चर्यं पुरवासिनस्समवदन्त्सर्वे जनास्सङ्गताः ।
भूतः कश्चिदभूतकृत्यमकरोच्छम्भोः प्रभावादयम्
भूतोऽन्योऽपि समागतो यदि भवेत्सर्वो जनो भक्षितः ।।५९
इयं तु सप्तमी लीला सुन्दरेशस्य धूर्जटेः ।
सकृच्छ्रवणमात्रेण सर्वापत्पापहारिणी ।। ६०

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये कुण्डोदरभुक्तिर्नाम*
*एकादशोऽध्यायः*

## அத்தியாயம் - 11

## 7. குண்டோதரனின் பசி

அகஸ்தியர் கூறுகிறுர் :- பதஞ்ஜலி முதலிய முனிவர்களும் அரசர்களும் நாகர்களும் மற்றவரும் திருமண விருந்தில் கலந்து கொண்டனர். விருந்து ஏற்றுத் தாம்பூலமும் சந்தனப்பூச்சும் ஆடைகளும் ஆபரணங்களும் பெற்று ஸுந்தரேசரை வணங்கிச் சென்றனர். இதனைக் கண்டு மனம் நிரம்பி நிற்கிற தடாதகையிடம் உணவளிக்கிற ப்ரதானிகள் எண்ணற்ற விருந்தினருக்குத் திருப்தியுறும் வகையில் உணவளித்த பின்னரும் பெருமளவு உணவு மீந்திருப்பதாய் தெரிவித்தனர். பூதங்களின் தலைவரான சிவனது கணங்களுக்கு பெருமளவு உணவு தேவைப்படலாம் என்று எதிர்பார்த்ததற்கு மாறாக உணவு மீந்துள்ளது. தடாதகை ஸுந்தரரிடம் சமைக்கப் பெற்ற உணவு நேரம் கழிந்தால் மணம் கெட்டு வீணாகிவிடுமே என்ற கவலையைத் தெரிவித்தாள். ஸுந்தரர் தன் அருகே தனக்கு குடைபிடித்து நிற்கிற குள்ளன் குண்டோதரனின் வயிற்றில் பசியைத் தூண்டினுர். பசியும் நாவரட்சியும் மிகவே, குண்டோதரன், பெருமானிடம் வேண்டி நின்றுன் - ''ஐயனே ! உமக்குக் குடைபிடித்துக் கைலாஸத்திலிருந்து ஓடிவந்ததாலோ அல்லது வேறு காரணத்தாலோ திடீரெனப் பசியும் தாஹமும் பொறுக்க வொண்ணுதவாறு துன்புறுத்துகின்றன. உணவேற்க அனுமதி தருவீர்'' என்று கெஞ்சினுன். அதை ஏற்ற இறைவன் தடாதகையைப் பார்க்க, அவளும்குறிப்பால் ஆணையிட, அந்தக் குள்ள பூதம் உணவிடு மிடத்திற்குச் சென்றுன். மலைமலையாகக் குவிந்திருந்த உணவனைத்தும் அவனது பசிக்குப் போதுமானதாக இல்லை. தயிரும், பாலும் காய்கறிகளும் அரிசியும் பருப்புமென உணவுப் பொருளனைத்தையும் வழங்கியும் அவனது பசி தீரவில்லை.

இதனையறிந்த தடாதகை ஸுந்தரரை அணுகினுள் ! ஒன்றுமறியாதவர்போல் ஸுந்தரர் கூறினுர். தேவி ! இங்கு உணவு நிறையக் கிடைக்குமென்று நினைக்காத நான்

பூதகணங்களை அழைத்து வரவில்லை. இவன் ஒருவன் எனக்குக் குடைபிடிப்பதற்காகக் கூட வந்தான். உணவு நிறைய இருக்குமானால் நொடியில் மற்ற பூத கணங்களையும் வரச் செய்கிறேன்'' என்றார். தேவி நடுங்கி ''மற்ற பூதங்களை அழைக்க வேண்டாம். அவர்களும் வந்தால் உலகமே அழியும். ஸம்ஹார ருத்ரர் என்ற உமது பெயர் பொருளுள்ளதாகிவிடும்.

குண்டோதரன் என்ற குள்ளனுக்கே எப்படி வயிறு நிறையும்? என்று தன் கவலையைத் தெரிவித்தாள். இது ஏழாவது லீலை.

## द्वादशोऽध्यायः

# ८. वेगवत्यानयनम्

अगस्त्यः -

अन्नगर्तानापगां च यया जनयतीश्वरः ।
तां लीलां सम्प्रवक्ष्यामि श्रवणादघहारिणीम् ।। १
कुण्डोदरस्य भूतस्य भुक्तस्यैवं बहूनि च ।
महती क्षुन्न नष्टाऽभूद्बडवाग्निर्यथा तथा ।। २
जज्वालास्योदरान्तःस्थो विभावसुरनर्गलः ।
तत्समापन्नसन्तापदीनाननतनुच्छविः ।। ३
हालास्यनायकं देवं सम्प्राप्य प्रणिपत्य च ।
अतिनिम्नोदरो भूतः प्रार्थयामास भूतपम् ।। ४
देव देव कृपाराशे सर्वानुग्रहतत्पर ।
मदीयां शृणु विज्ञप्तिं महाराज महेश्वर ।। ५

अद्य संवर्धिता क्षुन्मे भूतेशात्यल्पभोजनात्।
यथा तूलस्य संपातो ज्वलितस्य विभावसोः ॥ ६
उदर्चिषः कृशानोश्च यथा तैलस्य बिन्दवः।
तथा भवति यो भुक्तः सोऽन्नराशिरहो मया ॥ ७
पुनश्च तण्डुलाद्यानि भक्षितानि मयाऽद्य च।
तथाऽपि तृप्तिर्नाभून्मे न जाने तस्य कारणम् ॥ ८
मम जाठरवह्नेश्च महत्या ज्वालयाऽधुना।
इन्द्रियाण्यपि दह्यन्ते वनानीव दवाग्निना ॥ ९
पुरा सायकसम्पातात् त्रिपुरन्तु यथा तव।
तथैव मम कुक्षिस्थवह्निना पीडितोऽस्म्यहम् ॥ १०
रक्ष रक्ष महादेव रक्ष रक्ष कृपानिधे।
रक्ष रक्ष पुराराते रक्ष मां सुन्दरेश्वर ॥ ११
क्रोशत्येवं कुण्डकुक्षावतिपर्याकुलात्मनि।
तदा तटातका देवी महिला मारवैरिणः ॥ १२
वामनं भूतमालोक्य महाक्षुत्परिपीडितम्।
परिम्लानमुखं निम्नकुक्षिं भक्षणवर्जितम् ॥ १३
प्रार्थयामास भर्तारं तद्भूतक्षुन्निवृत्तये।
स्वामिन्मन्नाथ भूतेश लोकानुग्रहतत्पर ॥ १४
येन केनाप्युपायेन क्षुद्बाधाशान्तिरस्य तु।
भवतीह तथा सद्यः कुरु कर्म महाद्भुतम् ॥ १५
इति देव्या प्रार्थितस्सन्मधुरापुरनायकः।
सुन्दरेशस्सुराधीशो भक्ताधीनो भवार्तिहा ॥ १६

स्वाभिन्नामन्नपूर्णां च स्मृत्वा शक्तिं सदाशिवः।
कदाचिदक्षयं प्राप्तान् दधिमिश्रान्नपूरितान्॥ १७
पुरतश्चान्नगर्तांश्च सृष्ट्वाऽथ चतुरः क्षणात्।
अतिनिम्नं कुक्षिदेशं दर्शयित्वा पुरः स्थितम्॥ १८
कुण्डोदरं समाहूय भक्षयेति समादिशत्।
इत्याज्ञां देवदेवस्य लब्ध्वा खर्वतराकृतिः॥ १९
समीपमन्नगर्तानां सम्प्राप्य सहसा बली।
सुप्रीतश्च सुखासीनो भूत्वा भोक्तुं समुद्यतः॥ २०
आस्यं तद्विवृतं कृत्वा त्वरितः पर्वतोपमैः।
चतुर्भिः कबलैः स्वस्य पाणिभ्यां परिकल्पितैः॥ २१
तदन्नमखिलं भुक्त्वा भूतः पश्चात्तृषान्वितः।
तटाकानां च वापीनां कूपादीनां च शम्बरम्॥ २२
पीत्वाऽपि भूयस्तृषितो वारि वारीति शङ्कर।
भूतस्सम्प्रार्थयामास भूतेशं सुन्दरेश्वरम्॥ २३
तदा सुन्दरपाण्ड्येशः सर्वज्ञः सर्वदः प्रभुः।
सर्वभूतानुकम्पीशः सर्वसाक्षी परात्परः॥ २४
शक्तः कर्तुमकर्तुं च ह्यन्यथा कर्तुमीश्वरः।
विना नदीप्रवाहेण नास्य तृट्शमनं भवेत्॥ २५
लोकानां तु सुखं नास्ति मधुरादेशवासिनाम्।
इति निश्चित्य मनसा शरणागतवत्सलः॥ २६
सर्वलोकोपकाराय कुण्डोदरहिताय च।
स्वकपर्दस्थितां गङ्गां पवित्रां पापहारिणीम्॥ २७

एवं प्राह महेशानो देवदेवस्त्रियम्बकः ।
हे देवि गङ्गे सुभगे मत्प्रिये सर्वमङ्गले ।। २८
महाप्रवाहरूपेण मदीये मधुरापुरे ।
समागच्छ महावेगात्सद्यस्त्वं लोकपावने ।। २९
इति देववचः श्रुत्वा गङ्गादेवी सरिद्वरा ।
प्रार्थयामास देवेशं श्रीमद्धालास्यनायकम् । ३०
भगीरथप्रार्थनया पुरा भगवता त्वया ।
प्रवर्तिताऽहं लोकेस्मिन् महापापप्रशान्तये ।। ३१
इदानीमपि भूतेश भूतानुग्रहहेतवे ।
अहमाज्ञापिता चास्मि भूयस्सर्वहिताय च ।। ३२
महापापहरा चास्मि सर्वत्राहं त्वदाज्ञया ।।
तथाऽपि काश्यां प्रथिता तव सारूप्यदाऽस्म्यहम् ।। ३३
दुर्लभं तव सायुज्यं दातुं शक्ता यथाऽत्र तु ।
ब्रह्महत्यादिपापघ्नी तथा मे कुर्वनुग्रहम् ।। ३४
इति सम्प्रार्थितो देव्या गङ्गया सोमसुन्दरः ।।
प्राह गम्भीरया वाचा सर्वानुग्रहतत्परः ।। ३५
साधु साधु महाप्राज्ञे त्वया प्रोक्तमिदं वचः ।
शृणु कल्याणि मद्वाक्यं संसारोद्धारणक्षमम् ।। ३६
समष्टिविद्यानगरे सर्वाज्ञानतमोनुदे ।
सर्वत्र दृष्टमात्रेण सर्वपापहरा भव ।। ३७
स्नानमात्रेण सर्वेषां सर्वसौभाग्यदा भव ।
प्रयच्छ पानमात्रेण विद्यामज्ञानहारिणीम् ।। ३८

पुनर्मे मूललिङ्गस्य स्वयम्भूतोत्तमस्य च ।
हालास्येश्वरसंज्ञस्य साम्बस्य करुणानिधेः ।। ३९
सन्निधिं प्राप्य सर्वेषां जनानां दृष्टमात्रतः ।
दातुं सर्वांश्च कामांश्च शक्ता भव सरिद्वरे ।। ४०
स्नानमात्रेण सायुज्यं मदीयं दातुमर्हसि ।
त्वत्तीरे यानि कर्माणि विध्युक्तानि कृतानि हि ।। ४१
तानि सायुज्यमुक्तेश्च कारणानि न संशयः ।
काश्यां विश्वेश्वराख्यस्य ममाग्रे स्नानतस्त्वयि ।। ४२
यत्फलञ्चात्र हालास्ये ततोऽधिकतमं फलम् ।
इति दत्वा वरं तस्यै गङ्गायै वृषभध्वजः ।। ४३
पुनराज्ञापयामास समागच्छेति सत्वरम् ।
इत्याज्ञां देवदेवस्य लब्ध्वा चामरनिम्नगा ।। ४४
महाप्रवाहवेगाभ्यां महाद्भुतवती सती ।
तुङ्गैस्तरङ्गहस्तैश्च पुष्पितान्पार्श्वगान् द्रुमान् ।। ४५
उत्पाट्य भ्रामयित्वा तान् समायाति तरङ्गिणी ।
स्वयं स्वभावतश्शुभ्रा गङ्गा सर्वसरिद्वरा ।। ४६
प्रवाहवेगादाकृष्टफेनोपरि निवासिनाम् ।
पन्नगानां प्रभाभिश्च तत्फणामणिदीप्तिभिः ।। ४७
सरस्वत्या यमुनया सङ्गतेव विराजिता ।
तीरद्रुमेभ्यः पतितैः पुष्पैर्निबिडिता सती ।। ४८
द्यौरिव प्रबभौ सा च ज्योतिर्गणविराजिता ।
तीरोभयविसंसर्पिपुष्पद्रुमनिपातितैः ।। ४९

सुमनोभिस्सुगन्धाढ्यैर्वासिता शीतलानिलैः ।
पूगपुन्नागमालादिसम्पत्तिस्पर्शसौरभैः ॥ ५०
फेनिला भीषणस्वाना कूलघ्नी दृश्यते स्म सा ।
तदा सुन्दरपाण्ड्येशस्सर्वभूतहिते रतः ॥ ५१
कुण्डोदरं समालोक्य किञ्चित् स्मित्वा कटाक्षतः ।
प्रेषयामास पातुश्च प्रवाहं तन्नदीभवम् ॥ ५२
तदा विस्मयमापन्नो भूतः कुण्डोदरो बली ।
नमस्कृत्य महादेवमुत्प्लुत्योत्प्लुत्य वेगतः ॥ ५३
गत्वा नदीप्रवाहञ्च पुरस्कृत्य स्वयं स्थितः ।
महता वपुषा तेन जनयन् जनविस्मयम् ॥ ५४
विवृतं वदनं कृत्वा महागह्वरसन्निभम् ।
बाहुभ्यां विस्तृताभ्यां च नीरन्ध्रं तां निरुध्य च ॥ ५५
क्षणात्स वालुकाशेषं पपौ स्फीतं नदीजलम् ।
व्यस्मयन्त तदा सर्वे दृष्ट्वा भूतविचेष्टितम् ॥ ५६
सोऽप्युत्थाय नदीं पीत्वा महापूरतरङ्गिणीम् ।
सद्यस्सन्निधिमागत्य सर्वभूताधिपस्य च ॥ ५७
कुण्डोदरत्वं सन्त्यज्य दर्शयन्नुन्नतोदरम् ।
विद्ययाऽवाप्तया सद्यस्सरिन्मुख्याम्बुपानतः ॥५८
तुष्टाव साञ्जलिर्भूत्वा भूतेशं मुदिताशयः ॥ ५९

## कुण्डोदरस्तुतिः

शैलाधीशसुतासहाय सकलाम्नायान्तवेद्य प्रभो
शूलास्त्राग्रविदारितान्धकसुराराातीन्द्रवक्षःस्थल ।

कालातीतकलाविलासकुशल त्रायेत ते सन्ततम्।
हालास्येश कृपाकटाक्षलहरी मामापदामास्पदम्।। ६०
कोलाच्छच्छदरूपमाधवसुरज्येष्ठातिदूराङ्घ्रिका-
ऽऽनीलार्धाङ्ग निशेशनिर्जरधुनीभास्वज्जटामण्डल।
कैलासाचलवास कार्मुकधर त्रायेत ते सन्ततं
हालास्येशकृपा कटाक्षलहरी मामापदामास्पदम्।। ६१
फालाक्षिप्रभवप्रभञ्जनसखप्रोद्यत्स्फुलिङ्गच्छटा
तूलानन्यजचारुसंहनन सन्मीनेक्षणावल्लभ।
शैलादिप्रमुखैर्गणैः स्तुतगुण त्रायेत ते सन्ततम्
हालास्येश कृपाकटाक्षलहरी मामापदामास्पदम्।। ६२
मालाकल्पितमालुधानफणसन्माणिक्यभास्वत्तनो
मूलाधार जगत्त्रयस्य मुरजिन्नेत्रारविन्दार्चित।
सालाकारभुजासहस्र गिरिश त्रायेत ते सन्ततम्
हालास्येश कृपाकटाक्षलहरी मामापदामास्पदम्।। ६३
बालादित्यसहस्रकोटि सदृशोद्यद्वेगवत्यापगा-
वेलातीरविहारनिष्ठ विबुधस्रोतस्विनीशेखर।
बालावर्ण्य कवित्वभूतिसुखद त्रायेत ते सन्ततम्
हालास्येश कृपाकटाक्षलहरी मामापदामास्पदम्।। ६४
कीलालावनिपावकानिलनभश्चन्द्रार्कयज्वाकृते
कीलानेकसहस्रसङ्कुल शिखिस्तम्भस्वरूपामित।
शैलादीष्टगृहाङ्गनाविभवद त्रायेत ते सन्ततम्
हालास्येश कृपाकटाक्षलहरी मामापदामास्पदम्।। ६५

लीलार्थाञ्जलिमेकमेव चरतां साम्राज्यलक्ष्मीप्रद
स्थूलाशेष चराचरात्मक जगत्स्थूणाष्टमूर्ते गुरो।
तालाङ्कानुज फल्गुनप्रियकर त्रायेत ते सन्ततं
हालास्येश कृपाकटाक्षलहरी मामापदामास्पदम्॥ ६६
हालास्यागतदेवदैत्यमुनिसङ्गीतापदानकणत्
स्थूलाकोटिमनोहरांघ्रिकमलानन्दापवर्गप्रद।
श्रीलीलाकर पद्मनाभ वरद त्रायेत ते सन्ततम्
हालास्येश कृपाकटाक्षलहरी मामापदामास्पदम्॥ ६७
हेलानादरमोहतः कपटतो यद्वा कदम्बाटवी
हालास्याधिपतीष्टमष्टकमिदं सर्वेष्टसन्दोहनम्।
आलापानफलान् विहाय सततं सङ्कीर्तयन्तीह ये
ते लाक्षार्द्रपदाबलाभिरखिलान् भोगान् लभन्ते सदा॥ ६८
एवं स्तोत्रेण सन्तोष्य स भूतो भूतनायकम्।
शिरस्यञ्जलिमाधाय शिवस्य चरणाब्जयोः॥ ६९
निधाय विमले नेत्रे तूष्णीं तिष्ठति भक्तितः।
देवतासार्वभौमश्च तदा सुन्दरनायकः॥ ७०
भूतमालोक्य सुप्रीतः प्राह गम्भीरया गिरा
कुण्डोदर प्रसन्नोऽस्मि भक्त्या स्तुत्या च तेऽधुना॥ ७१
मम भूतगणानाञ्च त्वमेकाधिपतिर्भव।
त्वन्नामस्मरणान्नृणां क्षुत्तृड्बाधा विनश्यतु॥ ७२
त्वन्तु मत्सन्निधौ नित्यं तिष्ठ सर्वगणाग्रणीः।
इत्युक्त्वा प्रेषयित्वा तं कुण्डोदरमुमाधवः॥ ७३

तटातकाख्यया देव्या सुमीनाक्ष्या समन्वितः ।
तौर्यत्रिकविनोदेन सुखेनास्ते सुसंसदि ।। ७४
एवं निर्वर्त्य कल्याणं देवेशः पाण्ड्यभूपतिः ।
राज्यं चकार सुप्रीत्या विधिवन्नीतितत्परः ।। ७५
इति नद्या वेगवत्यास्समुत्पत्तिः प्रकीर्तिता ।
शिवगङ्गेति तां प्राहुः केचित्तु मुनिपुङ्गवाः ।। ७६
अन्ये वेगवतीत्येके शिवज्ञाननदीति च ।
विलम्बितेति च प्राज्ञाः कृतमालेति चेतरे ।। ७७
सरितां प्रवरामेवं वर्णयन्ति विचक्षणाः ।
यो वा को वा सकृत् स्नाति शिवज्ञाननदीजले ।। ७८
शिवज्ञानोडुपं लब्ध्वा सद्यस्संसारसागरम् ।
तीर्त्वा शङ्करसायुज्यं लभते नात्र संशयः ।। ७९
भुक्त्वा तदन्नमखिलं कबलैश्चतुर्भिः
कुण्डोदरे सपदि तत्र पिपासयार्ते ।
आहूयते स्म वरवेगवतीप्रवाहो
येनैव दाहशमनाय शिवस्स नोऽव्यात् ।। ८०
इति लीलामष्टमीञ्च यः शृणोति सकृन्नरः ।
क्षुत्तृड्बाधाविनिर्मुक्तः सर्वसौभाग्यमाप्य सः ।।
भुक्त्वाऽत्र विपुलान् भोगान् प्राप्नोत्यन्ते परां गतिम् ।। ८१

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये अन्नगतापिगानयनं*
*द्वादशोऽध्यायः*

# அத்தியாயம் -12

## 8. அன்னக் குழி - வேகவதீ தோற்றம்

அகஸ்தியர் கூறுகிறார் :- அளவற்று அனைத்தையும் உண்ட பிறகும் குண்டோதரனுக்குப் பெரும்பசி எழுந்தது. பெருநெருப்பில் காய்ந்த புல்லும், எண்ணெய்ச் சொட்டும் போல் உண்டவுடன் அவை சாம்பலாயின. தன்னைப் பசியிலிருந்து காப்பாற்றப் பெருமானை அவன் வேண்ட, தடாதகையும் பரிவுடன் அவனது பசியை நீக்க வேண்ட, ஸுந்தரேச்வரர் தன் சக்தியாகிய அன்னபூர்ணையை நினைத்தார். உணவு நிரம்பிய நான்கு பெருங்குழிகளைத் தோற்றுவித்தார். குண்டோதரன் அவற்றை நான்கு கவளங்களாக உண்டான். உடன் நாவரட்சி ஏற்பட அவன் கிணறு குளம் ஆறு என அனைத்தின் நீரைப் பருகியும் தாகம் நீங்கவில்லை. ஈசன் தன் சடையிலிருந்த கங்கையை வெளியிட்டார். பகீரதனது தவத்தின் பயனாக ஈசனின் சடை மூலம் பூமியில் இறங்கி கடல் வரை சென்ற அவள் வற்றாத பெருக்குள்ளவள். கண்டாலும் நீராடினாலும் நீர் பருகினாலும் பாபம் நீக்குபவள். ஈசனிடம் பெருமை தருகிற வரம் பெற்ற கங்கை பெரும் வேகத்துடன் பூமியில் இறங்கினாள். அவளது ப்ரவாஹ வேகத்தைப் பூமி தாங்க இயலாதிருந்தாள்.

ஈசனின் அனுமதி பெற்ற குண்டோதரன் ஆற்றின் நடுவில் கைகளை விரித்து ப்ரவாஹத்தை அடக்கி வாயால் உறுஞ்சி மணல் மட்டும் மீதமாகும்படி அந்த வெள்ளமெடுத்த ஆற்றைப் பருகிவிட்டு ஈசனின் அருகில் சென்று தன் வயிறு மேடிட்டுள்ளதை நன்றியுடன் காட்டி ஈசனைத் துதித்தான். ஈச! உன் பரிவுமிக்க கடைக் கண் பார்வை ஆபத்தில் மூழ்கிய என்னைக் காப்பாற்றியது. அவ்வாறே எப்போதும் காக்கட்டும் என்று வேண்டி நின்றான்.

ஈசன் தனது கணங்களுக்குத் தலைவனாக அவனை நியமித்தார். ''உன் பெயரைச் சொன்னாலேயே மக்களின்

பசியும் தாஹமும் நீங்கட்டும். என் எதிரில் கணத் தலைவனாக நிற்பாய் என்றும் அருளினார். அந்த கங்கை வேகவதீ, க்ருதமாலா, சிவகங்கா, விலம்பிதா என்று பல பெயர்களில் பெருகி தன்னிடம் நீராடுபவரின் சிவபக்தியை வளர்க்கிறாள். இது எட்டாவது லீலை.

★ ★ ★

त्रयोदशोऽध्यायः

# ९. सप्तसागरानयनम्

अगस्त्यः -

सागराणाञ्च सप्तानामाह्वानं मधुरापुरे ।
अकरोच्च यया शम्भुस्तां लीलां कथयाम्यहम् ॥ १
प्रशासति महीं तस्मिन् पाण्ड्येशे सोमसुन्दरे ।
स्वकालवर्षी पर्जन्यः पृथिवी सस्यशालिनी ॥ २
सर्वे जना धर्मरताः पापलेशविवर्जिताः ।
विप्राः स्वधर्मनिरता वेदवेदाङ्गपारगाः ॥ ३
शिवलिङ्गार्चनपरा भक्त्या परमया युताः ।
यजनादीनि कर्माणि कुर्वन्ति परितुष्टिदाः ॥ ४
न निर्जिताश्च कामाद्यैरन्तःस्थैः परिपन्थिभिः ।
शिवस्वरूपज्ञानाय वेदान्तश्रवणादिभिः ॥ ५
यमाद्यष्टाङ्गयोगैश्च यतन्ते विजितेन्द्रियाः ।
क्षत्रियाद्यास्तथा चान्ये स्वस्वधर्मरताः सदा ॥ ६
सर्वे सन्तुष्टहृदयाः सर्वसौभाग्यसंयुताः ।
भूलोकशिवलोके तु निवसन्ति सुखेन च ॥ ७

अतिवृष्टिरनावृष्टिराधयो व्याधयोऽपि न ।
न कस्यचित् पुत्रमृतिर्नापमृत्युश्च बाधते ॥ ८
अन्त्यकाले जनास्सर्वे गच्छन्ति शिवमन्दिरम् ।
वार्ताऽपि यमलोकस्य नास्ति तत्र महीतले ॥ ९
परस्य शिवलोकस्य श्रीहालास्येश्वरस्य च ।
तस्याश्च राजधान्याश्च भेदो नास्ति मुनीश्वराः ॥ १०
सदा सान्निध्यतः शंभोः शङ्करस्यांबिकापतेः ।
नन्दीशप्रमुखास्सर्वे मानुष्यञ्च वपुर्धृताः ॥ ११
पाण्ड्येश्वरस्य सेवार्थं वर्तन्तेऽतिमुदान्विताः ।
नवरत्नमये भद्रपीठे त्वासीन ईश्वरः ॥ १२
धृत्वा मणिमयं मौलिं कृत्वा राज्यमकण्टकम् ।
अनुग्रहं करोत्येव लोकानां भक्तवत्सलः ॥ १३
तटातका धर्मपत्नी पाण्ड्येशस्य महेशितुः ।
पातिव्रत्यस्य धर्मस्य न लेभे विच्युतिं तदा ॥ १४
तस्या देव्याश्च जननी विशेषज्ञा तपस्विनी ।
सदा काञ्चनमाला सा पुराणश्रवणोत्सुका ॥ १५
ये ये मुनीश्वरास्तत्र तं द्रष्टुं देवनायकम् ।
समागच्छन्ति तेभ्यश्च पुराणानि शृणोति सा ॥ १६
कदाचिद्गौतमः प्राज्ञः सर्वशास्त्रनिधिर्मुनिः ।
कल्याण शैलधनुषः कदम्बवनवासिनः ॥ १७
सेवार्थमागतो मुख्यैर्मुनीन्द्रैरपि संवृतः ।
तदा काञ्चनमाला सा गौतमं मुनिपुङ्गवम् ॥ १८

आहूय भक्त्या संपूज्य प्रार्थयामास सादरम्।

काञ्चनमाला -

भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद ॥ १९

सद्यः श्रेयस्करान्धर्मान् कथयाद्य मुनीश्वर।

इति पृष्टस्तया विद्वान् गौतमो मुनिसत्तमः ॥ २०

प्राह प्रगल्भया वाचा धर्मान् सर्वपुराणगान्।

गौतमः -

मलयध्वजभूपालधर्मपत्नि तपस्विनि ॥ २१

तटातकाया देव्याश्च जनयित्रि यशस्विनि।

सर्वे धर्मास्त्वया ज्ञातास्तथाऽपि कथयामि तान् ॥ २२

त्रिविधा एव वर्ण्यन्ते धर्मा वेदान्तवेदिभिः।

मानसा वाचिकाश्चेति कायिकाश्च यथाक्रमम् ॥ २३

सत्यं क्षमा शिवध्यानमिन्द्रियाणां च निग्रहः।

सर्वभूतदया तुष्टिरार्जवं धर्मचिन्तनम् ॥ २४

रागादिभ्यो मनश्शुद्धिर्मानसा इति कीर्तिताः।

श्रीमत्पञ्चाक्षरमनोर्मननं मानसेषु च ॥ २५

धर्मेषु प्रवरो धर्मो मनश्शुद्धेश्च कारणम्।

मनश्शुद्ध्या यथा भोगमोक्षौ सद्यश्च सिद्ध्यतः ॥ २६

तथा चान्येन विधिना कालेनापि न सिद्ध्यतः।

श्रीमतो नमकस्यापि चमकस्य तमुष्टुहेः ॥ २७

हंसस्य त्रिसुपर्णस्य पञ्चब्रह्ममहामनोः।

श्रीमत्पुरुषसूक्तस्य पञ्चशान्तिमुखस्य च ॥ २८

वैदिकस्य च मन्त्रस्य तान्त्रिकस्य मनोरपि।
विविधानां स्तुतीनां च जपो धर्मास्तु वाचिकाः ।। २९
शम्भोर्लिङ्गार्चनं चैव प्रदक्षिणनमस्कृती।
पुष्पाभिषेकतोयादिसङ्ग्रहः स्थलमार्जनम् ।। ३०
उपलेपनमिज्यार्थं पुष्पवाटीप्रकल्पनम्।
शिवक्षेत्रेषु गमनं तीर्थयात्रादिकाः क्रियाः ।। ३१
धर्मास्तु कायिकाः प्रोक्ताः सर्वधर्मविदां वरैः।
एवं च त्रिविधानां च धर्माणामाशुसिद्धिदा ।। ३२
तीर्थयात्राऽतिमहती सर्वधर्मोत्तमोत्तमा।
महापापप्रशमनी महदैश्वर्यदायिनी ।। ३३
इन्द्रियाणां निग्रहाद्यैर्महायज्ञैर्महात्मनाम्।
अत्यन्तदुर्लभायाश्च मुक्तेः सा मूलकारणम् ।। ३४
तस्मात्तु सद्यश्श्रेयोऽर्थी तीर्थयात्रां प्रयत्नतः।
कुर्याद्भुक्त्यै च मुक्त्यै च सर्वकामप्रसिद्धये ।। ३५
गङ्गादिसर्वतीर्थात्मरूपी देव उमापतिः।
अनुगृह्णाति सर्वांश्च जनान् विषयमोहितान् ।। ३६
गङ्गादि सर्वतीर्थेषु स्नातुं कोऽपि न हि क्षमः।
सर्वतीर्थफलावाप्त्यै सागरस्नानमीरितम् ।। ३७
महामेरोश्च परितो यानि तीर्थानि सुव्रते।
नदीनदादिरूपेण तानि सर्वाणि सागरे ।। ३८
सर्वेषु पुण्यतीर्थेषु सागरस्नानमुत्तमम्।
तत्कारिणां जनानां च भृशं पुण्यं भविष्यति ।। ३९

सागरे त्वं च संस्नाय सर्वतीर्थफलानि च।
लब्ध्वा भर्त्रा च सहिता शिवलोकं गमिष्यसि ।। ४०
एवं मुनेर्वचश्श्रुत्वा तं सत्कृत्याम्बरादिभिः ।
ततः काञ्चनमाला सा सागरस्नानकांक्षिणी ।। ४१
अवोचदभिलाषं स्वं पुत्र्यै पुण्यनिधे सुते।
सागरस्नानपुण्याग्निनिर्दग्धकलुषा सती ।। ४२
भर्त्रा सह गमिष्यामि शिवलोकं परात्परम्।
इति मातृवचश्श्रुत्वा बहुचिन्ताकुलाऽभवत्।। ४३
चिरं शुश्रूषया प्रीते शङ्करे चन्द्रशेखरे।
तटातका कदाचित्सा रहसीशमयाचत ।। ४४
जननी सागरस्नानं कर्तुमिच्छति मे प्रभो।
किं कर्तव्यमतो ब्रूहि सर्वाभीष्टप्रदायक ।। ४५
ईश्वरस्तद्वचः श्रुत्वा निरीक्ष्यास्या मुखं ततः ।
एकस्मिन् सागरे स्नातुं तव माता हि वाञ्छति ।। ४६
आनयिष्याम्यहं सप्त सागरांश्च वरानने।
इत्युक्त्वा कृपयाऽऽविष्टमानसो मदनान्तकः ।। ४७
अथ तस्याः प्रियं कर्तुं युगपत्सप्तसागरान्।
ईश आकारयामास स्वया शक्त्या क्षणेन वै ।। ४८
महासत्वसमुद्रिक्तान् समस्तशफराविलान्।
विषक्तविद्रुमलतान् शैवालपरिशोभितान्।। ४९
आवर्तवेगभ्रमितभूभृच्छतसमन्वितान्।
महानागमुखोच्छासद्विगुणीकृतवीचिकान्।। ५०

कल्लोलफेननिचितान् दृष्ट्वाऽब्धीन् घोषसंयुतान्।
सर्वे जना व्यस्मयन्त मधुरापुरवासिनः ॥ ५१
अस्ति देवपुरोभागे सरो जलधिवत्पुरा।
तज्जलेनाब्धिसलिलं सङ्गतं पामरा जनाः ॥ ५२
अष्टाब्धयस्समायाता इत्याशंसन्नितस्ततः।
देवदेवस्य पुरतस्तदा प्रभृति भूतले ॥ ५३
सप्तसागरसान्निध्यात् सप्ताब्धिरिति तत्सरः।
पप्रथे कुरुते तस्मिन् प्रत्यक्षं यादसाम्पतिः ॥ ५४
वसन्ति तस्मिन् देवाद्याश्चेति प्राहुर्मनीषिणः।
सप्ताब्धितीर्थसलिले यः स्नानं कुरुते जनः ॥ ५५
इह निर्दग्धपापस्तु संसाराब्धिं तरेच्च सः।
पर्वादिपुण्यकालेषु स्नात्वा यस्सप्तसागरे ॥ ५६
देवादीनां तु तृप्त्यर्थं तर्पणादि करोति चेत्।
ऋणत्रयाद्विनिर्मुक्तस्सर्वान् कामानवाप्नुयात् ॥ ५७
हालास्येश्वरदेवस्य लीलेयं नवमी शुभा।
श्रुता चेद्येन केनापि भोगमोक्षप्रदायिनी ॥ ५८
यस्सप्तसिन्धून् स्वपुरस्तटाके देव्यास्समाहूय मुदं चकार।
तटातकाया मधुरापुरीशः पायात्स वस्सुन्दरपाण्ड्य ईशः॥

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*

*हालास्यमाहात्म्ये सप्तसागरानयनं नाम*

*त्रयोदशोऽध्यायः*

## அத்தியாயம் -13

## 9. ஏழு கடல் அழைத்தல்

*அகஸ்தியர் கூறுகிறுர் :-* ஸுந்தரேசன் பாண்டிய நாட்டை ஆண்டார். மக்கள் தம் தம் கடமைகளை மகிழ்ச்சியும் ஈடுபாடும் கொண்டு நிறைவேற்றினர். நாடும் ஸுபிக்ஷமாயிருந்தது. அதிக மழையோ, மழையின் மையோ நோய்களோ மற்ற கெடுதல்களோ நேரவில்லை. நாடு சிவலோகமாக மங்களமாக வாழ்ந்தது. நந்தி முதலிய சிவ கணங்கள் மனித உருவில் நடமாடி ஈசனுக்கு ஸேவை புரிந்தனர். தடாதகையும் கற்புள்ள மங்கையாக பாண்டிய அரசருக்கு உதவினுள்.

காஞ்சனமாலை ஈசனின் கதைகளைக் கேட்பதில் ஆர்வமுள்ளவள். கௌதம முனிவர் ஈசனை வழிபட மதுரை வந்தார். காஞ்சன மாலை அவரை வரவேற்று உபசரித்தாள். வாழ்வின் மேனிலையைத் தருகிற அற வழிகளைப் பற்றிக் கேட்டாள். கௌதமர் நல்வழிகளை அவளுக்கு உபதேசித்தார். மனத்தாலும் வாக்காலும் உடலாலும் நல்லதைச் செய்யலாம். உண்மை பேசுதல், பொறுமை, சிவ த்யானம், புலனடக்கம், எல்லா உயிரினத்திடமும் கருணை, மன நிறைவு, நேர்மை, தர்ம சிந்தனை பற்றற்று மனத் தூய்மை பெறுதல் இவை மனத்தாலான செயல் முறைகள். பஞ்சாக்ஷர ஜபம் இவற்றில் மிகச் சிறந்தது. ருத்திரானுவாகம், சமகானுவாகம், தமுஷ்டு ஹி என்ற மந்திரம். ஹம்ஸ: என்ற மந்திரம், திரிஸுபர்ண மந்திரம், பஞ்ச பிரம்ஹ மந்திரம், புருஷ ஸூக்தம், பஞ்ச சாந்தி என்ற வேத மந்திரங்களையும் தந்திர சாஸ்த்ர வழியிலுள்ள மந்திரங்களையும் துதிகளையும் பாடுதல், வாயாலான செயல்முறைகள். சிவ லிங்க வழிபாடு, பிரதக்ஷிண நமஸ்காரங்கள், பூந்தோட்டம் அமைத்தல், க்ஷேத்ராடனம், தீர்த்த யாத்திரை முதலியவை உடலாலானநற் செயல்கள். தீர்த்த யாத்திரை மிகவும் சிறந்தது. கங்கை முதலிய நதிகள் ஈசனின் வடிவமே. கடலில் நீராடுவது மிகச்

சிறந்தது. நீ கடலில் நீராடி பதியுடன் சேர்ந்து முக்தி பெறுவாய் என்று கௌதமர் கூறினர்.

கடலில் நீராட விரும்பிய காஞ்சனமாலா அதனை மீனாக்ஷியிடம் தெரிவிக்க, அவள் அதை ஈசனிடம் தெரிவிக்க ஈசன் ஏழு கடல்களையும் மதுரைக்குக் கொணர்ந்து தன் ஆலயத்தின் எதிரில் தடாகமாக்கினர். அது இன்றும் ஏழு கடல் தடாகமெனப் புகழ்பெற்றுள்ளது. இதில் நீராடுவதால் பாபம் நீங்குவதுடன் மேனிலை பெறுவர். இது ஈசனின் ஒன்பதாவது திருவிளையாடல்.

# चतुर्दशोऽध्यायः

## १०. मलयध्वजकाञ्चनमालयोः सप्तसमुद्रस्नपनम्

ऋषयः -

एवमब्धिष्वागतेषु देववेवेन शम्भुना ।

ततः कृतं किं भगवन्नो ब्रूहि मुनिपुङ्गव ।। १

अगस्त्यः -

मलयध्वजभूपालं महेन्द्रार्धासनस्थितम् ।

आहूय दर्शयामास शङ्करो लीलया यया ।। २

तां लीलामथ वक्ष्यामि देवदेवस्य धूर्जटेः ।

कल्याणशैलधनुषः कदम्बवनवासिनः ।। ३

समुद्रेष्वागतेष्वस्मिन् पुरे पाण्ड्येश्वरः शिवः ।

घोषं तेषां च सप्तानां देवः श्रुत्वा दयानिधिः ।। ४

अन्तःपुराद्विनिर्गत्य तया देव्या समन्वितः ।

नन्द्यादिगणनाथैश्च राजवेषधरो हरः ।। ५

तटाकतीरं सम्प्राप्य पूगपुन्नागमण्डितम् ।
विलोक्य सिन्धून् सहसा स्वशक्त्या समुपागतान् ।। ६
तटातकां तदा कान्तः प्रीतिपूर्वमवोचत ।
आगतानब्धिसङ्घातान् पश्य कान्ते मनोहरे ।। ७
तव प्रियं करोमीति मनीषाऽस्ति सदा मम ।
स्नाहीति सागरेष्वाशु जननीं ते तटातके ।। ८
उक्त्वा स्नातां समालोक्य तत आगच्छ मेऽन्तिकम् ।
इतीशोऽभीष्टदस्तस्याः प्रेषयित्वा च तां ततः ।। ९
समुद्राणां महावेगं स्तम्भयित्वा स्वशक्तितः ।
तत्तीरपुष्पवाटीषु पुष्पाणि सुरभीणि च ।। १०
समाहृत्य समाघ्राय वन्दिभिः परिवन्दितः ।
पुन्नागपूगमन्दारलाङ्गलीचूतसंवृते ।। ११
सुच्छाये सुसमे देशे मन्दमारुतसेविते ।
कालक्षेपं च कुर्वाणश्चचार परया मुदा ।। १२
तटातका च लोकानां जननी सर्वमङ्गला ।
शिवाज्ञां शिरसा धृत्वा महाप्रीतिसमन्विता ।। १३
तथा करिष्य इत्युक्त्वा सद्यस्सम्प्राप्य मातरम् ।
एवं प्रोवाच तन्वङ्गी जितकोकिलकूजिता ।। १४
मातस्त्वं सागरे स्नातुमेकस्मिन्ननु वाञ्छसि ।
देवप्रसादात्सर्वेऽत्र सागरा आगताः क्षणात् ।। १५
यथेच्छमाशु स्नाहीति तद्वाक्यममृतोपमम् ।
श्रवणाञ्जलिना पीत्वा पुत्रीं देवीं तटातकाम् ।। १६

समालिङ्ग्य समाघ्राय मञ्जुलं मुखमण्डलम् ।
प्रीता काञ्चनमालाऽऽसीत् कृतार्थाऽस्मीति वै धिया ॥ १७
पुनः पौराणिकान् सर्वान् समाहूय स्म पृच्छति ।
समुद्रस्नाननियमं कथयन्तु विचक्षणाः ॥ १८
इति ते तद्वचश्श्रुत्वा शास्त्रार्थं च विचार्य च ।
एवं सर्वेऽवदन् प्राज्ञास्सर्वशास्त्रविशारदाः ॥ १९
वितन्तुरसहाया नो सागरे स्नातुमर्हति ।
सहात्मजेन भर्त्रा वा स्नातुमर्हति नान्यथा ॥ २०
सर्वाभावे तु गोवत्सं स्नायादादाय सागरे ।
इति तेषां वचश्शुत्वा पुनरत्यन्त दुःखिता ॥ २१
तटातकामुखं वीक्ष्य किं कर्तव्यं मयेति च ।
उक्त्वा काञ्चनमाला साऽतिष्ठत्तूष्णीं शुचार्दिता ॥ २२
श्रुत्वा तटातका देवी शोकयुक्तं च तद्वचः ।
जननीशोकनाशाय देवेशं प्राप्य सत्वरम् ॥ २३
वाचा मधुरया प्राह स्वनाथं सोमभूषणम् ।
पुत्रेण भर्त्राऽप्यथवा सागरस्नानमीरितम् ॥ २४
पौराणिकैर्वितन्तूनामिति प्रोक्तं पुरातनैः ।
पुत्रो जनन्या नैवास्ति भर्ता स्वर्गं गतः पुरा ॥ २५
किं कर्तव्यं तयेदानीं वदोपायज्ञ शङ्कर ।
तटातकायास्तद्वाक्यं सर्वशास्त्रार्थतत्ववित् ॥ २६
सर्वज्ञो देवदेवेशः श्रुत्वा युक्तमिति ब्रुवन् ।
क्षणमात्रं विचिन्त्याथ भक्तचित्तार्तिभञ्जनः ॥ २७

निजकर्मानुरूपात्तस्वरूपाद्भुततेजसम् ।
दिविष्ठमपि तत्तातमिन्द्रस्यार्धासने स्थितम् ।। २८
मलयध्वजभूपालं सस्मार सहसा शिवः ।
तदानीमवशो भूत्वा मलयध्वजभूपतिः ।। २९
विमानमधिरुह्याशु स्वकीयमतिनिर्मलम् ।
व्योम्नि सन्दृश्यमानस्सन् जनैस्सर्वैस्सुविस्मितैः ।। ३०
अधोऽधः क्षणतः प्राप्य क्रमाद्देवान्तिकं गतः ।
देवोऽप्यभिमुखं गत्वा प्रणामं तेन वै कृतम् ।। ३१
वाचा निरुध्य चोत्थाप्य ह्यालिङ्ग्यातिप्रियेण च ।
तटातकायाः पुत्र्याश्च दर्शयित्वा महौजसम् ।। ३२
जनकश्च तया तस्मै कारयित्वा नमस्क्रियाम् ।
श्वश्रूं काञ्चनमालाञ्च मलयध्वजभूभुजा ।। ३३
श्वशुरेण च संयोज्य विधिना सप्तसागरे ।
स्नानञ्च कारयामास तत्क्षणात्तौ च दम्पती ।। ३४
दिव्याम्बरधरौ दिव्यगन्धस्रग्भूषणोज्ज्वलौ ।
सारूप्यं शिवयोर्लब्ध्वा शिवलोकात्समागतम् ।। ३५
विमानञ्च समारुह्य हालास्येशशिवाज्ञया ।
प्रासादं मूललिङ्गस्य हैमस्थूपिविराजितम् ।। ३६
दर्शनात् भुक्तिदं पुंसां मुक्तिदं सर्वसिद्धिदम् ।
पुनः पुनश्च संवीक्ष्य नमस्कृत्वाऽऽदरेण च ।। ३७
ब्रह्माण्डोर्ध्वगतं नित्यं शिवलोकञ्च जग्मतुः ।
तदा तटातका दृष्टा तुष्टावात्मेष्टदं शिवम् ।। ३८

मन्नाथ जगतां नाथ सत्यज्ञानसुखात्मक ।
पाहि मां परमेशान परात्पर नमोस्तु ते ।। ३९
मत्प्रसादक्रियादक्ष दक्षाध्वरविनाशन ।
मदनान्तक मद्भर्तः मदाज्ञावशवर्तक ।। ४०
निगमागमसन्ताननिलयाङ्घ्रिसरोरुह ।
भुवन त्रय संभूतित्राण संहार कारण ।। ४१
हंसरूपाम्बुजावासदर्शनागम्यमस्तक ।
सूकराकारमुरजिदद्दष्टांघ्रिसरोरुह ।। ४२
नमो भगवते तुभ्यं सर्वात्मान्तरवर्तिने ।
पुरत्रयविनाशाय पुरन्दरनुतांघ्रये ।। ४३
नमःपरावरज्ञाय परात्परतराय च ।
परमात्मस्वरूपाय नमः कैवल्यदायिने ।। ४४
नमस्त्रैलोक्यनाथाय नमश्चन्द्रार्धधारिणे ।
नमो भसितभूषाय नमश्चर्माम्बराय च ।। ४५
नमःश्यामार्धदेहाय नमो नागेन्द्रहारिणे ।
नमो मह्यम्बुवाय्वग्निपुष्पवत्खात्ममूर्तये ।। ४६
नमो वेदान्तवेद्याय नमो नादान्तरूपिणे ।
नमो नारायणार्च्याय नमो नरकहारिणे ।। ४७
जीवन्मुक्तिपुरीशाय श्रीकण्ठाय नमोऽस्तु ते ।
नमो हालास्यनाथाय शङ्कराय नमो नमः ।। ४८
इत्यात्मनायकं स्तुत्वा शिवं देवी तटातका ।
विशेषतश्च तस्यापि लब्ध्वाऽनुग्रहमीशितुः ।। ४९

पूर्णसर्वेष्टकामा सा त्वन्तर्वत्नी बभूव च।
श्रीमान् सुन्दरपाण्ड्येशो देवो हालास्यनायकः ॥ ५०
पालयामास षट्षष्टिसहस्रं शरदां महीम्।
एतदद्भुतकृत्यं तदालोक्याश्चर्यसंयुताः ॥ ५१
तुष्टुवुर्हृष्टमनसो मधुरापुरवासिनः।
आकर्ण्य दशमीं लीलां यः प्रीणाति नरोत्तमः ॥ ५२
मनोरथानिह प्राप्य देहान्ते च दिवं लभेत्।

सुरेश्वरार्धासनवासिनं नृपं
संयोज्य यः काञ्चनमालया तया।
सारूप्यमुक्तिं प्रददौ च ताभ्यां
तस्मै नमो नीपवनेश्वराय ॥ ५३

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये मलयध्वजकाञ्चनमालयोः समुद्रस्नपनं*
*नाम चतुर्दशोऽध्यायः*

## அத்தியாயம் -14

## மலயத்வஜரும் காஞ்சமாலையும் ஏழுகடல்களில் நீராடல்

*அகஸ்தியர் கூறுகிறார் :- எழு கடல்களின் அலைகள் மோதும் ஒலி கேட்டுத் தேவியுடன் ஸுந்தரர் அந்தத் தடாகத்தின் அருகில் சென்று காஞ்சன மாலையை அதில் நீரா ட அழைத்தார். அருகிலிருந்த அறிஞர்கள் ஒரு பெண் தனது கணவனுடனோ புதல்வனுடனோ கடலில் நீராடலாம். பசுவின் கன்றுடனாவது நீராடலாம். விதவை தனித்து*

நீராடலாகாது என்றனர். ஈசன் சிறிது நேரம் சிந்தித்துத் தேவருலகில் இந்திரனுடன் கூட அரியாசனத்திலமர்ந்திருந்த மலயத்வஜரை நினைக்க அவர் விமானத்திலேறி மதுரை வர, காஞ்சனமாலையும் மலயத்துவஜரும் சேர்ந்து ஏழு கடல் தடாகத்தில் நீராடி ஈசனை வணங்கி சிவலோக மடைந்தனர்.

தடாதகை தன் பெற்றோர் நற்கதி அடைந்ததைக் கண்டு ஈசனைத் துதித்தாள். சுந்தரருடன் பேரானந்தத்துடன் வாழ்ந்த தடாதகை உரிய காலத்தில் கருத்தரித்தாள். பாண்டிய அரசராக சுந்தரர் அறுபத்தாறுயிரம் ஆண்டுகள் அரசாண்டார். இது பத்தாவது திருவிளையாடல்.

## पञ्चदशोऽध्यायः

# ११. उग्रपाण्ड्येशावतारः

अगस्त्यः -

अथ सुन्दरनाथस्य कुमारोत्पत्तिसत्कथाम् ।
वदामि सङ्ग्रहेणाहं शृण्वन्तु मुनिपुङ्गवाः ।। १
तटातका गर्भवती यस्मिन् वस्तुनि सादरा ।
तच्छम्भोस्तु गणास्तस्यै प्रायच्छन् मुनिसत्तमाः ।। २
दिने दिने गर्भरक्षामायुर्वेदविचक्षणैः ।
कारयामास देवेशस्तद्गर्भपरिवृद्धये ।। ३
गर्भरक्षादिकर्माणि यथाकालं विधानतः ।
श्रीमत्सुन्दरपाण्ड्येशो विदधाति मुनीश्वरैः ।। ४
दशमे मासि सम्प्राप्ते रौद्रर्क्षे सोमवासरे ।
गुरौ केन्द्रस्थिते लग्ने साम्राज्यपदसूचके ।। ५

अरिष्टं शोभयन् दीप्त्या तारकारिः षडाननः ।
एकाननस्सन् सञ्जातः श्रीहालास्येश्वराज्ञया ।। ६
स सद्यस्सुखदश्चासीत् भूर्भुवस्स्वर्निवासिनाम् ।
जाते तस्मिन्महाभागे सर्वलोकार्तिहारके ।। ७
पराक्रमेणातुलया सम्पदा समदाश्च ये ।
बन्धनात्ते नृपा मुक्ताः कारागृहनियन्त्रिताः ।। ८
देवदुन्दुभयो नेदुः प्रसेदुस्सर्वतो दिशः ।
मलयाद्रिसमुद्भूतो ववौ मन्दश्च मारुतः ।। ९
पारिजातप्रसूनौघैः ववर्षुर्वारि वारिदाः ।
सरितः परितस्स्वच्छा जनानां मानसैस्सह ।। १०
प्रदक्षिणार्चिस्सप्तार्चिराददे हविरादरात् ।
सुप्रीता लोकपालाद्याः समस्ता देवतागणाः ।। ११
सन्तोषसागरे मग्ना मधुरापुरवासिनः ।
पृथक्पृथक्च कल्याणं चक्रुः स्वे स्वे च मन्दिरे ।। १२
पुत्रोत्सवार्थं सम्भूतस्तूर्यनिर्घोष उच्छ्रितः ।
उदजृम्भत लोकेषु त्रिषु शोको न कस्यचित् ।। १३
तमोऽन्तमगमच्चैव रजोऽपि विरजोऽभवत् ।
सत्वं सत्व समायुक्तं वसुधाऽऽसीत्सुधा तदा ।। १४
कल्याणी सर्वतो वाणी प्राणिनः प्रीणयन्त्यभूत् ।
तिलोत्तमोर्वशीरम्भाप्रमुखा अप्सरोगणाः ।। १५
समाययुर्मुदा युक्ता मङ्गल्यद्रव्यपाणयः ।
यक्षगन्धर्वनागानां सुवासिन्यः समन्विताः ।। १६

गायन्त्यो ललितं गीतं तत्राजग्मुरनेकशः ।
ऋश्यशृङ्गमरीच्याद्यास्तत्र सर्वे मुनीश्वराः ।। १७
आजग्मुर्देवपाण्ड्यस्य मन्दिरे मङ्गलालये ।
बृहस्पतियुतो ब्रह्मा देवोऽपि गरुडध्वजः ।। १८
महेन्द्रमुख्या गीर्वाणाः समायाताः सहस्रशः ।
आगतैर्मुनिभिर्देवैर्देवः पाण्ड्यमहीपतिः ।। १९
जातकर्म तदा कृत्वा ऋणान्मुक्त इवाबभौ ।
वर्षाकालात्यये चन्द्रो मेघराशेरिवाम्बरे ।। २०
विप्रवर्यकरप्राप्तदानोदकविजृम्भणैः ।
विना वेगवतीं तत्र निम्नगा ह्यभवत्क्षणात् ।। २१
समागता ये विद्वांसो ये च मङ्गलवादिनः ।
अर्थिनश्चापि ते सर्वे नार्थयेयुर्यथाऽन्यतः ।। २२
स प्रायच्छत्तथा तेभ्यः स्वर्णरत्नाम्बरादिकम् ।
न्यूनाङ्गान्धरुगार्ता ये दीनानाथाश्च दुर्गताः ।। २३
देवपाण्ड्यस्य कृपया कृतार्था अभवन् हि ते ।
विद्वद्भिर्ब्राह्मणैस्सार्धं मन्त्रिभिश्च पुरोहितैः ।। २४
भूपालैर्देवसङ्घैश्च सम्प्राप्ते द्वादशेऽहनि ।
स्वनामानुगुणाभिख्यां उग्र इत्यस्य स व्यधात् ।। २५
रक्षां बालोचितां कृत्वा देवोऽपि प्रपितामहः ।
हरिणा गुरुणा साकं सर्वैर्देवगणैरपि ।। २६
सुन्दरेशं नमस्कृत्य सम्प्रहृष्टतनूरुहः ।
निर्ययौ यानमाश्रित्य सर्वे जग्मुर्यथागतम् ।। २७

अहो रूपमहो तेजस्त्वहो सर्वाङ्गलक्षणम्।
अहो तटातकाभाग्यादाविरासीत्स्वयं गुहः ।। २८
एवं परस्परं सर्वे तदाशंसन् हि सज्जनाः ।
गृहान्निष्क्रमणे मासि चतुर्थे तु कृते सति ।। २९
अन्नप्राशनमब्दार्धे चूडाकर्म त्रिवत्सरे ।
कृत्वा तेजोभिवृद्ध्यर्थं पञ्चमेऽब्दे व्रतं ददौ ।। ३०
वेदादि विद्याजातं यत् साक्षिमात्राद्गुरोर्मुखात्।
सकृच्छ्रवणतस्तच्च सर्वं जग्राह शक्तिमान्।। ३१
कलानाञ्च चतुष्षष्टिं सर्वलोकहितप्रदाम्।
अस्त्रशिक्षाञ्च विविधां स्वयमग्राहयच्छिवः ।। ३२
उग्रोऽपि विनयाद्यैश्च सद्गुणैः पितृभक्तितः ।
समन्त्रञ्च धनुर्वेदं सर्वस्वमतिदुर्लभम्।। ३३
लब्ध्वा पाशुपतञ्चास्त्रमभूदतुलवीर्यवान्।
जन्मतस्त्वष्टमाद्वर्षादन्तरा मतिमत्तमः ।। ३४
अधीत्य सर्वविद्याश्च सर्वज्ञोऽभूच्छिवात्मजः ।
पित्रोः सेवां च नितरां कृत्वा चोग्रः समाहितः ।। ३५
तयोः कृपादृग्विषयो महाबलपराक्रमः ।
राज्ञां कुमारैस्सार्धञ्च चिक्रीडातिपराक्रमैः ।। ३६
श्रीमत्सुन्दरपाण्ड्येशकुमारः कुङ्कुमप्रभः ।
कान्तानां कमनीयश्च यौवनं प्राप कालतः ।। ३७
रुचिराभाङ्घ्रियुगलं वृत्तजङ्घं सुजानुकम्।
हस्तिहस्तसमानोरुं चित्रवृत्तसुमध्यमम्।। ३८

शातोदरमुदाराङ्गं परिघादीर्घबाहुकम्।
कवाटसदृशोरस्कं कम्बुसन्निभकन्धरम्॥ ३९
मन्दराद्रिसमानांसं सुन्दरायतलोचनम्।
इन्दिरावासवक्त्राब्जं कन्धराभकचोज्ज्वलम्॥ ४०
सर्वावयवशोभाढ्यं सौकुमार्यनिकेतनम्।
उग्रं तं सर्वकृत्यार्हं समालोक्य महाप्रभुः॥ ४१
ततः परीक्षयामास द्वात्रिंशल्लक्षणान्यपि।
पञ्चदीर्घश्चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम्॥ ४२
सप्तरक्तं त्रिगम्भीरं द्विविस्तीर्णं प्रशस्यते।
बाहू नेत्रान्तरे चैव हनुर्नासा तथैव च॥ ४३
स्तनयोरन्तरश्चापि पञ्चदीर्घमिहास्ति हि।
जिह्वा प्रजननं पृष्ठं जङ्घा च ह्रस्वमुत्तमम्॥ ४४
ह्रस्वानि चास्मिंश्चत्वारि तस्मादत्यन्तभाग्यवान्।
सूक्ष्माण्यङ्गुलिपर्वाणि केशदन्तनखत्वचः॥ ४५
पञ्च सूक्ष्माणि सन्त्यस्मिन् दीर्घजीवी भवेदयम्।
कक्षकुक्ष्यलिकं स्कन्धौ घ्राणं वक्षष्षडुन्नतम्॥ ४६
बालेऽस्मिन् दृश्यते सम्यक्तस्मादैश्वर्यभाग्भवेत्।
पाणिपादतले चैव नेत्रान्ते च नखानि च॥ ४७
तालु जिह्वाधरोष्ठं च रक्तमस्मिन् सुखप्रदम्।
स्वरस्सत्वं च नाभिश्च त्रिगम्भीरमिहास्ति हि॥ ४८
उत्तमाङ्गं ललाटं च द्विविस्तीर्णमिहाभवत्।
सर्वाणि लक्षणान्यस्मिन् सन्ति सद्गुणसंयुते॥ ४९

तस्मात्साम्राज्यपदवीमधिगम्य स जीवति ।
इति निश्चित्य मनसा मदनारिरथात्मजम् ।। ५०
सर्वलक्षणसंपन्नं सर्वसद्गुणसंयुतम् ।
शान्तं निर्मलचित्तं च नीतिशास्त्रविशारदम् ।। ५१
कृपया पूर्णहृदयं जगदाह्लादकारिणम् ।
धर्तुं महान्तं भूभारं भुजेनायत्नतः क्षमम् ।। ५२
विलोक्य भगवानीशस्सर्वलोकैकनायकः ।
पूर्वं वैवाहिकं कर्म निर्वर्त्त्य च ततः परम् ।। ५३
अयं राज्याभिषेकार्ह इति निश्चित्य मानसे ।
ततस्सचिवसङ्घैश्च पुत्रोद्वाहमचिन्तयत् ।। ५४
कथितैकादशी लीला पुत्रसम्पत्प्रदायिनी ।
श्रुता सौभाग्यजननी ह्यायुरारोग्यदायिनी ।। ५५

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये उग्रपाण्ड्यावतारो नाम*
*पञ्चदशोऽध्यायः*

## அத்தியாயம்- 15
## 11. உக்ர பாண்டிய அவதாரம்

*அகஸ்தியர் கூறுகிறார் :- கருத்தரித்துள்ள தடாதகையின் மசக்கை விருப்பங்களனைத்தையும் ஈசனின் கணங்கள் உடனுடன் பெற்றுத் தந்தனர். கர்ப்பத்தைக் காப்பதற்குரிய சடங்குகளை அவ்வப்போது ஸுந்தரர் செய்தார். உரிய நேரத்தில் திருவாதிரை நக்ஷத்திரத்தில் திங்களன்று, லக்ன*

கேந்திரத்தில் குரு ஸாம்ராஜ்ய பதவி தருபவராக அமர்ந்திருக்க, ஷண்முகரே ஒரு முகத்துடன் புதல்வனுகப் பிறந்தார். அந்தப் பெருவிழாவில் சிறையுற்ற அரசர்கள் விடுதலையடைந்தனர். நாடு மிகக் கோலாஹலத்துடன் விழா கொண்டாடியது. தேவர்களும் முனிவரும் மாந்தரும் பெரு மகிழ்ச்சியுற்றனர். சூழ்நிலை தெளிந்து நிறைந்து காணப்பட்டது. எல்லோரும் திருப்தியுறும்படி ஆடை ஆபரணங்கள் உணவு முதலியவை மகிழ்ச்சியும் கோலாஹலமும் துலங்க வழங்கப்பட்டன.

நான்காவது மாதத்தில் வீட்டிற்கு வெளியே சிசு வந்து வானம் பார்த்தது. ஆருவது மாதத்தில் அன்னப் பராசனம், மூன்ருவது வயதில் சூடா கர்மம், ஐந்தாவது வயதில் உபநயனம், தொடர்ந்து அறு பத்து நான்கு கலைகளில் பயிற்சி, தனித்து ஆயுதப் பயிற்சி, மந்திர பிரயோக முறையுடன் தனுர்வேதப் பயிற்சி, என தன் எட்டாவது வயதில் உக்ரன் தேர்ந்த அறிவாளியாஞன். ஸாமுத்ரிகா லக்ஷணப்படி முப்பத்திரண்டு லக்ஷணங்களும் அவனிடம் பொருந்தியிருந்தன. கைகள், கண்களின் ஓரங்கள், தாவடை, மூக்கு, ஸ்தனங்களிடையே இடைவெளி இவை நீண்டிருந்தன. நாக்கு, குறி, புட்டம், கணுக் கால், இவை குட்டை. விரல் கணுக்கள், கேசங்கள், தந்தங்கள், நகம், தோல் இவை மென்மையுடனிருந்தன. கக்கம், வயிறு, நெற்றி, தோள், மூக்கு, மார்பு இவை மேடிட்டு உயர்ந்திருந்தன. உள்ளங்கால் உள்ளங்கை, கண்ஞேரம், நகம், மேலண்ணம், நாக்கு, உதடு, இவை சிவந்திருந்தன. தலையும் நெற்றியும் விசாலமாக இருந்தன. குரலும் வலிவும் தொப்புளும் ஆழ்ந்திருந்தன. இவை பாக்கிய நிறைவு, நீண்ட ஆயுள், பெருஞ் செல்வம், இன்பப் பெருக்கு, இவற்றைக் குறிப்பவை. அதஞல் சிறந்த அரசஞக இருக்கத் தகுதி நிறைந்தவன் எனக் கண்டு ஸௌந்தரர் பட்டாபிஷேகம் செய்விக்க நினைத்தார். இது பதினேருவது திருவிளையாடல்.

★ ★ ★

षोडशोऽध्यायः

# १२. उग्राय आयुधदानम्।

अगस्त्यः-

वलयाद्यायुधानाञ्च प्रदानञ्च ययाऽकरोत्।
उग्रायोग्रश्च तां लीलां वक्ष्येऽहं मुनिपुङ्गवाः ॥ १
अथ सङ्कल्पसिद्धेन मधुरानायकेन च।
चिन्तिते सति पुत्रस्य वैवाहिकमहोत्सवे ॥ २
सोमशेखरभूपालः सूर्यवंशशिरोमणिः।
कल्याणनगरीनाथः शंभुध्यान परायणः ॥ ३
अत्युग्रतपसा लब्धां सर्वलक्षणसत्खनिम्।
कन्यां कान्तिमतीं नाम्ना महालक्ष्मीमिवापराम् ॥ ४
शम्भुना चोदितः स्वप्ने विमानमधिरोप्य च।
मनोवेगात्समायातो मधुरे मधुरापुरे ॥ ५
हालास्येशाज्ञया सद्य आगतं सोमशेखरम्।
श्रुत्वा विस्मयसंयुक्तास्सचिवा अभवंस्तदा ॥ ६
अथाभिमुखमासाद्य मन्त्रिणः स्वागतादिभिः।
उपचर्य सुसन्तोष्य मधुरैर्वचनैरपि ॥ ७
तं नृपं प्रापयामासुर्देवपाण्ड्यस्य सन्निधिम्।
सिंहासने निविष्टं तं देवतानां च दैवतम् ॥ ८
अभीष्टमखिलं दातुमुद्युक्तं जन्मिनां सदा।
सत्यं विज्ञानमानन्दं परं ब्रह्म परात्परम् ॥ ९

परं ज्योतिः परशिवं परं वस्तु परामृतम्।
इति वेदशिरोभिश्च सङ्गीतं परमेश्वरम्।। १०
सर्वावयवशोभाढ्यं सर्वाभरणभूषितम्।
श्रीमद्धालास्यनाथं तं राजवेषधरं मुदा।। ११
दृष्ट्वा सुन्दरपाण्ड्येशं लोचनानां महोत्सवम्।
सौवर्णैः पुष्पजालैश्च नवरत्नैरनर्घकैः।। १२
संपूज्य चरणौ तस्य प्रणनाम महीपतिः।
तमुत्थाप्य समालिङ्ग्य भक्तभक्तो महेश्वरः।। १३
अनुग्रहकरैर्वाक्यैरम्बरैर्भूषणैरपि।
सन्तोष्य प्रेषयामास दत्वाऽऽवसथमुत्तमम्।। १४
ततस्तु मन्त्रिणस्सर्वे कल्याणार्थं समुद्यताः।
शासनं प्रेषयामासुः सर्वेषां भूभुजामपि।। १५
राजानस्तेऽपि मधुरामुपदाभिरपूरयन्।
अथ नीपाटवीनाथः समाहूय बृहस्पतिम्।। १६
चोदयामास कन्याया लक्षणानि परीक्षितुम्।
ततस्स रहसि प्राप्तस्सुस्नातवरविग्रहाम्।। १७
कन्यां कान्तिमतीं दृष्ट्वा सर्वावयवमञ्जुलाम्।
तस्याः केशादिपादान्तं लक्षणानि परीक्ष्य च।। १८
देवान्तिकं ततः प्राप्य प्राह गीर्वाणदेशिकः।
स्वामिन् सर्वज्ञ भूतेश महादेव जगद्गुरो।। १९
सर्वलक्षणसंपन्ना सोमशेखरकन्यका।
सर्वज्ञेन त्वया ज्ञाता तथाऽपि श्रीमदाज्ञया।। २०

परीक्षिता मया चाद्य सम्यक्छास्त्रोक्तमार्गतः ।
कान्तिमत्या लक्षणानि वक्ष्ये वरतराणि च ॥ २१
देवलोकेऽपि सदृशी तया कन्या न विद्यते ।
केशा मूर्द्धा ललाटश्च लोचने नासिका तथा ॥ २२
श्रोत्रगण्डोष्ठदन्ताश्च जिह्वा च चिबुकं तथा ।
कण्ठवक्षोभुजाः पाणितलांगुलिनखा अपि ॥ २३
वक्षोजयुगलं कुक्षिर्नाभिर्जघनमण्डलम् ।
ऊरू जानुद्वयं जङ्घे गुल्फे च प्रपदे तथा ॥ २४
अङ्गुल्यश्च नखाः पादतलगन्धस्वरास्तथा ।
वर्णश्च वनितानां च द्वात्रिंशल्लक्षणानि च ॥ २५
कालाभ्रभ्रमरा नीलाः स्निग्धास्सूक्ष्माः सुकोमलाः ।
किञ्चिदाकुञ्चिताः केशाः सौभाग्यैश्वर्यसूचकाः ॥ २६
गजकुम्भनिभो मूर्धा सुवृत्तश्च समुन्नतः ॥
भर्तुरायुष्यदश्शास्तस्सार्वभौमपदप्रदः ॥ २७
अलिकं चार्धचन्द्राभं सिरारोमविवर्जितम् ।
अनिम्नं त्र्यङ्गुलोत्सेधं सौभाग्यारोग्यकारणम् ॥ २८
रक्तान्ते लोचने शस्ते सुस्निग्धे कृष्णतारके ।
गोक्षीरवर्णविशदे कोमळे कृष्णपक्ष्मणी ॥ २९
समवृत्तपुटा नासा तिलपुष्पसमा शुभा ।
प्रलम्बौ च तथा कर्णौ शुभावर्तौ शुभप्रदौ ॥ ३०
शस्तौ कपोलौ वामाक्ष्याः पीनौ वृत्तौ समुन्नतौ ।
पाटलौ वर्तुलौ स्निग्धौ रेखाभूषितमध्यमौ ॥ ३१

यस्याश्चौष्ठश्चाधरश्च सारङ्गस्य प्रिया भवेत्।
गोक्षीरधवलाः स्निग्धा द्वात्रिंशद्दशनाश्शुभाः ।। ३२
अधस्तादुपरिष्टाच्च समाः स्तोकसमुन्नताः ।
जिह्वेयमिष्टभोक्त्री स्याच्छोणा मृद्वी सुकोमला ।। ३३
चिबुकं द्व्यङ्गुलं शस्तं वृत्तं पीनं च मञ्जुलम्।
मांसलो वर्तुलः कण्ठः प्रशस्तश्चतुरङ्गुलः ।। ३४
त्रिरेखाभिर्युतश्चेत्स भर्तुस्साम्राज्यसूचकः ।
अष्टादशाङ्गुलततमुरः पीवरमुन्नतम्।। ३५
रोमभिश्च सिराभिश्च विहीनं चेत् प्रशस्तकम्।
निर्दोषौ च भुजौ स्यातां गूढास्थिग्रन्थिकोमलौ ।। ३६
सिरारोमविनिर्मुक्तौ सुवृत्तौ हरिणीदृशाम्।
मृदुमध्योन्नतं रक्तं तलं पाण्योररन्ध्रकम्।। ३७
प्रशस्तं शस्तरेखाढ्यमल्परेखं सुखप्रदम्।
करशाखास्सुपर्वाणो वृत्ता दीर्घाः क्रमात्कृशाः ।। ३८
प्रशस्ताः कामिनीनां च सुखसम्पत्तिहेतवः ।
स्निग्धाः समुन्नतास्ताम्रा वृत्ताः कान्ता नखाःशुभाः ।। ३९
सुवृत्तौ सुदृढौ पीनौ समौ शस्तौ पयोधरौ।
उदरेणातितुच्छेन विसिरेण मृदुत्वचा ।। ४०
योषित् भवति भोगाढ्या नित्यं मृष्टान्नसेविनी।
गम्भीरा दक्षिणावर्ता नाभिस्स्यात्सुखसम्पदे ।। ४१
जघनं कमठीपृष्ठगजकुम्भनिभं शुभम्।
करीन्द्रशुण्डाकरभकदलीकाण्डसन्निभम्।। ४२

ऊरुद्वयं प्रशस्तं स्यात् विसिरं रोमवर्जितम्।
वृत्तं पिशितसम्मग्नं जानुयुग्मं प्रशस्यते।। ४३
रोमहीने समे स्निग्धे यज्जङ्घे क्रमवर्तुले।
सा राजपत्नी भवति विसिरे सुमनोहरे।। ४४
गूढौ गुल्फौ शुभायोक्तावसिराळौ सुवर्तुलौ।
प्रपदं मांसलं स्त्रीणां सिराहीनं समुन्नतम्।। ४५
कमठीकर्पराकारं शुभं राज्ञीत्वसूचकम्।
पादाङ्गुल्यो घना वृत्ता मृद्व्यश्शस्तास्समुन्नताः ।। ४६
नखाश्चार्धेन्दुसदृशा निर्मलाः कोमलाश्शुभाः ।
मांसलं मृदुलं स्निग्धं स्त्रीणां पादतलं समम्।। ४७
अस्वेदमुष्णमरुणं सर्वसौभाग्यकारणम्।
फुल्लकल्हारकमलपाटलीचम्पकादिभिः ।। ४८
पुष्पैस्समः स्याद्गन्धश्च शुभो नारीवपुर्भवः ।
कोकिलानां शुकीनां च वल्लकीनां स्वरैस्समः ।। ४९
स्वरश्च शोभनायोक्तः स्त्रीणां सौभाग्यसूचकः ।
तप्तकाञ्चनसङ्काशा कान्तागात्रप्रभा वरा।। ५०
उक्तानां लक्षणानाञ्च विपरीतानि यानि च।
तानि दुर्लक्षणानि स्युर्ज्ञातव्यानि विपश्चिता।। ५१
पुरा त्वयोपदिष्टानि मया चावधृतानि च।
सल्लक्षणानि यान्यद्य दृष्टानि निखिलानि च।। ५२
सुलक्षणेयं कल्याणी कन्या कान्तिमती प्रभो।
परिणेया कुमारेण ध्रुवं भगवदाज्ञया।। ५३

इत्युक्त्वा गीष्पतिर्भक्त्या शम्भोश्चरणपङ्कजे ।
निधाय च मनो नेत्रे तूष्णीमास्ते सुनिश्चलः ।। ५४
अथ सुन्दरपाण्ड्येशः सर्वज्ञः सर्वकर्मसु ।
कुशलः सुमुहूर्ते च लग्ने सुग्रहसंयुते ।। ५५
विधिविष्णुसहस्राक्षप्रमुखैर्देवतागणैः ।
मुनीन्द्रैरपि निर्वर्त्य व्रतानि स्नातकर्म च ।। ५६
सोमशेखरभूपेन सकलत्रेण धीमता ।
धारापूर्वं प्रदत्तायाः कन्यकाया विधानतः ।। ५७
पाणिग्रहणकर्माणि स्वपुत्रस्य समाप्य च ।
कल्याणोचितवेषाढ्यालङ्कारालङ्कृतं सुतम् ।। ५८
आरोप्य सहसा देवो मत्तमातङ्गकन्धरम् ।
पुरीं प्रदक्षिणीकृत्य मधुरां समलङ्कृताम् ।। ५९
सर्वाभीष्टप्रदातारमीड्यमिन्द्रादिदैवतैः ।
कुलोचितं शम्भुलिङ्गं वन्दयित्वाऽऽत्मजेन च ।। ६०
स्वकेतनं प्रवेश्याथ सर्वमङ्गलसंभृतम् ।
पुत्रं भद्रासने स्थाप्य कान्तिमत्या च कान्तया ।। ६१
गङ्गादितीर्थसलिलैर्हेमकुम्भसुसंभृतैः ।
निगमोक्तैश्च विधिभिरभ्यषिंचन्महोत्सवम् ।। ६२
ततस्सितातपत्रं च चामरे द्वे प्रदाय च ।
अन्यानि यानि चिह्नानि राज्ञां तानि ददौ मुदा ।। ६३
उग्रायोग्रश्च वलयं शक्तिं चण्डायुधं क्रमात् ।
दातुमुद्योगमकरोत् हालास्येशो मुनीश्वराः ।। ६४

आयुधत्रयदानस्य कारणं कथयाम्यहम्।
पुरा शम्भोरवमतिं कदाचित् भाग्यहानितः ॥ ६५
इन्द्राब्धिमेरवश्चक्रुस्तदीशस्य हृदि स्थितम्।
तस्मात्तान् बाधितुं तैश्च शक्रादीन् कुपितः शिवः ॥ ६६
दिव्यं हैमं महाभासं चित्रकर्मसमावृतम्।
तपनायुतसङ्काशं मणिजालैरलङ्कृतम्॥ ६७
प्रादात्सुताय वलयं वलभिन्मौलिताडनम्।
दीप्तज्वालावलीयुक्तां ज्वलनाभतनुप्रभाम्॥ ६८
निशितातुलसद्धारां मन्त्रजालैरधिष्ठिताम्।
पयोनिधिं चाक्रमितुं शक्तिं च प्रददौ ततः ॥ ६९
भीषणं प्रहृवदनं प्रभाभासुरमद्भुतम्।
दृढमायतसर्वाङ्गमरिभिर्दुर्निरीक्षणम्॥ ७०
चण्डायुधं कन्तुकवत् गिरिं कर्तुं ददौ ततः ।
एतैरेतान्पीडयेति पौनःपुन्येन चाब्रवीत्॥ ७१
तान्गृहीत्वोग्रनामा च तनयः प्रहृमानसः ।
ननाम देवदेवस्य पादौ भक्त्या विशुद्धधीः ॥ ७२
उत्थाप्यालिङ्ग्य तनयं समाघ्राय च मूर्धनि।
राज्यभारक्षमं मत्वा रामाजनमनोहरम्॥ ७३
दृष्ट्वा पुत्रं सुन्दरेशः स्वधामनि मनो दधौ।
वत्सराणां च षट्षष्टिसहस्रं परमेश्वरः ॥ ७४
भूलोकशिवलोकाख्यां मधुरां परिपाल्य च।
अथोग्रे भारमारोप्य पृथिव्या लोकरक्षकः ॥ ७५

काश्यपीं मुदितस्सम्यक्पालयेत्यभिधाय च ।
तटातकाख्यया देव्या परमं हर्षमुद्वहन् ।।
अन्तर्दधे महालिङ्गे सार्धं स्वगणनायकैः ।
तदाप्रभृति भूलोकमुग्रस्तूग्रपराक्रमः ।
यथा पित्रा समादिष्टं शशास स मुदा नृपः ।। ७७
सार्वभौमेन चोग्रेण सर्वे लोकाः कृतार्थताम् ।
सम्प्रापुस्सततं प्रीताः सप्रजास्तद्गुणाश्रिताः ।। ७८
जीवन्मुक्तिपुरीशस्य लीलेयं द्वादशी मता ।
सकृच्छ्रवणमात्रेण पुरुषार्थान् प्रयच्छति ।।

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये आयुधत्रयदानं*
*षोडशोऽध्यायः*

* * *

## அத்தியாயம் -16
## 12. உக்ரபாண்டியனுக்கு ஆயுதமளித்தல்

*அகஸ்தியர் கூறுகிறார் :- ஸுந்தரர் தன் புதல்வனுக்குத் திருமணம் முடிக்க முற்பட்டார். கல்யாண நகரின் அரசனும் ஸூர்ய வம்சத்தில் பிறந்தவனும், சிவபக்தனுமான ஸோமசேகரன் கடுந்தவத்தால் பெற்ற தன் குமாரி காந்திமதியை ஈசனுல் கனவில் தூண்டப் பெற்று விமானத்தில் ஏற்றி அழைத்துக் கொண்டு உக்ரனுக்குத் திருமணம் செய்து வைக்க மனோ வேகத்துடன் மதுரையை அடைந்தான். இதனை அறிந்த மந்திரிகள் வியப்புற்று அரசரிடம் தெரிவித்தனர். ஸுந்தரேச்வரரே அரசர் வடிவில்*

சிங்காதனத்தில் அமர்ந்துள்ளதைக் கண்டு வணங்கி ஸோமசேகரன் தன் விருப்பத்தைத் தெரிவிக்க அதனை ஏற்ற ஸுந்தர பாண்டியர் எல்லா அரசர்களுக்கும் அழைப்பு விடுத்தார். பிருஹஸ்பதியை அந்த மணப் பெண் காந்திமதியைக் கண்டு, அவளிடம் நாட்டின் அரசிக் கேற்ற தெய்விக லக்ஷணங்கள் உள்ளனவா எனக் கண்டறிய அனுப்பினார் (1-18).

பிருஹஸ்பதியும் அரசிக்குரிய எல்லா லக்ஷணங்களும் காந்திமதியிடம் நிரம்பியுள்ளதைத் தெரிவித்தார். ஸோமசேகர அரசன் தன் மனைவியுடன் காந்திமதியை சுபமுஹூர்த்தத்தில் கன்யகாதானமாக உக்ரபாண்டியரிடம் தந்தார். பாணிக்ரஹணம் முடிந்ததும் நகரவலம் வந்து குலதேவதையான சிவலிங்கத்தை வழிபட்டுத் தம் மாளிகைக்கு வந்த உக்ரரையும் காந்திமதியையும் பத்ராஸனத்தில் அமர்த்தி கங்கை முதலிய நதிகளின் நீரால் நீராட்டி வெண்கொடை சாமரம் முதலிய அரச சின்னங்களைத் தந்த ஸுந்தரர் உக்ரருக்கு வளயமும் சக்தியும் செண்டும் ஆயுதமாகக் கொள்ள வழங்கினார்.

இந்திரனும் கடலும் மேருவும் தமக்கிழைத்த அவமதிப்பிற்கான தண்டனை அளிக்க அவை அளிக்கப்பட்டன. இந்திரனின் தலையில் தட்ட பேரொளி கொண்ட வளையம்; கடலை வற்றவைக்க சக்தி, மேருவைப் பந்தாடச் செண்டு தரப்பட்டது. உக்ர மஹாராஜனிடம் அரசுப் பொறுப்பை ஒப்படைத்து தடாதகையுடன் ஸுந்தரர் ஹாலாஸ்யேசலிங்கத்தினுள் மறைந்தார். அதன் பின் உக்ரர் பாண்டிய நாட்டை ஆண்டார். இது பன்னிரண்டாவது திருவிளையாடலாகும்.

## सप्तदशोऽध्यायः

### १३. सिन्धोः शक्त्या ताडनम्।

अगस्त्यः-

सिन्धोश्शक्त्या ताडनञ्च यया सुन्दरनायकः।
उग्रेण कारयामास तां लीलां कथमामि वः ॥ १
प्राज्ञे सति महीपाले प्रजापालनतत्परे।
उग्राभिधाने सन्मार्गसम्मते सत्यसङ्गरे ॥ २
प्रजास्सर्वाश्च सन्तुष्टाः सम्पदा परयाऽन्विताः।
स्वस्वधर्मरताः स्वच्छमानसा अभवंस्तदा ॥ ३
रञ्जनात् खलु राजत्वं नृणामेवानुपालनात्।
नृपत्वं परमो धर्मः प्रजानामेव पालनम्॥ ४
राज्ञामिति विनिश्चित्य सुन्दरेशात्मजः प्रभुः।
सहायैस्सचिवैस्सार्धं सर्वदाऽपालयत् प्रजाः ॥ ५
कृषिभिर्हृष्टपुष्टैश्च रम्यहाटकभूषणैः।
जनैर्निबिडितं सर्वं सस्यगोधनपूरितम्॥ ६
देवतायतनानाञ्च राजिभिः परिराजितम्।
निस्सपत्नं महद्राज्यञ्चकारोग्रः प्रतापवान्॥ ७
नद्यः कुटिलगा एव न तस्य विषये प्रजाः।
क्षपा एव तमोयुक्ता रजोयुक्ता मृगीदृशः ॥ ८
दण्डवार्ताऽपि परशुकुद्दालव्यजनादिषु।
औषधेष्वेव कुष्ठं स्यात्तद्योगो न हि मानवे ॥ ९

कठोरहृदयास्तत्र सीमन्तिन्यो न मानवाः ।
विभ्रमस्तत्र नारीषु न विद्वत्सु जनेषु च ।। १०
इभा एव प्रमत्ताश्च युद्धं वीच्योर्जलाशये ।
दानहानिर्गजेष्वेव द्रुमेष्वेव हि कण्टकाः ।। ११
सयूपाः सन्ति वै ग्रामास्तत्र विद्वज्जनोषिताः ।
पुष्पिताः फलिता नित्यं बहवः पुण्यभूरुहाः ।। १२
लाङ्गलीपनसाम्राद्यास्सन्ति तत्र पदे पदे ।
उद्यानानि विचित्राणि पुष्पितानि निरन्तरम् ।। १३
तटाकान्यपि कल्हारकमलोत्पलवन्ति च ।
इत्यादिगुणवद्देशे तस्मिन् राज्यं प्रशासति ।। १४
धर्मेण राजधर्मज्ञे शौर्यौदार्यगुणान्विते ।
मार्ताण्डवत् प्रतपति दुर्हृदां हृदि नेत्रयोः ।। १५
सुहृदां सोमवज्जाते मानसेषु च नेत्रयोः ।
विशेषतोऽभिवृद्धिश्च सर्वेषां प्राणिनामभूत् ।। १६
उग्रेण सार्वभौमेन यज्ञाश्च बहुदक्षिणाः ।
विविधा राजसूयाद्याः कृताश्च विधिनाऽऽदरात् ।। १७
अखण्डमाखण्डलवत् कोदण्डं कलयन् रणे ।
पलायमानैरालोकि शत्रुसेनासमूहकैः ।। १८
अथाश्वमेधयज्ञानां कृता षण्णवतिः क्रमात् ।
उग्रेण पाण्ड्यराजेन देवराजाधिकश्रिया ।। १९
इन्द्रो भीत्याऽसूयया च महत्या च क्रुधा युतः ।
प्रजारक्षणमेवास्य सम्पद्वृद्धेश्च कारणम् ।। २०

तद्धर्महानिः कर्तव्या मयोपायान्तरेण च।
तस्य सम्पद्विवृद्धिश्च यथा सद्यो विनश्यति।। २१
इति निश्चित्य मतिमानाहूय सरितां पतिम्।
महाकल्लोलजालैश्च भयङ्करमहर्निशम्।। २२
कबलीकर्तुमुग्रस्य पुरीमत्यमरावतीम्।
मधुराञ्चोदयामास महदम्भःप्रवाहकैः ।। २३
देवेन्द्राज्ञाभयात्सद्यः समुद्रः सम्भ्रमान्वितः ।
आयातो मूललिङ्गस्य माहात्म्यमविचारयन्।। २४
उदधावर्धरात्रे तु पूरतो मधुरां गते।
महद्भिर्गिरिसङ्काशैः कल्लोलैः पूरितात्मनि।। २५
भीतास्सद्यः प्रजास्सर्वाः प्रपलायितुमुद्यताः ।
हालास्येशो महेशानः सर्वज्ञः करुणानिधिः ।। २६
समालोक्य प्रजानाञ्च तमुपप्लवमीश्वरः ।
उग्राभिधानं भूपालं स्वप्न एवं समादिशत्।। २७
उत्तिष्ठोत्तिष्ठ नृपते त्वदीयां मधुरापुरीम्।
जलधिः कबलीकर्तुं समुद्युक्तो महारवः ।। २८
किं त्वं राजाऽसि भूपाल प्रजा एता अरञ्जयन्।
क्षतात्त्रायत इत्येव प्राणिनः क्षत्रसंज्ञकः ।। २९
नराणां पालनादेव नृपो भवति भूमिपः ।
एतद्विपर्ययप्रायः किं त्वं जीवितुमर्हसि।। ३०
लक्ष्मीं विहाय शर्वर्यां निद्रया किं विनोदसे।
रक्ष प्रजाः प्रजानाथ पारावारभवाद्भयात्।। ३१

प्रजानां रक्षणोपायं मत्तश्शृणु महीपते।
पुरा दत्तां मया शक्तिमादायाब्धौ जवात् क्षिप ॥ ३२
शक्तिताडनभीतः सन्निर्वीर्योऽब्धिर्भविष्यति।
अगत्वाऽत्र स्थितश्चेस्त्वं त्वामेनाश्च पुरीं तव ॥ ३३
मधुरां सर्वलोकाढ्यामसौ कबलयिष्यति।
इत्युक्त्वा भस्मना फालमलङ्कृत्यात्मजस्य च ॥ ३४
अनुग्रहकरेणापि करेणोत्थाप्य तं मुदा।
सत्वरं गच्छ गच्छेति समाज्ञाप्य तिरोदधे ॥ ३५
स बुध्वा सहसोत्थाय मन्त्रिभ्यः स्वप्नमब्रवीत्।
स्वप्नवृत्तान्तमखिलं श्रुत्वा विस्मितमानसाः ॥ ३६
ईश एव प्रेषयिता नैवान्यो मधुरापते।
यथाश्रुतं त्वया स्वप्ने तथा कुर्विति तेऽब्रुवन् ॥ ३७
उग्रस्यात्मज उग्रश्च महाबलपराक्रमः।
महतीं शक्तिमादाय गत्वाऽब्धिं सम्भ्रमान्वितः ॥ ३८
सुन्दरेशोपदिष्टं तमुपदेशं स्मरन्नसौ।
अतिष्ठत् क्षणमम्भोधिं विलोक्य गतसाध्वसः ॥ ३९
अम्भस्सङ्घट्टनोद्भूततूर्यध्वनिसमाकुलम्।
दुष्टसत्वानेकभटपरिपूरितपार्श्वकम् ॥ ४०
जलप्रवाहसङ्घुष्टशङ्खघोषसमायुतम्।
श्रेणीकृतोर्मिसङ्घातपुरस्सरविजृम्भितम् ॥ ४१
स्वराज्यग्रहणोद्युक्तपरसैन्यमिवागतम्।
सिद्धवेषं विचित्रं च धृत्वा हालास्यनायकः ॥ ४२

सार्धं कुमारेणोग्रेण तत्रागच्छत्ससम्भ्रमम्।
तत्कारुण्यकटाक्षेण चोदितस्सन्महीपतिः ।।४३
जलप्रवाहमम्भोधेः संहर्तुं शक्तिमाददे।
सुवर्णकिङ्किणीजालकोलाहलविराजिताम्।। ४४
कालानलसमज्वालामालां मन्त्राभिमन्त्रिताम्।
शक्तिं विक्षिप्य विदधे पार्ष्णिदघ्नं सरित्पतिम्।। ४५
तं दृष्ट्वा सुन्दरेशस्तु सहसा प्रीतमानसः।
प्रददावुग्रसंज्ञाय तस्मै राज्ञे वरान् बहून्।। ४६
संघञ्च विदुषां तत्र समकल्पयदीश्वरः।
मधुरासंस्थितस्सङ्घ उत्तमो मध्यमोऽभवत्।। ४७
अयं सङ्घस्तृतीयस्तु गङ्गातीरे भविष्यति।
इत्युक्त्वा लोकहितकृज्जीवन्मुक्तिपुरेश्वरः ।। ४८
ज्योतिर्मयं वपुर्धृत्वा कोटिशीतांशुसन्निभम्।
प्रत्यक्षेण जनैस्सर्वैर्दृश्यमानोऽतिविस्मितैः ।। ४९
नभोमार्गेण चागत्य मूललिङ्गे तिरोदधे।
एतदाश्चर्यमालोक्य स सम्राट्सचिवैस्सह ।। ५०
सहसा च समागत्य मूललिङ्गस्य सन्निधिम्।
स्तुत्वा च विविधैः स्तोत्रैः प्रणिपत्य पुनः पुनः ।। ५१
समस्तसस्यसम्पूर्णकेदारसमलङ्कृताम्।
महाविशालगम्भीरतटाकपरिशोभिताम्।। ५२
मूललिङ्गपुरोभागमारभ्य महतीं महीम्।
ददौ समुद्रपर्यन्तां हालास्येशाय शम्भवे।। ५३

इयं त्रयोदशी लीला सर्वापद्भञ्जनी श्रुता।
दुर्गतेरपि संहर्त्री कामितार्थप्रदायिनी ॥ ५४

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये शक्त्या सिन्धुताडनं नाम*
*सप्तदशोऽध्यायः*

## அத்தியாயம் -17

## 13. கடலைச் சக்தியாயுதத்தால் வரளச் செய்தல்

*அகஸ்தியர்:-உக்ர பாண்டியன் மிகச் சிறப்புடன் அரசை ஆண்டான். கெட்டவரது இதயத்தில் சூரியனுகச் சுட்டான். நல்லவரின் மனத்தில் சந்த்ரனைப்போல் குளிர்ந்தவனுக இருந்தான். 96 அசுவமேத யாகங்களைச் செய்துவிட்டான். அதற்குள்ளேயே இந்திரன் அவனிடம் பொருமையும், பயமும் கொண்டான். மக்களைக் காப்பதில் நிகரற்றிருப்பதாலேயே அரசர் செழிக்கிருர். மக்களுக்குக் கேடு விளைவித்தால் அரசரது புகழ் மங்குமென நினைத்து இந்திரன் கடலைப் பொங்கவைத்து மதுரையை விழுங்கத் திட்டமிட்டான். கடலும் இந்திரனது கோபத்திற்குப் பயந்து மதுரையை நோக்கிக் கொந்தளித்து முன்னேறியது. மக்கள் நடுங்கி அங்கிருந்து வெளியேற முற்பட்டனர்.*

*ஹாலாஸ்ய நாதர் உக்ரரை எழுப்பி நேரவிருக்கிற அபாயத்தைக் கூறி மக்களைக் காக்கத் தூண்டினுர். தான் முன்னர் தந்த சக்தி ஆயுதத்தைக் கொண்டு கடலைத் தாக்குவாய் எனக் கூறி அவரது நெற்றியில் விபூதி பூசி அனுப்பினுர். தானும் ஒரு ஸித்த வேஷத்தில் பின் தொடர்ந்தார். நன்கு மந்திர ஜபம் செய்து ஏவப் பெற்ற சக்தி கணத்தில் கடலை கணைக்காலளவு ஆழம் கொண்டதாக்கியது. ஈசன் மனமகிழ்ந்து உக்ரனுக்குப் பல வரங்களை அளித்தார். அங்கும் அறிஞர்களின் சங்கம் ஒன்றை ஈசன் அமைத்தார். மதுரையில்*

உள்ளது முதற் சங்கம். இது இரண்டாவது. காசியில் மூன்றாவது சங்கம் அமைய விருக்கிறது. சோதி வடிவில் மாறிய ஈசன் மதுரையில் மூல லிங்கத்தில் மறைந்தார். அரசனும் மதுரை திரும்பி மூல லிங்கத்தை வணங்கி கடலின் தாக்குதலிலிருந்து மீட்ட பூமியை அவருக்கே அளித்தான். இது பதிமூன்றாவது லீலை.

## अष्टादशोऽध्यायः

## १४. इन्द्रमौलिभेदनम्

अगस्त्यः -

कदम्बवननाथस्य करुणासागरस्य च।
वक्ष्यामि महतीं लीलां वृत्रारेमौलिभेदिनीम्॥ १
इन्द्रस्य पाण्डचभूपानां वैमत्यं किञ्चिदस्ति हि।
हेतुर्न ज्ञायते तस्य देवाद्यैः कृतिभिर्जनैः॥ २
तद्धेतुरुक्तः स्कन्देन मया पृष्टेन सादरम्।
यूयमेतद्रहस्यञ्च शृणुध्वं मुनिपुङ्गवाः॥ ३
पुरा चेरस्य चोलस्य पाण्डचस्य च महीपतेः।
देशा ग्रहाणां वक्रेण कदाचिद्वृष्टिवर्जिताः॥ ४
व्रीह्यादिसर्वधान्यानि नद्यादिषु जलान्यपि।
तृणान्यपि च सर्वत्र दुर्भिक्षाण्यभवन् भृशम्॥ ५
कृशानि गोधनान्यासन् वृक्षाद्याश्शुष्कतां गताः।
प्रजास्सर्वास्सुसन्तप्ताः पक्षिणश्च मृगा अपि॥ ६

तमुपप्लवमालोक्य प्राणिनां ते च पार्थिवाः ।
सम्भूय सहसैकत्र विचार्य च परस्परम् ॥ ७
मदीयनिलयं प्रापुर्मलयाचलमध्यगम् ।
श्रीहालास्ये शिवपदे द्वादशान्तगते परे ॥ ८
कल्मषारण्यकालाग्निं कालकालं कपालिनम् ।
कालकूटलसत्कण्ठं कदम्बवननायकम् ॥ ९
कामितार्थप्रदातारं कान्तं कान्तार्धविग्रहम् ।
कारणं पञ्चकृत्यानां कामशासनमीश्वरम् ॥ १०
चिरन्तनं महालिङ्गं पुरन्दरमुखामरैः ।
निरन्तरसुखावास्यै विचिन्तितपदाम्बुजम् ॥ ११
शिवं तं ध्यायमानस्य ममान्तिकमुपागताः ।
उक्तवन्तो वृष्ट्यभावं ते महीपालपुङ्गवाः ॥ १२
दिव्यदृष्ट्या समालोक्य ग्रहाणां वक्रतामहम् ।
उक्तवानथ तेभ्यश्च वृष्ट्यभावस्य कारणम् ॥ १३
हे पाण्ड्यचेरचोलाश्च शृण्वंतु नृपपुङ्गवाः ।
अद्यारब्धा त्वनावृष्टिः क्रूरा द्वादशवार्षिकी ॥ १४
अङ्गारकश्च सूर्यश्च पृष्ठीकृत्य च भार्गवम् ।
गच्छतस्तावुभावग्रे शुक्रो वक्रो महानभूत् ॥ १५
तस्माद्द्वादशवर्षाणां मध्ये वृष्टेर्न कारणम् ।
उत्पन्नेयमनावृष्टिः समाना जगतीतले ॥ १६
तथाऽपि युष्मद्देशेषु वृष्ट्युपायं वदाम्यहम् ।
हालास्यनायको देवो भक्तापद्भञ्जने रतः ॥ १७

बुभुक्षूणां मुमुक्षूणां भोगमोक्षौ प्रयच्छति ।
ये महोत्पातभीताश्च ये महाव्याधिपीडिताः ।। १८
ये कृतान्तप्रभीताश्च तैस्सेव्यस्सुन्दरेश्वरः ।
पुरा मृकण्डुतनयः कालपाशेन पीडितः ।। १९
तं जित्वा नित्यतां प्राप महालिङ्गसपर्यया ।
हालं सागरजं घोरं संहृत्य भुवनत्रयम् ।। २०
रक्षतीशस्तदा चासीन्नाम्ना हालास्यनायकः ।
शैलादिश्च तमाराध्य लब्ध्वा सारूप्यमैश्वरम् ।। २१
विविधानां च सर्वेषां गणानामग्रणीरभूत् ।
देवाश्च दानवास्सिद्धा गन्धर्वाः किन्नरा नराः ।। २२
सुन्दरेशं समाराध्य लभन्ते कांक्षितान्वरान् ।
अतस्सुन्दरनाथं तं भवन्तोऽपि समाहिताः ।। २३
आराध्य तत्प्रसादेन लभध्वं वृष्टिमुत्तमाम् ।
इत्युक्तास्तेऽथ मां प्रीताः पुनः पप्रच्छुरादरात् ।। २४
कदा केन प्रकारेण समाराधित ईश्वरः ।
प्रयच्छत्यखिलान् कामान् स प्रकार इहोच्यताम् ।। २५
इति भूपैः प्रार्थिते तु सोमवारव्रतं महत् ।
उपदिष्टं मया सद्यश्शम्भोस्सन्तुष्टिकारणम् ।। २६
व्रतप्रभावं ते श्रुत्वा श्रीहालास्यमवाप्य च ।
संस्नाय हेमपद्मिन्यां भस्मदिग्धकलेबराः ।। २७
धृतरुद्राक्षमालाश्च नित्यकृत्यं विधाय च ।
शिवव्रतोत्तमं सद्यश्शिवयोः प्रीतिकारणम् ।। २८

भक्त्या महत्या चक्रुस्ते महालिङ्गे महीश्वराः ।
ततः स्तुत्वा नमस्कृत्य सन्तुष्टं परमेश्वरम् ।। २९
प्रार्थयन्ति च वृष्ट्यर्थं सोमसुन्दरमीश्वरम् ।
दिव्या वाणी तदा तेषां नृपाणां प्रीतिकारिणी ।। ३०
सुन्दरेशाज्ञया सद्यस्सञ्जाता मधुरस्वना ।
भूपा देशेषु युष्माकं वृष्टिकर्ता दिवस्पतिः ।। ३१
वृष्ट्यर्थं प्रार्थनीयोऽयं दिवं गत्वा ममाज्ञया ।
नभोमार्गेण गन्तुं च सामर्थ्यं वो भविष्यति ।। ३२
श्रोत्रामृतं शिववचश्श्रुत्वा भूपालपुङ्गवाः ।
नभोमार्गेण सहसा देवेन्द्रनिकटं ययुः ।। ३३
ज्ञानदृष्ट्या परिज्ञाय तेषामागमनं पुरा ।
त्रीण्याशु भद्रपीठानि सुत्राम्णा कल्पितानि हि ।। ३४
पुरो गत्वा चेरचोलौ प्रणम्य च पुरन्दरम् ।
तच्छासनाच्चोपविष्टावुभौ तौ भद्रपीठयोः ।। ३५
न नत्वा पाण्ड्यभूपालो देवेन्द्रं स्वस्य कल्पितम् ।
अनुन्नतं भद्रपीठं त्यक्त्वा च पुनरुन्नतम् ।। ३६
देवेन्द्राधिष्ठितं प्राप सिंहासनवरं परम् ।
तान्दृष्ट्वा सत्त्वकाराथ देवेन्द्रः प्रीतमानसः ।। ३७
किमागमनकार्यं व इति पप्रच्छ तांस्तदा ।
चेरचोलौ च चाटूनि प्रोक्त्वा सद्वचनानि च ।। ३८
स्वदेशयोर्वृष्टिहानिं तद्धेतोर्लोकपीडनम् ।
अब्रूतां स तु तच्छ्रुत्वा वर्षतेति घनानशात् ।। ३९

पाण्ड्यस्तु पालयन्मानं वृष्टिहानिं स्वदेशगाम् ।
नैवाहासूययाविष्टो देवराजोऽभवत्तदा ॥ ४०
तयोस्स लघ्वाभरणे प्रददौ चेरचोलयोः ।
दुर्वहं सुमहद्भारं हारं रत्नमयं ततः ॥ ४१
पाण्ड्याय प्रददौ शीघ्रं तच्छक्त्यालोकनेच्छया ।
स तु मालावदक्लिष्टं दधौ विस्मयसंयुतः ॥ ४२
इन्द्रः प्राह सहेर्ष्योऽपि पाण्ड्यप त्वं महान् खलु ।
उग्रस्य वंशजत्वं ते व्यक्तमद्य सुनिश्चितम् ॥ ४३
हारधारी पाण्ड्यराज इति ख्यातिं गमिष्यसि ।
किं च सुन्दरपाण्ड्यश्च ख्यातनामा भविष्यसि ॥ ४४
इत्युक्ते देवराजेन प्राह चाटूनि पाण्ड्यपः ।
वाक्यान्यतिविचित्राणि महेन्द्रप्रीतिहेतवे ॥ ४५
गच्छतेति नृपांस्त्रींस्तान् प्रत्युक्ते मेघवाहने ।
ते च जग्मुर्मुदा युक्ताः स्वं स्वं देशं नृपोत्तमाः ॥ ४६
सञ्जाता महती वृष्टिस्स्वकाले चेरचोलयोः ।
देशयोः पाण्ड्यदेशे तु नैव वृष्टिरजायत ॥ ४७
धान्यानामायतिरभूद्देशतश्चेरचोलयोः ।
पाण्ड्यस्तु लज्जितोऽप्यन्तर्धीरत्वाद्धृतिमेयिवान् ॥ ४८
एवन्तु हृदि वैमत्यं सदैवास्तींद्रपाण्ड्ययोः ।
मुनयः
उक्तं रहस्यं भवता स भूपालश्च किं व्यधात् ॥ ४९

पाण्ड्यः पश्चान्महामानी ब्रूहि त्वं तच्च नः क्रमात्।

अगस्त्यः -

वनेषु श्वापदाभावान्मृगयार्थं स जातुचित्॥ ५०

मलयं प्राप्य चिक्रीड मृगाद्यैः परितोऽभ्रमत्।

पुष्कलावर्तकादींस्तांश्चतुरो मेघनायकान्॥ ५१

आसीनांस्तत्तटे दृष्ट्वा जग्राह स्फुरतो भटैः।

आनीय सद्यः कारायां चिक्षेप निगलान्वितान्॥ ५२

तच्छ्रुत्वा योद्धुमायातो देवराजो रुषान्वितः।

पाण्ड्यभूपोऽपि धीरस्सन्निर्गत्यान्तःपुराज्जवात्॥ ५३

सुन्दरेशं महालिङ्गं सुमीनाक्ष्या समन्वितम्।

भक्त्या प्रदक्षिणीकृत्य स्तुत्वा सम्यक्प्रणम्य च॥ ५४

आरुह्य सुविमानश्च मीनध्वजविराजितम्।

गत्वाऽभिमुखमिन्द्रस्य युद्धायोद्योगमातनोत्॥ ५५

आसीदायोधनं पश्चात्त्रिदिवाधिपपाण्ड्ययोः।

अस्त्रमस्त्रेण संहृत्य परस्परजयैषिणोः॥ ५६

आग्नेयं वारुणास्त्रेण वारुणं चानिलास्त्रतः।

आनिलं पन्नगास्त्रेण पान्नगं गारुडास्त्रतः॥ ५७

गारुडं च महापाशान्महापाशं गजास्त्रतः।

गजास्त्रमपि सैंहेन सैंहं च शरभास्त्रतः॥ ५८

एवमस्त्राणि घोराणि घोरैरस्त्रैर्निपात्य च।

तथा तौ तीक्ष्णशस्त्राभ्यां धनुषी स्वस्वहस्तगे॥ ५९

बभञ्जतुरतिक्रुद्धौ मल्लयुद्धं च चक्रतुः।

अशनिपातनिभैरति दारुणैः कठिनमुष्टिकृतैरपि ताडनैः।

नयनबृन्द्युतं च कलेबरं शतमखस्य महद्व्यथितं व्यधात्।। ६०
शतमखोऽपि महाबलसंयुतः कनकपर्वतसन्निभसारया।
विधृतया भुजया कुलिशायुधं कुपितदण्डधरेण समो बभौ।।६१
तदनु पाण्ड्यनृपो वलयायुधं तपनकोटिनिभं निशितं दधत्।
अतुलचक्रधरेण समो बभावतिबलेन पराक्रमतः श्रिया।। ६२
वज्रायुधं कुलाद्रीणां पक्षशातनसुक्षमम्।। ६३
व्यसर्जयन्महाघोरमिन्द्रः पाण्ड्यनृपं प्रति।
उग्रो महाघोरतरं दुर्भेद्यं वलयायुधम्।। ६४
बहुशो भ्रामयित्वा तमतिवेगेन चाक्षिपत्।
वेगागतं महावज्रं निपात्य धरणीतले।। ६५
किरीटं वृत्रशत्रोश्च भिनत्ति वलयो महान्।
सोमसुन्दरलिङ्गस्य भक्त्या चातुलयान्वितः ।। ६६
उग्राख्य उग्रतनयो नैव जेयो मयाऽधुना।
इति निश्चित्य मनसा व्रीडितः प्रययौ स्वराट्।। ६७
उग्रो विजित्य वृत्रारिं चतुरङ्गबलान्वितः।
महद्भिस्तूर्यघोषैश्च जयघोषैश्च वन्दिनाम्।। ६८
पुरीं च मधुरां प्राप्य साम्बं शम्भुं प्रणम्य च।
प्रापान्तःपुरमात्मीयं कृतनीराजनोत्सवः ।। ६९
इन्द्रोऽपि मौलिशून्येन मस्तकेन समन्वितः।
श्रीमद्धालास्यनाथेन मदीयं रक्षितं शिरः ।। ७०
इति सम्यग्विनिश्चित्य व्रीलावनतकन्धरः।
नगरीं स्वां च सम्प्राप महतीममरावतीम्।। ७१

वलाहकान्मोचयितुं वलारातिरथोद्यतः ।
पत्रिकां पाण्ड्यभूपाय प्रेषयामास दूततः ।। ७२
देव पाण्ड्य महाभाग भवतस्सदृशो न हि ।
उत्साहाद्यास्त्वदीयाश्च दुर्निरीक्ष्या हि शक्तयः ।। ७३
मुक्त्वा चाभ्रान्मदीयांश्च प्रेषयाशु मदन्तिकम् ।
यथाकालं सुवृष्टिस्स्यात्तव राष्ट्रे न संशयः ।। ७४
इति संलिख्य सम्प्राप्तां वाचयित्वा च पत्रिकाम् ।
शम्भोस्सुन्दरपाण्ड्यस्य पुत्रो नीतिमनुस्मरन् ।। ७५
वृष्ट्यर्थं प्रतिभूः कस्स्यादिति प्राह यदा नृपः ।
तदाऽहं प्रतिभूरस्मीत्याह प्रीत्यै बिडौजसः ।। ७६
सप्तग्रामाधिपेष्वेको वन्येषु च जलेषु च ।
प्रसिद्धश्शम्भुभक्त्या च वीर्येण यशसा श्रिया ।। ७७
एकवीर इति ख्यातो नामधेयेन चार्थतः ।
अथ पाण्ड्यमहीपालो मुमोच जलभृद्वरान् ।। ७८
तदाप्रभृति तद्राष्ट्रे सुवृष्टिस्सुमहत्यभूत् ।
सुभिक्षमभवद्राज्यं प्रजास्सर्वास्सुनन्दिताः ।। ७९
लीला चतुर्दशी प्रोक्ता सर्वसन्तोषहारिणी ।
सद्यस्सुवृष्टिकर्त्री च सर्वसौख्यप्रदायिनी ।। ८०
यः कश्चित्सकृदप्येनां लीलां सम्यक्छृणोति च ।
लभते कांक्षितांत्सर्वान् पुरुषार्थांश्चतुर्विधान् ।। ८१

इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां
हालास्यमाहात्म्ये इन्द्रमौलिभेदनं
नामाष्टादशोऽध्यायः

## அத்தியாயம் -18

## 14. இந்திரனின் கிரீடத்தைப் பிளத்தல்

அகஸ்தியர் கூறுகிறார் :- இந்திரனுக்கும் பாண்டிய அரசர்களுக்குமிடையே மனக்கசப்பு முன்பே உண்டு. முன்பு சேரரும் சோழரும் பாண்டியரும் தம் நாடுகளில் க்ரஹங்களில் வக்கிர நிலையால் மழையின்மை பற்றிக் கவலை கொண்டு மலய மலையிலிருந்த என்னை அணுகினர். க்ரஹங்களின் வக்கிர நிலையால் பன்னிரண்டாண்டுகள் மழையின்மையால் பாதிப்பு நேரும். அதனால் ஸோமவாரவிரதமிருந்து ஹாலாஸ்ய நாதரை வழிபடுவீர். மக்கள் நலனுக்காக ஹாலம் எனும் விஷத்தை வாயிலிட்டு உட்கொண்டவரானதால் அவர் ஹால- ஆஸ்யர், என்று நான் வழிகாட்டியபடி ஸோமஸுந்தரரை வழிபட்டனர். வழிபாட்டில் மகிழ்ந்த ஈசன் ஆகாச வாணியாக "உடன் தேவர் உலகம் சென்று இந்த்ரனிடம் விண்ணப்பிப்பீர். இந்திரனே மழைக்காக வேண்டத்தக்கவன். உங்களுக்கு ஆகாச வழியே செல்லும் திறமை ஏற்படும்" என்று அருளினார். உடன் ஆகாச வழியே மூவரும் இந்திரனைச் சென்றடைந்தனர். சேர அரசரும் சோழ அரசரும் முன்னதாகச் சென்று இந்திரனைக் கண்டு வணங்கி இந்திரனால் அமைக்கப்பட்டிருந்த தம் தம் ஆஸனங்களில் அமர்ந்தனர். பாண்டிய அரசனோ தனக்கென இந்திரன் அமைத்திருந்த பீடம் தாழ்ந்துள்ளதைக் கண்டு அதில் அமராமல் தேவேந்திரன் அமர்ந்த ஆஸனத்தில் அமர்ந்தான். வந்ததற்கான காரணம் பற்றிக் கேட்டதும் சேரனும் சோழனும் மழையின்மையைத் தெரிவித்தனர். இந்திரன் அங்கு மழைபெய்யும்படி மேகங்களுக்கு உத்தரவிட்டான். பாண்டியனோ மழையின்மை பற்றித் தெரிவிக்காமல் அமர்ந்திருந்தான். இந்திரனுக்குப் பாண்டியனிடம் பொறாமை ஏற்பட்டது. கேட்பது மானக்குறைவு எனப்

பாண்டியனும் கேட்காதது மானக் குறைவு என இந்திரனும் நினைத்தனர். சேரனுக்கும் சோழனுக்கும் லேசான அழகிய ஆபரணத்தைப் பரிசாக அளித்த இந்திரன் பாண்டியனுக்கு சுமக்க இயலாத ஹாரத்தை அளித்தான். ''பாண்டிய அரசே! நீர் பெரியவர். இந்த மாலையை ஏற்று ஹாரம் பூண்ட பாண்டியன் எனப் பெருமை பெறுவீர் எனக் கிண்டல் செய்தான். எல்லோரும் தம் நாட்டிற்குத்திரும்பினர். சேர-சோழ தேசங்களில் பெருமழை பெய்தது. பாண்டிய நாட்டில் மழை இல்லை. பாண்டியன் இதனைப் பொருட்படுத்தவில்லை. இந்த மனக்கசப்பு உக்கிர பாண்டியன் காலத்திலும் தொடர்ந்தது. உக்ர பாண்டிய அரசன் வேட்டைக்காக மலயமலை சென்றான். அங்கு புஷ்கலாவர்தகன் முதலிய மேகநாயகர்கள் சுற்றி வந்தனர். உக்ரன் அவர்களைச் சிறை பிடித்து மதுரைக்குக் கொணர்ந்தான். இந்திரன் அவர்களை மீட்க வந்தான். பாண்டியன் மூலலிங்கத்தையும் பாகம் பிரியாளான மீனாக்ஷியையும் வணங்கி வழிபட்டுப் போரிட முற்பட்டான். போர் கடுமையானது. உக்ரன் தன் கையிலிருந்து வலயாயுதத்தை இந்திரன் மீது ஏவ, அது வஜ்ராயுதத்தைச் செயலிழக்கச் செய்து இந்திரனின் கிரீடத்தையும் சிதறச் செய்தது. இந்திரன் கிரீடமிழந்த வெட்கத்துடன் தேவருலகம் சென்றான்.

மேகநாயகர்களை விடுவிக்கும்படி தூதர் மூலம் இந்திரன் கடிதம் அனுப்பி இனி பாண்டிய நாட்டில் தடையிராமல் நல்ல மழை பெய்யும் எனத் தெரிவித்தான். கடிதத்தைப் படித்த பாண்டியன் இதற்கு யார் ஈடாக (ஜாமீன்) நிற்பர் எனக் கேட்டான். ஏக வீரன் என்ற ஏழு கிராமங்களின் தலைவன் அந்தப் பொறுப்பை ஏற்றான். அன்றிலிருந்து பாண்டிய நாட்டில் துர்பிக்ஷமகன்றது. நல்ல மழையால் நாடு ஸுபிக்ஷமடைந்தது. இது பதினான்காவது லீலை.

★ ★ ★

## एकोनविंशोऽध्यायः

# सोमवारव्रतविधिः ।

अगस्त्यः -

चण्डायुधेन हेमाद्रिं प्रहृत्य बहुलं धनम् ।
अग्रहीदुग्रभूपालः परया लीलया यया ।। १
तां लीलां सुन्दरेशस्य कदम्बवनवासिनः ।
वक्ष्ये समाहितस्वान्ताः शृणुध्वं मुनिपुङ्गवाः ।। २
सोमवारव्रतेनापि यथाविधि कृतेन च ।
प्रातस्सायञ्च कृतया सोमसुन्दरसेवया ।। ३
सर्वासां सम्पदां वृद्धिस्तेजसां यशसामपि ।
सर्वसौख्याभिवृद्धिश्च सदाऽभूदुग्रभूपतेः ।। ४

ऋषयः -

सोमवारव्रतविधिं कथयित्वा घटोद्भव ।
तदनु प्रस्तुतां लीलां वद वातापिभक्षक ।। ५

अगस्त्यः -

साधु पृष्टं हि युष्माभिस्सर्वलोकहिताय च ।
अधुना सम्प्रवक्ष्यामि सोमवारव्रतं महत् ।। ६
यस्यानुष्ठानमात्रेण शम्भोस्सायुज्यरूपिणी ।
दुर्लभा जायते जन्तोः सुलभा मुक्तिरुत्तमा ।। ७
सर्वेषामपि देवानां प्रवरश्शङ्करो यथा ।
सर्वासामपि देवीनां प्रवरा पार्वती यथा ।। ८

तथा व्रतेषु सर्वेषु सोमवारव्रतं वरम्।
ये कुर्वन्ति यथाशक्ति सोमवारमहाव्रतम्।। ९
नश्यन्ति व्याधयस्तेषां तथा सर्वे च शत्रवः ।
अकालमरणं नास्ति विपदो न स्पृशन्ति तान्।। १०
इहामुत्र महाभोगान् लभन्ते पुण्यगौरवात्।
अमावास्यायुतश्चेत्तदनन्तफलदायकम्।। ११
सोमवारव्रतं प्रोक्तं पुण्यविद्भिः पुरातनैः ।
मेर्वादिसर्वक्षेत्रेषु सोमवारव्रतात्कृतात्।। १२
श्रीहालास्ये शिवक्षेत्रे सोमसुन्दरसन्निधौ ।
कृतं तत् कोटिगुणितं फलप्राप्तौ न संशयः ।। १३
सोमवारव्रतं तस्मात्सोमसुन्दरसन्निधौ ।
सदा चात्महितापेक्षी कुर्यादत्यादरेण च ।। १४
उमया सहितो देवस्सोम इत्यभिधीयते ।
तद्दिनं सोमवाराख्यमनन्तफलदायकम्।। १५
उपवासं तथा नक्तमेकभुक्तमथापि वा ।
व्रतं सङ्कल्प्य चैष्वेकं गृह्णीयान्नियमं नरः ।। १६
फलं प्राप्नोति नियमान्न श्रेयो नियमं विना ।
सोमवारे महापुण्ये सोममुद्दिश्य यत् कृतम्।। १७
अनन्तफलदं तच्च सुकृतं मुनिपुङ्गवाः ।
अथ व्रतविधानञ्च कथयामि मुनीश्वराः ।। १८
श्रुतमात्रेण सर्वेषां सर्वैश्वर्यप्रदायकम्।
कार्तिके मासि मार्गे वा मासेष्वन्येषु वा पुनः ।। १९

कर्तुश्श्रद्धा भवेद्यस्मिन् सोमवारव्रतं व्रती ।
मलादिदोषरहिते तस्मिन् मासे समारभेत् ।। २०
सोमवारव्रतविधौ मासाश्चान्द्रमसा वराः ।
तन्मासेष्वादितः प्राप्ते वारराजे शुभावहे ।। २१
देवदैत्यमुनीन्द्राद्यैः स्तूयमाने शिवप्रिये ।
सोमवारे तु सम्प्राप्ते प्रातरुत्थाय भक्तिमान् ।। २२
पराशक्त्या सुमीनाक्ष्या सहितं सौमसुन्दरम् ।
श्रीहालास्ये शिवपदे द्वादशान्ते विभावयेत् ।। २३
नित्यकर्माणि सर्वाणि दन्तधावनपूर्वकम् ।
कृत्वा नैमित्तिकं कर्म स्नानाद्यं प्रारभेत्सुधीः ।। २४
भस्म श्रीवृक्षमूलोत्थमृद्गोमयतिलान् कुशान् ।
उत्तमांगे विनिक्षिप्य हेमपद्माकरे शुभे ।। २५
पवित्रपाणिस्सङ्कल्प्य पश्चात् स्नानं समाचरेत् ।
सुन्दरेश्वर सर्वेश सर्वतीर्थफलप्रद ।। २६
देहि स्नातुमनुज्ञां मे तीर्थेऽस्मिन् भुक्तिमुक्तिदे ।
यस्य केशेषु जीमूता नद्यस्सर्वांगसन्धिषु ।। २७
कुक्षौ समुद्रास्सप्तापि तस्मै तोयात्मने नमः ।
इत्युक्त्वा वेदमन्त्रांश्च रुद्रलिङ्गान् जपन् व्रती ।। २८
स्नात्वा शुद्धाम्बरधरस्समाहितमनाश्शुचिः ।
कामक्रोधाद्यहङ्कारद्वेषपैशुन्यवर्जितः ।। २९
आनीतैश्श्वेतपुष्पैश्च मालतीमल्लिकादिभिः ।
कुन्दमन्दारपुन्नागश्वेतार्कशतपत्रकैः ।। ३०

बिल्वपत्रैरखण्डैश्च साक्षतैश्च तिलैरपि।
पूजयेच्छङ्करं भक्त्या श्रीहालास्यपतिं प्रभुम्॥ ३१
दीक्षाविहीना विप्राश्च महालिङ्गस्य तस्य तु।
अर्हणायामनर्हाश्च क्षत्रियाद्याश्च दीक्षिताः ॥ ३२
ते सर्वे कारयेयुस्स्वैर्द्रव्यैरर्हैस्तु भूसुरैः ।
स्वेष्टलिङ्गेऽथ वाऽऽवाह्य पूजयेत्सोमसुन्दरम्॥ ३३
एकभुक्तव्रती पूजां मध्याह्ने तु समाचरेत्।
नक्तव्रती चोपवासी कुर्याद्रात्रौ शिवार्चनम्॥ ३४
मन्त्राणामप्यशेषाणां पञ्चाक्षरमनुर्महान्।
समस्तपत्रपुष्पाणां बिल्वपत्रं विशिष्यते॥ ३५
तस्मादुभाभ्यां मतिमान् पूजयेदिन्दुशेखरम्।
सप्तकोटिमहामन्त्राश्शिववक्त्राद्विनिर्गताः ॥ ३६
पञ्चाक्षरस्य मन्त्रस्य कलां नार्हन्ति षोडशीं।
दीक्षितोऽदीक्षितो वापि विधानादन्यतोऽपि वा॥ ३७
पञ्चाक्षरीं जपेद्यस्तु शिवस्यानुचरो भवेत्।
ब्रह्महत्यां भ्रूणहत्यां कृत्वा पापान्यनेकशः ॥ ३८
पञ्चाक्षरं जपन् सद्यो मुच्यते नात्र संशयः ।
न हि पञ्चाक्षरजपाच्छ्रेयोऽस्ति भुवनत्रये॥ ३९
एवं ज्ञात्वा जपेद्विद्वान् विद्यां पञ्चाक्षरीं शुभाम्।
स्त्रीलिङ्गोच्चारितोऽयं तु देव्या अपि मनुर्भवेत्॥ ४०
तस्मादनेन मन्त्रेण देवीदेवौ समर्चयेत्।
पञ्चाक्षरेण मन्त्रेण बिल्वपत्रैः शिवार्चनम्॥ ४१

करोति श्रद्धया यस्तु स गच्छेदैश्वरं पदम् ।
दर्शनाद्बिल्ववृक्षस्य स्पर्शनाद्वन्दनादपि ।। ४२
अहोरात्रकृतं पापं नश्यत्येव मुनीश्वराः ।
अन्त्यकाले नरो यस्तु बिल्वमूलस्य मृत्तिकाम् ।। ४३
विलिप्य सर्वगात्रेषु मृतो याति पराङ्गतिम् ।
बिल्ववृक्षं समाश्रित्य द्वादशाहमभोजनम् ।। ४४
यः कुर्याद्ब्रह्महा पापान्मुक्तो भवति भूसुराः ।
बिल्ववृक्षं समाश्रित्य त्रिरात्रोपोषितश्शुचिः ।। ४५
हरनाम जपन् लक्षं भ्रूणहत्यां व्यपोहति ।
बिल्वपत्रैरखण्डैर्यः पूजयेत्सोमसुन्दरम् ।। ४६
सोमवारे संयतात्मा ब्रह्महत्यां व्यपोहति ।
मातृहा पितृहा वापि युक्तो वा सर्वपातकैः ।। ४७
भक्त्या बिल्वदलैर्मौनी पूजयेच्चन्द्रशेखरम् ।
सर्वपापविनिर्मुक्तः प्रयाति परमं पदम् ।। ४८
शुष्कैः पर्युषितैः पत्रैरपि बिल्वस्य यो जनः ।
पूजयेद्गिरिजानाथं मुच्यते सर्वपातकैः ।। ४९
केशकीटालिविद्धं च लूतातन्तुसमावृतम् ।
स्वयं वाय्वादिगलितं बिल्वपत्रन्तु वर्जयेत् ।। ५०
तस्मादवश्यं शम्भोस्तु पूजनं बिल्वपत्रकैः ।
सर्वसौभाग्यदं ज्ञात्वा पूजयेत्तैर्विशेषतः ।। ५१
पूजाप्रारम्भकाले तु संक्षाल्य चरणौ करौ ।
भस्मरुद्राक्षमालाभिरलङ्कृत्य कलेबरम् ।। ५२

प्राणानायम्य सङ्कल्प्य पुण्याहं च विधाय च ।
विघ्नेश्वरं च सम्पूज्य प्रार्थ्य निर्विघ्नमस्त्विति ।। ५३
अथ साम्बं शिवं नत्वा साञ्जलिस्सन्निधौ स्थितः ।
सोमसुन्दर सोमेश सोम सोमविभूषण ।। ५४
सोमवारव्रतमहं करिष्ये त्वदनुज्ञया ।
इति सम्प्रार्थ्य तदनु ध्यानाद्यैरुपचारकैः ।। ५५
कुर्यात् पूजाविधिं शम्भोः भुक्तिमुक्तिप्रसिद्धये ।
कोटिभास्करसङ्काशं कोटिशीतांशुशीतलम् ।। ५६
पञ्चासनसमासीनं पञ्चवक्त्रं परात्परम् ।
द्विपंचभुजसंयुक्तं त्रिपञ्चनयनान्वितम् ।। ५७
त्रिशूलं परशुं खड्गं वज्रं चाभयमेव च ।
पाशं नागाङ्कुशौ घण्टां वह्निं दक्षैरदक्षकैः ।। ५८
भुजैर्दधानमनिशं नागयज्ञोपवीतिनम् ।
दिव्याम्बरैर्दिव्यगन्धैर्दिव्यपुष्पैर्विराजितम् ।। ५९
किरीटहारकेयूरकुण्डलाद्यैर्विभूषणैः ।
विभूषितं महादेवं मनोन्मन्या समन्वितम् ।। ६०
षोडशाब्दाकृतिं सौम्यं सोमेशं सोमसुन्दरम् ।
स्वयंभूते महालिङ्गे ध्यायामि जगतां गुरुम् ।। ६१
इति ध्यानोपचारार्थमुक्त्वा पुष्पैस्तु पूजयेत् ।
आगच्छ कृपया शम्भो मनोन्मन्या महेश्वर ।। ६२
प्रीत्या पूजां गृहाणेश जीवन्मुक्तिपुरेश्वर ।
विश्वात्मने नमस्तुभ्यं कदम्बवनवासिने ।। ६३

रत्नसिंहासनं चारु ददामि करुणानिधे।
नमश्शर्वाय सोमाय सर्वमङ्गलहेतवे ॥ ६४
तुभ्यं सम्प्रददे पाद्यं श्रीहालास्यनिवासिने।
अशेषजगदाधार निराधार महेश्वर ॥ ६५
ददाम्याचमनं तुभ्यं सुन्दरेश नमोऽस्तु ते।
अनर्घफलदात्रे च शास्त्रे वैवस्वतस्य च ॥ ६६
तुभ्यमर्घ्यं प्रदास्यामि द्वादशान्तनिवासिने।
दृष्टमात्रेण सर्वेषां सर्वाभीष्टफलप्रद ॥ ६७
पञ्चामृताद्यैर्द्रव्यैस्त्वां स्नापयेऽहं सुरार्चित।
दिगम्बर नमस्तुभ्यं गजाजिनधराय च ॥ ६८
व्याघ्रचर्मोत्तरीयाय वस्त्रयुग्मं ददाम्यहम्।
चराचरजगद्रत्नप्रोतसूत्रधराय ते ॥ ६९
नागयज्ञोपवीताय ह्युपवीतं ददाम्यहम्।
समष्टिविद्यानगरीनाथ नागविभूषण ॥ ७०
गृहाण भूषणं शम्भो शरणागतवत्सल।
नमस्सुगन्धदेहाय ह्यवन्ध्यफलदायिने ॥ ७१
तुभ्यं गन्धान् प्रदास्यामि चान्धकासुरभञ्जन।
अक्षतान्धवलान् देवसिद्धगन्धर्वपूजित ॥ ७२
सुन्दरेश नमस्तुभ्यं गृहाण वरदो भव।
पुष्पवद्वह्निनयन पुष्पचापविभञ्जन ॥ ७३
पुष्पैस्त्वां पूजयामीश पुरन्दरवरप्रद।
अथ नाम्नां सहस्रेण बिल्वपत्रैः प्रसूनकैः ॥ ७४

समाराध्य शिवं भक्त्या पश्चाद्धूपं समर्पयेत्।
नमो वृत्रारिपापघ्ने कारणत्रयहेतवे ।। ७५
साज्यं गुग्गुलुधूपं त्वं गृहाण वृषभध्वज।
ज्योतिर्मयाय लिङ्गाय ज्योतिषामाकराय ते ।। ७६
दीपं ददाम्यहं भक्त्या ज्ञानदीपप्रदायिने।
नैवेद्यं षड्रसोपेतं सोपदंशं घृतान्वितम् ।। ७७
फलक्षीरापूपयुक्तं गृह्यतां सुन्दरेश्वर।
पानीयं शीतलं स्वच्छं चन्द्रचन्दनवासितम् ।। ७८
तुभ्यं ददामि देवेश गृह्यतां सोमसुन्दर।
पूगीफलैस्सकर्पूरैः नागवल्लीदलैरपि ।। ७९
चूर्णेन च युतं शम्भो ताम्बूलं गृह्यतां त्वया।
प्रकृष्टपापनाशार्थं प्रकृष्टफलसिद्धये ।। ८०
प्रदक्षिणं करोमीश प्रसीद परमेश्वर।
नमश्शिवाय सोमाय शम्भवे शङ्कराय च ।। ८१
नमो हालास्यनाथाय सच्चिदानन्दमूर्तये।
अथाङ्गपूजां विधिवदाचरेच्छिवयोर्व्रती ।। ८२
यया समस्तसौभाग्यं लभन्ते व्रतिनस्सदा।
भवान्यै च भवायापि पादौ साम्बस्य पूजयेत् ।। ८३
जगन्मात्रे जगत्पित्रे जङ्घे चैव प्रपूजयेत्।
मृडान्यै च मृडायापि जानुनी सम्प्रपूजयेत् ।। ८४
ऊरुयुग्मं च रुद्राण्यै रुद्रायेति प्रपूजयेत्।
काल्यै कालान्तकायेति कटिदेशं प्रपूजयेत् ।। ८५

नाभिं नगेन्द्रकन्यायै नागेन्द्राभरणाय च।
स्तवप्रियायै स्तव्याय स्तनौ सम्यक्प्रपूजयेत्।। ८६
भवघ्न्यै भवनाशाय भुजांश्चैव प्रपूजयेत्।
कण्ठञ्च कम्बुकण्ठायै कालकण्ठाय पूजयेत्।। ८७
मायायै च महेशाय मुखान्येवं प्रपूजयेत्।
ललाटं ललितायै च तथा लास्यप्रियाय च।। ८८
शिरांसि च शिवायै च शिवायेति समर्चयेत्।
प्रणतार्तिहरायैव च प्रणतार्तिहराय च।। ८९
इति सम्पूजयेद्भक्त्या सर्वाङ्गं शिवयोर्व्रती।
पुनश्च पादौ परमौ पूजयेदम्बिकापतेः।। ९०
प्रणवादिनमोऽन्तानि नामानि शिवयोः पुरा।
समुच्चार्य च पादादौ पूजयामीति योजयेत्।। ९१
दूर्वार्चनं ततः कुर्याद्बिल्वपत्राक्षतान्वितम्।
महादेवो महेशश्च शङ्करो वृषभध्वजः।। ९२
शूली कामान्तको देवदेवश्श्रीकण्ठसंज्ञकः।
ईश्वरश्चाम्बिकानाथो रुद्रश्शिव इतीरितः।। ९३
प्रणवादिचतुर्थ्यन्तैरेतैर्द्वादशनामभिः।
शम्भोस्तु पूजनं पुंसां सर्वकामार्थसाधनम्।। ९४
आयुरारोग्यजयदमपमृत्युविनाशनम्।
सोमनाथ जगन्नाथ सर्वैश्वर्यसमृद्धिद।। ९५
मम दारिद्रयमुन्मूल्य कामान् पूरय पूरय।
इति सम्प्रार्थ्य देवेशमर्चयेदम्बिकापतिम्।। ९६

भवाद्यैर्नामभिर्देवमष्टाभिरथ पूजयेत्।
शिवो रुद्रः पशुपतिर्नीलकण्ठो महेश्वरः ।। ९७
हरिकेशो विरूपाक्षः कपर्दी प्रमथाधिपः ।
हरश्शम्भुः पिनाकी च शङ्करश्चन्द्रशेखरः ।। ९८
समष्टिविद्यानगरीनायकश्च सदाशिवः ।
एतान्युच्चार्य नामानि चतुर्थ्यन्तं प्रपूजयेत्।। ९९
आकाशदिक्शरीराय ग्रहनक्षत्रमालिने ।
सुरसिद्धनिवासाय दत्तमर्घ्यं मया शिव ।। १००
दत्वाऽर्घ्यत्रयमेवं तु प्रार्थयेत्सोमसुन्दरम्।
भगवन्नतिरिक्तं वा हीनं वा यन्मया कृतम्।। १०१
सर्वं तदस्तु सम्पूर्णं त्वत्प्रसादान्महेश्वर ।
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।। १०२
क्षमस्व तानि सर्वाणि पिता पुत्रमिवेश्वर ।
इति सम्प्रार्थ्य सोमेशं पूजामेवं समापयेत्।। १०३
विद्यार्थी लभते विद्यां धनार्थी लभते धनम्।
पुत्रार्थी लभते पुत्रं जयार्थी जयमाप्नुयात्।। १०४
राज्यार्थी राज्यमाप्नोति मोक्षार्थी मोक्षमाप्नुयात्।
यद्यदिष्टतमं लोके तत्सर्वं लभते ध्रुवम्।। १०५
सोमवारव्रतविधिं ये शृण्वन्ति पठन्ति वा ।
सर्वपापविनिर्मुक्तास्सम्पन्नाश्च भवन्ति ते ।। १०६

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये सोमवारव्रतविधिर्नाम*
*एकोनविंशोऽध्यायः*

19

## அத்தியாயம் -19

## ஸோமவார வ்ரதமுறை (1)

*அகஸ்தியர் கூறுகிறார் :- ஸோமவார விரதத்தை முறைப்படி செய்வதாலும், காலையிலும், மாலையிலும் ஸோமவாரவ்ரதம் புரிவதாலும் செல்வமும் பெருமையும் புகழும், இன்பமும் கிட்டும். அதன் முறை பின் வருமாறு-*

*இது வ்ரதங்களில் சிறந்தது. திங்கள்கிழமையன்று இதனைச் செய்வர். அமாவாஸ்யையும் அன்று சேர்ந்தால் மிகச் சிறந்தது. மற்ற இடங்களில் இதனைப் புரிவதைவிட ஸோமஸுந்தரரின் அருகாமையில் செய்வது சிறந்தது. உமையுடன் கூடியதால் அவர் ஸோமர். அவரது நாளானதால் அது ஸோமவாரம். நாள் முழுவதும் உபவாஸமிருந்தோ, இரவு ஒரு வேளை மட்டும் உணவேற்று பகல் முழுவதும் உபவாஸ மிருந்தோ இதனைச் செய்யலாம். இதனைக் கார்த்திகை அல்லது மார்கழியின் திங்களில் தொடங்கலாம். சாந்த்ரமானக் கணக்கில் மாதத்தின் முதல் திங்கள் முதல் இதனைத் தொடங்கலாம்.*

*காலையில் எழுந்ததும் மீனாக்ஷியுடன் கூடிய ஸுந்தரரை ஸ்ரீஹாலாஸ்யமாகிற தனது துவாதசாந்தத்தில் (ஸஹஸ்ரராகமலத்தின் நடுவே) த்யானம் செய்து அன்றாடக் கடன்களை முடித்து விபூதி, வில்வ மரத்து வேரடி மண், கோமயம், எள், தர்ப்பை இவற்றைத் தலையில் தாங்கிப் பொற்றாமரைக் குளத்தில் இறங்கி ஸங்கல்பம் செய்து,*

**ஸுந்தரேச்வர ஸர்வேச ஸர்வ தீர்த்த பலப்ரத ।**
**தேஹி ஸ்நாதுமனுஜ்ஞாம் மே தீர்த்தேஸ்மின் புத்தி முக்திதே ॥**

*என ஈசனிடம் நீராட அனுமதி பெற்று.*

**யஸ்ய கேசேஷு ஜீமூதா: நத்ய: ஸர்வாங்கஸந்த்திஷு ।**
**குக்ஷௌ ஸமுத்ராஸ்ஸப்தாபி தஸ்மை தோயாத்மநே நம: ॥**

*என நீரில் ஈசனைத் த்யானித்து நீராடித் தூய ஆடை உடுத்தி விபூதி தரித்து ஈசனை வழிபட வேண்டும். தனது*

*பூஜைக்கான லிங்கம் முதலியவற்றிலும் இந்தப் பூஜை செய்யலாம். சிவ பூஜைக்கான தீக்ஷை பெறுதல் அவசியம். பகலில் உணவேற்று இரவில் உபவாஸமிருப்பவன் நடுப்பகலிலும், இரவில் உணவேற்றுப் பகலில் உபவாஸ மிருப்பவன் இரவிலும் சிவபூஜை செய்யலாம். ஏழு கோடி மஹாமந்த்ரங்களில் பஞ்சாக்ஷர மந்த்ரம் சிறந்தது. 'சிவாயை' என்று ஸ்திரீ லிங்கமாக மாற்றித் தேவியையும் வழிபடலாம். அவ்வாறு இணைத்து இருவரையும் வழிபடலாம். வில்வதளங்களால் பூஜை செய்வது மிகச்சிறந்தது. கேசம் சுற்றியதும் சிலந்தி வலை சுற்றியதும் பூச்சி அரித்ததும் நல்லதல்ல.*

*பூஜை முறை பின் வருமாறு - கைகால்கள் அலம்பி விபூதி தரித்து, ருத்ராக்ஷமாலை பூண்டு, ப்ராணாயாமம், விக்னேச்வர பூஜை, சிவ வந்தனம் செய்து*

**ஸோமஸுந்தர ஸோமேச ஸோம ஸோமவிபூஷண ।**

**ஸோமவார வ்ரதமஹம் கரிஷ்யே த்வதநுஜ்ஞயா ॥**

*என அனுமதி வேண்டி*

**கோடிபாஸ்கரஸங்காசம் கோடி சீதாம்சு சீதளம் ।**

**பஞ்சாஸநஸமாஸீநம் பஞ்சவக்த்ரம் பராத்பரம்॥**

**த்விபஞ்சபுஜஸம்யுக்தம் த்ரிபஞ்சநயநாந்விதம் ।**

**த்ரிசூலம் பரசும் கட்கம் வஜ்ரஞ்சாபயமேவ ச ॥**

**பாசம் நாகாங்குசௌ கண்டாம் வந்ஹிம் தைக்ஷ ரதக்ஷகை: ।**

**புஜைர் ததாநம் அநிசம் நாகயஜ்ஞோபவீதிநம் ॥**

**திவ்யாம்பரைர் திவ்யகந்த்தை: திவ்யபுஷ்பைர் விராஜிதம் ।**

**கிரீடஹார கேயூர குண்டலாத்யைர் விபூஷணை: ।**

**விபூஷிதம் மஹாதேவம் மநோந்மந்யா ஸமந்விதம் ।**

**ஷோடசாப்தாக்ருதிம் ஸௌம்யம் ஸோமேசம் ஸோமஸுந்தரம் ॥**

**ஸ்வயம்பூதே மஹாலிங்கே த்த்யாயாமி ஜகதாம் குரும் ॥**

*என்று த்யானம் செய்து,*

ஆகச்ச க்ருபயா சம்போ மநோந்மந்யா மஹேச்வர ।
ப்ரீத்யா பூஜாம் க்ருஹாணேச ஜீவன்முக்திபுரேச்வர ॥
*எனப் பூஜையை ஏற்க வேண்டி,*
விச்வாத்மநே நமஸ்துப்யம் கதம்பவநவாஸிநே ।
ரத்ன ஸிம்ஹாஸநம் சாரு ததாமி கருணாநிதே ॥
*என ஆஸனம் தந்து*
நம: சர்வாய ஸோமாய ஸர்வமங்கள ஹேதவே ।
துப்யம் ஸம்ப்ரததே பாத்யம் ஸ்ரீ ஹாலாஸ்ய நிவாஸிநே ॥
*எனக் கால்களலம்ப நீர்வார்த்து,*
அசேஷ ஜகதாதார நிராதார மஹேச்வர ।
ததாம்யாசமநம் துப்யம் ஸுந்தரேச நமோऽஸ்துதே ॥
*என ஆசமனம் தந்து*
அநர்க்கபலதாத்ரே ச சாஸ்த்ரே வைவஸ்வதஸ்ய ச ।
துப்யமர்க்க்யம் ப்ரதாஸ்யாமி துவாதசாந்த நிவாஸிநே ॥
*என அர்க்க்யம் தந்து,*
த்ருஷ்ட மாத்ரேண ஸர்வேஷாம் ஸர்வாபீஷ்ட பலப்ரத ।
பஞ்சாம்ருதாத்யைர் த்ரவ்யைஸ்த்வாம் ஸ்நாபயேऽஹம்
ஸுரார்சித ॥
*என நீராட்டி,*
திகம்பர நமஸ்துப்யம் கஜாஜிநதராய ச ।
வ்யாக்ர சர்மோத்தரீயாய வஸ்த்ரயுக்மம் ததாம்யஹம் ॥
*என்று வஸ்த்ரமளித்து,*
சராசரஜகத்ரத்ன ப்ரோத ஸூத்ரதராயதே ।
நாகயஜ்ஞோபவீதாய உபவீதம் ததாம்யஹம் ॥
*என உபவீதமளித்து,*
ஸமஷ்டி வித்யா நகரீநாத நாகவிபூஷண ।

க்ருஹாண பூஷணம் சம்போ சரணாகத வத்ஸல ॥

*என ஆபரணமளித்து,*

நம: ஸுகந்த்த தேஹாய அவந்த்ய பலதாயிநே ।

துப்ப்யம் கந்தான் ப்ரதாஸ்யாமி அந்த்தகாஸுர பஞ்சந ॥

*எனச் சந்தனம் முதலிய நறுமணப்பூச்சளித்து,*

அக்ஷதான் தவளான் தேவ ஸித்த்தகந்தர்வபூஜித ।

ஸுந்தரேச நமஸ்துப்ப்யம் க்ருஹாண வரதோ பவ ॥

*என அக்ஷதை அளித்து,*

புஷ்பவத்வந்ஹி நயந புஷ்ப சாபவிபஞ்சந ।

புஷ்பைஸ்த்வாம் பூஜயாமீச புரந்தரவரப்ரத ॥

*எனப் பூக்களால் 1000-108 நாமங்களால் அர்சித்து,*

நமோ வ்ருத்ராரி பாபக்க்நே காரணத்ரய ஹேதவே

ஸாஜ்யம் குக்குலு தூபம் த்வம் க்ருஹாண வ்ருஷபத்த்வஜ ॥

*எனத் தூபம் காட்டி,*

ஜ்யோதிர்மயாய லிங்காய ஜ்யோதிஷாமாகராய தே ।

தீபம் ததாம்யஹம் பக்த்யா ஜ்ஞானதீப ப்ரதாயிநே ॥

*எனத் தீபம் காட்டி,*

நைவேத்யம் ஷட்ரஸோபேதம் ஸோபதம்சம் க்ருதான்விதம் ।

பல க்ஷீராபூபயுக்தம் க்ருஹ்யதாம் ஸுந்தரேச்வர ॥

*என நிவேதனம் செய்து,*

பாநீயம் சீதளம் ஸ்வச்ச்சம் சந்த்ரசந்தன வாஸிதம் ।

துப்ப்யம் ததாமி தேவேச க்ருஹ்யதாம் ஸோமஸுந்தர ॥

*எனப் பருக நீர் தந்து,*

பூகீ பலை: ஸகர்பூரை: நாகவல்லீதலைரபி ।

சூர்ணேந ச யுதம் சம்போ தாம்பூலம் க்ருஹ்யதாம் த்வயா ॥

*எனத் தாம்பூலமளித்து,*

ப்ரக்ருஷ்டபாப நாசாய ப்ரக்ருஷ்டபலஸித்தயே।
ப்ரதக்ஷிணம் கரோமீச ப்ரஸீத பரமேச்வர॥

*என வலம் வந்து,*

நம: சிவாய ஸோமாய சம்ப்பவே சங்கராய ச।
நமோ ஹாலாஸ்யநாதாய ஸச்சிதானந்த மூர்தயே॥

*என வணங்கி அங்கபூஜை செய்யவும்.*

பவாந்யை பவாய ச நம: - பாதௌ பூஜயாமி। *(கால்களில்)*

ஜகந்மாத்ரே ஜகத் பித்ரே ச நம: - ஜங்க்கே பூஜயாமி *(கணுக் கால்களில்)*

ம்ருடான்யை ம்ருடாய ச நம: - ஜாநுநீ பூஜயாமி। *(முழங்கால்களில்)*

ருத்ராண்யை ருத்ராய ச நம: - ஊரூ பூஜயாமி। *(தொடைகளில்)*

கால்யை காலாந்தகாய ச நம: - கடிம் பூஜயாமி। *(இடுப்புகளில்)*

நகேந்த்ரகன்யாயை நாகேந்த்ராபரணாய ச நம: - நாபிம் பூஜயாமி। *(தொப்புளில்)*

ஸ்தவ்யப்ரியாயை ஸ்தவ்யாய ச நம: - ஸ்தநௌ பூஜயாமி। *(மார்பில்)*

பவக்க்ன்யை பவநாசாய ச நம: - புஜான் பூஜயாமி। *(கைகளில்)*

கம்புகண்ட்டாயை கால கண்ட்டாய ச நம: - கண்ட்டம் பூஜயாமி। *(கழுத்தில்)*

மாயாயை மஹேசாய ச நம: - முகம் பூஜயாமி *(முகத்தில்)*

லலிதாயை லாஸ்யப்ரியாய ச நம: - லலாடம் பூஜயாமி - *(நெற்றியில்)*

சிவாயை சிவாய ச நம: - சிர: பூஜயாமி। *(தலையில்)*

ப்ரணதார்த்திஹராயை ப்ரணதார்திஹராய ச நம: ஸர்வாண்யங்கானி பூஜயாமி *(உடல் முழுவதும்)*

*முதலில் ப்ரணவம் சேர்த்து,*

மஹாதேவாய நம:, மஹேசாய நம:, சங்கராய நம:,

வ்ருஷபத்வஜாய நம:, சூலிநே நம:, காமாந்தகாய நம:, தேவ தேவாய நம:, ஸ்ரீ கண்ட்டாய நம:, ஈச்வராய நம:, அம்பிகாநாதாய நம:, ருத்ராய நம:, சிவாய நம:,

*என ப்பன்னிரு நாமங்களாலோ*

பவாய தேவாய நம:, சர்வாய தேவாய நம:, ஈசாநாய தேவாய நம:, பசுபதயே தேவாய நம:, ருத்ராய தேவாய நம:, உக்ராயதேவாய நம:, பீமாய தேவாய நம:, மஹாதே தேவாய நம:

*என எட்டு நாமங்களைக் கொண்டோ,*

சிவாய நம:, ருத்ராய நம:, பசுபதயே நம;, நீலகண்ட்டாய நம:, மஹேச்வராய நம;, ஹரிகேசாய நம:, விரூபாக்ஷாய நம;, கபர்திநே நம:, ப்ரமதாதிபாய நம:, ஹராய நம:, சம்ப்பவே நம:, பிநாகிநே நம:, சங்கராய நம:, சந்த்ர சேகராய நம:, ஸமஷ்டி வித்யா நகரீநாயகாய நம:, ஸதாசிவாய நம:, *என்ற பதினாறு நாமங்களைக் கொண்டோ அர்ச்சனை செய்து,*

ஸோமநாத ஜகன்னாத ஸர்வைச்வர்ய ஸமந்வித ।
மம தாரித்ர்ய முன் மூல்ய காமான் பூரய பூரய ॥

*எனவேண்டிக் கொள்ளவும்.*

ஆகாச திக்சரீராய க்ரஹநக்ஷத்ரமாலிநே ।

ஸுரஸித்த்த நிவாஸாய தத்தமர்க்க்யம் மயா சிவ ।

*என மூன்று தடவை அர்க்க்யம் தந்து,*

பகவந் அதிரிக்தம் வா ஹீநம் வா யந் மயா க்ருதம் ।

ஸர்வம் ததஸ்து ஸம்பூர்ணம் த்வத்ப்ரஸாதான் மஹேச்வர ॥

அபராத ஸஹஸ்ராணி க்ரியந்தேऽஹர்நிசம் மயா ।

க்ஷமஸ்வ தாநி ஸர்வாணி பிதா புத்ரமிவேச்வர ॥

*என்று தவறுதலிருப்பின் மன்னிப்பு கோரி பூஜையை முடிக்கவும்.*

*எல்லா நலன்களையும் தரவல்லது இந்த வழிபாடு.*

★ ★ ★

विंशोऽध्यायः

# सोमवारव्रत-तदुद्यापनविधिः ।

अगस्त्यः -

शक्त्या वित्तानुसारेण कर्तव्यं व्रतिनां वरैः ।
नियमानथ वक्ष्येऽहं व्रतोद्यापनकर्मणः ॥ १
सोमवारे विशेषेण धवलैरम्बरैरपि ।
गन्धैः पुष्पैश्च नैवेद्यैः पूजयेत्सोमसुन्दरम् ॥ २
विविधानुपचारांश्च परस्य परमेष्ठिनः ।
द्रव्यैर्न्यायार्जितैः कुर्याद्वित्तशाठ्यविवर्जितः ॥ ३
सोमवारे सुन्दरेशधाम्नि संमार्जनादिकम् ।
यः करोति सकृद्भक्त्या सोऽक्षयं फलमश्नुते ॥ ४
तद्वारे चित्रवस्त्राद्यैः सोमसुन्दरमन्दिरम् ।
अलङ्करोति यो भक्त्या तस्य तुष्यति शङ्करः ॥ ५
सोमसुन्दरलिङ्गस्य प्रासादं दन्तिभिर्धृतम् ।
अन्तर्बहिश्च संक्षाल्य घर्षयित्वा पुनः पुनः ॥ ६
सोमवारे गन्धपङ्कैः प्रलिप्याथ प्रधूपयेत् ।
स सर्वपापनिर्मुक्तः सर्वान् कामानवाप्नुयात् ॥ ७
हालास्येशस्य तद्वारे तैलाभ्यङ्गं करोति यः ।
घृताभ्यङ्गं तु वा भक्त्या तस्य सम्पत्समेधते ॥ ८
यः पञ्चगव्यैस्तद्वारे स्नापयेत्सोमसुन्दरम् ।
स सप्तजन्मसम्भूतैस्सर्वपापैः प्रमुच्यते ॥ ९

सुन्दरेशं सोमवारे स्नापयेत्पयसा च यः ।
स जित्वा सकलाञ्छत्रून् सर्वैश्वर्यमवाप्नुयात् ॥ १०
वारराजे महालिङ्गं यो दध्ना स्नापयेत्सकृत् ।
सर्वसद्गुण संयुक्तः सर्वमङ्गळवान् भवेत् ॥ ११
यः कृष्णगोघृतेनापि स्नापयेत्सोमसुन्दरम् ।
इह भुक्त्वा महाभोगान् शंभोस्सायुज्यमाप्नुयात् ॥ १२
तद्वारे मधुरानाथं मधुना स्नापयेत्सकृत् ।
स प्रतापी च भोगी च सर्वोत्कर्षेण वर्तते ॥ १३
वारराजे शर्करया तल्लिङ्गं योऽभिषिञ्चति ।
स सर्वसम्पदाधारः सर्वत्र विजयी भवेत् ॥ १४
स्नानमिक्षुरसेनैव तल्लिङ्गस्य करोति यः ।
वारोत्तमे संकृद्भक्त्या सार्वभौमत्वमाप्नुयात् ॥ १५
तद्वारे तन्महालिङ्गं स्नापयेन्नालिकेरकैः ।
स भुङ्क्ते विपुलान् भोगान् सदा पूर्णमनोरथः ॥ १६
लाङ्गलीकदलीचूतद्राक्षापनसम्भवैः ।
फलसारैश्च सगुळैस्तल्लिङ्गोद्वर्तनं सकृत् ॥ १७
करोति सोमवारे यस्स शास्ति महतीं महीम् ।
गन्धोदकेन तद्वारे तल्लिङ्गं योऽभिषेचयेत् ॥ १८
स सर्वदुःखनिर्मुक्तः सौभाग्यारोग्यवान् भवेत् ।
नमकादि सहस्रान्तैः स्थापितैः कलशैश्च तम् ॥ १९
अभिषिच्य च तद्वारे सर्वान् कामानवाप्नुयात् ।
कदम्बवननाथस्य सुगन्धालेपनं सकृत् ॥ २०

यः करोति च तद्वारे स सुखी सर्वदा भवेत्।
सोमवारे तु विशदैर्वस्त्रैराभरणैरपि ।। २१
सुगन्धपुष्पैस्तल्लिङ्गमभ्यर्च्य श्रीपतिर्भवेत्।
यो यजेत्सोमवारे तमखण्डैर्बिल्वपत्रकैः ।। २२
आयुष्मान् बलवान् श्रीमान् गोमानर्थपतिर्भवेत्।
साज्यगुग्गुलुधूपस्य दानतस्सोमवासरे ।। २३
अपराधसहस्राणि क्षमते सोमसुन्दरः ।
सुन्दरेशाय तद्वारे घृतदीपान्ददाति यः ।। २४
अचलां श्रियमाप्नोति महता तेजसा सह।
नैवेद्यं भक्ष्यभोज्याद्यं यस्तस्मै च निवेदयेत्।। २५
सप्तद्वीपसमुद्रायाः क्षितेरधिपतिर्भवेत्।
तस्मै कर्पूरताम्बूलं तद्वारे यो निवेदयेत्।। २६
सुरूपस्सुभगः श्रीमान् सुगन्धात्मा च जायते।
अन्नेन तन्महालिङ्गं पायसेन गुलेन वा ।। २७
शर्कराभिस्तिलैर्वापि साक्षतैस्सत्फलैस्तु वा।
दूर्वाङ्कुरैस्सुपुष्पैर्वा बिल्वपत्रैरखण्डकैः ।। २८
गोधूमयवशाल्यादितण्डुलैः पुष्पसंयुतैः ।
आपूरयेन्महाभक्त्या स राज्याधिपतिर्भवेत्।। २९
यावन्तस्तण्डुलकणा यावन्तोऽन्नादिसम्भवाः ।
तावद्युगसहस्राणि शिवलोके महीयते ।। ३०
सचन्द्रचन्दनैश्चैव प्रलिप्य द्विजसत्तमाः ।
लिङ्गं सवेदिकञ्चैव पश्चाल्लिङ्गं प्रपूजयेत्।। ३१

सुगन्धपुष्पमालाभिर्वेष्टयित्वा सुगन्धिभिः ।
पुष्पाध्यायोक्तकुसुमैः पूजयेत्सोमसुन्दरम् ।। ३२
सोमवारे च नियमात् पत्रपुष्पफलादिभिः ।
प्रशस्तं पूजनं तच्च भोगमोक्षप्रदायकम् ।। ३३
उपरागादिकालेषु महापुण्यप्रदेषु च ।
सोमसुन्दरलिङ्गस्य याः पूजा विविधाः कृताः ।। ३४
सोमवारे कृतार्चायाः कोट्यंशेनापि नो समाः ।
किमत्र बहुनोक्तेन स्वशक्त्या यो व्रतश्चरेत् ।। ३५
सगोभूधनधान्याद्यैः सहितस्सुखमेधते ।
यस्सुन्दरेशस्य च सोमवारे नाम्नां सहस्रेण करोति पूजाम् ।
स मुक्तपापस्सकलारिजेता सदा सुभोगी लभते च कामान् ।।
सोमसुन्दरलिङ्गस्य सोमवारे विशेषतः ।। ३७
प्रदक्षिणनमस्कारस्तोत्राणि च करोति यः ।
तस्य सिद्ध्यन्ति सर्वाश्च सिद्धयस्त्वणिमादिकाः ।। ३८
भक्त्या पत्रैः फलैः पुष्पैस्तोयैरपि यजेच्छिवम् ।
तदनन्तफलं प्रोक्तं भक्तिरेवात्र कारणम् ।। ३९
ब्रह्महा वा सुरापो वा स्तेयी वा गुरुतल्पगः ।
यः पूजयेन्महादेवं मुच्यते सर्वपातकैः ।। ४०
निर्माल्यं धारयेद्भक्त्या शिरसा पार्वतीपतेः ।
राजसूयस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ।। ४१
शिरसा शिवनिर्माल्यं यो धत्ते भक्तिसंयुतः ।
स शुचिः स शिवज्ञानी भक्तिमुक्त्योः स भाजनम् ।। ४२

पृथूदकं महातीर्थं गङ्गा च यमुना नदी।
सरस्वती नर्मदा च नद्यो गोदावरीमुखाः ।। ४३
सदा सन्निहितास्त्वेताः शम्भोः स्नानोदके शुभे।
तस्मात्स्नानोदकं सेव्यं सर्वतीर्थमयं हि यत्।। ४४
मज्जनात्तु महापापैस्तत्क्षणादेव मुच्यते।
स्नानोदकञ्च निर्माल्यं भक्त्या धार्यं प्रयत्नतः ।। ४५
न तान्स्पृशन्ति पापानि मनोवाक्कायजानि च।
एकभुक्तव्रतं श्रेष्ठं ततो नक्तव्रतं परम्।। ४६
तस्मादुपोषणं मुख्यं तच्च जागरतोऽधिकम्।
तस्माच्चतुर्षु यामेषु पूजया युक्तमुत्तमम्।। ४७
एवं पञ्चविधं ख्यातं व्रतं सर्वोत्तमोत्तमम्।
एकवर्षं द्विवर्षं वा वर्षत्रयमथापि वा।। ४८
वर्षद्वादशपर्यन्तं कामान् सङ्कल्प्य वाऽऽचरेत्।
शरीरपातपर्यन्तमवश्यं तत्सुधीश्चरेत्।। ४९
पूर्णे सङ्कल्पिते काले कुर्यादुद्यापनं व्रती।
शरीरपातपर्यन्तं यः करोति महाव्रतम्।। ५०
उद्यापनक्रिया तेन न कार्या काङ्क्षितासये।
अन्य उद्यापनं कुर्यात्संकल्पितदिनावधौ।। ५१
तद्विधानमथो वक्ष्ये सङ्क्षेपेण मुनीश्वराः।
व्रतान्ते प्रतिमां शम्भोः साम्बां रूप्यमयीं शुभाम्।। ५२
अधमां दशनिष्कैश्च विंशन्निष्कैश्च मध्यमाम्।
त्रिंशन्निष्कैरुत्तमाञ्च कारयेच्छिल्पिना सुधीः ।। ५३

चतुर्भुजां त्रिनेत्रां च मृगीपरशुधारिणीम्।
अभीतिवरदोपेतां चन्द्ररेखावतंसिनीम्।। ५४
भवानीमपि तद्वामे भुजद्वयविराजिताम्।
दधतीं फुल्लकल्हारं प्रसृतान्यकराम्बुजाम्।। ५५
कारयित्वा विधानेन पश्चात्कर्म समारभेत्।
एकभुक्तं पूर्वदिने कृत्वाऽवश्यं जितेन्द्रियः ।। ५६
श्वस्सोमवारे सम्प्राप्ते कुर्यात्सम्यगुपोषणम्।
नवहस्तप्रमाणेन षोडशस्तम्भसंयुतम्।। ५७
मण्डपं कारयित्वा तु चतुर्द्वारविराजितम्।
मध्ये वेदिं विधायाथ दर्पणोदरसन्निभाम्।। ५८
वितानाद्यैस्तोरणाद्यैः समलङ्कृत्य मण्डपम्।
पूर्वस्यां दिशि वैशान्यां कुर्यात्कुण्डं सलक्षणम्।। ५९
वृत्तं वा चतुरश्रं वा मेखलात्रयसंयुतम्।
प्रातः स्नानादिकं नित्यकर्म निर्वर्त्य साधकः ।। ६०
पुराणश्रवणाद्यैश्च दिवाशेषं व्यपोह्य च।
रात्रौ च प्रारभेद्धीमान् प्रतियामं शिवार्चनम्।। ६१
वेदिकोपरि पीठस्थे लिङ्गे वा स्थण्डिलोपरि।
स्थापिते स्वर्धुनीयुक्ते कुम्भे वा मण्डलेऽपि वा।। ६२
प्रतिमासु शिवस्यापि कृतासु कनकादिभिः।
सोमसुन्दरमीशानं समावाह्य प्रपूजयेत्।। ६३
संस्थाप्य सन्निधौ तस्य प्रतिमामपि तां यजेत्।
पञ्चगव्येन संस्नाप्य ततः पञ्चामृतेन च।। ६४

गन्धाद्यैरुपचारैश्च पूजां पूर्ववदाचरेत्।
चतुर्यामेषु पूजान्ते होमकर्म समाचरेत्॥ ६५
अग्न्याधानादिकं सर्वं स्वसूत्रोक्तेन वर्त्मना।
निर्वर्त्य वह्निहृदये भावनाकल्पितासने॥ ६६
साम्बं देवं समावाह्य गन्धाद्यैः परिपूज्य च।
त्रियम्बकेन मन्त्रेण शतमष्टोत्तरं हुनेत्॥ ६७
गौरीमिमायेति ऋचा हुनेदष्टोत्तरं शतम्।
आज्येन प्रथमे यामे शर्कराभिर्द्वितीयके॥ ६८
साज्यैस्तिलैस्तृतीये तु पायसेन चतुर्थके।
एवं चतुर्षु यामेषु कुर्याद्धोमं विधानतः॥ ६९
ततः प्रभाते सम्प्राप्ते स्नानाद्यं नित्यकर्म च।
कृत्वा श्रीसुन्दरेशस्य पूजां सम्यग्विधाय च॥ ७०
साज्येनान्नेन मन्त्राभ्यां प्रत्येकं साधकोत्तमः।
अष्टोत्तरशतं हुत्वा वह्निकार्यं समापयेत्॥ ७१
श्रोत्रियं सुधियं शान्तं शिवशास्त्रविशारदम्।
गुरुं सङ्कल्प्य मतिमान्कुर्यात्तेनोक्तमादरात्॥ ७२
त्रयोदश घटान् श्वेतवस्त्रयुग्मविभूषितान्।
क्षीरेण परिपूर्णांश्च स्थापयेत् स्थण्डिलेषु च॥ ७३
सुस्निग्धेन सुभक्तेन घृतशाकगुलैरपि।
सम्पूर्णानि सुभक्ष्यैश्च वंशपात्राणि च व्रती॥ ७४
तेषामुपरि संस्थाप्य शिवभक्तियुतान् द्विजान्।
कृतोपवासान् संपूज्य गन्धस्रग्वस्त्रभूषणैः॥ ७५

त्रयोदश घटान् दद्याद्गाश्च श्वेतास्त्रयोदश।
छत्रोपानत्कुण्डिकाश्च व्रतसम्पूर्तिहेतवे ।। ७६
ततो गुरुं भक्तिपूर्वमासने चोपवेश्य च।
अर्चयेद्गन्धपुष्पाद्यैरम्बराभरणैरपि ।। ७७
न गुरोस्सदृशी माता न गुरोस्सदृशः पिता।
संसारादुद्धरेद्यो हि व्रतज्ञानोपदेशतः ।। ७८
गुरुस्सम्पूजितो येन पार्वत्या सहितश्शिवः ।
तेन पूजित एव स्यान्नात्र कार्या विचारणा ।। ७९
अथ प्रयत आचार्यो मण्डपे समलङ्कृते।
चतुर्भुजां प्रसन्नास्यामुमया सहितां पराम् ।। ८०
प्रतिमां तां रूप्यमयीमभिषिच्याथ पूजयेत्।
वस्त्रैराभरणैर्गन्धैर्माल्यैर्धूपैश्च दीपकैः ।। ८१
नानाविधैश्च नैवेद्यैस्ताम्बूलैश्च सुवासितैः ।
पूजितां प्रतिमां तस्मै सवस्त्राश्च सदक्षिणाम् ।। ८२
प्रदद्याद्गुरवे सोमसुन्दरः प्रीयतामिति।
यथा साम्बं सुन्दरेशं भक्त्या पूजयति व्रती ।। ८३
तथाऽऽचार्यं च मतिमान् पूजयेद्भार्यया समम्।
विचित्राणि च वस्त्राणि सौवर्णाभरणानि च ।। ८४
अमूल्यानि च रत्नानि क्षेत्रग्रामपुराणि च।
नगराणि च राज्यानि दासीदासधनानि च ।। ८५
वाहनानि विचित्राणि रथवाजिगजादिकम्।
अन्यानि यान्यभीष्टानि तानि सर्वाणि दापयेत् ।। ८६

धेनुं पयस्विनीं दद्यात्सवत्सां स्वर्णशृङ्गिकाम्।
ताम्रपृष्ठां रौप्यहारां मुक्तालाङ्गूलभूषिताम्॥ ८७
दोहपात्रयुतां सौम्यां वस्त्राद्यैः परिपूजिताम्।
सदक्षिणां च गुरवे व्रतसम्पूर्तिहेतवे॥ ८८
सर्वधान्यं यथाशक्ति दापयेद्भक्तितो व्रती।
दीपदानं प्रकर्तव्यं गुरुवे ज्ञानदायिने॥ ८९
ये ये कृतास्स्युर्नियमास्तेषां तेषां फलाप्तये।
सोममुद्दिश्य दातव्यमेष धर्मस्सनातनः॥ ९०
पञ्चामृतस्य नियमाद्गोदानं च प्रशस्यते।
पुष्पाणां नियमेनैव सौवर्णं कुसुमं भवेत्॥ ९१
धान्यानां पूरणं येषां धान्यदानं प्रशस्तकम्।
फलानां नियमे दद्यात्सौवर्णानि फलानि च॥ ९२
घृतकम्बलपूजायां घृतदीपप्रदानकम्।
सर्वेषां नियमानाञ्च स्वर्णदानमथापि वा॥ ९३
गोदानं वा व्रती कुर्यात् व्रतस्य फलसिद्धये।
एवं वित्तानुसारेण कुर्यादुद्यापनं व्रती॥ ९४
उद्यापनेन सिद्धिस्स्यान्नान्यथा मुनिसत्तमाः।
शरीरपातपर्यन्तं यश्चरेद्व्रतमुत्तमम्॥ ९५
उद्यापनविधिस्तस्य नास्तीह मुनिसत्तमाः।
एवमुद्यापनविधिं निर्वर्त्य नियमी यमी॥ ९६
पारणञ्च ततः कुर्याद्बन्धुभिश्च समं द्विजैः।
एवं विधिसमायुक्तस्सर्वलोकसुपूजितः॥ ९७

भोगान्भुङ्क्ते सर्वलोके शतकोटियुगान्तरम्।
अप्सरोभिर्वेष्टितस्सन् रमते स्वेच्छयाऽनिशम्॥ ९८
माहात्म्यात्सोमवारस्य चान्ते मुक्तिमवाप्नुयात्॥
पूर्वं कृष्णेन सञ्चीर्णं ततो वै पद्मयोनिना॥ ९९
देवदानवगन्धर्वपिशाचोरगराक्षसैः।
मुनिभिर्मनुभिस्तद्वत् स्वायम्भुवमुखैरपि॥ १००
अन्यैश्च मानवैः शुद्धैरास्तिकैर्धर्मतत्परैः।
न देयं दुष्टचित्ताय श्रद्धाहीनाय न क्वचित्॥ १०१
शास्त्रधर्मद्विषे नैव विडम्बकजनाय च।
आचार्यवेदविप्राणां सतीनां व्रतशीलिनाम्॥ १०२
वह्निदेवसुतीर्थानां निन्दकाय न वै क्वचित्।
कदाचिदपि न त्याज्यं व्रतं नाम सुदुर्लभम्॥ १०३
व्रतत्यागान्महादोष इति ज्ञात्वा समाचरेत्।
गुरोस्समीपे कुर्वीत व्रतमेतद्व्रती सदा॥ १०४
अन्यथा गुरुहीनस्य निष्फलं जायते व्रतम्॥
सन्देहस्सर्वकार्येषु गुरुहीनस्य वै भवेत्॥ १०५
तस्मात्सर्वप्रयत्नेन गुरुमेव समाश्रयेत्।
अथ संक्षेपतो वक्ष्ये व्रतमाहात्म्यमुत्तमम्॥ १०६
ये चरन्ति नरा भक्त्या स्त्रियो वा मुनिपुङ्गवाः।
तेषां जन्मसहस्रेषु न शोको जायते क्वचित्॥ १०७
न दारिद्यं न रोगश्च सन्ततिच्छेद एव वा।

कुलकोटिं त उद्धृत्य स्थापयन्तींद्रसद्मनि ।। १०८

इत्थं शृणोति माहात्म्यं पठ्यमानं व्रतस्य यः ।

श्रावयेद्भक्तिसंयुक्तो रुद्रस्यानुचरो भवेत् ।। १०९

क्रियमाणं तथा पश्येद्व्रतमेतच्छिवप्रियम् ।

भक्तियुक्तो नरश्श्रुत्वा यश्चैवानुप्रमोदते ।। ११०

मतिं ददाति यश्चापि व्रतस्य करणाय च ।

स्वर्गे वसन्ति ते सर्वे यावदिंद्राश्चतुर्दश ।। १११

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*

*हालास्यमाहात्म्ये सोमवारव्रत-तदुद्यापनविधिर्नाम*

*विंशोऽध्यायः*

## அத்தியாயம் -20

## ஸோமவாரவ்ரதமும் அதன் நிறைவும்

*ஸோமவார வ்ரதத்தைத் தொடங்கும் போது ஓராண்டு, ஈராண்டுகள், பத்தாண்டுகள் எனக் குறிப்பிட்ட காலவரை வரை தொடர்ந்து ஒவ்வொரு திங்களன்று உபவாஸம் முதலிய நியமங்களுடன் ஈசனை வழிபடுவதாக ஸங்கல்பம்செய்து கொள்ள வேண்டும். உயிருள்ளவரை செய்வதாக ஸங்கல்பம் செய்து கொள்ளலாம். அந்தக் காலம் வரை திங்களன்று முறைப்படி பூஜை செய்து வர வேண்டும். தன் வீட்டில் வழிபட இயலாதவர் சிவாலயத்தில் ஈசனை குருவைக் கொண்டு வழிபடலாம். அங்கு ஒவ்வொரு திங்களன்றும் நியமத்தோடு பாலாலும், தேனாலும், நெய்யாலும், சந்தனக் குழம்பாலும் புண்ய நதீ நீராலும் மற்ற வற்றாலும் அபிஷேகம் செய்விக்கலாம். கோவிலும்*

வழிநடையும் தூய்மையுடனிருக்க உதவலாம். ஆயிரம் கலச நீரால் ஈசனை நீராட்டலாம். சந்தனப் பூச்சு, தூய ஆடை, புஷ்பாலங்காரம், புஷ்பத்தாலும் பில்வதளங்களாலும் அர்ச்சனை முதலியன செய்விக்கலாம். ஸஹஸ்ர நாமார்சனை ருத்ரபாராயணம், துதிப்பாடல்களைப்பாடுதல் முதலிய வற்றை நியமத்தோடு செய்து வரலாம். திங்களன்று ஈசனின் நினைவு மனத்தை விட்டகலாதபடி செய்து வழிபடுவது சிறந்தது.

ஸங்கல்பித்தபடி குறிப்பிட்ட காலவரை வரை வழிபட்டுப் பின்ஈசனின் க்ருபையால் அது நிறைவேறியதும் அதன் நிறைவு விழா செய்ய வேண்டும். உயிருள்ளவரை செய்வதாயின் நிறைவு விழா அவசியமில்லை. அல்லது அவரது ஸந்ததியினர் அதனை நிறைவுசெய்யலாம்.

குறிப்பிட்ட காலவரை வ்ரதமிருந்தவர். அதனை நிறைவு செய்யத்தன் சக்திக் கேற்ப பின் வருமாறு செய்யலாம். நான்கு கைகளும் மூன்று கண்களும் மானும், கோடரியும், அபயமும், வரமும் கையில் ஏந்திய சிவனது வெள்ளியாலான ப்ரதிமையையும் அவருக்கு இடது புறத்தில்இடது கையால் மலர்ந்த செங்கழனீர்ப்பூ ஏந்தியும் வலது கையை பக்தருக்கு அருள்புரிய நீட்டியும் காட்சிதருகிற தேவியின் ப்ரதிமையையும் பெருமண்டபத்தில் வைத்து வழிபட வேண்டும். ஆஸனம் முதலிய பதினாறு உபசாரங்கள் செய்த பின் அவருக்குக் கிழக்கே ஹோம குண்டத்தில் அக்கினி வளர்த்து, திரியம்பக மந்த்ரத்தால் 108 தடவை ஹோமம் செய்து பின் இரவின் நான்கு யாமங்களில் பூஜை செய்து மறுநாள் விடிந்ததும் நல்ல குருவின் உதவியுடன் பதிமூன்று கலசங்களில் பால் நிரப்பி அக்ஷதைமீது வைத்து ஸுந்தரேசரை வழிபட்டுப் பூஜை முடிந்ததும் அந்த கலசங்களைப் பதிமூன்று அந்தணர்களுக்குத் தானம் செய்ய வேண்டும்.

குருவிற்கு உபசாரம் செய்து ஸோமஸுந்தரர் திருப்தி அடையட்டும் என்ற கோரி, வஸ்திரம் தக்ஷிணை முதலியவற்றைத் தந்து வணங்க வேண்டும்.

இந்த ஸோமவார வ்ரதத்தை முறைப்படி செய்பவன் இம்மையில் எல்லாப் பெருமைகளையும் பெற்று சிவனது உலகம் அடைவான். (எந்த மாதத்தில் பூஜை தொடங்கப்பெற்றதோ அதற்குப் பின் வருகிற ஆண்டின் அதே மாதத்தில் நிறைவு செய்வது ஓராண்டிற்கான வ்ரத ஸங்கல்பத்தை ஒட்டி நடைபெறும். பல ஆண்டுகளுக்கான ஸங்கல்பமாயிருந்தால் தொடங்கிய மாதத்திலேயே நிறைவு. அதனால் 13 கலசங்கள் என்ற கணக்கு).

★ ★ ★

## एकविंशोऽध्यायः

# १५. मेरोः काञ्चनाहरणम्

अगस्त्यः -

इत्थमुग्रो महाधीरः सुन्दरेशशिवात्मजः ।
सोमवारव्रतं चक्रे सोमसुन्दरसन्निधौ ॥ १
तेन व्रतप्रभावेन निश्चला भक्तिरुत्तमा ।
श्रीमच्छरणयोः शम्भोरभूदुग्रमहीपतेः ॥ २
अनन्यलब्धया भक्त्या कुमारं सद्गुणान्वितम् ।
वीरपाण्ड्य इति ख्यातं जयन्तमिव देवराट् ॥ ३
महिष्यां कान्तिमत्याश्च लब्धवानुग्रभूपतिः ।
येन कान्तिमती सा च वीरसूरिति पप्रथे ॥ ४
अहो भक्तिप्रभावश्च को वा वक्तुमिह क्षमः ।
येन देवासुरादीनां सम्भवन्ति विभूतयः ॥ ५
भक्तिर्हालास्यनाथाङ्घ्र्योर्दुर्लभा खलु देहिना ।
कथञ्चित्तां लभन्ते ये तेषां नैवास्ति दुर्लभम् ॥ ६

भक्तिमान्राज्यमैश्वर्यमिन्द्रत्वं ब्रह्मणः पदम् ।
विष्णुत्वमपि मुक्तिश्च नूनं प्राप्नोत्यसंशयः ॥ ७
कर्मणामशुभानाञ्च शुभानामपि सञ्चयम् ।
करोति भस्मसाद्भक्तिर्भवस्याग्निरिवेन्धनम् ॥ ८
म्लेच्छोऽपि वा यदि भवेद्भवभक्तिसमन्वितः ।
न तत्समश्चतुर्वेदी नाग्निष्टोमादियज्ञकृत् ॥ ९
आदिमध्यान्तरहिते जीवन्मुक्तिपुरेश्वरे ।
सदा मनीषिभिः कार्या भक्तिरेव मुनीश्वराः ॥ १०
अपि पापानि घोराणि सदा कुर्वन्नरो यदि ।
न लिप्यते सर्वपापैर्भक्त्या युक्तस्तु शङ्करे ॥ ११
शिवभक्त्या महात्मानो मुच्यन्ते तत्तु नाद्भुतम् ।
अपि दुष्कृतकर्माणो मुच्यन्ते भक्तिलेशतः ॥ १२
सकृत्पूजयते यस्तु भक्त्या हालास्यनायकम् ।
अप्यश्वमेधादधिकं फलं प्राप्नोति स ध्रुवम् ॥ १३
कुरुक्षेत्रे निवसतां यत्फलं नैमिशे सदा ।
प्रयागे च प्रभासे च गङ्गासागरसङ्गमे ॥ १४
रुद्रकोटौ गयायाञ्च सालग्रामेऽमरेश्वरे ।
पुष्करे भारभूतीशे गोकर्णे मण्डलेश्वरे ॥ १५
काश्यां श्रीपर्वतक्षेत्रे श्रीमद्व्याघ्रपुरे वरे ।
श्रीमद्दक्षिणकैलासप्रमुखेष्वखिलेष्वपि ॥ १६
तत्फलं दिवसेनैव हालास्यक्षेत्रवासिनाम् ।
भविष्यति न सन्देहस्सत्यवादी गुहो यतः ॥ १७

हालास्येशार्चनात्पुण्यमधिकं भुवनत्रये ।
नास्तीति मत्वा मतिमान् यथाशक्ति तमर्चयेत् ।। १८
सर्वत्र यानि तीर्थानि पुण्यान्यायतनानि च ।
श्रीहालास्येश्वरे लिङ्गे वसन्त्येव न संशयः ।। १९
आराधयति तल्लिङ्गं भक्तिभावेन यस्सकृत् ।
स स्नातस्सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।। २०
इह भुक्त्वा महाभोगानन्ते सायुज्यमाप्नुयात् ।
चतुर्दश्यामथाष्टम्यां पूर्णिमायां विशेषतः।। २१
अमायाश्च व्यतीपाते ग्रहणे सोमसूर्ययोः ।
सङ्क्रान्त्यादिषु कालेषु महापुण्यप्रदेषु वा ।। २२
सोमवारे च यो भक्त्या पूजयेत्सोमसुन्दरम् ।
स महापातकान्मुक्तः सुमहत्पदमाप्नुयात् ।। २३
एतेषु पुण्यकालेषु विशेषादुग्रभूपतिः ।
शम्भोः कृत्वा तु विविधां पूजां पूर्णमनोरथः ।। १४
सदा सर्वानरीन्जित्वा धनदेन समोऽर्थिनाम् ।
पुत्रेण वीरपाण्ड्येन सहितश्चिरमैधत ।। २५
एवमुग्रमहीपाले महीं शासति सादरम् ।
अनावृष्टिः पुनरभूत्प्राणिनामतिदारुणा ।। २६
द्विजानाहूय पप्रच्छ वृष्ट्यभावनिदानकम् ।
उग्रः प्रतापी भूपालस्तेऽप्यूचुस्तस्य कारणम् ।। २७
ग्रहास्सर्वे रविमुखा वक्रशीलाश्च दुःस्थिताः ।
तस्मादनावृष्टिरभूदिति मन्यामहे वयम् ।। २८

इत्युक्त्वाऽनुज्ञया तस्य विप्रा देशान्तरं ययुः ।
धान्याभावात्प्रयातेषु विप्रेषु धरणीपतिः ।। २९

अवाप चिन्तां महतीं मन्त्रिभिस्तु निरन्तरम् ।
धनिनो ये द्विजान्देवान् यजन्ति विविधान् यदा ।। ३०

तदा वर्षन्ति मेघाश्च कथयन्ति पुराविदः ।
मदीयदेशमध्ये तु धनं धान्यं सुदुर्लभम् ।। ३१

कथं प्रतिक्रियां कर्तुं शक्तोऽहं वृष्टिसाधने ।
सुमीनाक्षीसुन्दरेशौ भक्तकल्पमहीरुहौ ।। ३२

तयोरनुग्रहो यत्र तत्र शोको न विद्यते ।
एवमार्तो लपन्नेव शेते केवल भूतले ।। ३३

भक्तानुकम्पी भूतेशः स्वप्न एवं तमब्रवीत् ।
आश्रितानाञ्च सेनानां त्वदीयानाञ्च रक्षणे ।। ३४

उपायमथ वक्ष्येऽहं शृणु भूपाल मत्प्रिय ।
शीघ्रं गत्वा महामेरुं वेगाच्चण्डायुधेन तम् ।। ३५

प्रहृत्य च यथेच्छं तु गृहीत्वा बहुलं धनम् ।
कोशवत्त्वं मुद्रयित्वा समानीय च तद्धनम् ।। ३६

सर्वेभ्यश्चाश्रितादिभ्यः प्रदाय धनमुत्तमम् ।
त्वमप्यतिसुखं लब्ध्वा चिरञ्जीवी भविष्यसि ।। ३७

वर्षमात्रादनावृष्टिर्गमिष्यति न संशयः ।
संस्थाप्य ब्राह्मणं त्वेकं बहुमन्यस्व मामिव ।। ३८

इत्युक्त्वाऽन्तर्दधे शम्भू राजा च सहसोत्थितः ।
कथयित्वा न कस्मैचिद्बहुसेनासमन्वितः ।। ३९

पथिगाश्च नदीस्तीर्त्वा मेरुपार्श्वगते पुरे ।
सेनास्सर्वाश्च संस्थाप्य चण्डायुधलसत्करः ॥४०
मेरुं प्रदक्षिणीकृत्य मनोवेगातिवेगतः ।
गिरेस्तस्य पुरोभागे तस्थावुग्रः प्रतापवान् ॥ ४१
तूष्णीमास्ते स मेरुश्च तदा चण्डायुधेन तम् ।
प्राहरन्महतो वेगात् सोपि कन्दुकवद्भ्रमन् ॥ ४२
सान्निध्यमकरोत्तस्य सहसा भीतमानसः ।
कल्याणशिखरी तस्मै देवोक्तमवदन्नृपः ॥ ४३
तच्छ्रुत्वा स महामेरुर्दैवतात्मा तमब्रवीत् ।
रूपद्वयं विद्यते मे जङ्गमस्थावरात्मकम् ॥ ४४
प्रातः प्रातः प्रतिदिनं वपुषा जङ्गमेन च ।
हालास्येश्वरसेवाश्चाकरवं नियमेन च ॥ ४५
इदानीं मोहतस्सा च न कृता विधिना मया ।
तत्फलं त्वद्य सुव्यक्तमासीत्पाण्ड्य महीपते ॥ ४६
त्वं तद्देवपुत्रोऽसि वीर्येण यशसा श्रिया ।
विशिष्टया शम्भुभक्त्या त्वत्समो न जगत्त्रये ॥ ४७
दुर्लभं भक्तियुक्तानां नास्ति सर्वत्र सन्मते ।
मदीयं स्थावरं रूपं निर्मलं समलं द्विधा ॥ ४८
कुत्रचित्कुत्रचिद्देशे वसुमत्याश्च विद्यते ।
अतिनिर्मलमाश्चर्यं तरुणारुणसन्निभम् ॥ ४९
मदीयमतिशुद्धं च स्थावरं रूपमुत्तमम् ।
बहुधा खण्डितं हेम पूतस्थानेऽत्र विद्यते ॥ ५०

भित्वा स्थपतिसंघैश्च शिलामुपरि संस्थिताम्।
गृहाण त्वं यथाकामं बहुळं धनमुत्तमम्॥ ५१
इत्युक्त्वाऽन्तर्हितो मेरुराधारो जगतां महान्।
तच्छ्रुत्वा वचनं मेरोरत्यन्तं मुदितो नृपः॥ ५२
शिलां स्थपतिभिर्भित्वा यथेच्छं भिन्नहाटकम्।
ग्राहयित्वा तु बलिभिरनेकैः पुरुषैरपि॥ ५३
शिलाभिस्तद्बिलं सद्यो नीरन्ध्रं च पिधाय च।
शफरद्वययुक्तेन भूपश्चण्डायुधेन तम्॥ ५४
मुद्रयित्वा वाहयित्वा वाहकाद्यैर्धनानि च।
सेनानिवेशं स्वं प्राप्य सुन्दरेशं हृदि स्मरन्॥ ५५
राशीचकार तत्सर्वं हाटकं पर्वतोपमम्।
जनास्सर्वे मुमुदिरे तदालोक्य सुविस्मिताः॥ ५६
सर्वेषामेकवर्षस्य भुक्त्यै स्वर्णमदादलम्।
आदाय तद्धनं सर्वे प्राशंसन्त्सोमसुन्दरम्॥ ५७
गोणीश्च बह्वीस्सम्पूर्य गजोष्ट्रतुरगादिषु।
आरोप्य तद्धनं सर्वं विमानमधिरुह्य च॥ ५८
जगाम पाण्ड्यो मधुरामश्रान्तस्सपरिच्छदः।
विमानं गोपुराद्यश्च सुन्दरेशालयाश्रितम्॥ ५९
कारयामास भूपालः कनकेन विचित्रितम्।
द्विजांश्च तोषयामास ग्रहान् रविमुखानपि॥ ६०
अनावृष्टिर्गता सद्यस्सुवृष्टिश्च समागता।
पुनर्विशेषतो राजा द्विजान् देवानतर्पयत्॥ ६१

राज्यं चकार धर्मात्मा प्रजास्सर्वाश्च पालयन्।
उग्रेण कृतया नीत्या जगदासीन्मुदान्वितम्॥ ६२
स तु सङ्कल्पसिद्धस्सन् सर्वसद्गुणसंयुतः।
निस्सपत्नां महीं भुक्त्वा चतुस्सागरमध्यगाम्॥ ६३
पुत्रस्य वीरपाण्ड्यस्य कृत्वा राज्याभिषेचनम्।
शिवसायुज्यमापायं सुन्दरेशप्रसादतः॥ ६४
लीला पञ्चदशी प्रोक्ता श्रीमद्धालास्यवासिनः।
यः कीर्तयेदिमां भक्त्या शृणुयाद्वा समाहितः॥ ६५
समस्तदुःखनिर्मुक्तस्सर्वसम्पत्समन्वितः।
इह लोके महाभोगान् प्राप्यान्ते च शिवं व्रजेत्॥ ६६

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - मेरोः काञ्चनाहरणं नाम*
*एकविंशोऽध्यायः*

## அத்தியாயம் -21

## 15. மேருவிலிருந்து தங்கம் கொணர்தல்

*உக்கிர பாண்டியன் முறைப்படி ஸோமவார வ்ரதமிருந்து ஸோமஸுந்தரரைப் பக்தியுடன் வழிப்பட்டான். அவனுக்குக் காந்திமதியிடம் வீரபாண்டியன் என்ற புதல்வன் பிறந்தான். புண்ய காலங்களில் சிவனது வழிபாட்டில் ஈடுபட்டு உக்ரன் எங்கும் வெற்றியுடன் அரசாண்டான். அவனது ஆட்சியில் ஒரு ஸமயம் தொடர்ந்து மழையின்மையால் பஞ்சம் ஏற்பட்டது. அறிஞர்கள் க்ரஹங்களின் வக்கிரநிலையால் இவ்வாறு நேர்ந்துள்ளதென்றனர். மக்கள் பஞ்சக் கொடுமையில்*

நாட்டைவிட்டகன்றனர். எங்கும் ஏழ்மை சூழ்ந்தது. வேள்விகள் செல்வமின்மையால் நின்றன.

ஈசன் உக்ரனது கனவில் வந்தார். செண்டாயுத மேந்தி மேருமலைக்குச் சென்று அங்கிருந்து தங்கப் பாளங்களைக் கொணர்வாய். உன்னை அண்டியுள்ள நாட்டுமக்களுக்கு அளிப்பாய். வேள்வி முதலிய நற்பணிகளைப் புரிந்தால்பஞ்சம் விலகும் என்றார். அரசன் உடனே மேருவை விமானத்தால் அடைந்துஅதனை செண்டாயுதத்தால் தாக்கியதும் மேரு அவனுக்கு முன் தோன்றி அரசனிடம் கூறினான். ''எனக்கு இரண்டு உருவங்கள் உண்டு. ஒன்று இந்த மலை. மற்றொன்று இந்த தேவர் வடிவம். வெகுநாட்களாக ஈசனை வலம்வந்து வழிபடுவதை விட்டுவிட்டேன். அதனால் உன் செண்டால் அடிபட்டேன். நீ ஈசனின் புதல்வன். என்வடிவில் அழுக்கு கலந்த பகுதியே உன் கண்களில் புலப்படுகின்றது. இது மட்டமான உலோஹம். சுத்தமான உலோஹமாக அது சிகரத்திலுள்ளது. அதை எடுத்துச் செல்.'' இவ்வாறு கூறிய மேருவை வணங்கி ஸ்தபதிகள் மூலம் சிகரத்திலிருந்து சொக்கத் தங்கத்தை வெட்டி எடுத்து அந்தப் பள்ளத்தை மூடி முத்திரையிட்டு தங்கத்துடன் விமானத்தில் மதுரையை அடைந்தான். அந்த தங்கத்தைக் கொண்டு ஈசனின் ஆலய விமானத்தையும் கோபுரத்தையும் செப்பனிட்டு மக்களுக்குப்பகிர்ந்தளித்தான். மக்கள் நற்பணிகளைப் புரிந்தனர். நன்மழை பெய்து பஞ்சம் நீங்கியது. உரிய காலத்தில் வீர பாண்டியனை அரசனாகப் பட்டாபிஷேகம் செய்து சிவனிடம் கலந்தான்

## द्वाविंशोऽध्यायः

# १६. वेदार्थोपदेशः

**अगस्त्यः -**

**समष्टिविद्यानगरीनायकः सोमसुन्दरः ।**

**विद्यानामादिभूतानां वेदानामर्थमादृतः ॥ १**

कण्वादीनां मुनीनां च यया प्राह महेश्वरः ।
तां लीलामथ वक्ष्यामि मुनीन्द्राः सङ्ग्रहेण तु ॥ २
ब्रह्माण्डसृष्टिकाले तु समारब्धे कृते युगे ।
वेदास्समस्ताः सञ्जाताः प्रणवाच्छम्भुवाचकात् ॥ ३
अधीताश्च द्विजैस्सर्वैः शङ्करस्य प्रसादतः ।
न ज्ञायन्ते तदर्थाश्च सर्वैस्तैर्मुनिपुङ्गवैः ॥ ४
अधीताशेषवेदाश्च नैमिशारण्यवासिनः ।
कण्वशाण्डिल्यगर्गाद्याः समवेता व्यचारयन् ॥ ५
अस्माभिः सकलाम्नायाः समधीताः सलक्षणाः ।
तेषामर्था न सुस्पष्टाः सद्गुरोरङ्ग्यदर्शनात् ॥ ६
ज्ञातार्थाश्च भविष्यामःकथं लब्ध्वा च तं गुरुम् ।
इति चिन्तयतां तेषां मुनीनां पुरतो महान् ॥ ७
आविरासीन्महातेजा हरभक्तो महातपाः ।
तं दृष्ट्वा मुनयस्सर्वे प्रणम्य ददुरासनम् ॥ ८
हरभक्तस्तूपविष्टस्तेषां वक्त्राणि वीक्ष्य च ।
प्राह प्रगल्भया वाचा किमर्थं चिन्तयान्विताः ॥ ९
यूयं सर्वे महात्मानः समर्थाः सर्वकर्मसु ।
इति श्रुत्वा वचस्तस्य प्राहुस्सर्वे मुदान्विताः ॥ १०
वेदार्थं च वयं ज्ञातुं महत्या श्रद्धयान्विताः ।
तदर्थज्ञा भविष्यामः केनोपायेन सुव्रत ॥ ११
तमुपायं वदास्माकं भगवन् करुणानिधे ।
मुनीनां तद्वचश्श्रुत्वा हरभक्तस्तदाऽब्रवीत् ॥ १२

हरभक्तः -

शृण्वन्तु मुनिशार्दूलाः सर्वे लोकहितावहम्।
यदत्र दुर्लभं लोके तत्साध्यं तपसो बलात्॥ १३
तपस्विनां जनानान्तु सर्वास्सिद्ध्यन्ति सिद्धयः।
कृतादन्यत्र तपसः पुण्यक्षेत्रकृतं तपः॥ १४
सद्यस्सिद्ध्यति तद्यूयं कुरुध्वं तप उत्तमम्।
शिवक्षेत्राणि सर्वाणि पुण्यक्षेत्राधिकानि च॥ १५
तारतम्येन तान्यत्र विशिष्टानि भवन्ति हि।
क्षेत्राणां शाम्भवानां च वेदान्तैर्घोषितात्मनाम्॥ १६
मध्ये विशिष्टं परमं श्रीमद्धालास्यसंज्ञितम्।
तत्र सिद्ध्यन्ति धर्माद्याः पुमर्थास्त्वविलम्बितम्॥ १७
योगसिद्धिश्च तत्रैव विद्यासिद्धिर्विशेषतः।
समष्टिविद्यानगरी तस्याः पुर्याश्च नाम हि॥ १८
जनाश्च बहवस्तत्र विद्यां प्राप्यातिदुर्लभाम्।
दयया दक्षिणामूर्तेः प्रापुस्सर्वान्मनोरथान्॥ १९
सुमीनाक्षीसुन्दरेशौ भक्तकल्पमहीरुहौ।
नित्यं निवसतस्तत्र भक्तानामनुकम्पया॥ २०
यूयं च तत्र गत्वाऽऽशु देवं देवीं प्रणम्य च।
देवदक्षिणभागस्थदक्षिणामूर्तिसन्निधौ॥ २१
तपश्चरन्तु वेदार्थज्ञानार्थं मुनिपुङ्गवाः।
अर्थश्चाशेषवेदानां व्यक्तो युष्माकमस्तु च॥ २२

इति श्रुत्वा मुनिवरा हरभक्तं प्रणम्य च।
तं मुनिं च पुरस्कृत्य हालास्यं सम्प्रविश्य च ॥ २३
महातीर्थे च संस्नाय महादेवीं प्रणम्य च।
महादेवं च नत्वाऽथ भक्त्या स्तुत्वा विशेषतः ॥ २४
विमानदक्षिणे भागे समागत्य मुनीश्वराः।
शुद्धस्फटिकसङ्काशं वटमूलनिवासिनम् ॥ २५
ब्रह्मादिदेवसङ्घैश्च मुनीन्द्रैश्च समावृतम्।
व्याख्यापीठे निविष्टं तं वेदव्याख्यानतत्परम् ॥ २६
चतुर्भुजं त्रिनेत्रं च मौक्तिकीमक्षमालिकाम्।
सुधापूर्णं हेमकुम्भं ज्ञानमुद्रां च पुस्तकम् ॥ २७
दधानं वरदं देवं दक्षिणामूर्तिमव्ययम्।
विलोक्य विस्मितास्सन्तः प्रणिपत्य पुनः पुनः ॥ २८
स्तुत्वा नानाविधैः स्तोत्रैर्वेदोक्तैर्लौकिकैरपि।
तत्सन्निधौ समासीनास्सर्वे ते मुनिपुङ्गवाः ॥ २९
श्रीमतो दक्षिणामूर्तेर्मेधाविद्यां सुदुर्लभाः।
सर्वज्ञानप्रदां सम्यक् द्वाविंशद्वीजरूपिणीम् ॥ ३०
हरभक्तेनोपदिष्टां जपन्ति स्म मुदाऽन्विताः।
त्रिकालमर्हणां चक्रुर्गन्धाद्यैर्भक्तिपूर्वकम् ॥ ३१
यथासंख्यं तर्पणं च हवनं द्विजभोजनम्।
पञ्चाङ्गोपासनेनैवमुपवासपरायणाः ॥ ३२
तपश्चरन्ति स्म परमाम्नायार्थ प्रसिद्धये।
कार्तिक्यां पौर्णमास्यां च समारभ्य महत्तपः ॥ ३३

पुनस्तत्पौर्णमास्यन्तं चक्रुर्विघ्नविवर्जिताः ।
अथ प्रसन्नो भगवान् दक्षिणामूर्तिरीश्वरः ॥ ३४
सर्वज्ञस्सर्ववेदार्थस्वरूपी भक्तवत्सलः ।
विप्रवेषधरो भूत्वा सोष्णीषस्सोत्तरीयकः ॥ ३५
त्रिपुण्ड्राङ्कितपञ्चाङ्गो रुद्राक्षालङ्कृताकृतिः ।
मन्दस्मितलसद्वक्त्रः कुण्डलादिविभूषितः ॥ ३६
षोडशाब्दवयोयुक्तः सोमवत्प्रियदर्शनः ।
उच्चरन् वेदवाक्यानि सुव्यक्तं सुस्वरं यथा ॥ ३७
कण्वादीनां मुनीनां च मध्ये चाविरभूच्छिवः ।
ततस्तु मुनयस्सर्वे विप्रवेषधरं शिवम् ॥ ३८
विवशा अभवन् दृष्ट्वा सन्तोषातिशयेन च ।
पूर्णचन्द्रोदयं लब्ध्वा वर्धन्ते सागरा यथा ॥ ३९
तथाऽऽनन्दप्रवाहश्च मुनीनामपि वर्धते ।
सर्वापत्परिहर्तृभ्यां नमतां प्राणिनां सकृत् ॥ ४०
विद्यादानरताभ्यां च चरणाभ्यां नमो नमः ।
इत्युक्त्वा मुनयः सर्वे प्रणेमुर्दण्डवत् क्षितौ ॥ ४१
तान्विलोक्य मुनीन् सर्वान् कृपादृष्ट्या जगद्गुरुः ।
प्राह शीतलया वाचा युष्माकं यदभीप्सितम् ॥ ४२
तत्प्रार्थयन्तु सहसा मद्भक्ता मुनिपुङ्गवाः ।
देवेनोदितमाकर्ण्य सद्य उत्थाय भूसुराः ॥ ४३
सर्वे साञ्जलिहस्तास्तं प्राहुर्मुदितमानसाः ।
अनुग्रहार्थमस्माकं सर्वेषां जगतामपि ॥ ४४

सर्ववेदार्थमधुना वद सर्वजगद्गुरो।
इत्युक्तवत्सु मुनिषु गुरुमूर्तिर्घृणानिधिः ॥ ४५
श्रीमद्धालास्यनाथस्य महालिङ्गस्वरूपिणः।
सन्निधिं प्राप्य तैस्सर्वैः सहितो मुनिपुङ्गवैः ॥ ४६
वक्तुमारभते सर्ववेदार्थमतिदुर्लभम्।
श्रीगुरुमूर्तिः -
शृणुध्वं भूसुरास्सर्वे रहस्यं सर्ववेदजम्॥ ४७
श्रुतमात्रेण सर्वेषां सर्वदुःखनिकृन्तनम्।
इदं परतरं लिङ्गं स्वयंभूतोत्तमोत्तमम्॥ ४८
निदानं सर्ववेदानामर्थभूतश्च सत्यतः।
एकमेवाद्वितीयश्च परं ब्रह्म परात्परम्॥ ४९
सत्यं विज्ञानमानन्दं परिपूर्णं परं महः।
इति प्राहुश्च वेदान्ताः सुन्दरेशं सनातनम्॥ ५०
एक एव हि वेदश्च वेदार्थस्त्वेक एव हि।
तथाऽपि शाखाभेदेन बहुभेदसमन्विताः ॥ ५१
वेदास्त्वनन्ता अभवन्वेदार्थश्च तथैव हि।
मायया सुन्दरेशस्य न स्वरूपेण भूसुराः ॥ ५२
सृष्ट्वा विरिञ्चमादौ तु देवो हालास्यनायकः।
दत्तवान् निखिलाम्नायान् स्वस्वरूपसमुद्भवान्॥ ५३
पश्चाज्जगत्त्रयं तेन वेदविज्ञानवद्भवेत्।
ज्योतिर्मयमिदं लिङ्गमादिमध्यान्तवर्जितम्॥ ५४
तदाकाशशरीरश्च ब्रह्मेति प्रतिपादितम्।
सृष्ट्यादिकारणत्वेन विभक्तमभवत् त्रिधा॥ ५५

आत्मतत्वमधोभागे विद्यातत्त्वं तु मध्यमे ।
तदग्रे शिवतत्त्वं च क्रमात्तत्त्वानि सन्ति हि ।। ५६
सर्वेष्वेतेषु भागेषु सर्वतत्त्वं समुत्थितम् ।
ब्रह्मा विष्णुश्च रुद्रश्च सर्वकारणमीश्वरः ।। ५७
क्रमात्तत्त्वाधिपाः प्रोक्तास्सर्ववेदेषु सुव्रताः ।
आत्मतत्त्वादकारश्च विद्यातत्त्वादुकारकः ।। ५८
शिवतत्त्वान्मकारश्च सर्वतत्त्वान्मुनीश्वराः ।
नादस्सबिन्दुरभवत् प्रणवोत्पत्तिरीरिता ।। ५९
व्यस्तात्समस्तात्प्रणवाद्व्यस्ता अपि समस्तकाः ।
भूरादयो व्याहृतयस्सम्बभूवुश्शिवाज्ञया ।। ६०
पुनस्ताभ्यस्समुद्भूता समष्टिव्यष्टिरूपिणी ।
त्रिपदा वेदजननी गायत्री चिन्तितार्थदा ।। ६१
तस्या वेदास्समुत्पन्ना ऋग्यजुस्सामसंज्ञकाः ।
अथर्ववेदसहिता हालास्येशशिवाज्ञया ।। ६२
पुनर्बहुप्रभेदेन वेदा विस्तारिता द्विजाः ।
प्रणवाद्या महामन्त्रा अकाराद्यक्षराणि च ।। ६३
शिवज्ञानानि दिव्यानि कामिकादीनि भूसुराः ।
श्रीमद्धालास्यनाथस्य सम्भवन्त्यूर्ध्ववक्त्रतः ।। ६४
पुनस्स देवदेवस्तत्पुरुषाख्येन वक्त्रतः ।
एकविंशतिभेदेन युक्तमृग्वेदमब्रवीत् ।। ६५
यजुर्वेदं त्वेकशतभेदयुक्तमघोरतः ।
सहस्रभेदसहितं सामवेदं तु वामतः ।। ६६

अथर्व नवधा भिन्नं सद्योजातेन चाब्रवीत्।
चतुर्विधेन वेदेन वर्णाश्चत्वार आश्रमाः ॥ ६७
धर्माश्च विविधा यज्ञाः प्रवृत्ता देववैभवात्।
तान् कुर्वन्ति मुनिश्रेष्ठा वेदार्थत्वान्मुदान्विताः ॥ ६८
वेदानान्तु समस्तानां भागस्तु द्विविधो मतः ।
प्रथमः कर्मकाण्डाख्यो ज्ञानकाण्डो द्वितीयकः ॥ ६९
एतन्महालिङ्गपूजां कर्मकाण्डगतानि हि ।
बोधयन्ति च वाक्यानि सत्यमेव मुनीश्वराः ॥ ७०
ज्ञानकाण्डजवाक्यानि रूपं सच्चित्सुखात्मकम्।
श्रीमद्धालास्यनाथस्य वदन्त्यत्यादरेण च ॥ ७१
विष्ण्वादिदेवतास्सर्वास्त्वंशभूताः पिनाकिनः ।
सर्वव्यापी महादेवस्स्वयमंशी प्रकीर्तितः ॥ ७२
सर्वासां देवतानाञ्च हुतं यद्विविधं हविः ।
तत्सर्वमंशी गृह्णाति फलान्यपि ददाति च ॥ ७३
अग्निष्टोमादयो यज्ञास्त्वश्वमेधावसानकाः ।
नित्यकृत्यानि सर्वाणि तथा नैमित्तिकान्यपि ॥ ७४
काम्यान्यपि च कर्माणि वेदोक्तानि बहूनि च ।
श्रीमद्धालास्यनाथस्य सर्वतत्त्वालयस्य च ॥ ७५
सपर्या विविधा एव नात्र सन्देहकारणम्।
एकं ब्रह्माद्वितीयञ्च सत्यज्ञानसुखात्मकम्॥ ७६
निष्कलं निर्मलं शुद्धं शिवं सूक्ष्मं निरञ्जनम्।
देवानामादिभूतञ्च रुद्रं विश्वाधिकं प्रभुम्॥ ७७

सर्वज्ञं सर्वकर्तारं सर्वकारणमीश्वरम्।
अनादिनिधनं वस्तु परापरविहीनकम्॥ ७८
परमात्मस्वरूपञ्च परञ्ज्योतिः परात् परम्।
निष्ठाप्राप्तं परं तत्त्वमप्रमेयमनूपमम्॥ ७९
कथयन्तीति वेदान्ता जीवन्मुक्तिपुरप्रभुम्।
तत्त्वमस्यादिवाक्येन प्रतिपाद्योऽयमेव हि॥ ८०
महालिङ्गस्वरूपीशः कदम्बवननायकः।
इति जानन्ति वेदान्तैर्गुरोः कारुण्यतश्च ये॥ ८१
शोकं तरन्ति ते सर्वे हालास्येशप्रसादतः।
तस्मात्काण्डद्वयस्यार्थः सुमीनाक्षीपतिः प्रभुः॥ ८२
सर्वलिङ्गसमुत्पत्तेः पुरस्ताच्च समुत्थितः।
वेदोक्तसर्वकृत्यानामनुष्ठानेन यत्फलम्॥ ८३
जनस्तत्फलमाप्नोति हालास्येश्वरपूजया।
ध्यानेनास्य च लिङ्गस्य वेदान्तज्ञानजं फलम्॥ ८४
भविष्यति न सन्देहस्सत्यमुक्तं मुनीश्वराः।
कर्मणा चित्तशुद्धिस्स्यात्तया ज्ञानाङ्गसम्भवः॥ ८५
धर्माश्च शान्तिदान्त्याद्या यमाद्यष्टाङ्गयोगकाः।
ज्ञानाङ्गानीति वेदाश्च कथयन्ति महीसुराः॥ ८६
ज्ञानाङ्गेषु समस्तेषु भक्त्या लिङ्गे शिवार्चनम्।
शिवलिङ्गप्रतिष्ठा च शिवस्थाननिरीक्षणम्॥ ८७
शिवभक्तप्रपूजा च शिवे भक्तिः परात्परे।
रुद्राक्षधारणं मूर्ध्नि कर्णयोः कन्धरे तथा॥ ८८

अग्निरित्यादिभिर्मन्त्रैर्भस्मना चावकुण्ठनम्।
ललाटादिप्रदेशेषु त्रिपुण्ड्रस्य च धारणम्॥ ८९
वेदवेदान्तनिष्ठस्य महाकारुण्यवारिधेः।
गुरोश्शुश्रूषणं नित्यं वरिष्ठमिति कीर्तितम्॥ ९०
एवं ज्ञात्वा तु मतिमान् ज्ञानाङ्गानि सदाचरेत्।
मार्गान्तरोदिताद्धर्मात्स्मार्तो धर्मस्सुशोभनः॥ ९१
स्मार्ताद्वैदिकधर्मस्तु तस्माच्छ्रेष्ठो न विद्यते।
धर्माधर्मविभागे तु शिवे परमकारणे॥ ९२
श्रुतिरेव प्रमाणं स्यात्स्मृतिस्तदनुसारतः।
सर्वं जगच्छिव इति ज्ञानं भोगापवर्गदम्॥ ९३
तद्ज्ञानेन च तुल्यं तु परं किञ्चिन्न विद्यते।
इत्युक्त्वा गुरुमूर्तिस्तु मुनीनां हृदयानि च॥ ९४
संस्पृश्य सर्ववेदार्थज्ञानं युष्माकमस्त्विति।
उक्त्वा चान्तर्दधे लिङ्गे देवो भूदेवविग्रहः॥ ९५
अथ कण्वाादिभूदेवास्सर्ववेदार्थमद्भुतम्।
जानन्ति तत् क्षणादेव करस्थामलकं यथा॥ ९६
इति लीला षोडशी च प्रोक्ता हालास्यवासिनः।
शृण्वतां च सकृत्पुंसां शिवज्ञानप्रदायिनी॥ ९७

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - वेदार्थोपदेशो नाम*
*द्वाविंशोऽध्यायः*

* * *

## அத்தியாயம் -22

## 16. வேதப் பொருளின் உபதேசம்

***அகஸ்தியர் கூறுகிறார் :-***

*உலகம் தோன்றத் தொடங்கியதும் முதலில் சிவனைக் குறிப்பிடுகிற ஓங்காரத்திடமிருந்து வேதங்கள் தோன்றின. அந்த வேதங்களின் பொருளை அறிய முற்பட்ட நைமிசாரண்யத்திலிருந்த கண்வர் முதலான மாமுனிவர்கள் நல்ல குரு ஒருவரைத் தேடினர். அங்கு ஒரு சிவபக்தர் தோன்றினார். ஹரபக்தர் என இவரை அழைப்பர், அவரிடம் வேதத்தின் பொருளை அறிய உபாயத்தைத் தெரிவிக்க வேண்டினர். ''தவம் ஒன்றே அதற்கான உபாயம். அதுவும் சிறந்த புண்ய க்ஷேத்திரத்தில் செய்யப்படின் எளிதில் பலன் தரும். எல்லா வித்யைகளின் நிறைவிடம் ஸமஷ்டி வித்யா நகரம் என்ற ஹாலாஸ்யம் (ஆலவாய்) ஆகும். அங்கு கோயில் கொண்டுள்ள மீனாக்ஷி ஸுந்தரேசுவரர்களை வணங்கி அவர்களுக்கு வலத்திலுள்ள தக்ஷிணா மூர்த்தியின் அருகாமையில் தவம் புரிவீர். வேதத்தின் பொருளை எளிதில் உணரலாம்'' என்றார் அவர். முனிவர்களும் அங்குசென்று தக்ஷிணா மூர்த்தியின் 22 அக்ஷரங்கள் கொண்ட மந்திரத்தை ஜபித்து அவரை வழிபட்டுத் தவமிருந்தனர். கார்த்திகை பௌர்ணமியன்று தொடங்கிய தவம் அடுத்த கார்த்திகை பௌர்ணமியில் முடிந்தது. தக்ஷிணாமூர்த்தி பதினாறு வயதுள்ள அந்தணர் வடிவில் அங்கு தோன்றினார்.* **ஸர்வாபத் பரிஹார்த்ருப்ப்யாம் நமதாம் ப்ராணிநாம் ஸக்ருத். வித்யாதாந ரதாப்ப்யாம் ச சரணாப்ப்யாம் நமோ நம:** *என வேண்டி முனிவர்கள் வணங்கி. வேதத்தின் பொருளைக் கூற வேண்டினர்.*

*வேதங்களின் முக்கியப் பொருள் பரப்பிரும்ஹமாகும். ஸத்யம் ஜ்ஞானம் ஆநந்தம் பூர்ணநிலை என்பதே அதன் உருவகம். வேதம் ஒன்றே. அதன் கிளைகள் பல. ஆகாசமெனும் பஞ்சதத்துவமே பரப்பிரும்ஹத்தின் உடல். அதுவே லிங்கவடிவம் பெற்றது. ஆத்ம தத்துவம் அதன் அடி*

பாகம். நடுவே வித்யா தத்துவம். சிவதத்துவம் மேல் பகுதி, ஆத்ம தத்துவம் அகாரமானது. வித்யா தத்துவம் உகாரமானது. சிவ தத்துவம் மகாரமானது. தத்வம் மூன்றின் உருவகமாக பிந்து நாதம் முதலிய ஸூக்ஷ்ம நிலைகள் தோன்றின. அவற்றிலிருந்து நான்கு வேதங்கள் தோன்றின. அவற்றைத் தொடர்ந்து மந்த்ர சக்தியை விளக்குகிற ஆகமங்கள் தோன்றின. வேதத்தின் முற் பகுதி கர்மகாண்டம். பின் பகுதி ஜ்ஞான காண்டம். இறைவனை வழிபடுவதை கர்ம காண்டமும் இறைவனின் தத்துவ உணர்வை ஜ்ஞான காண்டமும் விளக்கின. கர்ம காண்டத்தால் வழிபடப் பெறுகிற தேவர்களனைவரும் ஈசனின் அம்சமே. சடங்குகளில் அக்னியில் இடப் பெறுவதை ஈசன் தான் ஏற்று அந்தந்த தேவர்களிடம் பகிர்ந்து தருகிறார். பலனைத் தருபவரும் அவரே. ஒரே பரப்பிரும்ஹமாக ஸத்-சித்-ஆனந்தமாக இருப்பதை உணர்வதற்கான சித்த சுத்தியை இந்தக் கருமங்கள் தருகின்றன. மன வடக்கமும் புலனடக்கமும் ஜ்ஞானத்திற்கு உதவுகின்றன. பக்தியுடன் சிவலிங்க பூஜை ருத்ராக்ஷ-விபூதி தாரணம், நன்கு தேர்ந்த குருவின் உபதேசப்படி நடந்து அவரது அருளைப் பெறுதல் உபாயங்கள். இவற்றால் பரபிரும்ஹம், தேவர்கள், உலகம் அதில் தனி மனிதனின் வாழ்க்கை இவற்றின் தொடர்பை உணர்ந்து உலகமனைத்திலும் சிவனைக் காண்பதே ஞானம். அதற்கு உதவுவதே கர்மங்கள் என்ற நிலையை குருமூர்த்தி விளக்கக் கண்வர் முதலிய முனிவர்கள் தெளிவடைந்தனர். இது பதினைறாவது திருவிளையாடல்.

## त्रयोविंशोऽध्यायः

## १७. रत्नविक्रयणम्

अगस्त्यः -

अथ हालास्यनाथस्य लीलामन्यां कृपानिधेः ।
वक्ष्यामि सङ्ग्रहेणाहं नवरत्नक्रयात्मिकाम् ।। १

वीरपाण्ड्यो महान् राजा शशास महतीं महीम्।
बह्वयस्सन्ति महिष्योऽस्य कुलीनाः कुलभूषणाः ॥ २
पुत्रं न लेभे सर्वासु तासु राजा विधेर्वशात्।
अवरुद्धासु नारीषु लेभे पुत्रानसद्गुणान्॥ ३
अष्टम्यां च चतुर्दश्यां सोमवारे विशेषतः ।
उपास्याथ सुमीनाक्षीं हालास्येशं च भक्तितः ॥ ४
तनयं लक्षणैर्युक्तं सर्वसद्गुणसंयुतम्।
महिष्यां लब्धवान् राजा प्रसादादम्बिकापतेः । ५
लाल्यमाने सुते सर्वैः पञ्चमं वर्षमेयुषि।
मृगयायां पुण्डरीकैर्निहतः स दिवं ययौ॥ ६
भोगिनीयोषितां पुत्रैर्बहुभिर्निर्दयाशयैः ।
अनायकत्वात्सर्वस्वमात्तं कोशगृहात्ततः ॥ ७
स्वापराधं विदित्वा ते पलायन्त क्वचित्क्वचित्।
मन्त्रिणः केचिदादाय रहःशिशुमपालयन्॥ ८
प्रशान्ते तुमुले पश्चादायाता मूलसैनिकाः ।
केचिद्गजाः केचिदश्वाः केचिद्योधाश्च सङ्गताः ॥ ९
राजपुत्राभिषेकार्थं मौलिं निर्मातुमुद्यताः ।
मन्त्रिणः कोशसञ्चैत्य न किञ्चिल्लेभिरे धनम्॥ १०
किं कुर्मस्तु वयं सर्वे धनं सम्पाद्य ते क्षणात्।
यतः कुतश्चिद्रत्नं तु कुत्र लभ्यं न विद्महे॥ ११
अस्मिन्ननभिषिक्ते तु राज्यध्वंसो भविष्यति।
हालास्येशानुग्रहेण जातोऽयं तु नृपात्मजः ॥ १२

देवदेवः किं विदध्यादिति किञ्चिन्न विद्महे।
एवं चिन्तान्वितास्सर्वे कुमारं च प्रगृह्य तम् ॥१३
सन्निधिं प्राप्य देवस्य साष्टाङ्गं प्रणिपत्य च।
कुमारेण नमस्कारं कारयित्वा च मन्त्रिणः॥ १४
गोपुरद्वारदेशे ते त्वतिष्ठन् शिवसन्निधौ।
तेष्वेवं चिन्तयाऽऽर्तेषु सत्वरं सुन्दरेश्वरः॥ १५
कृपया परया पूर्णो भगवान् भक्तवत्सलः।
वैश्यवर्यवपुर्धृत्वा सालङ्कारं मनोहरम्॥ १६
धृत्वाऽतिचित्रामंसेन रत्नपूर्णां च भस्त्रिकाम्।
मन्त्रिणाश्च पुरोभागे त्वाविरासीत्स शङ्करः॥ १७
दृष्ट्वा तान् सचिवान् प्राह किं यूयं शोकसंयुताः।
इत्यपृच्छत्स ते प्राहुस्स्वेष्टं स पुनरब्रवीत्॥ १८
अपेक्षितानि रत्नानि युष्माभिः कीदृशानि तु।
तानि सर्वाणि रत्नानि दास्यामि सुमहान्ति च॥ १९
तत्श्रुत्वा प्रीतहृदयाः प्रोचुर्वैश्यवरं प्रभो।
मौलेरर्हाणि रत्नानि दीयन्तां भवता क्षणात्॥ २०
इत्युक्तस्तैस्स रत्नानि त्वनर्घाणि महान्ति च।
दर्शयित्वा लक्षणानि तेषां वक्तुं प्रचक्रमे॥ २१
श्रीवैश्यवर्यः-
वलो नामाभवच्छ्रीमान् दानवेन्द्रो महाबलः।
लोकत्रयाधिपत्यं च सम्प्राप्य सुमहानभूत्॥ २२

तस्यास्थि वज्रं दशनाश्च मुक्तास्तथा च रक्तं खलु पद्मरागः ।
रोमाणि वैडूर्यमिति प्रसिद्धं प्रवालमासीत्पिशितं महार्घम् ।। २३
नेत्रं महानीलमभूत्प्रशस्तं पित्तं च गारुत्मतरत्नमासीत् ।
आसीत् कफस्तस्य च पुष्परागो मेदश्च गोमेदकतामवाप ।। २४
वज्रमुक्ताफले विप्रौ नृपौ माणिक्यविद्रुमौ ।
सपुष्यरागौ वैश्यौ तु गोमेदक विडूरजौ ।। २५
इन्द्रनीलं मरकतं शूद्रं रत्नविदो विदुः ।
मुक्तास्फटिकजातीयास्तस्य सत्वगुणोद्भवाः ।। २६
जाता गोमेदमाणिक्यविद्रुमा राजसाद्गुणात् ।
अञ्जनोपलनीलाद्या जातास्तत्तामसाद्गुणात् ।। २७
कुलिशं पुष्परागश्च वैडूर्यं तद्रजोगुणात् ।
सत्वयुक्तं मरतकं राजसात्तामसोत्तरात् ।। २८
एवं भेदैश्च रत्नानि सम्बभूवुर्वलाङ्गतः ।
इति श्रुत्वा मन्त्रिणस्ते प्रत्यूचुर्विस्मयान्विताः ।। २९
मन्त्रिणः
हतः केन प्रकारेण वलो नाम महासुरः ।
तदङ्गेभ्यः कथं जातं रत्नानां बृन्दमुत्तमम् ।। ३०
वदेदानीं वैश्यवर श्रोतुमिच्छावतां हि नः ।
वैश्यवर्यः -
वलो नाम महानासीद्दानवेन्द्रोऽतिविक्रमः ।। ३१
बाल्ये वयसि सम्प्राप्य शम्भुभक्तिं समुन्नताम् ।
तपस्तप्तुं समुद्युक्तो भार्गवस्योपदेशतः ।। ३२

श्रीमत्कैलासमासाद्य सन्तोषयितुमीश्वरम्।
दुष्करं काष्ठमुनिभिरपि तेपे तपः परम्।। ३३
गन्धपुष्पादिभिर्देवमुपहारैरपूजयत्।
तदा तुष्टो महादेवः प्रादुरासीत्तदग्रतः ।। ३४
तव दैत्येन्द्र तपसा पूजया च सुभक्तितः ।
प्रसन्नोऽहं वृणीष्व त्वं वरं यो मनसि स्थितः ।। ३५
इत्युक्तवति देवेशे वरद्वयमयाचत।
आयोधने त्ववध्योऽहं भवेयं परिपन्थिभिः ।। ३६
मद्गात्रजा धातवश्च रत्नानि स्युर्महान्ति च।
तथास्त्विति वरं दत्वा जगदीशस्तिरोदधे।। ३७
अवध्यः स परैरासीद्देवदेवप्रसादतः ।
तद्देहसम्भवाश्चासन् धातवो रत्नहेतवः ।। ३८
एवं लब्धवरो दैत्यस्त्रैलोक्याधिपतिर्बभौ।
असकृत्समरे तेन देवराजे पराजिते।। ३९
शची च वीरपत्नीति गर्वं त्यक्त्वा चिरं स्थिता।
वलं युद्धेष्वजय्यं तमवध्यं सर्वदैवतैः ।। ४०
विषाणभेदिनं दिव्यमहेभस्य महाबलात्।
हन्तुमीषुरुपायेन देवास्सर्वे सवासवाः ।। ४१
सोढुं पराक्रमं तस्य न शक्तास्तत्समीपगाः ।
त्यक्तायुधाश्च जगदुस्त्रिदशा दानवेश्वरम्।। ४२
वल वीर महाबाहो त्रैलोक्ये त्वं महानसि।
पराक्रमेण महता बलेन भुजयोरपि।। ४३

वयं सन्तुष्टमनसो भवामस्तव वीर्यतः ।
वरं वृणीष्व सहसा दास्याम इति तेऽब्रुवन् ।। ४४
सुरैरित्युक्तमाकर्ण्य प्रहसन् प्राह दानवः ।
रणाग्रे वो यथा शक्तिर्वरदाने तथैव हि ।। ४५
मत्तो वृणीध्वं यूयं तु वरं सत्यं ददाम्यहम् ।
इत्युक्ते तु वले तस्मिन् त्रिदशास्सपुरन्दराः ।। ४६
प्राहुरस्मत्क्रतुश्रेष्ठे भवानस्तु पशुर्ध्रुवम् ।
वरं निशम्य देवानां वृतः शक्योस्म्यहं सुरैः ।। ४७
अस्थायिना शरीरेण लभ्यते कीर्तिरुत्तमा ।
इति सञ्चिन्त्य मनसा ननन्द स पुनः पुनः ।। ४८
अथोवाच वलो दैत्यः सर्वानमरपुङ्गवान् ।
युष्माभिः प्रार्थितः सर्वैः वरो दत्तो मया ध्रुवम् ।। ४९
क्रतोरुपक्रमं यूयं सद्यः कुर्वन्तु हे सुराः ।
अहमप्यागमिष्यामि युष्मदध्वरसिद्धये ।। ५०
इत्युक्त्वा सहसा पुत्रे स्वसाम्राज्यश्रियं पराम् ।
संयोज्य स्वपुरात्सद्यो निर्गतो दैत्यपुङ्गवः ।। ५१
यत्र देवगणास्सर्वे क्रतुमारेभिरे वरम् ।
तत्र कैलासशिखरे सन्तुष्टो दानवो ययौ ।। ५२
विलोक्य देवानसुरः प्रोवाचैवमुदारधीः ।
अहं पशुर्भविष्यामि विशिष्टेऽध्वरकर्मणि ।। ५३
भवद्भिः क्रियतां यूपो बन्धनार्थं पशोर्मम ।
इतीरितां गिरं श्रुत्वा सधैर्यं सर्वदेवताः ।। ५४

वल सत्यव्रतोऽसि त्वं त्वत्समो भुवनत्रये।
नास्तीति बहुशः प्रोच्य चाभ्यनन्दन्वलासुरम्।। ५५
तस्मिन् पुरुषमेधाख्ये यज्ञे यष्टा दिवस्पतिः।
ऋत्विजश्चाभवन् सप्त ऋषयोऽन्ये मुनीश्वराः।। ५६
कर्माण्यारेभिरे कर्तुं श्रुतिभिश्चोदितानि तु।
अथ यूपं नीयमानो बन्धनायासुरेश्वरः।। ५७
सस्माराध्वरराजानं त्रयीमूर्तिं त्रियम्बकम्।
रुद्रं विष्णुविरिञ्चादिविबुधाराधितं परम्।। ५८
प्रत्यक्षीभूय भगवान् पशूनां पतिरीश्वरः।
यूपे निबन्धानुमतिं तस्य तेने स्वयं हरः।। ५९
दृढं निबद्धो यूपे तु दाम्ना दर्भमयेन सः।
ऊर्णसूत्रेण सम्बद्धो मृगेन्द्र इव राजते।। ६०
पशोस्संज्ञपनायाथ नियुक्तैः पुरुषैर्दृढैः।
प्रकामं पीड्यमानोऽपि बभूव प्रीतिमान् वलः।। ६१
कृते संज्ञपने चैतैः करणैरुज्झितोऽप्ययम्।
प्रसन्नवदनो भूत्वा सर्वाभरणभूषितः।। ६२
पपात कल्पद्रुमवत् पुष्पवृष्टिः पपात च।
कुलिशेन विभिन्नाच्च शरीराद्दानवस्य च।। ६३
वपां कथञ्चिदुद्धृत्य वह्नौ जुह्वति ऋत्विजः।
दैत्यस्तेजोमयो भूत्वा दिव्यस्त्रीपरिवारितः।। ६४
ययौ रत्नविमानेन ब्रह्मणो लोकमद्भुतम्।
तस्य सत्त्वविशुद्धस्य परिशुद्धेन कर्मणा।। ६५

कायस्यावयवास्सर्वे रत्नबीजत्वमाययुः ।
एवं तद्देहजातानि पावनानि जगत्त्रये ॥ ६६
इमानि नवरत्नानि धार्याण्यासन्महीभुजाम् ।
नन्वस्थ्यादीन्यशुद्धानि स्पृश्यानि न भवन्ति हि ॥ ६७
पावनानि च कथ्यन्त इति चेत्श्रूयतामिदम् ।
स दैत्य इव धर्मार्थे जीवितं कस्त्यजेत् पुमान् ॥ ६८
अतः पुण्यवतोऽङ्गानि पावनानि न संशयः ।
वारक्रमेण वीक्षेत माणिक्यादिमणीन् यथा ॥ ६९
आदित्यवारे माणिक्यं सोमवारे तु मौक्तिकम् ।
विद्रुमं भौमवारे तु सौम्ये मरतकं यथा ॥ ७०
पुष्यरागं गुरोर्वारे वज्रं वारे भृगोरपि ।
नीलं वारे रवेस्सूनोर्गोमेदं रविवासरे ॥ ७१
वैडूर्यं शशिनो वार इति वीक्षाविनिर्णयः ।
पद्मं जातिप्रसूनञ्च रक्तकैरवमेव च ॥ ७२
सिलीन्ध्रं मालतीपुष्पं शतपत्रप्रसूनकम् ।
कालेयकञ्च कल्हारं श्वेतमन्दारमेव च ॥ ७३
वीक्षको धारयेन्मूर्ध्ना शुचिर्धर्मपरायणः ।
शुद्धवस्त्रास्तृतं पीठं शुद्धदेशे निधाय च ॥ ७४
माणिक्यादीति रत्नानि मण्डलाकृति विन्यसेत् ।
मध्ये तु पद्मरागञ्च मुक्तादीनि यथा क्रमम् ॥ ७५
पूर्वादिदिक्षु विन्यस्य तत्र तत्र समर्चयेत् ।
आदित्यादिग्रहान्नित्यं तत्तत्पुष्पैस्समर्चयेत् ॥ ७६

आदित्यस्य तु पद्मरागममलं मुक्ताफलं शीतगोः
माहेयस्य च विद्रुमो मरतकं सौम्यस्य गारुत्मतम्।
देवेड्यस्य च पुष्यरागमसुराचार्यस्य वज्रं शनेः
नीलं निर्मलमन्ययोस्तु गदिते गोमेदवैडूर्यके ॥ ७७
पूर्वोक्तेन क्रमेणाथ वज्रादीनां तु लक्षणम्।
वक्ष्ये तद्ज्ञानलाभाय यूयं शृण्वन्तु मन्त्रिणः ॥ ७८
पृथिव्यां यानि रत्नानि ये चान्ये लोहधातवः।
सर्वं तद्विलिखेद्वज्रं वज्रं तैर्न विलिख्यते ॥ ७९
तस्माद्वज्रं तु रत्नानां श्रेष्ठमाहुर्मनीषिणः।
दधीचेश्च वलस्यापि यत्र यत्रापतन् स्थले ॥ ८०
अस्थीनि तत्र तत्रासन्नाकरा वज्रसिद्धये।
कोसलादिप्रभेदेन देशाश्च बहवोऽभवन् ॥ ८१
कौसलञ्च शिरीषाभं कालिङ्गं पीतवर्णकम्।
मातङ्गं मल्लिपुष्पाभं शुभ्रं हिमवदुद्भवम् ॥ ८२
महाराष्ट्रोद्भवं रक्तं सौवीरं कृष्णमेव च।
पौण्ड्रमुत्पलवर्णाभं पिङ्गलं मागधं तथा ॥ ८३
देवताभेदतो वज्रं बहुधा सम्प्रकीर्तितम्।
शिरीषपुष्पकदलीवंशाभं वैष्णवं मतम् ॥ ८४
शुक्लं षडश्रं माहेन्द्रं याम्यं भृङ्गोत्पलप्रभम्।
शाल्मलीकिंशुकाभञ्च वज्रं वायव्यमीरितम् ॥ ८५
कर्णिकारप्रसूनाभं वारुणं सौम्यमम्बुभम्।
इन्द्रगोपनिभं सौरमाग्नेयमनलप्रभम् ॥ ८६

विप्रः स्फटिकसङ्काशं शशलोचनवन्नृपः।
कदलीदलवद्वैश्यःशूद्रस्तु करवालवत्॥ ८७
विप्रक्षत्रियविट्छूद्रा धारयेयुर्यथाक्रमम्।
स्वस्वजातियुतं वज्रमग्रजस्सर्वमर्हति॥ ८८
इन्द्रगोपनिभं वज्रं वरमर्कोऽस्य दैवतम्।
अनर्घं श्रीकरं राज्ञामारोग्यविजयावहम्॥ ८९
आरोहति नरेन्द्राणां किरीटं न कदाऽप्यधः।
मङ्गल्याभरणे वज्रं कुलस्त्रीणां न योजयेत्॥ ९०
वर्णाल्पता तथा रेखा त्रासः काकपदश्च यत्।
बिन्दुश्चैवेति पञ्चैते वज्रदोषा उदाहृताः॥ ९१
वज्रैराभरणं युक्तं बिभ्राणो रणमूर्धनि।
अक्षतः परशस्त्रेण नृपतिर्विजयी भवेत्॥ ९२
अल्पदेशाधिपः पृथ्वीं लभते सागराम्बराम्।
दारिद्र्यमुरगो वह्निः पिशाचा भूतयोनयः॥ ९३
अपमृत्युरपि प्रेक्ष्य दूरे परिहरन्ति तम्।
अथ वक्ष्यामि मुक्तानां लक्षणं श्रोतुमर्हथ॥ ९४
जलजा स्थलजा चेति मुक्ताजातिर्द्विधा मता।
वज्रघातप्रकीर्णा या दन्तपङ्क्तिर्वलस्य तु॥ ९५
स तु त्रयोदशस्थाने विप्रकीर्णाऽभवत्तदा।
शङ्खे मत्स्यशिरोदेशे मेघे कण्ठे नतभ्रुवाम्॥ ९६
वंशे वराहदंष्ट्रायां फणे च पवनाशिनाम्।
करिदन्ते बलाकानां कण्ठे पुण्ड्रेक्षपर्वसु॥ ९७

शालिस्तम्बे च शुक्तौ च भुजे करटवाजिनः।
शङ्खजं मौक्तिकं श्वेतं कपोताण्डनिभं वरम्॥ ९८

तत्तु मत्स्यशिरोजतं पाटलीपुष्पसन्निभम्।
मौक्तिकं घनसम्भूतमधिसूर्यप्रभोदयम्॥ ९९

नारीबलाकाकण्ठाभ्यां भुजात्करटवाजिनः।
त्रिभ्यो जाताश्च मुक्तास्तु न सन्त्येवातिदुर्लभाः॥ १००

वंशजं मौक्तिकं श्रेष्ठं वर्षोपलसमप्रभम्।
पोत्रिदंष्ट्रोद्भवं रक्तं सार्पं नीलप्रभायुतम्॥ १०१

करिदन्तोद्भवं पीतं तथा पुण्ड्रेक्षुसम्भवम्।
तथैव शालिस्तंबोत्थं शुक्तिजं सोमसन्निभम्॥ १०२

एवं त्रयोदश स्थानान्मुक्ताजातिश्च जायते।
शुक्तेश्च शङ्खाज्जायन्ते मौक्तिकानि बहूनि च॥ १०३

बाहुल्याद्गुणबाहुल्याच्छलाघ्यं शुक्तिसमुद्भवम्।
वैष्णवं नीलमित्याहुः पीतं माहेन्द्रमुच्यते॥ १०४

याम्यमम्बुदसंकाशं वायव्यं लोहितं तथा।
वारुणं शुभ्रमित्युक्तमाग्नेयमरुणप्रभम्॥ १०५

इति वर्णास्समाख्याता देवताभेदतः क्रमात्।
सुतारत्वं सुवृत्तत्वं नैर्मल्यं घनता तथा॥ १०६

स्निग्धता स्फुटितत्वं च षड्गुणाः परिकीर्तिताः।
ईदृक्सर्वगुणोपेतं मौक्तिकं येन धार्यते॥ १०७

तस्यायुर्वर्द्धते लक्ष्मीरलक्ष्मीस्तु विनश्यति।
अथ वक्ष्ये पद्मरागलक्षणं तु द्विजोत्तमाः॥ १०८

शृणुध्वं श्रद्धया यूयं तद्गुणज्ञानसिद्धये।

मकं कालपुरश्चैव तुम्बुरुस्सिम्हलं तथा ।। १०९
कृतादिक्रमतस्तस्य चाकराः परिकीर्तिताः ।
पद्मकल्हार खद्योत तारकादहनद्युतिः ।। ११०
दीपदाडिम बीजार्क दाडिमीकुसुमाकृतिः ।
इन्द्रगोपैश्च सदृशः पद्मरागः प्रशस्यते ।। १११
ब्राह्मणः पद्मरागश्च जातरङ्ग इतीरितः ।
क्षत्रियः कुरुविन्दाख्यो वैश्यस्सौगन्धिकः स्मृतः ।। ११२
गवां गोनीलगन्धी च शूद्रस्तूभयनामवान् ।
छाया दशविधाऽऽद्यस्य द्वितीयस्याष्टधा स्मृता ।। ११३
तृतीयस्य च षट्प्रोक्तास्तुरीयस्य चतुर्विधा ।
पद्मकल्हारखद्योतदहनान्यभृताक्षिभिः ।। ११४
दीपदाडिमबीजार्कदाडिमी प्रसवैरपि ।
इन्द्रगोपैश्च तुल्यास्स्युश्छायाः प्रथमवर्णजाः ।। ११५
लोध्रकिंशुकबन्धूकजपाकुसुमसन्निभम् ।
गुञ्जाशशासृक्सिन्दूरतप्तलोहाभमष्टमम् ।। ११६
छाया जातेर्द्वितीयायास्तृतीयाया अथोच्यते ।
लाक्षारसः कोकिलदृक्शाल्मलीपश्चपर्णयोः ।। ११७
प्रसूनं तप्तलोहश्च षट्कश्चाशोकपल्लवम् ।
छाया जातेस्तृतीयायास्तुरीयायास्तु कथ्यते ।। ११८
कुसुम्भकुसुमेनापि पक्वबिम्बफलेन च ।
तथा कुरवपुष्पेण धातुना च समा स्मृता ।। ११९

लघु वज्रं प्रशंसन्ति गुरुत्वं पद्मरागके।
ऊर्ध्वरश्मिरधोरश्मिः पार्श्वरश्मिश्च यः क्रमात्॥ १२०
पद्मरागस्स विज्ञेय उत्तमाधममध्यमः।
गोभूमिविद्याकन्यानां दातुर्वाजिमखस्य च॥ १२१
कर्तुश्च पुण्यमाप्नोति जातरङ्गस्य धारणात्।
धारयेत्कुरुविन्दं यस्स सम्राड् भवति ध्रुवम्॥ १२२
यस्तु सौगन्धिकं धत्ते सम्पदा यशसाऽतुलः।
गवाङ्गं धारयेद्यस्तु क्षीरसस्यसमृद्धिमान्॥ १२३
दोषहीनमथ लक्षणैर्युतं पद्मरागमणिमुद्वहन्ति ये।
तेऽत्र रत्नमधिकं प्रयान्ति च स्थेयर्सीं च कमलां सरस्वतीम्॥
ततो मरतकानां च लक्षणं वक्ष्यते मया।
वलस्य पित्तं विहगैर्गृहीतं डिल्लिदेशके॥ १२५
पतितं परितस्तत्र खनयस्सम्भवन्ति च।
विभिन्नमरुणस्याण्डं कटिसूत्रे गरुत्मतः॥ १२६
विनता योजयामास प्रणयान्मेचकप्रभम्।
पतितं तद्यत्र यत्र तत्र तत्राकराः स्मृताः॥ १२७
योषिद्रूपं महाविष्णुं दृष्ट्वा संमोहितस्य च।
यत्र यत्रापतद्रेतो गच्छतस्तस्य शूलिनः॥ १२८
तत्र तत्राकरा आसन् मन्दराद्रितटे शुभे।
तद्वीर्यादाशु सञ्जातश्शास्ता च वनदेवता॥ १२९
खगेश्वरोऽपि तत्पित्तं जग्ध्वा देशे तुरुष्कके।
उज्जगार च तत्रासीत् खनिः पारे महार्णवम्॥ १३०

तत्कारणान्मरतकं गारुत्मतमितीरितम्।
गाढं दूर्वादळश्यामं तुलसीदलसप्रभम्॥ १३१
कलमाग्रदलप्रख्यं प्रोक्तं मरतकं त्विति।
सगुणा च सदोषा च जातिरस्य द्विधा मता॥ १३२
सगुणायाश्च जातेस्तु प्रभेदः परिकीर्त्यते।
गाढमुल्लसितं चैव पेशलं पित्तकन्तथा॥ १३३
मुग्धं च पृथुकं चेति लक्षणं पृथगुच्यते।
गाढं दूर्वादलनिभं श्लक्ष्णमुल्लसितं स्मृतम्॥ १३४
पेशलं कलमाग्राभं पित्तं शुकगरुत्प्रभम्।
मुग्धं तु तुलसीश्यामं पृथुकं पद्मपत्रवत्॥ १३५
सगुणा षड्विधा प्रोक्ता सदोषा जातिरुच्यते।
दोषलेशान्वितं दुष्टं तथा वै दोषमूर्छितम्॥ १३६
दोषलेशं मन्ददोषमिति पञ्चविधाः स्मृताः।
पूर्वं लिकुचपत्राभं दुष्टं तु करवीररुक्॥ १३७
तृतीयं हल्लकबकपत्रेण सदृशच्छवि।
हिमसिक्ताब्जिनीपत्रसमच्छायं चतुर्थकम्॥ १३८
मयूरपत्रप्रतिममिति पञ्चविधं स्मृतम्।
इति गुणगणयुक्तं दोषसंघैर्विहीनं
मरतकमवनीन्द्रो धारयेद्रत्नवर्यम्।
जयति रिपुमहीपानाहवे वारणेन्द्रैः
बहुभिरपि हयौघैः पत्तिसङ्घैश्च युक्तः॥
लक्षणं नीलरत्नस्य शृण्वन्तु सचिवोत्तमाः॥ १४०
वललोचनसम्भूतं हरकण्ठविषोद्भवम्।
द्विविधं तु महानीलं प्रोक्तं तच्छास्त्रवित्तमैः॥ १४१

विश्वरूपवधप्राप्तदोषशान्त्यै पुरन्दरः ।
अश्वमेधं चकाराथ तत्समाप्तौ तदङ्गकम् ॥ १४२
चाक्षुषं तु मलं यत्र विमुक्तं तत्र देशके ।
इन्द्रनीला इति ख्याता मणयस्सम्भवन्ति हि ॥ १४३
संज्ञा त्वाष्ट्री रवेर्भार्या तत्तेजस्सोढुमक्षमा ।
आत्मच्छायां नियोज्यागात्तपसे काननं वरम् ॥ १४४
रविश्च तत्र गत्वा तां दृष्ट्वाऽतीव विमोहितः ।
अश्वाकाराश्च धावन्तीमश्वरूपस्य धावतः ॥ १४५
यत्र यत्रापतद्रेतस्तत्र तत्र विवस्वतः ।
महानीला बभूवुश्च सन्धार्या देवमानुषैः ॥ १४६
चतस्रो जातयस्तस्य चातुर्वर्ण्यप्रभेदतः ।
ईषच्छ्वेतस्तु विप्रस्स्यात् किञ्चिद्रक्तस्तु बाहुजः ॥ १४७
श्वेतश्यामयुतो वैश्यश्शूद्रस्त्वत्यन्तकृष्णरुक् ।
उक्तलक्षणसम्पन्नवर्णशोभासमन्विताः ॥ १४८
धृताः सुनीलमणयः सर्वमङ्गलदायिनः ।
यस्य मध्यगता भाति नीलस्येन्द्रायुधप्रभा ॥ १४९
तदिन्द्रनीलमित्याहुर्महार्घं भुवि दुर्लभम् ।
यस्तु वर्णस्य भूरित्वात् क्षीरे शतगुणाधिकाम् ॥ १५०
नीलतां जनयेत्सद्यस्स महानील उच्यते ।
क्लृप्तानि वज्रवरमौक्तिकपद्मराग
गारुत्मतोपलसुरेश्वररत्नवर्यैः ।
धार्याणि भूपतिभिराभरणानि लक्ष्मी-
सौभाग्यदान्यपररत्नकृतानि नैवम् ॥ १५१

वैडूर्यगोमेदकपुष्यराग
प्रवालरत्नानि तथा नृपाणाम्।
शोभावहान्यल्परुचीनि सार्धं
तैर्धारितानि श्रियमावहन्ति॥ १५२
गोमेदकाख्यरत्नस्य लक्षणं वर्णयाम्यथ॥ १५३
वलासुरस्य यन्मेदो यत्र यत्रापतद्भुवि।
गोमेदकस्य रत्नस्य तत्र तत्राभवत्खनिः॥ १५४
मधुबिन्दुसमच्छायं गोमूत्राज्यसमप्रभम्।
हेमरक्तं गुरु स्वच्छं स्निग्धं गोमेदकं स्मृतम्॥ १५५
तद्रत्नधारणं पुंसां पवित्रं पापनाशनम्।
पुष्यरागस्य रत्नस्य लक्षणं शृणुतादरात्॥ १५६
युध्यन्तममरारातिं हिरण्याक्षं मदोत्कटम्।
जिघांसुः स्तब्धरोमाऽथ हुङ्कारं कृतवान् रुषा॥ १५७
तस्मिंस्तन्वति हुङ्कारं मायापोत्रिणि माधवे।
उत्पेतुः श्लेष्मकणिकाः घोणाग्र सुषिरात् किल॥ १५८
यत्र यत्र निपेतुस्ताः श्लेष्मणः कणिकाः स्थले।
तत्र तत्राभवंच्छुद्धाः पुष्यरागोपलाः पुरा॥ १५९
वलासुराङ्गसम्भूता अभवन्विविधाकराः।
हेमच्छायं शिरोवृत्तं ज्योतिरङ्गारनिर्मलम्॥ १६०
कान्त्या मनोहरं स्निग्धं पुष्यरागं प्रशस्यते।
पारियात्रस्य शृङ्गाणि मन्दरस्य च सानवः॥ १६१

पुरी पुरन्दरस्यापि तदीया च सभा पुनः ।
तत्पुष्यरागविहिता विधिना विश्वयोनिना ।। १६२
तत्पुष्यरागं यो धत्ते स भवेद्विजयी नृपः ।
अथ वैडूर्यरत्नस्य यूयं शृणुत लक्षणम् ।। १६३
वलस्य तस्य रोमाणि यान्ति वैडूर्यतां पुरा ।
इलावृते महामेरोः पश्चिमेषु स्थलेषु च ।। १६४
विविधा आकरा आसंश्चान्ये सन्त्यपि भूतले ।
गोरक्षे मागधे देशे पारसीके च सिंहले ।। १६५
मलये च त्रिकूटे च द्वीपान्तरमहीषु च ।
आकरास्सन्ति विविधा वैडूर्य प्रभवाः स्थले ।। १६६
कल्पान्तक्षुभितांभोधिगम्भीरान्मेघगर्जितात् ।
अपि वैडूर्यमुत्पन्नं भुवो भागेषु केषुचित् ।। १६७
वेणुपत्रबिडालाक्षिशिखिकण्ठसमद्युति ।
स्निग्धगात्रं गुरु स्वच्छं वैडूर्यं गुणवन्मतम् ।। १६८
दक्षिणप्रसृतच्छायं ब्राह्मणं कथयन्ति हि ।
सव्यप्रसृतजीवन्तु वैडूर्यं क्षत्रमुच्यते ।। १६९
पश्चाद्विसर्पिजीवं तु वैश्यं तद्वेदिनां मतम् ।
प्राचीविसर्पिजीवं तु वैडूर्यं शूद्रमुच्यते ।। १७०
नित्यमेतानि पूज्यानि मतिमान्धारयेन्नृपः ।
अथ विद्रुमरत्नस्य लक्षणं वक्ष्यते मया ।। १७१
वलस्य पिशिताज्जाता बहुधा तस्य सत्खनिः ।
यया तन्वा पुरा ब्रह्मा पितॄणामसृजत्कुलम् ।। १७२

तया सन्ध्यात्मना तन्वा यत्र यत्र मलानि हि।
त्यक्तानि तत्र तत्रासन्विविधा आकरा अपि॥ १७३
वज्रपाणिः पुरा शक्रो लोकनाशं वितन्वताम्।
पक्षाणां कदनं चक्रे पततां धरणीभृताम्॥ १७४
न्यपतन्नम्बुराशौ ते लूनपक्षा महीधराः।
गिरीणां पतमानानां पक्षशातसमुद्भवम्॥ १७५
पपात क्षतजं यत्र खनेस्तत्र समुद्भवः।
फुल्लकिंशुकसच्छाया विद्रुमास्तत्र सम्भवाः॥ १७६
मात्रा विभिन्नदेहस्य सप्तसप्तेश्च सारथेः।
निपेतुरण्डखण्डानि यासु यासु स्थलीषु च॥ १७७
तासु तास्वाकरा आसन्विद्रुमाणां प्रसूतयः।
यदा जघान भगवान् केशवो मधुकैटभौ॥ १७८
यत्र श्लिष्टं तयोर्मांसं तत्र विद्रुमसम्भवम्।
पक्वबिम्बफलाभं यज्जपाकुसुमसन्निभम्॥ १७९
शुकतुण्डसमच्छायं प्रवालमतिशोभतम्।
दोषत्रयं मतं तेषां विद्रुमाणां च शास्त्रतः॥ १८०
पङ्काश्रयं छिद्रवक्त्रं क्रिमिदूषणमेव च।
तस्मात्प्रवालं निर्दोषं कामिन्यश्च विशेषतः॥ १८१
धारयेयुस्सुखायुष्यसुपुत्रारोग्यसिद्धये।
सूर्यांशुस्पर्शमात्रेण वह्निं वमति तत्क्षणात्॥ १८२
सूर्यकान्तं तदाख्यातं स्फटिकं रत्नवेदिभिः।
अमृतांशुकरस्पर्शाधित् क्षरत्यमृतं क्षणात्॥ १८३

चन्द्रकान्तं तदाख्यातं दुर्लभं स्यात्कलौ युगे।
सूर्यकान्तं चन्द्रकान्तं रत्नमध्ये विदुर्बुधाः ॥ १८४
इत्युक्त्वा वैश्यवर्यस्तु कारयित्वा सुमण्डलम्।
उत्तराभिमुखो भूत्वा तत्रास्तीर्य नवांशुकम्॥ १८५
मध्ये तु पद्मरागञ्च मुक्तादीनि यथाक्रमम्।
पूर्वादिदिक्षु विन्यस्य ग्रहमन्त्रैर्विधानतः ॥ १८६
तत्तत्पुष्पैस्समभ्यर्च्य सुन्दरेशं समीक्ष्य च।
मङ्गलानि समस्तानि कुमारस्यास्य सन्त्विति॥ १८७
उक्त्वा गम्भीरया वाचा महान्ति सुबहूनि च।
रत्नानि च विचित्राणि मुदा च दयया ददौ॥ १८८
सन्तोषसागरे सर्वे मज्जन्तो मन्त्रिणस्तदा।
नवरत्नान्यनर्घाणि वैश्यवर्यात्प्रगृह्य च॥ १८९
ततो वैश्यञ्च सम्प्रार्थ्य त्वमत्रोपविशेति ते।
विधिना कारयामासुः किरीटं सुमनोहरम्॥ १९०
होमदानादिकं कृत्वा विद्वद्भिर्ब्राह्मणोत्तमैः।
कुमारमभिषिच्याद्भिर्मन्त्रिताभिस्सुमन्त्रकैः॥ १९१
किरीटशोभितं कृत्वा कुमारस्योत्तमाङ्गकम्।
छत्रचामरमुख्यैश्च राजचिह्नैर्विशेषतः॥ १९२
कुमारं समलङ्कृत्य नत्वा सर्वे च मन्त्रिणः।
अथाभिषेकपाण्ड्योऽयमिति चक्रुश्च नाम ते॥ १९३
सर्वे जना मुमुदिरे प्राशंसन् सुन्देरेश्वरम्।
मन्त्रिणो वैश्यवर्यञ्च सम्भावयितुमुद्यताः॥ १९४

हिरण्यानि सुवस्त्राणि गृहीत्वा सुबहूनि च।
आजग्मुरन्तिकं तस्य दृष्ट्वा वैश्यवरस्तु तान्॥ १९५
मन्दस्मितेन करुणाकटाक्षेणानुगृह्य च।
ज्योतिर्मयं वपुर्धृत्वा मूललिङ्गे तिरोदधे॥ १९६
विस्मिता एवमूचुस्ते वैश्योऽयं मौलिरत्नदः।
शिव एव न सन्देहश्चिरञ्जीवी नृपात्मजः॥ १९७
इत्युक्त्वा हृष्टमनसो ययुर्गेहानि मन्त्रिणः।
शिशुस्सन्नपि देवेशप्रसादात् पूर्णसैनिकः॥ १९८
दायादान् कोशलुण्टाकान् प्रहृत्यार्थान् समग्रहीत्।
सैन्यान्यश्वान् गजांश्चैव स्वीकृत्य बहुवत्सरम्॥ १९९
पालयामास मनुवत्पार्थिवो महतीं महीम्।
एवं सप्तदशी लीला सुन्दरेशमहेशितुः॥ २००
सकृत् श्रुता वा पठिता सर्वरत्नसमृद्धिदा।
आयुरारोग्यसत्पुत्रसर्वसम्पत्सुखप्रदा॥ २०१
इह भोगांश्च विपुलानन्ते मुक्तिं ददाति सा।

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - रत्नविक्रयो नाम*
*त्रयोविंशोध्यायः*

## அத்தியாயம் 23

### 17. இரத்தினங்களை விற்றல்

*வீர பாண்டிய அரசனுக்குப் பல ராணிகள். எவருக்கும் பிள்ளைப் பேறில்லை. போகப் பெண்களிடம் பல புதல்வர்கள் உண்டாயினர். அவர்களனைவரும் கெட்டவர்கள்.*

அஷ்டமியன்றும் சதுர்தசியன்றும் ஈசனை வழிபட்டு அவரது அருளால் பட்டத்து ராணியிடம் அரசன் ஒரு புதல்வனைப் பெற்முன். சிறுவனுக்கு ஐந்து வயதாகும்போது வேட்டைக்குச் சென்ற அரசனைப் புலி கொன்றது. போகப் பெண்களின் புதல்வர்கள் அரசாங்கத்தைக் கொள்ளையிட்டு ஓடிமறைந்தனர். மந்திரிகள் சிறுவனை ரகசியமாகக் காப்பாற்றி வந்தனர். அவனுக்கு உரிய வயது வந்ததும் அவனுக்குப் பட்டம் கட்ட மந்திரிகள் தீர்மானித்துக் கிரீடத்தை ரத்னங்களால் இழைக்க முற்படும்போது பொக்கிஷத்தில் ரத்னங்களோ, தங்கமோ இல்லை. ஈசனின் முன் நின்று அவர்கள் வேண்டியதும் ஸுந்தரேசர் ரத்தின வியாபாரி வேஷமிட்டு வந்தார். பெரும் ரத்தினங்களை அவர்களிடம் காட்டினுர்.

வலன் என்ெருரு அசுரன், மூவுலகையும் ஆண்டான். சுக்கிராசார்யரின் சொற்படி சிவனைக் குறித்துத் தவமிருந்தான். போர்க்களத்தில் அழியாமையையும், அழியும் போது உடல் முழுவதும் ரத்தினமாவதையும் வரமாகப்பெற்முன். தேவர்கள் அவனிடம் தோற்றனர். தேவர்கள் அவனது வீர்யத்தைப் பாராட்டி வரம் தர முன் வந்தனர். தன்னிடம் தோற்றவருக்குத் தானே வரம் தர அஸுரன் விரும்பினுன். தேவர்கள் தாம் செய்ய விருக்கிற வேள்வியில் பசுவாகும்படி வரம் கேட்டனர். அதற்குச் சம்மதித்த அஸுரன் தானே தன் உயிரைவிட வேள்விப் பசுவானுன். சிவனிடம் தனது என்றிருந்த எல்லாவற்றையும் தன்னையும் அர்ப்பணம் செய்தான். தன்னை அங்கம் அங்கமாக வெட்டும் போது முகம் மலர்ந்து ஸந்தோஷத்துடனிருந்தான். எலும்பு வைரமாக, பற்கள் முத்தாக, இரத்தம் பத்மராகமாக, உரோமங்கள் வைடூர்யமாக, தசை பவழமாக, கண்கள் நீலமாக, பித்தம் மரகதமாக, கபம் புஷ்யராகமாக, கொழுப்பு கோமேதகமாக, மாறின, ஒரு வேள்வியின் பொருட்டு, ஈசனுக்கு அர்ப்பணமாக உடல் பகுதிகளை அர்ப்பணம் செய்ததால் எலும்பு தசை ரத்தம் என்ற ஈன நிலைமாறி தேவர்களும் தரிக்கிற உத்தம ரத்தின நிலை பெற்றன.

மோஹினியான விஷ்ணுவைத் துரத்திச் சென்ற சிவனது வீர்யம் பூமியில் நழுவி விழ அதில் வனதேவதையான சாஸ்தா தோன்றினர். அதிலிருந்து மரகதம் தோன்றிற்று. விச்வரூபனை இந்திரன் கொன்றதும் பாபம் நீங்க அச்வமேதம் செய்த இந்திரனது கண்களிலிருந்து பீளை கீழே விழுந்ததே நீல ரத்தினமாயிற்று. இந்திர நீலம் என்பர். த்வஷ்டாவின் பெண் ஸம்ஜ்ஞா என்பவள் ஸூரியனின் மனைவியானாள். அவனது உக்கிரத்தைத் தாங்கமுடியாமல் தன்னிடத்தில் தன் நிழலை வைத்து விட்டுக் காட்டுக்குள் பெண் குதிரை வடிவில் சுற்றி வந்தாள். ஸூரியனும்குதிரையாகி அவளைத் துரத்த, நழுவிய ஸூரியனின் வீர்யமும் நீல ரத்தினமாயிற்று. இரண்யாக்ஷனை விரட்டி வந்த ஆதி வராஹரின் மூக்கிலிருந்து கசிந்த கப நீர் பூமியில் விழுந்து புஷ்பராகம் தோன்றிற்று. கல்பமுடிவில் கொந்தளித்த கடலின்மீது ப்ரளய மேகம் முழங்க வைடூர்யம் உருவாகியது. இந்திரன் இறக்கைகளுடன் வானில் சுற்றி வந்த மலைகளை வஜ்ராயுதத்தால் அடித்து இறக்கைகளை வெட்டும் போது கொட்டிய ரத்தச் சொட்டு பவழமாயிற்று. ஸூர்யனின் ஸாரதியான அருணனை அவனது தாய் வினதா வெட்டிய போது விழுந்த இரத்தம் பவழமாயிற்று. விஷ்ணு மதுகைடபரை வெட்டிய போது விழுந்த ரத்தம் பவழமாயிற்று. ஸூரியனின் ஒளிச் சூடு ஸ்படிகத்தின் மீதுபட சூட்டை உமிழ்கிற ஸூர்யகாந்தம், சந்திரனின் நில வொளி பட்டதும் ஸ்படிகம் அமுதத்தைச் சொரிய அது சந்த்ரகாந்தமாகியது.

இத்தகைய ரத்தினங்களை மந்திரிகளின் முன்பு பரப்பி ரத்தின லக்ஷணங்களைக் கூறி ரத்னங்களை ரத்தின வியாபாரி வழங்கியதும் அவனது மேற்பார்வையில் ரத்தினங்களைப் பதித்து மந்திரிகள் கிரீடத்தை அமைத்தனர். உடன் அரச குமாரனை ஆஸனத்தில் அமர்த்தி மந்திரங்களால் தூய்மை பெற்ற நீரால் அபிஷேகம் செய்தனர். அபிஷேக பாண்டியன் எனப் பெயரிட்டு அரசராக்கினர். ரத்தின வியாபாரிக்கு உரிய மர்யாதையைச்செய்ய அவரை அணுகியபோது புன் சிரிப்பாலும் கருணை ததும்புகிற கடாக்ஷத்தாலும் அருள்

புரிந்து விட்டு வியாபாரி மறைந்தார். வந்தவர் ஈசனே என்றுணர்ந்த அவர்கள் ஈசனைத் துதித்தனர். சிறுவனுன அபிஷேக பாண்டியன் கோசப் பொருட்களைத் திருடியவர்களைக் கண்டு பிடித்துத் அவற்றை மீட்டான். நல்லரசனுகப் பல்லாண்டுகள் அரசாண்டான்.

(உயர்ந்த ஜாதி ரத்தினங்களைப் பற்றிய நீண்ட விவரம் இந்த அத்தியாயத்தில் கூறப்பட்டுள்ளது.)

* * *

## चतुर्विंशोऽध्यायः

# १८.मेघैः सागरपानम्

अगस्त्यः -

मेघैस्सागरपानञ्च कारयामास शङ्करः ।

लीलया च यया ताञ्च शृणुध्वं मुनिपुङ्गवाः ॥ १

स चाभिषेक पाण्ड्यस्तु हालास्येशोऽतिभक्तिमान् ।

दिने दिने महालिङ्गं अभिषेकप्रियं प्रियात् ॥ २

गव्यैः पञ्चामृतैर्गन्धैः पुष्परत्नोदकैरपि ।

फलसारैरिक्षुसारैर्वस्त्रपूतैश्च वारिभिः ॥ ३

स्नापयित्वा विधानेन हिमतोयप्रकल्पितैः ।

कर्पूरपङ्कैरालिप्य गन्धाद्यैरुपचारकैः ॥ ४

परमान्नादिभक्तैश्चापूपैस्सव्यञ्जनैः फलैः ।

शर्कराज्यदधिक्षीरैः क्षौद्रैस्सम्यग्विशोधितैः ॥ ५

वासितैः पानकैस्सम्यक् पृथक्पात्रप्रपूरितैः ।

पानीयैरपि ताम्बूलैः कर्पूरारात्रिकैरपि ॥ ६

सपर्यां सुन्दरेशस्य कारयामास भक्तितः ।
एकदा स च भूपालः कर्पूरालेपितं शिवम् ।। ७
आलोक्य चाकरोत्प्रीत्या नाम्ना कर्पूरसुन्दरम् ।
कदाचित्पौर्णमास्यान्तु चैत्र्यां शम्भोस्तु पूजनम् ।। ८
चन्द्रचन्दनकस्तूरीरोचनाकुङ्कुमादिभिः ।
सुमनोभिस्सुगन्धाभिरन्यैर्विभवविस्तरैः ।। ९
भूपाले कर्तुमुद्युक्ते शिवभक्तशिरोमणौ ।
देवेन्द्रोऽप्यर्हणां कर्तुं समागत्य ससंभ्रमः ।। १०
अवकाशमलब्ध्वा तु वरिवस्याञ्च च तत्कृताम् ।
विलोक्य विस्मितो भूत्वा चिरं तत्रैव तस्थिवान् ।। ११
समाप्तायां सपर्यायां वासवोऽप्यतिभक्तितः ।
स्नानाद्यं नियमं सर्वं महातीर्थे विधाय च ।। १२
सौवर्णैः पङ्कजैस्सौम्यैः सोमेशं सम्प्रपूज्य च ।
सम्प्राप्यात्मीयभवनं सुधर्मायां सुराधिपः ।। १३
अध्यतिष्ठद्भद्रपीठं चिन्तामणिविराजितम् ।
तदा तु वरुणः श्रीमानिन्द्रं द्रष्टुं समागतः ।। १४
प्रणम्य तं देवराजं भेजे निर्दिष्टमासनम् ।।
तदुक्तकुशलप्रश्नसम्भावित उदारधीः ।। १५
जलेशस्तोषयामास स्तुतिभिश्च शतक्रतुम् ।
पुनर्विलोक्य तद्वक्त्रं श्रमबिन्दुविराजितम् ।। १६
विस्मितः प्राह वृत्रारिं वद भो श्रमकारणम् ।
इति सम्प्रार्थिते तस्मिन् जलेशे विमलाशये ।। १७

वक्तुमारभताथेन्द्रः श्रीहालास्येशवैभवम्।

इन्द्रः -

सुन्दरेश इति ख्यातो भूतले पाण्ड्यमण्डले ॥ १८

करोति नित्यं सान्निध्यं कदम्बवनमध्यमे।

आदौ मयाऽऽराधितं तन्मूललिङ्गं कृते युगे ॥ १९

समर्पितस्सत्प्रासादो गजैस्सिंहैर्विराजितः।

लिङ्गदर्शनमात्रेण वृत्रहत्या विनाशिता ॥ २०

भक्त्या पाण्ड्यमहीपस्य तुल्या भक्तिर्न कुत्रचित्।

सुन्दरेश्वरलिङ्गेन लिङ्गं तुल्यं न विद्यते ॥ २१

तल्लिङ्गार्चापरो भूत्वा गतोऽस्मि पृथिवीमहम्।

तत्र तीर्थोत्तमे स्नात्वा राकायां मधुमासके ॥ २२

तदुद्भूतैः पङ्कजैश्च सौवर्णैस्सुन्दरेश्वरम्।

साम्बमाराध्य संस्तुत्य प्रणम्य प्रार्थ्य कांक्षितम् ॥ २३

आयातोऽस्मि पुनस्स्वर्गं पूजापूर्णमनोरथः।

तल्लिङ्गस्मरणादेव महापापभयं न हि ॥ २४

तस्य देवी सुमीनाक्षी सर्वाभीष्टप्रदायिनी।

तन्नामस्मरणादेव सर्वास्सिध्यन्ति सम्पदः ॥ २५

देव्यास्तु सन्निधौ तीर्थं हेमपद्माकरं शुभम्।

तस्मिन् सकृत्स्नानमात्राज्जनानां पापिनामपि ॥ २६

आयुरारोग्यमैश्वर्यं सन्ततिश्च प्रवर्धते ॥

हालास्यं नाम तत् क्षेत्रं प्रवेशादघनाशनम् ॥ २७

मयि प्रविष्टे तत्राभूद्ब्रह्महत्याऽतिदूरगा।
तस्य क्षेत्रस्य तीर्थस्य देव्या लिङ्गवरस्य च॥ २८
वक्तुं न शक्यं माहात्म्यं वाचस्पतिमुखैरपि।
इति तत्सदसि प्रोक्तं वासवेन महात्मना॥ २९
श्रुत्वा लिङ्गादिमाहात्म्यं पुनः प्राह जलाधिपः।
तव सन्दर्शनं कर्तुं निर्गते मयि वेश्मनः॥ ३०
कामधेनुस्समायाता सवत्सा सर्वकामदा।
पुनर्मयाऽतिसौम्यानि दृष्टानि शकुनानि च॥ ३१
तत्फलं प्राप्तवानस्मि श्रुत्वा लिङ्गादिवैभवम्।
जलोदरो महारोगो मां बाधयति सर्वदा॥ ३२
परिहर्तुं न शक्तौ तं दिव्यावपि भिषग्वरौ।
तद्रोगपरिहाराय वदोपायमयत्नतः॥ ३३
इति श्रुत्वा देवराजो वरुणस्य वचांसि सः।
प्राह प्रगल्भया वाचा सुधासारसमानया॥ ३४
इन्द्रः -
ये महाव्याधिसन्तप्ता ये महापापकारिणः।
अपमृत्युप्रभीता ये ये भीताः कालमृत्युतः॥ ३५
तैस्संसेव्यो महादेवो हालास्येशो दयानिधिः।
त्रिविधैः करणैश्शुद्धैर्द्रव्यैश्शक्त्याऽतिभक्तितः॥ ३६
तल्लिङ्गस्य प्रभावञ्च भक्तिं पाण्ड्यनृपस्य च।
परीक्ष्य पश्चाद्वारीश तल्लिङ्गाराधनं कुरु॥ ३७
तदनुग्रहतस्सद्यस्त्वदीयस्तु जलोदरः।

महाव्याधिश्शमं याति दावाग्निरिव वर्षतः ।। ३८
इति श्रुत्वा शक्रवाक्यमभिनन्द्य मुहुर्मुदा ।
पुरन्दरमथापृच्छ्य वरुणः स्वालयं ययौ ।। ३९
ततः कदाचिद्वरुणो हालास्येशस्य वैभवम् ।
उत्साहं पाण्ड्यभूपस्य भक्तिश्च परमेश्वरे ।। ४०
द्रष्टुकामो ग्रसेत्यब्धिं शशास मधुरापुरीम् ।
तत्श्रुत्वा स्वामिनो वाक्यं सहसा सम्भ्रमान्वितम् ।। ४१
भीमफेनिलमुद्धुष्टतरङ्गालङ्कृताकृति ।
वेगोत्क्षिप्ताहिसङ्घातमुल्लसच्छफराकुलम् ।। ४२
उद्यन्मणिप्रभाजालस्फुरिताखिलवीचिमत् ।
प्रससार जलं सद्यः पयोधेर्भूमिमण्डले ।। ४३
देवास्सिद्धाश्च गन्धर्वाश्चारणा अपि मानवाः ।
पुण्यवृद्ध्यै च भोगार्थं मोक्षार्थं निवसन्ति ये ।। ४४
हालास्यक्षेत्रमाहात्म्यं ज्ञात्वाऽऽम्नायेषु घोषिताम् ।
जलप्रवाहं ते सर्वे दृष्ट्वा तु भयविह्वलाः ।। ४५
लिङ्गमूर्तिधरं देवं समस्तदुरितापहम् ।
भक्तवत्सलमीशानं शङ्करं सोमसुन्दरम् ।। ४६
शम्भुं शशाङ्कशकलशेखरं शरणं गताः ।
अकाले ग्रसते भूमिं पयोधिः पालय प्रभो ।। ४७
तूष्णीं तिष्ठसि चेत्क्षिप्रं विनष्टान्विद्धि नोऽखिलान् ।
इत्युक्त्वा भीतमनसः कृत्वा नुतिमवस्थिताः ।। ४८

तदा पाण्ड्यो भयाविष्टचेतास्सत्वरमुत्थितः ।
देवस्य सन्निधिं प्राप्य प्रणिपत्य पुनः पुनः ॥ ४९

देव देव कृपाराशे जगदुत्पत्तिकारण ।
जगत्पालनसंहारकर भक्तार्तिभञ्जन ॥ ५०

समुद्रजलसम्भूताद्भयात्सर्वाः प्रजाश्च माम् ।
भगवन् पाहि पाह्याशु कालकूटाद्यथाऽमरान् ॥ ५१

एवं स्तुत्वा महेशानं प्रणतोऽभूत्स पाण्ड्यराट् ।
प्रणतार्तिहरो देवस्तेषां दृष्ट्वा भयं महत् ॥ ५२

स्वकपर्दाग्रतस्सद्यश्चतुरोऽथ वलाहकान् ।
उत्पाद्य प्रेषयामास पिबताभ्यागतं जलम् ॥ ५३

इतीशाज्ञावचश्शुत्वा पपुस्ते तत्क्षणाज्जलम् ।
दृष्ट्वैतत्कर्म राजा च जनास्सर्वेऽतिविस्मिताः ॥ ५४

समुद्रजलसम्भूतां भीतिं त्यक्त्वा नृपादयः ।
हालास्येशस्य माहात्म्यं भक्तवात्सल्यमस्तुवन् ॥ ५५

एवमष्टादशीं लीलां यश्शृणोति सकृन्नरः ।
समस्तापद्विनिर्मुक्त इहामुत्र सुखी भवेत् ॥ ५६

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - मेघैस्सागरपानं नाम चतुर्विंशोध्यायः*

* * *

## அத்தியாயம்-24
## 18. மேகங்கள் கடலைக் குடித்தல்

அபிஷேக பாண்டியன் தினந்தோறும் ஈசனுக்கு அபிஷேகம் செய்வித்து அலங்கரித்தும் உபசரித்தும்

பேரானந்தமடைந்தான். ஒருநாள் பச்சைக் கர்பூரத்தை அரைத்து லிங்கத்தின் மீது பூசிக் கண்ணுறக் கண்டு மகிழ்ந்து கர்பூரஸுந்தரர் எனப் பெயரிட்டான். ஒரு ஸமயம் பௌர்ணமியன்று அபிஷேக பாண்டியன் வழிபட்டபின்னர் இந்திரன் தானும் பொற்றுமரைக் குளத்தில் நீராடி முறைப்படி அனைத்து உபசாரங்களைச் செய்து மகிழ்ச்சியுடன் தேவருலகம் சென்றான். அங்கு வந்த வருணனிடம் தான் மதுரை சென்று ஹாலாஸ்யேசரை வழிபட்டதையும் முதல்தடவையாக அவரைத் தரிசித்த போது விருத்ரஹத்தியால் ஏற்பட்ட பாபம் நீங்கியதையும் விவரித்தான். வருணனும் தான் இந்திரனைக் காணப் புறப்பட்டபோது காமதேனு எதிர்ப்பட்டதைச் சுப சகுனமாக ஏற்றதைச் சொல்லி தனக்கு நேர்ந்துள்ள மஹோதரநோய் தீர உபாயம் கேட்டான். இந்திரனோ, ''ஹாலாஸ்யரை வழிபட நோய் நீங்கும், எனினும் அந்த லிங்கத்தின் பெருமையையும் பாண்டிய அரசரின் பக்தியையும் சோதித்துப் பின் ஈசனை வழிபடுவாய்'' என்றான்.

வருணனும் இவற்றைச் சோதித்துப் பார்க்க எண்ணி மதுரையை விழுங்கும்படி கடலுக்கு ஆணையிட்டான். பெரும் கடலலைகள் மதுரையை விழுங்க வந்தன. பயந்த அரசன் ஈசனைப் புகலடைந்தான். ஈசனோ தன் சடையில் தங்கியுள்ள நான்கு மேகங்களை ஏவிக் கடலைப் பருகச் சொல்ல அவை கடல் பெருக்கைக் குடித்தன. கடலலையால் ஏற்பட்ட பயம் அகன்றது. இது பதினெட்டாவது விளையாடலாகும்.

★ ★ ★ ★

## पञ्चविंशोऽध्यायः

# १९. मधुरायाः चतुष्कूटपुरत्वम्

अगस्त्यः -

अतिवृष्टिभयात्तत्र हालास्येशः कृपालयः ।

यया तु लीलया सर्वाञ्जनान् रक्षति तां पराम् ।। १

लीलां शृणुध्वं विप्रेन्द्रा अद्भुतामघनाशिनीम्।
पयोधिं पीतसलिलं दृष्ट्वा चामर्षसंयुतः ॥ २
कोपोपरक्तनेत्रान्तो भ्रुकुटीभीषणाननः।
व्रीलाविषादसम्मिश्रवित्रस्ताकुलमानसः ॥ ३
पुष्कलावर्तकाद्यांश्च चतुरो मेघनायकान्।
आहूय वर्षतेत्याह वरुणोऽतीव विस्मितः ॥ ४
तदा जलधरास्सद्यस्तदाज्ञाजातसाध्वसाः।
गणैरशेषैर्मेघानां दिगन्तरसमागतैः ॥ ५
उदजृम्भन्त सहसा मधुरायास्समीपतः।
घनीकृतघनच्छन्नमन्धीकृतदिगन्तरम्॥ ६
सहसा दुर्दिनमभूत्सर्वेषां तद्दिनं तदा।
चपलाजातसंजातध्वान्ताभावातिवेगिनी ॥ ७
अम्बुदान्योन्यसंघट्टजाताग्नि कणसंकुला।
निरन्तरितनिर्घोषबधिरीकृतदिग्गजा ॥ ८
स्फाटिकस्तम्भसङ्काशपरिस्रुतपयःप्रभा।
घनाघनोपलव्यूहकलितावनिमण्डला ॥ ९
अतिवृष्टिश्च सञ्जाता सर्वेषामतिभीतिदा।
तां दृष्ट्वा पूर्ववद्भीता जनास्सर्वे सपार्थिवाः ॥ १०
अशेषजगदाधारमहालिङ्गस्वरूपिणः।
समस्तभयसंहर्तुः सर्वसम्पत्प्रदायिनः ॥ ११
श्रीमद्धालास्यनाथस्य सन्निधिं प्राप्य सत्वरम्।
प्रणिपत्य प्रार्थयंश्च देवदेवं घृणानिधिम्॥ १२

2

सुन्दरेश कृपाराशे समस्तदुरितापह।
अतिवृष्ट्या पुनर्भीतानस्मान् पाहि कटाक्षतः ॥ १३
भक्तानामतिभीतानां वाक्यमाकर्ण्य शङ्करः।
शफराक्षीपतिश्शम्भुः शम्बरारिहरो हरः ॥ १४
शरण्यस्सर्वभूतानां चन्द्रार्धकृतशेखरः।
अतिवृष्टिभयं हर्तुं विचिन्त्योपायमद्भुतम् ॥ १५
पुराऽऽत्मीयकपर्दात्तु समुद्भूतान् वलाहकान्।
पीताशेषाब्धिसलिलांश्चतुरः कामरूपिणः ॥ १६
आहूयाज्ञापयामास परितो मधुरापुरीम्।
कूटाकारेण यूयं तु चतुर्दिक्षु सुसङ्गताः ॥ १७
प्रवेशो वर्षधाराणां यथा न स्यात्तथाऽत्र तु।
कुर्वन्तु सुविशालाङ्गा योजनद्वयमात्रतः ॥ १८
इत्याज्ञां देवदेवस्य लब्ध्वा मेघाः कपर्दजाः।
पुष्कलावर्तकादीनां वर्षतां वरुणाज्ञया ॥ १९
अम्भोदानामधोभागे मण्डपाकारतां गताः।
वृष्टिं निरोधयामासुर्महतीमतिभीषणाम् ॥ २०
अथ वीतभयास्सर्वे मधुरापुरवासिनः।
राज्ञाऽभिषेकपाण्ड्येन सह प्रापुः परां मुदम् ॥ २१
मेघैरुपरि संछन्नं परितस्तु परिस्रुतैः।
जलप्रवाहैः स्फटिकभित्त्याकारैर्विराजितम् ॥ २२
अभ्रंलिहैर्गोपुरैश्च शिखरैः स्तम्भसन्निभैः।
सुमहन्मण्डपमिव हालास्यक्षेत्रमाबभौ ॥ २३

दृष्ट्वा विस्मयमापन्ना अमराश्चासुरा नराः ।
गन्धर्वाः किन्नरा यक्षास्सिद्धविद्याधरा अपि ।। २४
भोगापवर्गकामा ये हालास्यक्षेत्रवासिनः ।
सुखेन निवसन्ति स्म सर्वे भीतिविवर्जिताः ।। २५
वरुणोऽपि तदा भीतचेतास्सत्वरमम्बुदान् ।
निवारयामास ततो वृष्टिर्मास्त्विति मास्त्विति ।। २६
अथ तन्नगरीवाससर्वभूतभयावहा ।
अतिवृष्टिर्विनष्टाऽभूच्चपलाजातभीषणा ।। २७
तदाऽतिभक्तिसंयुक्ता देवाद्यास्ते स्तुतिं व्यधुः ।
श्रीहालास्येश्वर त्वन्तु जगत्पालनतत्परः ।। २८
भवत्पादशरण्यानामस्माकं साध्वसं कुतः ।
इति ब्रुवन्तो देवेशं नमस्कृत्य पुनः पुनः ।। २९
सर्वे ते निर्भया जग्मुः प्रशंसन्तो महेश्वरम् ।
पाशी भक्तिप्रीतिभीतिविस्मयैश्च समन्वितः ।। ३०
जलोदरमहाव्याधिविनाशं कामयन् हृदि ।
परिपूर्णं परशिवं हालास्येशं हृदि स्मरन् ।। ३१
सद्यस्सम्प्राप हालास्यं समुद्रैस्सरितागणैः ।
सरस्वतीसुरनदीकालिन्दीप्रमुखैरपि ।। ३२
पाशहस्तैरनेकैश्च परिवारैश्च दैवतैः ।
शुद्धस्फटिकसङ्काशैर्धवलाम्बरभूषणैः ।। ३३
अन्यैर्नानाविधैर्देवैर्विद्वद्भिर्मुनिपुङ्गवैः ।
हेमपद्माकरे सस्नौ सङ्कल्प्य च सचेलकम् ।। ३४

जलोदरमहाव्याधिस्तदैवास्य स्म नश्यति।
लघुकायोऽतिहृष्टस्सन् तीर्थादुत्तीर्य वाससी ।। ३५
परिधाय समुद्धूल्य भस्मनाऽथ कळेबरम्।
रुद्राक्षाणां च मालाभिरलङ्कृत्य त्रिपुण्ड्रकैः ।। ३६
सुमीनाक्षीं सुन्तोष्य समस्तैरुपचारकैः ।
प्रदक्षिणक्रमेणाथ गत्वा दिव्यविमानगम् ।। ३७
शिवलिङ्गं समालोक्य प्रणिपत्यावशोऽभवत्।
उत्थायाथ महाभक्त्या कर्तुमर्चां समुद्यतः ।। ३८
गङ्गाद्याः पुण्यसरितः पुण्यतीर्थोदकानि च।
प्रायच्छन्नभिषेकाय हेमकुम्भोद्धृतानि च ।। ३९
अम्बराणि तु दिव्यानि सुसूक्ष्माण्यमलानि च।
भूषणानि विचित्राणि मकुटप्रमुखानि च ।। ४०
चन्दनानि सुगन्धीनि पुष्पाणि सुरभीणि च।
बहूनि भिन्नवर्णानि कल्पवृक्षस्तदा ददौ ।। ४१
साज्यगुग्गुलुधूपश्च साज्यवर्तिप्रदीपकम्।
पञ्चामृतं पञ्चगव्यं फलानि विविधानि च ।। ४२
परमान्नादिभक्तानि कामधेनुस्स्म यच्छति।
एवं सपर्यासामग्रीसम्पन्नो यादसां पतिः ।। ४३
विधिनाऽऽराधयामास त्रिविधैः करणैश्शिवम्।
अथ मुक्ताफलैस्स्थूलैः भार्गवाकारसन्निभैः ।। ४४
सहस्रनामभिः पूज्य स्तुतिं कर्तुं प्रचक्रमे ।।

## हालास्याष्टकम्।

वरुणः -

कल्याणशैलपरिकल्पितकार्मुकाय
मौर्वीकृताखिलमहोरगनायकाय।
पृथ्वीरथाय कमलापतिसायकाय
हालास्यमध्यनिलयाय नमश्शिवाय।। ४५

भक्तार्तिभञ्जनपराय परात्पराय
कालाभ्रकान्तिगरलाङ्कितकन्धराय।
भूतेश्वराय भुवनत्रयकारणाय
हालास्य मध्यनिलयाय नमः शिवाय।। ४६

भूदारमूर्तिहरिमृग्यपदाम्बुजाय
हंसाब्जसम्भवसुदूरसुमस्तकाय।
ज्योतिर्मयस्फुरितदिव्यवपुर्धराय
हालास्य मध्यनिलयाय नमःशिवाय।। ४७

कादम्बकाननिवासकुतूहलाय
कान्तार्धभागकमनीयकलेबराय।
कालान्तकाय करुणामृतसागराय
हालास्यमध्यनिलयाय नमः शिवाय।। ४८

विश्वेश्वराय विबुधेश्वरपूजिताय
विद्याविशिष्टविदितात्मसुवैभवाय।
विद्याप्रदाय विमलेन्द्रविमानगाय
हालास्य मध्यनिलयाय नमःशिवाय।। ४९

सम्पत्प्रदाय सकलागममस्तकेषु
सङ्घोषितात्मविभवाय सदाशिवाय।
सर्वात्मने सकलदुःखसमूलहन्त्रे
हालास्यमध्यनिलयाय नमः शिवाय॥ ५०
गङ्गाधराय गरुडध्वजवन्दिताय
गण्डस्फुरद्भुजगकुण्डलमण्डिताय।
गन्धर्वकिन्नरसुगीतगुणाधिकाय
हालास्यमध्यनिलयाय नमः शिवाय॥ ५१
पाणिं प्रगृह्य मलयध्वजभूपपुत्र्याः
पाण्ड्येश्वरः स्वयमभूत्परमेश्वरो यः।
तस्मै जगत्प्रथितसुन्दरपाण्ड्यनाम्ने
हालास्यमध्यनिलयाय नमश्शिवाय॥ ५२
गीर्वाणदेशिकगिरामपि दूरगं यद्
वक्तुं महत्त्वमिह को भवतः प्रवीणः।
शम्भो क्षमस्व भगवच्छरणारविन्द -
भक्त्या कृतां स्तुतिमिमां मम सुन्दरेश॥ ५३
इति स्तुत्वा सुन्दरेशं नमस्कृत्य पुनः पुनः॥ ५४
भक्तिं परां गतो भूत्वा तस्थावञ्जलिमाचरन्।
अथाविरासीद्भगवान् कदम्बवननायकः॥ ५५
साम्बस्सर्वजगन्नाथः सर्वाभरणभूषितः।
स्वच्छमौक्तिकसङ्काशभूषणांबरमूर्तिमान्॥ ५६

भासयन्पाणिभिर्वह्निवराभयपरश्वथान् ।
वरुणोऽपि विलोक्येशं मनोवाचामगोचरम् ।। ५७
विस्मृत्य कर्म कर्तव्यं चित्रन्यस्त इव स्थितः ।
महेशः प्राह वारीशं वरं वरय वाञ्छितम् ।। ५८
इत्युक्तस्स तु वारीशो वन्दनानि विधाय च ।
भगवन् पार्वतीनाथ मयाऽज्ञानवशेन तु ।। ५९
समुद्रजलवर्षाभ्यामपराधद्वयं कृतम् ।
क्षमस्व करुणासिन्धो कालकूटविषापह ।। ६०
त्वल्लिङ्गदर्शनात्पूर्वं महाव्याधिर्जलोदरः ।
मदीयश्शान्तिमगमत्त्वत्तीर्थस्य सुवैभवात् ।। ६१
इति तस्य वचश्श्रुत्वा प्राह हालास्यनायकः ।
तवास्तु सर्वसौभाग्यं नित्यमृद्धिबलान्वितम् ।। ६२
पठतां त्वत्कृतं स्तोत्रं हालास्याष्टकमिष्टदम् ।
चतुर्विधार्थसिध्यै च जप्तव्यं पापशान्तये ।। ६३
इत्युक्त्वाऽन्तर्दधे देवः परिपूर्णः परः शिवः ।
वरुणोऽथ महालिङ्गं नत्वा तुष्टाव वै पुनः ।। ६४
नमश्शिवाय देवाय कदम्बवनवासिने ।।
महादेवाय शर्वाय नीलकण्ठाय शूलिने ।। ६५
कपालिने करालाय शम्याकस्रग्धराय च ।
योगाय योगगम्याय योगिनां पतये नमः ।। ६६
कालाय कालहन्त्रे च कालरूपधराय च ।
कलाधरकलाशोभिमौलये कामदायिने ।। ६७

शिवाय शूराय शुभप्रदाय शुभ्राभ्रयूथद्युतये नमोऽस्तु।
नारायणाम्भोरुहसम्भवाद्यैर्वन्द्याय देवैर्नलिनाननाय ॥ ६८
अपराधं क्षमस्वेति पुनः पुनरुदीरयन्।
अत्यन्ततुष्टहृदयस्स्वालयं वरुणो ययौ ॥ ६९
तदाप्रभृति हालास्यं चतुष्कूटपुरं विदुः।
एकोनविंशा लीलेयं चतुष्कूट पुरेशितुः ७०
चतुर्विध पुमर्थानां दायिनी गदिता मया।
शृणोति य इमां लीलां वर्षरक्षणलक्षिताम्॥ ७१
जीवन्वर्षसहस्राणि भुवि पुत्रादिसंयुतः।
सोऽनुभूय महत्सौख्यमन्ते सायुज्यमेष्यति ॥ ७२

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - अति वर्षरक्षणं नाम*
*पञ्चविंशोऽध्यायः*

★ ★ ★

## அத்தியாயம்-25

### 19. மதுரை நான்மாடக் கூடலானது

*ஈசனது சடைமேகங்கள் கடல் நீரைக் குடித்ததை அறிந்த வருணன் கோபம் கொண்டு தன் வசமுள்ள ப்ரளய காலத்து மேகங்களான புஷ்கலா வர்தகம் முதலிய நான்கு மேகங்களை மதுரையை மழையால் அழிக்கும்படி உத்தரவிட்டான். உடன் அவை மதுரை மீது இருள் சூழும்படி கரு மேகங்களாகப் பரவி இடியும் மின்னலுமாகக் கல்லாலடிப்பது போன்று தாரையாகப் பெய்தன. மக்கள் ஈசனைச் சரணடைந்தனர். ஈசன் தன் சடையிலிருந்த நான்கு மேகங்களை மதுரையின் மீது கூடார மண்டபம் போன்று நின்று மறைக்கும்படி ஆணையிட்டார். மழை ஒரு சொட்டு கூட மதுரையில் நுழையாதபடி அவை தடுத்தன. மதுரை மக்கள் பயம் நீங்கி*

மகிழ்ந்தனர். மதுரை ஒரு பெரு மண்டபமாகக் காட்சி அளித்தது. அதனைக் கண்டு பயந்த வருணன் உடன் தன் மேகங்களைத் திரும்பச் செய்து தவறுணர்ந்து ஈசனிடம் பொறுத்தருள வேண்டினான். ஸரஸ்வதி கங்கை முதலிய நதிகள் சூழ மதுரை வந்தான். நுழைந்ததும் அவனது மஹோதர நோய் அகன்றது. உடல் லேசானது. பொற்றாமரைக் குளத்தில் நீராடி, விபூதி பூசி, மீனாக்ஷியையும் ஸுந்தரேசுவரரையும் தரிசித்து கங்கை முதலிய நதிகளின் நீரால் நீராட்டி உபசரித்து வணங்கித் துதித்தான். ஈசன் அவனது உபசாரத்தை ஏற்று மகிழ்ந்தார். அவனது விருப்பங்களை நிறைவுறச் செய்தார். ஹாலாஸ்யம் (ஆலவாய்) அன்று முதல் சதுஷ் கூடம், நான்மாடக் கூடல் - கூடல் என்ற பெயர் பெற்றது. இது பத்தொன்பதாவது லீலை.

★ ★ ★

## षड्विंशोध्यायः

# २०. सिद्धचरितम्

अगस्त्यः -

वक्ष्ये युष्माकमाश्चर्यं हालास्येशकृतं द्विजाः ।
चित्रं सिद्धचरित्रं तच्छृणुध्वं मुनिपुङ्गवाः ॥ १
हालास्यवासी देवस्तु कनकाचलकार्मुकः ।
कर्तुं लीला विचित्राश्च समर्थो भक्तवत्सलः ॥ २
विश्वकर्मविनिष्पन्नविमानावाससुप्रियः ।
महदैश्वर्यदानार्थं मधुरापुरवासिनाम् ॥ ३
तस्याभिषेकपाण्ड्यस्य महाभक्तियुतस्य च ।
दातुं सर्वार्थसिद्धीश्च सिद्धवेषं समग्रहीत् ॥ ४
कटकाभ्यां नूपुराभ्यामलङ्कृत्य पदद्वयम् ।
आच्छादनञ्च कौपीनं धृत्वा शार्दूलचर्मणा ॥ ५

खट्वाङ्गविलसत्पाणिर्भस्मोद्धूलितविग्रहः ।
भस्मधाराभिरामांसो महामेरुसमुन्नतः ।। ६
सर्पसन्नद्धकपिलह्रस्वकुञ्चितसज्जटः ।
अत्यन्तशुद्धस्फटिककुण्डलाभ्यां मनोहरः ।। ७
मन्दस्मितलसद्वक्त्रः कुन्दकुट्मलदन्तवान् ।
शुभ्राभिरस्थिमालाभिरावेष्ट्य च कलेबरम् ।। ८
विचित्रौड्याणबन्धेन कटीशोभां विधाय च ।
षोडशाब्दाकृतिस्सौम्यो योगपट्टं समुद्वहन् ।। ९
वेत्रञ्च काञ्चनमयं धृत्वा दक्षिणपाणिना ।
सिद्धस्सन्मधुरावीथ्यां चरति स्म मुदान्वितः ।। १०
ये ये जनास्समाहूय तं सिद्धं परिपूज्य च ।
प्रार्थयन्ति च यद्वस्तु तेभ्यस्तेभ्यो ददाति तत् ।। ११
केचिद्वृद्धास्तदागत्य जर्जरीकृतविग्रहाः ।
निर्दन्ताः काशकेशाश्च प्रार्थयन्ति स्म यौवनम् ।। १२
दिव्यया वेत्रयष्ट्या च तेषां मूर्धसु संस्पृशन् ।
युवत्वं प्रददौ तेभ्यो महासिद्धो महेश्वरः ।। १३
वन्ध्याः काश्चित्समायाताश्श्रुत्वा सिद्धस्य वैभवम् ।
तासां फाले भस्म दत्वा गर्भिणीस्ताश्चकार सः ।। १४
अन्धाश्च बधिराश्चान्ये समाजग्मुस्ससम्भ्रमम् ।
तेभ्यश्चाञ्जनदानेन तद्दोषं हरति स्म सः ।। १५
पङ्गवः पाणिहीनाश्च कुब्जाश्चान्ये समाययुः ।
भस्मवेत्रप्रहाराभ्यां रक्षयामास तान्मुदा ।। १६

भूतप्रेतपिशाचाद्यैः पीडिता बहवो जनाः ।
आगत्य दृष्ट्वा तं सिद्धं विमुक्ता विविधापदः ।। १७
कुष्ठमष्टादशविधं परिहृत्य च भस्मना ।
कुष्ठव्याधियुतानाञ्च करोति स्म महत्प्रियम् ।। १८
शिरःकर्णाक्षिरोगार्ता ज्वरगुल्मादिपीडिताः ।
सर्वे नीरोगतां प्रापुस्तत्सिद्धस्य कटाक्षतः ।। १९
दारिद्र्यकर्शितानाञ्च जनानां भवनानि च ।
धनधान्यसमृद्धानि सिद्धेशेन कृतानि च ।। २०
वश्यवादवयःस्तम्भानदृश्याकर्षणाञ्जनम् ।
एवं वकारत्रितयं अकारत्रितयं तथा ।। २१
यूनाञ्च दर्शयित्वा तान्मोहयामास सन्ततम् ।
इन्द्रजालमहाजालप्रमुखानि महान्ति च ।। २२
विचित्राणि च कर्माणि दर्शयामास वै मुहुः ।
वश्याकर्षणविद्वेषस्तम्भनोच्चाटनादिभिः ।। २३
वशीकृता जनास्सर्वे शम्भुना सिद्धरूपिणा ।
अश्वांश्च रासभाकारानश्वाकारांश्च रासभान् ।। २४
बिडालांश्च महाव्याघ्रान् पुनर्व्याघ्रान्बिडालकान् ।
वृद्धांश्च बालरूपेण बालान्वृद्धस्वरूपतः ।। २५
एवं बहुविधं कर्म कृत्वा विहरति स्म सः ।
पुरोपवनमासाद्य तत्र चित्राण्यदर्शयत् ।। २६
लाङ्गलीवृक्षबृन्दानि तालवृक्षान् करोति च ।
तालांश्च लाङ्गलीवृक्षान् पुनरप्यकरोत्प्रभुः ।। २७

एवं वृक्षविपर्यासं कृत्वाऽनेकप्रकारतः ।
अपुष्पितान् पुष्पितांश्च सफलानफलानपि ।। २८
उन्नतानपि नीचांश्च ह्रस्वानत्युन्नतानपि ।
पूगपुन्नागपनससहकारादिपादपान् ।। २९
इति कृत्वा वेगवतीं निर्जलां सजलां व्यधात् ।
भूयश्च निर्जलां कृत्वा क्रीडयामास तैर्जनैः ।। ३०
दूरस्थं पर्वतमपि समीपस्थमिवाकरोत् ।
समीपस्थं पर्वतञ्च दूरस्थितमिवाकरोत् ।। ३१
रात्रिचिह्नानि सर्वाणि दिवाकालेऽप्यदर्शयत् ।
दिवा चिह्नानि रात्रौ च दर्शयामास स प्रभुः ।। ३२
खट्वाङ्गमम्बरे स्थाप्य तस्मिन् सूचीं निधाय च ।
पादाङ्गुष्ठाग्रतस्तस्यां स्थित्वा भ्रमणमातनोत् ।। ३३
पुनस्तस्यां शिरःस्थाप्य पादावूर्ध्वं प्रसार्य च ।
वेगाच्चकार भ्रमणं सिद्धो विस्मापयञ्जनान् ।। ३४
पुनस्सिद्धः खेचरस्सन् चचार विहगेन्द्रवत् ।
अथ मेघपथं गत्वा कालमेघं सुगर्जितम् ।। ३५
आकृष्य भुजदण्डाभ्यां वेगात्प्राप्य महीतलम् ।
दर्शयित्वा जनानां तं विद्युन्मालाविभूषितम् ।। ३६
पश्चान्मुमोच तं मेघं सोऽपि स्वपदमाययौ ।
अन्यांश्च खेचरान् सर्वान् बलादाकृष्य भूतले ।। ३७
पुनर्मुञ्चति तान् सर्वान् भीत्या धावन्ति ते द्रुतम् ।
दिव्याञ्जनप्रदानेन भूगतानि बहूनि च ।। ३८

अनर्घरत्नकनककलधौतमुखानि च ।
विविधानि च वस्तूनि सिद्धो व्यक्तीचकार च ।। ३९
अग्निस्तम्भजलस्तम्भवायुस्तम्भमुखाः क्रियाः ।
चतुष्षष्टिकलाश्चान्याः सर्वा विद्याः प्रदर्शिताः ।। ४०
अपेक्षितानि वस्तूनि भोगमोक्षपरायणैः ।
यानि तानि च सर्वाणि सिद्धोऽयत्नाद्ददौ प्रभुः ।। ४१
वेदशास्त्रपुराणादिविद्याः सर्वास्सलक्षणाः ।
वसन्तु जिह्वास्वस्माकमिति वव्रुश्च केचन ।। ४२
तेषां द्विजानां जिह्वासु भस्माणुक्षेपमात्रतः ।
सर्वविद्यास्समभवन्विचित्रं किमतः परम् ।। ४३
ये वृद्धा यौवनं प्राप्तास्तेषां पत्न्यस्समाययुः ।
ददौ च तासां तारुण्यं रूपलावण्यसंयुतम् ।। ४४
अन्तर्वत्न्यस्समभवन् पुनस्तास्सिद्धवैभवात् ।
एवमन्यान्यनेकानि दर्शितान्यद्भुतानि च ।। ४५
कश्शक्तस्तानि सर्वाणि वक्तुं वागीश्वरं विना ।
संपश्यतां जनानान्तु परमानन्ददानि च ।। ४६
एवं विचित्रकर्माणि कृत्वा संचरति स्म सः ।
स्थूलः कदाचित्क्षीणश्च क्षणं दीर्घोऽथ वामनः ।। ४७
अदृश्यश्च क्षणं दृश्यस्तेजस्वी मायया वृतः ।
जनैरपूर्ववस्तूनि तपोभिर्दुर्लभानि च ।। ४८
प्रार्थितानि च सर्वाणि प्रददौ स कृपानिधिः ।
सर्वसिद्धिप्रदं सिद्धं सर्वसद्गुणसंयुतम् ।। ४९

शान्तं कारुण्यसपूर्णं जना दृष्ट्वाऽतिविस्मिताः ।
आश्चर्याण्येवमालोक्य वर्तन्ते स्मास्य पार्श्वतः ।। ५०
राजाऽभिषेकपाण्ड्योऽपि श्रुत्वा सिद्धस्य वैभवम् ।
स्वजनान् प्रेषयामास कांश्चित्कर्मकरान् शिशून् ।। ५१
येन केन प्रकारेण सिद्धं दर्शयतेति मे ।
उद्युञ्जते ग्रहीतुं तं जनता सा तु तद्वशा ।। ५२
तत्कृतानि विचित्राणि विलोक्यातीव विस्मिता ।
चरति स्म मुदायुक्ता तस्य सिद्धस्य पृष्ठतः ।। ५३
इति सिद्धस्य चरितं शृणोति पठतीह यः ।
तस्य सर्वाणि सौख्यानि वर्धन्ते सर्वसम्पदः ।। ५४
एवं विंशा तु लीलेयं सुन्दरेशमहेशितुः ।
श्रुता वा पठिता वापि सर्वसौख्यप्रदायिनी ।। ५५

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - सिद्धचरित्रं नाम*
*षड्विंशोऽध्यायः*

* * *

## அத்தியாயம் - 26
## 20. ஸித்தரானது

*ஒரு நாள் ஈசன் மதுரை மக்களுக்கு அருள்புரிய சித்தர் வேடம் பூண்டு மதுரையைச் சுற்றி வந்தார். காலில் கடகங்களும், சிலம்புகளும், இடுப்பில் கௌபீனமும், புலித் தோலாடையும், உடல் முழுதும் விபூதிப் பூச்சு; சடையைப் பாம்பால் தூக்கிக் கட்டி, எலும்பு மாலையால் உடலை அலங்கரித்து பதினாறு வயது யுவராக தங்கப் பிரம்புடன் மதுரை வீதிகளில் சுற்றினார். கிழவனை யுவனாக்கி, அவனது*

மனைவியை யுவதியாக்கி, பிள்ளைப் பேறு தந்து, குருடனுக்குப் பார்வை தந்து, செவிட்டையும் ஊமைத்தனத்தையும் போக்கி முடவனையும் குள்ளனையும் நேராக்கி, ஏழ்மை நீக்கி, நோய் நீக்கி, வசியம் அஞ்ஜனம் முதலியவற்றால் மயக்கி, குதிரையைக் கழுதையாக்கி, கழுதையைக் குதிரையாக்கி, பனைமரத்தைத்தென்னை மரமாக்கி, பெருமரங்களைச் செடியாக்கி, செடியைப் பெருமரமாக்கி வைகையை நீரற்று மணல் திட்டாக்கி, அதில் பெரும் வெள்ளத்தை உண்டாக்கி, ஆகாயத்தில் மிதந்து, பூமிக்குள் மறைந்திருப்பவற்றைக் காட்டி அக்னி ஸ்தம்பம், ஜல ஸ்தம்பம், வாயு ஸ்தம்பம் முதலியவற்றை விந்தைக் காட்சியாக்கி, அசடை வாயில் விபூதி தூவி பெருங் கவிஞனாக்கி, காட்சி மாற்றி சித்து விளையாடல்களைப் புரிந்தார். அரசன் அவரை அழைத்து வருமாறு சேவகர்களை ஏவ, அவர்களை ஈசன் ஏமாற்றினார். மக்களைத் தன்னையே சுற்றிச் சுற்றி வரச் செய்து உலகை மறக்கச் செய்தார். இது இருபதாவது லீலை.

★ ★ ★

## सप्तविंशोऽध्यायः

# २१. शिलागजाय इक्षुदण्डदानम्

ऋषयः -

कुम्भसम्भव सर्वज्ञ तव वागमृतं वयम् ।
पीत्वा श्रवणपात्रैश्च तृप्तिश्च न लभामहे ।। १
किं चकार पुनस्सिद्धः किं चकार स पाण्ड्यराट् ।
इति सर्वं समाचक्ष्व श्रोतुं कौतूहलं हि नः ।। २
तेषां वाक्यं समाकर्ण्य भगवान् कुम्भसम्भवः ।
वक्तुमारभताशेषं चरित्रं नृपसिद्धयोः ।। ३

अगस्त्यः -

शृणुध्वमथ विप्रेन्द्रा लीलां हालास्यवासिनः ।
इक्षुदण्डप्रदानाख्यां शिलामयगजाय च ।। ४

अथाभिषेकपाण्ड्यस्तु प्रेषयामास मन्त्रिणः ।
कर्तुं सिद्धस्य चाह्वानं समर्थान् सर्वकर्मसु ।। ५
ते गत्वा प्रार्थयामासुरन्तिकं सिद्धरूपिणः ।
स्वामिन् सिद्ध समागच्छ महाराजस्य मन्दिरम् ।। ६
सर्वानुग्रहकृत्त्वं हि कुरु तस्याप्यनुग्रहम् ।
सिद्धश्श्रुत्वा वचस्तेषां प्राह प्रहसिताननः ।। ७
अभिषेकधरः पाण्ड्यस्स महाराजशेखरः ।
अहं सिद्धस्तपस्वी च किं कार्यं मम तेन वै ।। ८
इत्युक्त्वा प्रेषितास्सर्वे सचिवाः पाण्ड्यभूपतेः ।
श्रुत्वाऽभिषेकपाण्ड्योऽपि सिद्धस्य वचनं च तैः ।। ९
गर्वेण महता युक्तस्तेन किं वा भविष्यति ।
इति मत्वा च मनसि तूष्णीमास्ते स्म भूपतिः ।। १०
एकदा सुन्दरेशस्य शम्भोरायतनाश्रितम् ।
वायव्यं दिग्गजं पश्यन् स सिद्धस्समवस्थितः।। ११
तदा मकरसङ्क्रान्ति पुण्यकालस्समागतः ।
हेमपद्माकरे स्नात्वा महान् पाण्ड्यमहीपतिः ।। १२
नन्तुमीशं कृतोद्योगस्तदानीं सहसाऽभ्यगात् ।
पुरो गताः कञ्चुकिनो महाकाया महाबलाः ।। १३
मदोद्धता भूषिताश्च पाण्ड्यपार्थिवकिङ्कराः ।
सिद्धं प्रहर्तुमुद्युक्ता हेमवेत्रलसत्कराः ।। १४
उत्तिष्ठोत्तिष्ठ हे सिद्ध दुर्बुद्धे गच्छ सत्वरम् ।
देवं वन्दितुमायाति प्रदक्षिणवशान्नृपः ।। १५

मुहुर्मुहुरिति प्रोच्चैः प्राहुस्ते सोऽपि निर्भयः ।
न चचाल स किञ्चिच्च बबन्ध दृढमासनम् ।। १६
ततः पाण्ड्यमहीपालस्सिद्धस्यान्तिकमाययौ ।
निश्चलं चित्रगमिव सिद्धवेषधरं हरम् ।। १७
विलोक्य विस्मितो भूत्वा सस्मितं पृच्छति स्म सः ।
भवान् कः कुत आयातः किमर्थमिह वर्तते ।। १८
का विद्या तव का शक्तिः का संज्ञा कथयाद्य नः ।
इति राजवचश्श्रुत्वा सिद्धो वक्तुं प्रचक्रमे ।। १९
सिद्धः -
राजन् पाण्ड्यकुलोत्तुङ्ग सर्वं तच्छ्रोतुमर्हसि ।
अहं सिद्धो ह्यनाथस्तु भिक्षाशी स्वैरसञ्चरः ।। २०
मम देशस्तु काश्मीरः पुरी वाराणसी प्रभो ।
तत्प्रदेशाद्विनिर्गत्य शिवक्षेत्राणि दर्शयन् ।। २१
क्रमात्कतिपयैर्मासैरागतोऽस्मि शनैश्शनैः ।
अनादिभूतमखिलजगत्कारणमव्ययम् ।। २२
श्रीमद्धालास्यनाथाख्यं मूललिङ्गञ्च दर्शितुम् ।
मनुजानाञ्च सर्वेषां मधुरापुरवासिनाम् ।। २३
विविधान्मत्प्रभावांश्च प्रदर्शयितुमद्भुतान् ।
प्रदातुं वाञ्छितार्थांश्च वर्तेऽस्यां पुरि भूपते ।। २४
नास्ति विद्यासु सर्वासु लोकेष्वविदिता मया ।
मयि सन्ति महीपाल सदा सर्वाश्च शक्तयः ।। २५
आज्ञासिद्धश्च नाम्नाऽहं किं कार्यं ते महाप्रभो ।
इत्युक्त्वा स्मितवक्त्रः सन् यथापूर्वं सुखं स्थितः ।। २६

नैरपेक्ष्यञ्च दर्पञ्च दृष्ट्वा धैर्यञ्च भूपतिः ।
तूष्णीमतिष्ठत्तत्रैव किं कर्तव्यमिति स्मरन् ।। २७
तदा कृषीवलः कश्चिद्राजानं द्रष्टुमागतः ।
इक्षुदण्डमतिस्थूलमतिदीर्घं सुकोमलम् ।। २८
विशालपर्वसंयुक्तं नयनानन्ददायकम् ।
प्रायच्छत्स महीपालो हस्तेनापि तमग्रहीत् ।। २९
अपूर्वमिक्षुकाण्डञ्च विलोक्य प्रीतमानसः ।
पुनः प्राह स तं सिद्धं शिलानिश्चलविग्रहम् ।। ३०
आज्ञासिद्धो भवान् सिद्ध सत्यञ्चेन्मम हस्तगम् ।
इक्षुकाण्डं भक्षयतु विमानाधारदिग्गजः ।। ३१
शिलामयगजस्तं तु भक्षयिष्यति चेत्ततः ।
सर्वं ददामि स्वेष्टं भो मन्नाथश्च भविष्यसि ।। ३२
तत् श्रुत्वा सहसा सिद्धो नृपतेर्वाक्यविस्तरम् ।
स्मयमानमुखाम्भोज इदं वचनमब्रवीत् ।। ३३
राजन् शशिकुलाधीश शासितारातिमण्डल ।
तव सर्वं ददामीति निरर्थकवचोऽब्रवीः ।। ३४
एकाऽनवद्या विद्या चेद्यस्मिन् स पुरुषोत्तमः ।
सर्वलोकाधिपूज्यश्च सर्वविद्याधिकस्त्वहम् ।। ३५
अर्थोऽभिलषितस्सर्वैर्मय्यस्ति हि महीपते ।
किञ्चिन्नास्ति महीपाल मया त्वत्तोऽभिकांक्षितम् ।। ३६
पश्य पश्य नृपेत्युक्त्वा गजस्याज्ञां ददौ दृशा ।
25 भूपतेर्भुजगं सद्य इक्षुकाण्डं मनोहरम् ।। ३७

आदाय चर मातङ्ग सुन्दराज्ञा तवास्त्विति ।
श्रुत्वाऽऽज्ञावचनं तस्य महासिद्धस्य चाद्भुतम् ।। ३८
युगान्तमेघसदृशमहाबृंहितसंयुतः ।
इभस्तु भूपहस्तात्तमादायाभक्षयत्क्षणात् ।। ३९
महार्घांश्च महादीप्तां मानिताश्च महीपतेः ।
मृणाळशङ्कयाऽथास्य जग्राहैकावलीमपि ।। ४०
तामादातुं समुद्युक्ता हा हेति निकटस्थिताः ।
गज त्वं भक्षयेत्युक्त्वा सिद्धश्चाज्ञां ददौ क्रुधा ।। ४१
तदा गम्भीरफीट्कारं कुर्वंस्तां स मतंगजः ।
भक्षयामास सिद्धस्य तस्य वाक्याभिचोदितः ।। ४२
नृपो विषादी क्रुद्धस्सन् रूक्षं सिद्धमलोकयत् ।
प्रहर्तुं कृतसन्नाहा योधास्सिद्धान्तिकं गताः ।। ४३
सहसोत्थाय सिद्धश्च तान्विलोक्य बहून् भटान् ।
अभयीकृतहस्तस्सन् स्तम्भयित्वा स्वशक्तितः ।। ४४
तिष्ठ तिष्ठेति भर्त्स्यैतान् हसंस्तत्रैव तस्थिवान् ।
त्यक्त्वा रोषं विस्मितस्सन्विलोक्यास्य च वैभवम् ।। ४५
सचिवैस्संवृतस्सम्राट् सिद्धपादाम्बुजद्वयम् ।
स्वोत्तमाङ्गं समारोप्य पुळकाञ्चितविग्रहः ।। ४६
अपराधं क्षमस्वेति पुनः पुनरुदीरयन् ।
परं परवशो भूत्वा तस्थौ स्तम्भ इवाचलः ।। ४७
अथ सिद्धस्समालोक्य भक्त्या भीत्या च संयुतम् ।
वाञ्छितार्थं प्रार्थय त्वमिति प्राह महीपतिम् ।। ४८

सिद्धवाक्यं समाकर्ण्य प्रणिपत्य कृताञ्जलिः ।
पुत्रं सद्गुणसंयुक्तं प्रार्थयामि प्रयच्छ भो ।। ४९
इति तत्प्रार्थनां श्रुत्वा सिद्धवेषधरोऽब्रवीत् ।
तवास्तु पुत्रसौभाग्यं महदैश्वर्यसंयुतम् ।। ५०
यशश्च दीर्घमायुश्च पश्चान्मुक्तिश्च शाश्वती ।
इत्युक्त्वा गजवक्त्राच्च गृहीत्वैकावलीमपि ।। ५१
दत्वाऽऽशीर्भिश्च संवर्ध्य पाणिभ्यां पर्यमर्शयत् ।
इति पाण्ड्यमहीपालं परितोष्य वरार्पणात् ।। ५२
सिद्धरूपी परशिवस्सत्यानन्दचिदात्मकः ।
हालास्यनाथो भगवानन्तर्धानमगात्क्षणात् ।। ५३
विचित्रं तच्चरित्रञ्च सिद्धस्यालोक्य भूपतिः ।
निश्चित्य सुन्दरेशस्य विनोद इति मानसे ।। ५४
लिङ्गमूर्तिधरस्याथ सुन्दरेशस्य सन्निधिम् ।
प्राप्य भक्त्या सम्प्रणम्य कर्तुमारभत स्तुतिम् ।। ५५

## अभिषेकपाण्ड्यकृता स्तुतिः

अभिषेकपाण्ड्यः -
परिपूर्ण परानन्द परचित्सत्यविग्रह ।
सुन्दरेश्वर सर्वज्ञ त्राहि मामपराधिनम् ।। ५६
फालाक्षिजातज्वलन लेलिहानमनोभव ।
जीवन्मुक्तिपुरीनाथ त्राहि मामपराधिनम् ।। ५७
पारिजातगुणातीतपादपङ्कजवैभव ।
कदम्बकाननाध्यक्ष त्राहि मामपराधिनम् ।। ५८

भक्तप्रार्थितसर्वार्थकामधेनो पुरान्तक।
करुणावरुणावास त्राहि मामपराधिनम्॥ ५९
कैवल्यदाननिरत कालकूटभयापह।
कन्यकानगरीनाथ त्राहि मामपराधिनम्॥ ६०
कमलापतिवागीशशचीशप्रमुखामरैः।
परिपूजितपादाब्ज त्राहि मामपराधिनम्॥ ६१
पञ्चास्य पन्नगाङ्काङ्ग परानन्दप्रदायक।
पर्वताधीशजामातः त्राहि मामपराधिनम्॥ ६२
परात्पर पदाम्भोजपरिध्यानरतात्मनाम्।
कांक्षितार्थप्रद स्वामिन् त्राहि मामपराधिनम्॥ ६३
अपराधाष्टकं स्तोत्रं यः पठेत्तव सन्निधौ।
तस्यानन्तापराधं च क्षमस्व करुणानिधे॥ ६४
इति स्तुत्वा महालिङ्गं प्रणिपत्य मुहुर्मुहुः।
पुनरप्यार्यया भूपस्तुष्टाव परमेश्वरम्॥ ६५
हालास्यनाथ शम्भो परिहृतभक्तापराध एव त्वम्।
अहमपि तव पादाम्बुजशरणस्त्वं पाहि मां महेशान॥ ६६
कदम्बकान्तकान्तार कल्पितेन्द्रविमानग।
शम्भो क्षमस्वापराधान् कृतानज्ञानतः प्रभो॥ ६७
इत्यादिभिश्च स्तुतिभिस्स्तुत्वा विस्मितमानसः।
पुनः पुनः प्रणम्याथ नृपः स्वालयमाययौ॥ ६८
अथ विक्रमपाण्ड्याख्यं पुत्रं लब्ध्वा महौजसम्।
तस्मिन्निक्षिप्य भूभारमभिषेकधरो नृपः॥ ६९

श्रीमद्धालास्यनाथस्य कृपाप्राप्तमनोरथः ।
भुवि भुक्त्वा चिरं भोगानन्ते कैवल्यमाप्तवान् ।। ७०
अथ विक्रमपाण्ड्योऽपि पितुरप्यधिकां श्रियम् ।
लब्ध्वा सुन्दरनाथस्य महेशस्य कृपाबलात् ।। ७१
विद्याविनयसौभाग्यसर्वसम्पत्समन्वितः ।
राज्यं चकार नीत्या च सर्वलोकाभिनन्दितः ।। ७२
यस्याज्ञयेक्षुकाण्डं च जग्राह ग्रावकुञ्जरः ।
उद्दण्डशुण्डादण्डस्सन्नमस्तस्मै पिनाकिने ।। ७३
इति हालास्यनाथस्य सिद्धवेषधरस्य च ।
लीलाश्रवणमात्रेण नरः पापैर्विमुच्यते ।। ७४
इत्येकविंशां लीलां यश्शृणोति मनुजस्स तु ।
लब्ध्वा समस्तास्सिद्धीश्च भुक्त्वा भोगानिहोत्तमान् ।। ७५
ज्ञानोडुपेन सन्तीर्य दुस्तरं भवसागरम् ।
श्रीमद्धालास्यनाथस्य सायुज्यं लभते ध्रुवम् ।। ७६

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - शिलागजेक्षुकाण्डप्रदानं नाम*
*सप्तविंशोऽध्यायः*

* * *

### அத்தியாயம் - 27

### 21. கல்யாணைக்குக் கரும்பு அளித்தல்

*அபிஷேக பாண்டியன் ஸித்தரை அழைத்துவரத் தன் மந்திரிகளை அனுப்பினான். ஸித்தரோ "அவர் அரசர், நானோ*

தபஸ் செய்கிற ஸித்தன். எனக்கு அவரால் ஆக வேண்டியது என்ன' என்று வர மறுத்துவிட்டார்.

ஒருநாள் ஸுந்தரேசுவரரது கோயிலில் வடமேற்கு மூலையிலிருந்த கல்யானையை சித்தர் பார்த்துக் கொண்டிருந்தார். அன்று மகாஸங்கிராந்தி புண்ய நாளானதால் அரசன் கோவிலுக்கு வந்தார். வழியில் அமர்ந்திருந்த ஸித்தரை அரசர் வரும்வழிவிட்டு விலகி நிற்கக் காவல்காரன் விரட்ட சித்தர் அசையாதிருந்தார். அரசன் அருகில் வந்து அவரைப் பற்றி அவரிடமே விசாரிக்க, ''நான் காச்மீரத்தைச் சார்ந்தவன். காசியில் தங்குவேன். சிவக்ஷேத்ரங்களைச் சுற்றிப் பார்க்க வந்தவன் இங்கு வந்தேன். மதுரை நகரத்து மக்கள் விரும்பியதை நிறைவுறச்செய்தேன். துயரங்களைக் களைந்தேன். ஆஜ்ஞாஸித்தன் எனப் பெயர். எனது கட்டளையை எவரும் மீறுவதில்லை. உனக்கு ஏதாவது உதவட்டுமா?'' என்றார். அவரது கர்வத்தையும் பிறரது உதவியை எதிர்பார்க்காத நிலையையும் கண்டு வியந்த அரசரின் முன் ஒரு விவசாயி தன் நிலத்தில் விளைந்த கரும்பைக் காணிக்கையாகக் கொடுத்தான். அரசன் அதனைப் பெற்றதும் சிறிது சிந்தித்து ''நீரோ ஆஜ்ஞாஸித்தராயிற்றே ! இந்தக் கரும்பை இந்தக் கல்யானை தின்னட்டும். அது தின்றால் நீர் கேட்டதைத் தருவேன்'' என்றான். சித்தரோ ''அரசே ! நீர் எல்லாம் தருவதாகச் சொல்வது பயனற்றது. ஒரு சிறந்த வித்யையைக் கற்றதால் நான் எல்லாம் அறிந்தவனாகவும் எல்லாம் வல்லவனாகவும் ஆகியுள்ளேன். என்னால் பெற முடியாதது எதுவுமில்லை.'' என்று கூறி விட்டு யானையிடம் கரும்பை நீட்ட அது உயிர் பெற்றுக் கரும்பைத் தின்றது. அரசரின் கழுத்திலிருந்த முத்தாரத்தைக் கண்டு அது தாமரை நூல் என நினைத்து துதிக்கையால் அதனைப் பறித்துத் தின்றது. காவற்படையினர் அதைத் தடுக்கவும் சித்தரைத் தாக்கவும் முற்பட சித்தர் அவர்களை ஸ்தம்பிக்கச் செய்தார். அரசனுக்கிருந்த கோபமும் ரோஷமும் மறைந்தன. சித்தரின் திருவடிகளைத் தன் தலையில் தாங்கி வணங்கித் தான் தவறிழைத்ததை மன்னிக்கக் கோரினான். பயந்து நடுங்கிக்

கைகூப்பி நிற்கிற அரசனை வாழ்த்திய ஸித்தர் விரும்பியதைக் கேட்கச் சொன்னார். நல்ல குணமுள்ள புதல்வனை அரசன் வேண்ட அதையும் நற்புகழும் மேனிலையும் பெற்றுப் பெருவாழ்வு வாழவும் வாழ்த்தி யானை வாயிலிருந்த முத்தாரத்தையும் மீட்டுத் தந்துவிட்டு நொடியில் மறைந்தார்.

அரசன் ஸுந்தரேசரே ஸித்தராகக் காட்சி அளித்ததை உணர்ந்துத் துதித்தான். நல்ல நாளில் அவனுக்கு புதல்வன் பிறந்தான். விக்ரம பாண்டியன் எனப் புகழ்பெற்றவனிடம் அரசப் பொறுப்பை ஒப்படைத்து அபிஷேகனும், சிவபதம் பெற்றான்.

★ ★ ★

## अष्टाविंशोऽध्यायः

# २२. दिगम्बरप्रेषितगजवधः

अगस्त्यः -

नग्नप्रेषितमत्तेभं यया संहरतीश्वरः ।
तां लीलामद्य वक्ष्येऽहं शृणुध्वं मुनिपुङ्गवाः ॥ १
अथ विक्रमपाण्ड्ये च शिवभक्तिपरायणे ।
राजराजसमे राजशेखरे राजसेविते ॥ २
स्वनामधेयसदृशविक्रमातिशयान्विते ।
राजनीत्या महत्या च प्रशासति सति क्षितिम् ॥ ३
प्रवृत्ता वैदिका धर्मास्सर्वत्र क्षितिमण्डले ।
वेदबाह्यजना ये च ते गच्छन्ति स्म दूरतः ॥ ४
ब्राह्मणाद्या जनास्सर्वे भस्मपाण्डरविग्रहाः ।
रुद्राक्षालङ्कृताश्शम्भोर्लिङ्गाराधनतत्पराः ॥ ५

वैदिकाशेषकर्माणि कुर्वन्ति स्म निरन्तरम्।
राजाऽपि पुण्यनिलयः पुरुहूतसमद्युतिः ॥ ६
पूजितं पुरुहूतेन पुरा कल्पेऽघशान्तये।
पुरातनं महालिङ्गं सुन्दरेश्वरसंज्ञितम् ॥ ७
सर्वकामप्रदं सद्यः प्रत्यहं समपूजयत्।
मूलप्रासादवायव्यदेशे सिद्धस्य चालयम् ॥ ८
कृत्वा प्रतिष्ठाप्य नाम्नाऽऽज्ञासिद्धमीश्वरम्।
तस्यापि महतीं पूजामकरोत्पितृवाक्यतः ॥ ९
स्वयं कृतेन पुण्येन प्रजाभिः कारितेन च।
आज्ञासिद्धकटाक्षेण सर्वसिद्धिप्रदेन च ॥ १०
आयुष्मान् बलवान्संपत्सौभाग्यारोग्यवानपि।
कीर्तिमान् कान्तिमान्धीमान्वीर्यवानभवन्नृपः ॥ ११
सदा शैवानि शास्त्राणि पुराणानि महान्ति च।
शृणोति विद्वद्वक्त्रेभ्यस्सावधानः स्म सादरम् ॥ १२
श्रीमद्धालास्यनाथस्य भक्तानुग्रहकारिणः।
प्रसादात्पाण्ड्यभूपालो नागमच्छत्रुलक्ष्यताम् ॥ १३
अथ काञ्चीपुराधीशश्चोलभूपो महामतिः।
वीर्यं विक्रमपाण्ड्यस्य श्रुत्वा चातिभयङ्करम् ॥ १४
केनोपायेन जेष्यामीत्यन्वहं प्रविचार्य तम्।
मन्त्रवादमुखेनेति निश्चिकाय महामतिः ॥ १५
लोके सर्वेषु वादेषु मन्त्रवादो महानभूत्।
तस्मादनेन वादेन संहरिष्यामि पाण्ड्यपम् ॥ १६

इति निश्चित्य मनसा मन्त्रवादपरोऽभवत्।
सह्ये गोवर्द्धने क्रौञ्चे त्रिकूटेऽञ्जनपर्वते ॥ १७
विन्ध्ये च हेमकूटे च काञ्चीकुञ्जरपर्वते।
निवसन्ति च ये नग्नाः पर्वतेष्वेवमष्टसु ॥ १८
तेषां प्रधानभूतानामष्टसाहस्रसंख्यया।
गणितानाञ्च नग्नानामाचार्याणां पृथत्पृथक् ॥ १९
पत्रिकां प्रेषयित्वाऽथ सत्वरं तान्समाह्वयत्।
तदा समेतास्ते सर्वे नग्नाश्चर्मवराम्बराः ॥ २०
विकेशाः पिञ्छहस्ताश्च कमण्डलुसुमण्डिताः ॥ २१
वश्यादिकर्मकुशला मन्त्रसिद्धिसमन्विताः।
काञ्चीपुरं समासाद्य दृष्ट्वा चोलमहीपतिम्।
पिञ्छैः स्पृष्ट्वा शिरस्तस्याकुर्वंश्चाशिषमादरात् ॥ २२
नृपोऽपि नग्नान्नत्वाऽथ प्राह वाचा प्रगल्भया।
अस्मत्संरक्षणार्थाय मम शत्रुवधाय च ॥ २३
भगवन्तस्समाहूतास्समर्थास्सर्वकर्मसु।
हन्तुं विक्रमपाण्ड्यं तमाभिचारविधानतः ॥ २४
कुर्वन्तु यूयमुद्योगं मदनुग्रहकारिणः।
युष्मत्क्रिया चेत्फलिता दास्यामि विषये मम ॥ २५
अर्धभागमवश्यं वो मद्वाक्यं नानृतं भवेत्।
इत्युक्त्वा प्रेषयामास कर्तुं कर्माभिचारकम् ॥ २६
नग्नास्तदा मुदा युक्ताश्श्रुत्वा चोलवचांसि ते।
शिवभक्तजनाकीर्णां हन्तुञ्च मधुरां नृपम् ॥ २७

तीरे क्षीरतरङ्गिण्यास्सद्यः कर्मफलप्रदे।
कूटमभ्रलिहं कृत्वा योजनद्वयमात्रतः ।। २८
कुण्डञ्च योजनायाममष्टाश्रं परिकल्प्य च।
इन्धनैर्विषवृक्षोत्थैः प्रज्वाल्याशु हुताशनम् ।। २९
होमञ्चक्रुर्निम्बतैलसम्मिश्रैर्लवणैरपि।
मरीचैस्तिलतैलाक्तैश्शोणितैर्मृगपक्षिणाम् ।। ३०
कश्चिद्गिरिनिभो भीमो मदयुक्तो मतङ्गजः।
समुत्तस्थौ कुण्डमध्यात् कालकूट इवार्णवात् ।। ३१
फीट्कारवसंयुक्तः श्रोत्रशूर्पमहानिलैः।
शिथिलीकृत्य मेघांश्च दन्ताभ्यां पाटयन् गिरीन् ।। ३२
आक्रमन्मेदिनीं पादैश्शुण्डया मुद्गरं दधन्।
स्थावराणां जङ्गमानां जगतां जनयन्भयम् ।। ३३
तं गजेन्द्रं विलोक्येति नग्नाः प्राहुर्मुदान्विताः।
सभूपं मधुरादेशं सद्यस्संहर संहर ।। ३४
इत्याज्ञां क्षपणानाञ्च लब्ध्वा मत्तमतंगजः।
वेगेन धावनं कृत्वा दिशमुद्दिश्य दक्षिणाम् ।। ३५
मधुरां कबलीकर्तुं तदीशानदिशं गतः।
धीरोऽपि भीतहृदयस्तं गजं प्रति पाण्ड्यपः ।। ३६
सम्प्राप्य करुणावासं स्वनाथं सोमसुन्दरम्।
नत्वा स्तुत्वा प्रार्थयच्च साञ्जलिस्सन्निधौ स्थितः ।। ३७
शक्तस्सपत्नान् संजेतुं शम्भोऽहं त्वत्प्रसादतः।
नग्नाभिचारसंभूतः पर्वताकारसन्निभः ।। ३८

इभः कश्चित्समायातस्संहर्तुं मधुरापुरीम्।
किं कर्तव्यं मयेदानीं त्राहि मामापदः क्षणात्।। ३९
इति विक्रमपाण्ड्यस्य वाचं श्रुत्वा दयानिधिः।
प्राह वाचाऽशरीरिण्या देवो नीपाटवीश्वरः।। ४०
बहिः प्राकारनिकटे प्राच्यां दिशि महीपते।
अट्टालाख्यं मण्डपञ्च षोडशस्तम्भशोभितम्।। ४१
स्थपतीनां समूहैस्त्वं शास्त्रतः कारय क्षणात्।
अहं तु धन्वी तत्रस्थस्तं हनिष्यामि सत्यतः।। ४२
इति श्रुत्वा शम्भुवाक्यं नृपतिर्मन्त्रिभिस्सह।
सर्वालङ्कारसंयुक्तमट्टालाख्यञ्च मण्डपम्।। ४३
मुहूर्तात्कारयामास शिल्पशास्त्रोक्तवर्त्मना।
तन्मध्ये कल्पिते भद्रपीठे हैमे समुन्नते।। ४४
नवरत्न प्रभाजालैः परितः परिशोभिते।
आविरासीन्महातेजा उदयाद्राविवांशुमान्।। ४५
हालास्यनाथो भगवान्महाबलपराक्रमः।
वामेन भुजदण्डेन धृत्वा सज्यं शरासनम्।। ४६
महान्तमतितीक्ष्णाग्रं बाणमन्येन पाणिना।
असिधेन्वाख्यशस्त्रेण ह्यलंकुर्वन्कटीतटम्।। ४७
पिञ्छालंकृत पिङ्गाभवेणीकृतशिरोरुहः।
तमालश्यामलाकारः शङ्खकुण्डलमण्डितः।। ४८
जपाकुसुम्भकुसुमसन्निभाम्बरसंयुतः।
मुक्ताफलकृताभिश्च मालाभिर्महतीं तनुम्।। ४९

अत्यन्तशोभितां कृत्वा त्रिनेत्रश्चन्द्रशेखरः ।
सौन्दर्यसागरोत्पन्नपूर्णचन्द्रनिभाननः ॥ ५०
कैरातं वेषमास्थाय कैवल्यनिधिरीश्वरः ।
जनानामभयं कर्तुं हर्तुं शैलमयं गजम् ॥ ५१
चरणं दक्षिणं पश्चान्निधायेतरमग्रतः ।
क्रोशपञ्चकमात्रस्थं गजं लक्ष्यं विलोक्य च ॥ ५२
वैष्णवं नारसिंहाख्यं तेजोबाणे विभाव्य च ।
नारसिंहास्त्रमतुलमुज्ज्वलं विश्वतोमुखम् ॥ ५३
अट्टालवीरो व्यसृजद्धनुर्वेदविदां वरः ।
निरसुं तं गजं कृत्वा तदस्त्रमतिभीषणम् ॥ ५४
नारसिंहवपुर्धृत्वा तत्रास्ते शङ्कराज्ञया ।
तदा प्रभृति तत्रास्ते गजशैलो गजाकृतिः ॥ ५५
नरसिंहोऽपि सान्निध्यं सदा तत्र करोति च ।
रोमशो भगवांस्तत्र कुण्डं कृत्वा स्वनामतः ॥ ५६
स्नात्वा तपो महत्कृत्वा स लेभे सिद्धिमुत्तमाम् ।
प्रह्लादप्रमुखाश्चान्ये तत्र सिद्धिं परां ययुः ॥ ५७
व्यसुं गजं तत्र गत्वा दृष्ट्वा विक्रमभूपतिः ।
तद्गजेन समायातान्नग्नान्वेदविदूषकान् ॥ ५८
चोलसेनासमायुक्तान्प्रपलायितुमुद्यतान् ।
प्रहर्तुमाज्ञां प्रददौ सेनाभ्यस्स्वस्य सत्वरम् ॥ ५९
सेनाभिस्सहितास्ताभिः शिवभक्ता बलोत्कटाः ।
स्वैरं प्रजघ्नुस्सहसा नग्नान् शङ्करदूषकान् ॥ ६०

कपोलताडनाद्यैस्ते भग्नदन्ताश्च संयुताः ।
वेगेन धावनं चक्रुः परितः पक्षिणो यथा ।। ६१
राजा विक्रमपाण्ड्योऽपि विस्मयेन मुदान्वितः ।
अट्टालवीरशम्भुं च जवात्स्तोतुं समाययौ ।। ६२
शिवमद्भुतवेषं तं विलोक्यातिमुदान्वितः ।
पुनः पुनः प्रणम्याथ स्तोतुमारभते स्म सः ।। ६३

अट्टालसुन्दरस्तुतिः

विक्रमपाण्ड्यः -

कल्याणचलकोदण्डकान्तदोर्दण्डमण्डितम् ।
कलम्बीकृतकंसारिं कलयेऽट्टालसुन्दरम् ।। ६४
कालकूटप्रभाजालकलङ्कीकृतकन्धरम् ।
कलाधरकलामौलिं कलयेऽट्टालसुन्दरम् ।। ६५
कालकालं कलातीतं कलावन्तं च निष्कलम् ।
कमलापतिसंस्तुत्यं कलयेऽट्टालसुन्दरम् ।। ६६
कान्तार्धकमनीयाङ्गं करुणामृतसागरम् ।
कलिकल्मषदोषघ्नं कलयेऽट्टालसुन्दरम् ।। ६७
कदम्बकाननाधीशं कांक्षितार्थसुरद्रुमम् ।
कामशासनमीशानं कलयेऽट्टालसुन्दरम् ।। ६८
सृष्टानि मायया येन ब्रह्माण्डानि बहूनि च ।
रक्षितानि हृतान्यन्ते कलयेऽट्टालसुन्दरम् ।। ६९
स्वभक्तजनसन्तापपापापद्भङ्गतत्परम् ।
कारणं सर्वजगतां कलयेऽट्टालसुन्दरम् ।। ७०

कुलशेखरवंशोत्थभूपानां कुलदैवतम् ।
परिपूर्णचिदानन्दं कलयेऽट्टालसुन्दरम् ।। ७१
अट्टालवीरश्रीशम्भोरष्टकं परमिष्टदम् ।
पठतां शृण्वतां सद्यस्तनोति परमां श्रियम् ।। ७२
इति विक्रमभूपाले स्तावके सति भक्तितः ।
तस्मै दत्वाऽखिलान् कामानीशोऽन्तर्धातुमुद्यतः ।। ७३
अथ विक्रमभूपालस्तस्य पादाम्बुजद्वयम् ।
परिगृह्य च पाणिभ्यामेवमप्रार्थयत्तदा ।। ७४
अट्टालवीर भगवन्नट्टालाख्येऽत्र मण्टपे ।
इष्टार्थसिद्ध्यै लोकानां तिष्ठ तिष्ठ निरन्तरम् ।। ७५
तस्य वाक्यं समाकर्ण्य सर्वानुग्रहणक्षमः ।
अट्टालवासमनिशं करोत्यट्टालसुन्दरः ।। ७६
राजा विक्रमपाण्ड्योऽपि तत्कारुण्यकटाक्षतः ।
राजशेखरपाण्ड्याख्यं पुत्रं लब्ध्वा महौजसम् ।। ७७
सुतेन तेन सहितश्चिरं भूमिपपालयत् ।
अट्टालवीरं वरदं जनानां ध्यायतां क्षणम् ।। ७८
संपत्परंपराऽऽ याति नश्यत्यापत्परंपरा ।
श्रीहालास्यपतेश्शम्भोर्लीलेयं पठिता श्रुता ।। ७९
सर्वसंपत्प्रदा सद्यस्सर्वापद्भञ्जनी सदा ।
इति द्वाविंशिकां लीलां यश्शृणोति सुभक्तितः ।। ८०
नित्यं पठति वा मर्त्यस्स पुत्रादिभिरन्वितः ।
इह भुक्त्वा महाभोगानन्ते सायुज्यमेष्यति ।। ८१

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - नग्नहस्तिहननं नाम*
*अष्टाविंशोऽध्यायः*

* * *

## அத்தியாயம் - 28

## 22. திகம்பரர்களின் யானையை அழித்தல்

விக்ரம பாண்டியன் மிகச் சிறந்த சிவ பக்தன். முறையுடன் நீதி பரிபாலனம் செய்து வந்தான். மூலஸ்தானத்திற்கு வடமேற்கில் ஆஜ்ஞா ஸித்தருக்கு ஓராலயம் கட்டி அதில் அவரது மூர்த்தியை ஸ்தாபித்து வழிபட்டான். ஈசனருளால் எதிரிகளின் பயமின்றி ஆண்டான். அக்காலத்தில் காஞ்சியை ஆண்ட சோழ அரசன் படைபலத்தால் பாண்டியனை எதிர்க்க முடியாததால் மந்திர பலத்தால் வெற்றிபெற திகம்பரர்களை ஆங்காங்கிருந்து வரவழைத்து உபசரித்து பாண்டியனை அழிக்க அபிசார முறையில் உதவக் கோரினன். அதில் வெற்றி கிட்டினல் தன் அரசில் பாதியைத் தருவதாக உறுதியளித்தான்.

பாலாற்றங்கரையில் பெரும் குண்டமமைத்து அபிசார ஹோமம் செய்ததும் மலை போன்ற யானை அக்னியிலிருந்து வெளிவந்தது. திகம்பரர்கள் அதனை மதுரையை நோக்கி ஏவ, அது வேகமாய் வந்தது. பாண்டியன் ஈசனிடம் வேண்ட, அவர் பதினறு தூண்கள் கொண்ட மேல்மாட முள்ள மண்டபத்தை மதிலின் வெளியே கிழக்கில் அமைக்கச் சொன்னர். அதில் வில்லேந்திய வீரராக இடுப்பில் உரைவாள் கச்சுகட்டி பச்சிலை நிறமேனியனுக செந்நிற ஆடை உடுத்தி வேட வேஷத்தில் அட்டால ஸுந்தரர் என்ற பெயருடன் யானையின் வருகையை எதிர்பார்த்து நின்றர். ஐந்து குரோசதுரத்தில் யானை வருவதை உணர்ந்த ஈசன் வைஷ்ணவாஸ்த்ரத்தையும் நரஸிம்ஹாஸ்த்ரத்தையும் அதன் மீது ஏவினர். அந்த அஸ்திரங்கள் யானையின்

உயிரைமாய்த்தன. நகர எல்லையில் நரஸிம்ஹர் காவல் தெய்வமாக நின்றார். யானையுடன் வந்த திகம்பரர்கள் பாண்டியர் படையால் அழிக்கப்பட்டனர்.

விக்ரம பாண்டியன் யானையின் பயம் நீங்கியதும் அட்டால ஸுந்தரரை அட்டால மண்டபத்தில் வழிபட்டு அவரருளால் எதிரிகளின் பயம் நீங்கி நன்கு ஆண்டுவந்தான். அவனுக்கு ராஜசேகரன் என்ற ஒரு மகன் பிறந்தான். இது இருபத்திரண்டாவது விளையாடல்.

* * *

## एकोनत्रिंशोऽध्यायः

# २३. द्विजकन्यार्तिहरणम्

अगस्त्यः -

यया भूसुरकन्याया लीलयाऽर्तिं हरोऽहरत् ।
तां लीलां सुन्दरेशस्य वक्ष्यामि मुनिपुङ्गवाः ॥ १
मधुरायां द्विजः कश्चिदभूदाचारतत्परः ।
विरूपाक्ष इति ख्यातस्सर्वविद्याविशारदः ॥ २
सुव्रता नाम तस्यासीत्पत्नी पङ्कजलोचना ।
सततं भर्तृशुश्रूषामकरोत्प्रियवादिनी ॥ ३
तया सह विरूपाक्षः पुत्राभावाद्व्रतानि च ।
शाम्भवानि विशिष्टानि विधिनैवाकरोन्मुदा ॥ ४
संस्नाय हेमपद्मिन्यां स तया प्रतिवासरम् ।
नत्वा देवीं सुमीनाक्षीं हालास्येशञ्च भक्तितः ॥ ५
गौरीरूपं हृदि ध्यात्वा तद्बीजं मनसा स्मरन् ।
ससमातृसमीपस्थश्चाकरोद्दुष्करं तपः ॥ ६

सुमीनाक्षीपतिश्शम्भुस्तयोर्भक्त्या सुविस्मितः ।
कर्तुं वरप्रदानं च समुद्युक्तः कृपानिधिः ॥ ७
जन्मान्तरकृतांहोभिः पुत्रसम्पद्विहीनयोः ।
तयोस्सद्गुणसंयुक्तां पुत्रीमेवाददाच्छुभाम् ॥ ८
तल्लब्ध्वा कन्यकारत्नं सर्वलक्षणसंयुतम् ।
सन्तोषाम्बुधिमग्नौ तावभूतामधिकश्रियौ ॥ ९
कन्यकाया नामधेयं पित्रा गौरीति कल्पितम् ।
अवर्धत क्रमात्कन्या यथा चन्द्रकला तथा ॥ १०
पञ्चमे वत्सरे प्राप्ते गौरी सा परिशुद्धधीः ।
विरूपाक्षं समाधिस्थं देवताचार्य सन्निभम् ॥ ११
पितरं प्रीतमनसं मन्त्रसिद्धिसमन्वितम् ।
प्रणम्य प्रार्थयामास शक्तिपातसमन्विता ॥ १२

गौरी -

तातोपदिश मे धर्मं भवता परिशीलितम् ।
येन संसारदुःखानि नश्येयुरखिलानि च ॥ १३
इति कन्यावचश्श्रुत्वा विरूपाक्षोऽतिविस्मितः ।
प्रश्नलिङ्गानुमेयेन शक्तिपातेन योग्यताम् ॥ १४
पुत्र्या बुध्वाऽत्यन्तहृष्टश्चतुर्वर्गफलप्रदम् ।
महापापहरं सद्यस्सर्वापद्भञ्जनक्षमम् ॥ १५
सर्वसिद्धिकरं सत्यं धर्मं वक्तुं प्रचक्रमे ॥

विरूपाक्षः -

अयि पुण्यनिधे पुत्रि सद्धर्मः प्रोच्यते मया ॥ १६

महामाया जगद्धात्री सच्चिदानन्दरूपिणी।
सर्वविद्यालया शम्भोराह्रोपुरुषिका परा॥ १७
गौरीनाम्ना तस्य वामे सदाऽऽस्तेऽनुग्रहाय या।
तस्या बीजं जगद्बीजं बीजं तद्भोगमोक्षयोः॥ १८
लक्ष्मीवाण्यादिदेवीभिर्विष्णुब्रह्मादिदैवतैः।
सिद्धगन्धर्वयक्षाद्यैस्समस्तैस्सज्जनैरपि॥ १९
सदाराधितमार्याणां हृदाकाशेष्ववस्थितम्।
सच्चिदानन्दरूपं यत्परं ब्रह्म परात्परम्॥ २०
गौरीबीजमिति प्रोक्तं शृणु वत्से तदुद्धृतिम्।
सत्स्वरूपशिवाकारो हकारो धर्मदः परः॥ २१
चिदाकारशिवाकारो रेफस्सर्वार्थदायकः।
आनन्द उभयोरैक्यादीकारस्सर्वकामदः॥ २२
बिन्दुनादौ तदन्तस्थौ भवेतां मोक्षदावुभौ।
चतुर्वर्गफलानाञ्च सिद्ध्यर्थं जगतामिदम्॥ २३
गौरीबीजमिति प्रोक्तं सर्वसम्पत्करं परम्।
ऋषिस्तु दक्षिणामूर्तिर्गायत्रीच्छन्द उच्यते॥ २४
देवता महती गौरी सच्चिदानन्दरूपिणी।
ह्रां ह्रीमित्यादिभिर्बीजैष्षडङ्गं परिकल्पयेत्॥ २५
एकाक्षरमिदं बीजमथ तद्ध्यानमुच्यते।
महाकाशस्यापि हेतोर्हृदाकाशस्य मध्यमे॥ २६
सुधासागरसंवीतरत्नद्वीपे सकल्पके।
माणिक्यमण्टपे भद्रपीठे तोरणराजिते॥ २७

पद्मपीठोपरिष्टात्तु निषण्णस्याम्बिकापतेः ।
पाशाङ्कुशाभयवरपाणिपद्मैर्विराजतः ॥ २८
सदा तारुण्यसौन्दर्यसागरस्य जगत्प्रभोः ।
काञ्चनाभस्य कामारेरङ्के देवीं निवासिनीम् ॥ २९
तरुणारुणकोट्याभां करुणामृतसागराम् ।
द्विनेत्रां द्विभुजां देवीं पीनोरुजघनस्तनाम् ॥ ३०
भुजाभ्यां दक्षवामाभ्यां दधतीमरुणाम्बुजम् ।
हेमकुम्भं सुधापूर्णंश्चिन्तामणिविराजितम् ॥ ३१
कुमारौ दक्षवामस्थौ गजाननषडाननौ ।
आलोक्यात्यन्तमुदितामरुणाम्बरधारिणीम् ॥ ३२
गौरीं शम्भोर्मूर्तिमतीं करुणामिति चिन्तय ।
ध्यात्वाऽनेन प्रकारेण जप त्वं सर्वसिद्धये ॥ ३३
लक्षमात्रेण सालोक्यं सामीप्यं स्याद्द्विलक्षतः ।
त्रिलक्षतस्तु सारूप्यं चतुर्लक्षजपात्सुते ॥ ३४
सायुज्याख्यं च कैवल्यं प्रयच्छति वराम्बिका ।
गुरूपदिष्टमात्रं तद्बीजं सर्वार्थसिद्धिदम् ॥ ३५
तद्बीजेनोपचारैश्च ध्यानाद्यैस्तां प्रपूजय ।
जपाद्दशांशक्रमतस्स्वाहान्तेन च तर्पणम् ॥ ३६
होमं ब्राह्मणभुक्तिं च कुरु मन्त्रस्य सिद्धये ।
इति पुत्र्यै विरूपाक्ष उपदिश्य महामनुम् ॥ ३७
पुनस्समाधिसंयुक्तस्सोऽभूत्पाषाणनिश्चलः ।
अथ तस्य सुता गौरी चित्तशुद्धिसमन्विता ॥ ३८

गौरीबीजं महामन्त्रं साधयामास सर्वदा।
अथाष्टवर्षदेशीयां कन्यामालोक्य स द्विजः ॥ ३९
कस्मै देया मयैषेति बहुचिन्तासमन्वितः।
गृहागतश्चैवः कश्चित् ब्रह्मचारी यदृच्छया ॥ ४०
तस्मै दातुं निश्चिकाय कन्यां सुन्दररूपिणे।
ततः कदाचिद्भिक्षार्थं ब्रह्मचारी तु सुस्वरैः ॥ ४१
रम्यमुच्चैरुच्चरन् सन्नाम्नायं तद्गृहं गतः।
द्विजस्तु तं निरीक्ष्याथ रूपाध्यायनमोहितः ॥ ४२
अपृष्ट्वा कुलगोत्रादीन् कन्यकां सोदकं ददौ।
तस्य जाया बान्धवाश्च समागत्य क्रुधान्विताः ॥ ४३
अभर्त्सयन्विरूपाक्षं कपोलेऽङ्गुलितोदनैः।
अपृष्ट्वा कुलगोत्रादीन् किमस्मै कन्यकामदाः ॥ ४४
गृहस्थानान्तु मध्ये त्वं मूढोऽसीति पुनः पुनः।
रूपलावण्यभाग्याद्वा सुगोत्राद्वा सुविद्यया ॥ ४५
सुन्दरेशधिया वाऽथ भ्रान्त्या वा किमदास्सुताम्।
इत्युक्त्वा पृष्टवन्तस्ते वंशादीन् ब्रह्मचारिणः ॥ ४६
गोत्रं सूत्रं च नक्षत्रमूर्ध्वपुण्ड्रं क्रमेण सः।
स्वकीयं ब्रह्मचारी चावददत्यन्तविस्मितः ॥ ४७
ते निरूप्याविरुद्धत्वं मुदिता बान्धवास्तदा।
किञ्चित्खेदं च सम्प्रापुरूर्ध्वपुण्ड्रस्य धारणात् ॥ ४८
सन्निपाते गुणानान्तु दोष एकस्तिरोदधे।
ते सर्व इति निश्चित्य व्यधुर्वैवाहिकक्रियाम् ॥ ४९

श्रीमत्त्वाद्यौतकं भूरि धनं पुत्र्यै ददौ द्विजः ।
तां धनं च समादाय सम्प्रीतस्सन् द्विजात्मजः ।। ५०
पित्रोस्समीपमगमद्बहुबन्धुसमेतयोः ।
पुत्रं देशान्तरगतं कृतोद्वाहं समागतम् ।। ५१
दृष्ट्वा मुमुदिरे सर्वे पित्राद्या बान्धवा भृशम् ।
शिवभक्तसुतेत्येषा श्वश्वा नैवादृता स्नुषा ।। ५२
नैवाभूद्वाङ्मनःकायैस्संगोऽस्यां ब्रह्मचारिणः ।
भिक्षार्थं तद्गृहं प्राप्ता वैष्णवा एव नेतरे ।। ५३
शिवभक्ताय विप्राय कदा भिक्षां ददाम्यहम् ।
इति सश्चिन्त्य वसति स्नुषा गौर्या अनुग्रहात् ।। ५४
जिह्वाग्रे वर्तते तस्या गौरीबीजं निरन्तरम् ।
सपुत्रबान्धवौ श्वश्रूश्वशुरौ ग्राममन्तिकम् ।। ५५
कल्याणार्थं गतौ त्यक्त्वा शिवभक्तात्मजां वधूम् ।
अत्रान्तरे सुन्दरेशो द्विजवेषधरोऽन्तिकम् ।। ५६
स्नुषायाः प्राप्य कल्याणि भिक्षान्देहीति चोक्तवान् ।
उद्धूलनं त्रिपुण्ड्रं च दधानं शुभ्रवाससम् ।। ५७
अशीतिवृद्धमतुलमुज्ज्वलद्ब्रह्मतेजसम् ।
साऽऽलोक्य सहसा नत्वा प्रीत्या प्रत्युत्तरं ददौ ।। ५८
स्वामिन् श्वश्रूर्गता ग्रामं पिधाय द्वारकं दृढम् ।
मन्दिरेऽस्मिन् तण्डुलाद्यं बहिष्ठन्नैव विद्यते ।। ५९
मन्नाथैवं सति मया किं कार्यं कथय प्रभो ।
एवमुक्तो द्विजसुतां प्राह ब्राह्मणपुङ्गवः ।। ६०

अभूत्तद्विवृतद्वारं प्राप्यापवरकं मुदा ।
तण्डुलं भिन्नमुद्गाद्यं समादाय पचाऽऽशु च ।। ६१
तथा करिष्य इत्युक्त्वा जवाद्द्वारपथं गता ।
तद्दृष्ट्वोद्धाटितद्वारं भृशं प्रीतिसमन्विता ।। ६२
तण्डुलं मुद्गभिन्नं च दुग्धं दधि च शर्कराम् ।
आज्यं फलानि पक्वानि समादायापचत्क्षणात् ।। ६३
रम्ये च कदलीपत्रे निधायान्नं सुसंस्कृतम् ।
भोजयामास तं वृद्धं क्षीराज्यदधिसंयुतम् ।। ६४
भोजनानन्तरं विप्रष्षोडशाब्दाकृतिर्बभौ ।
चित्रमेतत्समालोक्य कन्या सा कंपिता स्थिता ।। ६५
अस्मिन्नवसरे श्वश्रूर्द्वारदेशमुपागता ।
कपाटोद्घाटनं सद्यः कुरु कुर्विति साऽवदत् ।। ६६
श्वश्रूवाक्यं समाकर्ण्य युवानं तं विलोक्य च ।
भीत्या निश्चलतां प्राप चित्रगेव द्विजात्मजा ।। ६७
बलात्कारेण सा श्वश्रूरर्गलं पादघाततः ।
भग्नीकृत्य कवाटं च विवृतं सहसा व्यधात् ।। ६८
तदा त्यक्त्वा यौवनं च शैशवं परिगृह्य सः ।
स्वल्पतल्पगतो भूत्वा मनोहरवपुर्धरः ।। ६९
निधाय पाणियुगलात्पादांगुष्ठं निजानने ।
द्विजात्मजामुखं प्रेक्ष्य मन्दस्मितमथाकरोत् ।। ७०
श्वश्रूः क्रुद्धा पृच्छति स्म कस्यायं तनयः स्नुषे ।
देवदत्तोऽयमिति सा ददौ प्रत्युत्तरं मुदा ।। ७१

श्रीदेवीति वधूः काचिदिमं पश्येति सत्वरम्।
स्वल्पतल्पे निधायैवं व्रजति स्म सभर्तृका ।। ७२
अन्यदीयशिशुं किं त्वं पश्यसीति प्रभर्त्स्य ताम्।
तस्या हस्तगतं कृत्वा तं शिशुं सुमनोहरम्।। ७३
चपेटेनावटुं तस्या दृढं बद्ध्वाऽतिवेगतः ।
शिशुना च स्नुषां श्वश्रूश्चिक्षेपाङ्गणतो बहिः ।। ७४
नात्रागन्तव्यमित्युक्त्वा पिधाय द्वारकं दृढम्।
गृहमध्यमनुप्राप्य सुखेनास्ते स्म तां विना ।। ७५
स्वहस्तस्थशिशोर्वक्त्रमालोक्यात्यन्तसुन्दरम्।
गौरीबीजं हृदि ध्यात्वा तस्थौ वीथ्यां शुचाऽथ सा ।। ७६
शिशुश्शङ्करवेषस्सन्नारुह्य वृषवाहनम्।
गौरीरूपधरां कृत्वा तामादाय द्विजात्मजाम्।। ७७
जनानां पश्यतां मध्ये देवदेवोऽम्बरं ययौ ।
आश्चर्यमेतदाश्चर्यमेतदित्येव भाषिणः ।। ७८
सर्वे जनास्समालोक्य विस्मितास्तस्थुरम्बरम्।
द्विजकन्यां प्रशंसन्तस्तत्श्वश्रूं स्म शपन्ति ते ।। ७९
त्रयोविंशा तु लीलेयं द्विजकन्यार्तिहारिणी।
सकृत्श्रुता वा पठिता सर्वेषामार्तिहारिणी ।। ८०

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - द्विजकन्यार्तिहरणं नाम*
*एकोनत्रिंशोध्यायः*

* * *

## அத்தியாயம் - 29

## 23. அந்தணப் பெண்ணின் துயர் நீக்கம்

மதுரையில் விரூபாக்ஷன் என்ற அந்தணன் இருந்தான். அவனது மனைவி ஸுவ்ரதை. இனிது பேசுபவள், சிறந்த பதிவ்ரதை. இருவரும் சிறந்த சிவபக்தர்கள். விரூபாக்ஷன் பொற்றாமரைக் குளத்தில் நீராடி மீனாக்ஷியையும் ஸுந்தரேச்வரரையும் வணங்கி ஸப்தமாதாக்களின் அருகாமையில் கௌரியைத் த்யானித்து அவளது ஏகாக்ஷர மந்த்ரத்தை ஜபித்துத் தவமிருந்தான். வெகு காலமாக புத்திரப் பேறு இல்லாதிருந்த தம்பதியருக்கு ஒரு பெண் பிறந்தாள். அவளைக் கௌரியெனப் பெயரிட்டு வளர்த்தான். ஐந்தாவது வயதில்அந்தப் பெண் தந்தையிடம் வாழ்க்கைத் துயரங்கள் நீங்க உதவும் உபதேசம் தரும்படி கேட்டாள். சிறுமியின் கேள்வியிலிருந்த தெய்விகத்தைக் கண்ட தந்தை அவளுக்கு உலகின் பேராளுமை நிறைந்த கௌரியின் ஏகாக்ஷர மந்த்ரமான ஹ்ரீங்கார மந்த்ரத்தை முறைப்படி உபதேசித்தார். பேராகாசத்தின் இடையே துலங்குகிற அந்த தேவி ஹ்ருதய வெளியிலும் துலங்குவாள். அமுதக் கடலின் இடையே ரத்தினத் தீவில் கற்பகத் தோட்டத்தின் நடுவிலுள்ள மாணிக்ய மண்டபத்தில் பத்ம பீடத்தின் மீதமர்ந்த கருணைக் கடலாக, வலது கையில் செந்தாமரையையும் இடதுகையில் அமுத கலசத்தையும் ஏந்தி சிவனது மடிமீதமர்ந்து பக்கத்தில் விநாயகரும் ஸ்கந்தரும் அமர்ந்திருக்க சிவனின் கருணையே வடிவாக அமர்ந்துள்ள தேவியைத் த்யானிக்கும் வழியையும் உபதேசித்தார். அவள் அதை ஏற்று ஜபம் செய்து ஸித்தி பெற்றாள்.

எட்டு வயதான பெண்ணை மணம் செய்விக்க முயன்ற விரூபாக்ஷன். பிக்ஷைக்காக வந்த ப்ரஹ்மசாரிக்கு நீர் வார்த்துப் பெண்ணைத் தந்தார். குலமோ, கோத்திரமோ எதனையும் விசாரிக்காமல் இவர் தானம் செய்யும் போது அருகில் மனைவியோ உறவினரோ இல்லை. அவர்கள் வீட்டிற்கு வந்ததும் மணம் நடந்துவிட்டதை உணர்ந்து குலமும்,

கோத்திரமும் அறியாமல் பெண்ணைத் தானம் செய்ததைப் பற்றிச் சண்டையிட்டனர். அந்த ப்ரஹ்மசாரியிடம் அதனைப் பற்றி விசாரித்தனர். மற்ற விவரங்கள் பொருந்தியிருக்க, அவன் சைவனல்ல, ஊர்த்வ புண்ட்ர மிடுபவன் என்ற குறை அனைவரையும் வாட்டியது. கணவனின் வீட்டிற்குவந்த கௌரியிடம் அவள் சிவபக்தர் வீட்டைச் சார்ந்தவள் என்ற குறை கணவன் வீட்டினரால் பெரிதாக மதிக்கப்பட்டது. அதனால் ஒருவரோடொருவர் ஒட்டுதலின்றியிருந்தனர்.

ஒரு நாள் கௌரியைத் தவிர மற்றவர் வீட்டினுள் ஓர் அறையில் கௌரியை மட்டும் இருக்கச் செய்து வீட்டைப் பூட்டிச் சென்றனர். கௌரிக்கு வெகு நாட்களாக சைவர் எவரும் தன் வீட்டிற்கு வராததைக் கண்டு மன வேதனை இருந்தது. அன்றொரு சைவப் பெரியார் வாசலில் நின்று பிக்ஷை கேட்டார். எண்பது வயதான கிழவர். உடலெங்கும் விபூதி பூசியவர். தெய்விக ஒளி வீசி நிற்பதைக் கண்டதும் வீடு பூட்டியிருப்பதைப் பற்றி அவரிடம் தெரிவித்து தன் இயலாமையை விளக்கினாள். ''வீடு திறந்திருக்கிறது. அரிசி பருப்பு வகை அதோ உள்ளது. சமைத்து எனக்கு உணவளிப்பாய்'' என அந்தக் கிழவர் சொல்ல, உடன் வெளிப்பட்டு அவரை அமர்த்தி சிறந்த உணவைச் சமைத்து வழங்கினாள். உணவேற்றதும் கிழவர் நல்ல வாலிபனாக மாறினார். அவரைக் கண்ட கௌரி பயத்தால் நடுங்கினாள். அதே ஸமயம் வாயிலில் மாமியார் கதவைத் தட்டும் சப்தம் கேட்டது. வாலிபன் குழந்தையானான். உள்ளே வந்த மாமியார் இந்தக் குழந்தை யாருடையது எனக் கேட்டாள். ''ஒரு அழகிய பெண் உள்ளே வந்து என்னிடம் இதனைத் தந்து நொடி நேரம் பார்த்துக் கொள், வருகிறேன் என்று சென்றாள். அவளுடையது குழந்தை'' எனக் கௌரி சொல்ல மாமியார் குழந்தையுடன் அவளைப் பிடறியில் கை வைத்துத் தள்ளி வெளியேற்றி வீட்டினுள் தாழிட்டாள்.

தன் கைகளால் அணைத்திருந்த குழந்தையைக் கௌரி உற்று நோக்க, அவளது மனம் கௌரி மந்த்ரத்தை' முணுமுணுக்க குழந்தை சிவனாக மாற,

விருஷபவாஹனத்தில் இந்த கௌரியை ஏற்றி அழைத்துக் கொண்டு சிவன் வானில் செல்வதை மக்கள் கண்டனர். இது இருபத்தி மூன்றாவது திருவிளையாடல்.

★ ★ ★

त्रिंशोऽध्यायः

## २४. व्यत्यस्तताण्डवम्

अगस्त्यः -

अथ सुन्दरनाथस्य महद्व्यत्यस्तताण्डवम्।
कथयामि मुनिश्रेष्ठाः श्रुतमात्रेण कामदम्॥ १
अथ विक्रमभूपाले शिवलोकं गते सति।
राजशेखरपाण्ड्यस्तु पितुरप्यधिकां श्रियम्॥ २
लब्ध्वा राज्यञ्च कृतवानुपायैश्च चतुर्विधैः।
विद्यास्सर्वाश्चाधिगत्य चतुष्षष्टिकला अपि॥ ३
अतीव शिवभक्तत्वान्नृत्तमेकन्तु नाभ्यसत्।
शिवेनाचरितं नृत्तं न कार्यमिति भक्तिमान्॥ ४
राजशेखरभूपालस्सर्वविद्याविशारदः।
चतुष्षष्टिकलादक्ष इति लोके प्रथां ययौ॥ ५
तदानीं तत्प्रथां श्रुत्वा चोलः कश्चिन्महीपतिः।
करिकाल इति ख्यातो जम्बुनाथेऽतिभक्तिमान्॥ ६
सर्वा विद्याश्चतुष्षष्टिकला अपि समभ्यसत्।
चतुष्षष्टिकलादक्ष इति चोलोऽपि पप्रथे॥ ७
एवं गते च काले तु विद्वान् कश्चित्समागतः।
चोलेशात्प्राप्य बह्वर्थं पाण्ड्यराजदिदृक्षया॥ ८

तुष्टाव विविधैः स्तोत्रैर्वाग्भिस्स वरवाक्ततः ।
राजानमिति च प्राह विदग्धो विदुषां वरः ।। ९
राजशेखर राजेश राजराजनिभ श्रिया ।
पाण्ड्यवंशध्वजपट प्रणताखिलभूपते ।। १०
अभ्यस्ताश्चोलनाथेन सर्वविद्याः कला अपि ।
नृत्तञ्च स विजानाति रागतालसमन्वितम् । ११
त्वं ताण्डवं न वेत्सीति लोकास्सर्वे वदन्ति हि ।
करिकालोऽपि वदति तन्नाभ्यस्तं त्वया कुतः ।। १२
इति तद्वचनं श्रुत्वा व्रीलितो राजशेखरः ।
सर्वस्सर्वं न जानाति कश्चित्कश्चित्प्रगल्भते ।। १३
इति प्रत्युत्तरं दत्वा तूष्णीं तस्थौ भुवं लिखन् ।
नाथ नाथ तथैवेति प्रशशंस कवीश्वरः ।। १४
अनर्घैर्विविधैर्वस्त्रैर्भूषणैश्च धनैरपि ।
संभाव्य प्रेषयामास गूढधीर्मर्मवादिनम् ।। १५
अथ नर्तनविद्यायां पाण्ड्यभूपो मनो दधे ।
उदञ्चिताकुञ्चितेन वामपादेन संयुतम् ।। १६
नर्तनाभ्यासमकरोद्दिनैः कतिपयैस्तु सः ।
प्रतिभातीति मनसि विचारोऽथ महीपतेः ।। १७
शिवेनाचरितं नृत्तमात्मनो नार्हमेव हि ।
तथापि चोलमात्सर्यात्तदभ्यासं करोम्यहम् ।। १८
एकमाकुञ्च्य चरणं तिष्ठतोऽन्येन भूतले ।
एकक्षणे महान् क्लेशो जातोऽभून्मम शङ्कर ।। १९

अनारतं नृत्यति हि कियान् क्लेशोऽस्य नो भवेत्।
सर्वभारसहिष्णोश्च तस्य क्लेशोऽथ वा न हि ॥ २०
इति चिन्तयमानोऽन्तः खिन्न एव स वर्तते।
कदाचिच्छिवरात्र्यान्तु सेवार्थं सोऽर्धरात्रके ॥ २१
राजतीञ्च सभां प्राप्य देवं दृष्ट्वा नटेश्वरम्।
उपविश्य तदग्रे तु श्रीमत्पञ्चाक्षरं मुदा ॥ २२
जप्त्वा च विविधैस्स्तोत्रैस्स्तुवन् कालमनीनयन्।
नृत्तशिक्षावेदना च स्मृताऽभूद्भूपतेस्तदा ॥ २३
अथ भक्तिविशेषेण संयुक्तस्स महीपतिः।
प्रतिज्ञामकरोत्सद्यस्तस्य देवस्य सन्निधौ ॥ २४
भगवन्परमानन्द महाताण्डवपण्डित।
पञ्चकृत्यमहालीलाकरणातिविचक्षण ॥ २५
नटनश्रमशान्त्यै त्वं चिरकालोद्धृतं पदम्।
विहायान्येन पादेन कुरु ताण्डवमद्भुतम् ॥ २६
न कृतं चेत्त्वया तत्तु व्यत्यस्त नटनं परम्।
शिरो मदीयं खड्गेन च्छेदयिष्याम्यसंशयः ॥ २७
इत्युक्त्वा खड्गमतुलं कृत्वा निष्कोशमग्रतः।
संस्थाप्य सन्निधावास्ते स्वशरीरनिराशया ॥ २८
पुरेशो व्याघ्रपादस्य पतञ्जलिमहामुनेः।
द्वादशान्तगतं नृत्तं कुर्वाणश्शङ्करः सदा ॥ २९
आत्मभक्तस्य भूपस्य ज्ञात्वा भावं दयानिधिः।
उदञ्चितेनाकुञ्चितेन दक्षिणेन पदा युतः ॥ ३०

अकरोन्नर्तनं सद्यश्चातिरम्यं महाद्भुतम्।
तदा विष्ण्वादयस्सर्वे विबुधाश्च समागताः ॥ ३१
नृत्तं गीतञ्च वाद्यञ्चाकुर्वन्नप्सरसस्तदा।
राजशेखरपाण्ड्यश्च सचिवा निखिला जनाः ॥ ३२
शिवरात्रिव्रतार्थं ये जना देशान्तरागताः।
प्रत्यक्षतस्तु ते सर्वे दृष्ट्वा शम्भोस्तदद्भुतम्॥ ३३
सर्वपापहरं सद्यस्सर्वसम्पत्समृद्धिदम्।
कामं परवशास्सन्तस्ताण्डवं भक्तियोगतः ॥ ३४
केचिज्जना नमश्चक्रुरस्तुवंश्च तथा परे।
केचित्पञ्चाक्षरजपमकुर्वन् पुरतः स्थिताः ॥ ३५
नर्तनं चक्रुरन्ये च ध्यायन्ति स्म तथा परे।
केचित्पूजामकुर्वंश्च प्रायच्छन्नम्बरादिकम्॥ ३६
राजाऽप्यन्तिकमागत्य दृष्ट्वा विस्मितमानसः।
आत्माधीशं महादेवमात्मनः प्रियकारिणम्॥ ३७
तुष्टावाष्टाकृतिं भक्त्या पुळकाञ्चितविग्रहः।

### शिवताण्डव स्तुतिः

राजशेखरपाण्ड्यः -

परिपूर्णं परानन्दं सत्यज्ञानाद्वयात्मकम्॥ ३८
भजामि सुन्दरेशानं महदद्भुतताण्डवम्।
श्रीमत्पञ्चाक्षरमयं पञ्चकृत्यैककारणम्॥ ३९
भजामि सुन्दरेशानं महदद्भुतताण्डवम्।
विश्वाधिकं विश्वरूपं विश्वात्मानं परात्परम्॥ ४०

भजामि सुन्दरेशानं महदद्भुतताण्डवम् ।
योगाभ्यासरतैस्सद्भिस्सदा ध्येयं सुसिद्धिदम् ।। ४१
भजामि सुन्दरेशानं महदद्भुतताण्डवम् ।
भक्तापद्भञ्जनपरं भक्तिगम्यं भवापहम् ।। ४२
भजामि सुन्दरेशानं महदद्भुतताण्डवम् ।
भोगमोक्षप्रदं पुंसामागमान्तैरभिष्टुतम् ।। ४३
भजामि सुन्दरेशानं महदद्भुतताण्डवम् ।
द्वादशान्तगतं सूक्ष्मं सोमसूर्याग्निकोटिभम् ।। ४४
भजामि सुन्दरेशानं महदद्भुतताण्डवम् ।
षट् त्रिंशत्तत्व सोपानमहाप्रासाद मध्यगम् ।। ४५
भजामि सुन्दरेशानं महदद्भुतताण्डवम् ।
कालातीतं कालकालं कलाधरकलाधरम् ।। ४६
भजामि सुन्दरेशानं महदद्भुतताण्डवम् ।
सूक्ष्मपञ्चाक्षरीभूतप्रणवागारमध्यगम् ।। ४७
भजामि सुन्दरेशानं महदद्भुतताण्डवम् ।
निवृत्त्यादिकलातीतं नित्यं सकलनिष्कलम् ।। ४८
भजामि सुन्दरेशानं महदद्भुतताण्डवम् ।
सर्वसंपत्करं सद्यस्सर्वापद्भञ्जनक्षमम् ।। ४९
भजामि परमेशानं महदद्भुत ताण्डवम् ।।
वीताघसंघैर्विबुधैर्विशिष्टैः विद्याविशेषार्चितपादपद्म ।
हालास्य नाथाय नमोऽस्तु तुभ्यं श्रीसुन्दरेशाद्भुतताण्डवेश ।। ५०
इति स्तुत्वा सुन्दरेशं महाताण्डवपण्डितम् ।। ५१

भक्त्या परवशो भूत्वा प्रणिपत्य पुनः पुनः ।
कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मीत्युदीर्य सः ।। ५२
उत्थाय प्रार्थयामास राजशेखर ईश्वरम् ।
अनुग्रहाय लोकानां किञ्चित्कुञ्चितमुन्नतम् ।। ५३
वामं श्रीचरणं शम्भो तव सर्वत्र दृश्यते ।
न तदाश्चर्यमेतत्तु विशिष्टं महदद्भुतम् ।। ५४
अस्मद्वंशविवृद्ध्यर्थं लोकानुग्रहहेतवे ।
एवमत्यद्भुतं नृत्तं सदैव कुरु शङ्कर ।। ५५
एवं सम्प्रार्थिते भूपे सदा सर्वेष्टसिद्धये ।
ओमोमिति तदा वाणी खादभून्मधुरस्वना ।। ५६
श्रुत्वा तामतिसन्तुष्टः प्रणम्य स पुनः पुनः ।
आत्मनीशस्य वात्सल्यं चिन्तयन्नतिभक्तिमान् ।। ५७
छत्रचामरसिंहाख्यपीठाद्यं मौक्तिकं ददौ ।
व्यत्यस्तनृत्तकरणध्वजकर्तेति सुन्दरः ।। ५८
तदा प्रभृति लोकेषु ख्यातो हालास्यनायकः ।
व्यत्यस्तताण्डवं नित्यं सुन्दरं ध्यायतां नृणाम् ।। ५९
सिद्ध्यन्ति सर्वकार्याणि नश्यन्ति दुरितानि च ।
राजशेखरपाण्ड्योऽपि तदारभ्य दिवानिशम् ।। ६०
सुन्दरं ध्यायति स्वान्ते महदद्भुतताण्डवम् ।
निर्वर्त्य जागरं तत्र शिवरात्रिव्रतस्य च ।। ६१
राजशेखरभूपालः प्रभाते स्वालयं ययौ ।
एवमद्भुतनृत्तं तत् सुन्दरेशमहेशितुः ।। ६२

श्रुत्वा देशान्तरगता विप्राद्यास्सकला जनाः ।
समागत्य समालोक्य शम्भोस्ताण्डवमद्भुतम् ॥ ६३
कृतार्था अभवन् सद्यस्सकलाभीष्टलाभतः ।
पुत्रः कुलोत्तुङ्ग इति राजशेखरभूपतेः ॥ ६४
जातस्सर्वगुणोपेतस्सागरादिव चन्द्रमाः ।
तेन पुत्रेण स नृपश्चिरं भूमिमपालयत् ॥ ६५
चतुर्विंशा तु लीलेयं चतुर्वर्गफलप्रदा ।
श्रुतमात्रादघघ्नी च पुंसां पुण्यविशेषदा ॥ ६६

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - व्यत्यस्तनृत्तकरणं नाम*
*त्रिंशोऽध्यायः*

* * *

## அத்தியாயம் - 30
## 24. கால்மாறி ஆடியது

ராஜசேகர பாண்டியன் தன் தந்தையைவிடச் சிறப்புடன் நாட்டை ஆண்டான். அனைத்து வித்யைகளிலும் தேர்ச்சி பெற்றான். அறுபத்து நான்கு கலைகளில் நடனத்தைத் தவிர மற்றதில் நிபுணனானான். சிவன் ஆடுகிற நடனத்தைத்தான் ஆடுவது உசிதமல்ல என்பது அவன் கருத்து. அக்காலத்தில் சோழ அரசனான கரிகாலன் அறுபத்து நான்கு கலைகளிலும் தேர்ந்தவன். சோழ தேசத்திலிருந்து வந்த கவி பாண்டியனிடம் இந்தக் குறையைச் சுட்டிக் காட்ட, போட்டி மனப் பான்மையுடன் நடனத்தில் தேர்ச்சி பெற்றான். ஒரு காலைத் தூக்கி மறு காலைப் பூமியில் அழுத்தி ஆடும் போது ஏற்படுகிற வேதனையை உணர்ந்த பாண்டியன் எப்போதும் ஆடிக் கொண்டிருக்கிற சிவனது பாதம் எவ்வாறு நோகும் என்று வேதனை கொண்டான்.

அன்று சிவராத்திரி. பக்தியால் பரவசப்பட்ட பாண்டியன் ''பெருமானே ! நீர் நடனத்தின் ச்ரமம் குறைவதற்காக வெகு நாட்களாகத் தூக்கியுள்ள காலே மாற்றி மறு காலால் நடனமாடுவீர். அவ்வாறு செய்யாவிடில் என் தலேயை கத்தியால் வெட்டிக் கொள்வேன்'' எனச் சூளுரைத்தான். கத்தியை உறைவிட்டெடுத்து எதிரில் வைத்துக் கொண்டான். சிவன் வலது காலேத் தூக்கி இடது காலே முயலகன்மீது வைத்து ஆடத் தொடங்கிஞர். அரசன் மிக மிக ஆனந்தத்துடன் அந்தக் காட்சியைக் கண்டுகளித்தான். சிவராத்திரி இரவில் தாண்டவ தரிசனத்தில் மூழ்கியிருந்த அரசன் காலையில் மாளிகையை அடைந்தான். அவனுக்குக் குலோத்துங்கன் என்ற புதல்வன் பிறந்தான். அவனே வளர்த்து அரசாளத் தகுதி பெறச் செய்தான். இது இருபத்து நான்காவது லீலே.

★ ★ ★

एकत्रिंशोऽध्यायः

# २५. विप्रपत्नीवध निरूपणम्

ऋषयः -

भक्तानुग्रहदक्षस्य सुन्दरेशस्य वैभवम्।
भूयोऽपि कथयास्माकं क्रमात्प्राप्तं घटोद्भव ।। १

अगस्त्यः

लीलयाऽथ यया विप्रपत्नीवधनिरूपणम्।
अकरोत्सुन्दराधीशस्तां लीलां कथयामि वः ।। २

प्राप्ते शम्भोस्तु सायुज्यं राजशेखरभूपतौ।
कुलोत्तुङ्ग महीपालो मधुरानायकोऽभवत्।। ३

देवब्राह्मणभक्तश्च सदा स्वाचारतत्परः ।
प्रजास्सन्तोषयामास सर्वत्रावस्थिता मुदा।। ४

सुन्दरेशस्य तद्ध्यात्वा व्यत्यस्तानन्दताण्डवम्।
राजकार्याणि सर्वाणि कुलोत्तुङ्गस्सदा व्यधात्।। ५
तस्यायुतं कलत्राणामभूत्सौन्दर्यसंयुतम्।
प्रत्येकं षट्कुमारास्तु सञ्जातास्सम्पदा सह।। ६
अनन्तगुणपाण्ड्यस्तु तेषां ज्येष्ठतमः स्मृतः।
अनन्तैः सद्गुणैर्युक्तः पितुराज्ञामलंघयन्।। ७।।
तैः पुत्रैः सहितः सम्राट् षष्टिसाहस्र संमितैः।
उवास मधुरापुर्यां मुदाऽखिलपरिग्रहैः।। ८
तदा श्रीमन्नवपुरे वसन् कश्चिद्द्विजोत्तमः।
वनितां स्वां समादाय बालकं च स्तनन्धयम्।। ९
हालास्यपुरमध्यस्थमाययौ श्वशुरालयम्।।
मध्येमार्गं तृषार्तस्सन् वटमूले स्थितोऽभवत्।। १०
श्रान्त्या तद्वनिता शेते तत्र बालेन संयुता।
द्विजः पानीयमादातुं स ययौ त्वरयाऽन्वितः।। ११
व्याधेन केनचित्क्षिप्तश्शरः पूर्वं शुकं प्रति।
पत्रे सक्तो लम्बमानो न्यपतद्वायुना स्त्रियाम्।। १२
तत्क्षणाद्व्यसुरासीत्सा बाणपातप्रवेगतः।
पानीयमानीय जवाद्भर्ताऽऽगत्यावलोक्य ताम्।। १३
भृशमाताड्य पाणिभ्यां मुहुर्वक्षस्स्वमुन्नतम्।
अत्यन्तं रोदनं कुर्वंस्तस्यास्सौन्दर्यसद्गुणान्।। १४
स्मृत्वा स्मृत्वाऽतिशोकाब्धौ मूर्च्छामाप निमज्य सः।
चिरं परवशो भूत्वा शेते कानन भूतले।। १५

मुहूर्तमात्रेऽतिक्रान्ते समुत्थाय द्विजोत्तमः ।
कश्चिद्व्याधं समद्राक्षीत्पक्ष्यन्वेषणतत्परम् ।। १६
बलाद्गृहीत्वा तं केशे द्विज एवमभर्त्सयत् ।
भो पुलिन्दाधमात्रस्थां किमर्थमहनः स्त्रियम् ।। १७
इत्युक्त्वाऽताडयद्दण्डं व्याधस्य च पुनः पुनः ।
अत्यन्तभीतिसंयुक्तः स च विस्मितमानसः ।। १८
अहनं नैव नाथाहं तवेमां भो निरूपय ।
इत्युक्तोऽथ द्विजश्शीघ्रं तमादाय नृपान्तिकम् ।। १९
प्राप्य चुक्रोश स शिशुरत्यन्तं प्ररुरोद च ।।
किमेतदित्यपृच्छंस्तन्मन्त्रिणः क्लेशितं द्विजम् ।। २०
सोऽप्यब्रवीदयं व्याधोऽहनदेनां ममाबलाम् ।
इति श्रुत्वा विस्मितास्ते सद्यो गत्वा नृपाय च ।। २१
सर्वं विज्ञापयामासुर्ब्राह्मणेनेरितं वचः ।
कुलोत्तुङ्गोऽपि सहसा बहिर्निर्गत्य तं द्विजम् ।। २२
दृष्ट्वा मृतकलत्रेण सहितश्च सबालकम् ।
आश्वास्यात्यन्तशोकार्तं किमेतदिति पृष्टवान् ।। २३
द्विजस्तु पूर्ववद्व्याधं दर्शयित्वाऽऽह तत्कृतम् ।
व्याधोऽपि नाहं कृतवानित्याह ब्राह्मणीवधम् ।। २४
संशयाविष्टचित्तस्सन् कुलोत्तुङ्गमहीपतिः ।
अतिशोकार्तमाश्वास्य चाटुभिर्वचनै र्द्विजम् ।। २५
पप्रच्छ सान्त्वपूर्वं तं व्याधश्च नयकोविदः ।
त्वञ्च ब्रूहि व्याध सत्यं केनेयमबला हता ।। २६

त्वामहं न हनिष्यामि प्रीतस्त्वत्सत्यवाक्यतः ।
इत्युक्तोऽपि पुनर्व्याध एवमाह नृपं प्रति ॥ २७
नैव तामहनं नाथ निरूप्याज्ञां कुरु प्रभो ।
इति व्याधोऽब्रवीद्भीतः प्रस्विन्नावयवैर्युतः ॥ २८
राजा तद्वचनं श्रुत्वा सान्त्वयन् द्विजमब्रवीत् ।
ब्रह्मन्नसावेवमाह निरूप्य विनिहन्मि तम् ॥ २९
सद्यो गत्वा दह प्रेतं विधिर्हि दुरतिक्रमः ।
तथा करिष्य इत्युक्त्वा गते ब्राह्मणपुङ्गवे ॥ ३०
प्रहारं कारयित्वाऽथ मुष्टिभिः किङ्करैस्स्वकैः ।
बन्धयित्वा शृङ्खलया पादौ पाणी च तस्य तु ॥ ३१
समूलश्चोन्मूलयिष्ये कारागेहं व्रजाद्य वै ।
इत्युक्त्वा प्रेषयित्वा तं क्रुधा व्याधं महीपतिः ॥ ३२
मन्त्रिभिश्चिन्तयामास विद्वद्भिश्च द्विजोत्तमैः ।
कर्तव्यं कार्यमज्ञात्वा बहुचिन्तासमन्वितः ॥ ३३
हालास्यनाथो भगवानस्माकं कुलदैवतम् ।
अद्भुतं ताण्डवमपि मत्पित्रर्थं पुराऽकरोत् ॥ ३४
इदानीं मम कर्तव्यं सर्वज्ञो वक्ष्यति प्रभुः ।
इति निश्चित्य मनसा कुलोत्तुङ्गमहीपतिः ॥ ३५
सद्यस्स्नात्वा महातीर्थे सुमीनाक्षीं प्रणम्य च ।
मूललिङ्गं च संसेव्य सभां प्राप्याथ राजतीम् ॥ ३६
व्यत्यस्तनृत्तकरणध्वजकर्तारमीश्वरम् ।
नत्वा चाष्टाङ्गपञ्चाङ्गत्र्यंगैश्शम्भुं पुनः पुनः ॥ ३७

स्तुत्वा च विविधैः स्तोत्रैर्जप्त्वा प्रासादमन्त्रकम्।
भक्त्या विज्ञापयामास देवदेवं घृणानिधिम्।। ३८
निरवद्यं जीवतो मे देवाद्यावद्यमागतम्।
इतिकर्तव्यधिषणाशून्यस्संशयितोऽभवम्।। ३९
एतन्निरूप्य सहसा मम वक्तुं त्वमर्हसि।
इत्युक्त्वा साञ्जलिस्तस्थौ सुन्दरेश्वरसन्निधौ।। ४०
तदाऽशरीरिणी वाणी प्रादुर्भूताऽतिसुस्वना।
राजशेखरसत्पुत्र कुलोत्तुङ्गार्धरात्रके।। ४१
नगरीशोधनव्याजान्निर्गत्य च पुराद्बहिः।
संचर त्वं खड्गपाणिर्मध्याह्ने न च निर्भयः।। ४२
सन्दिग्धं तव यत्कार्यं करिष्ये गतसंशयम्।
इति श्रुत्वा शंभुवाक्यं अभिनन्द्य मुहुर्मुहुः।। ४३
आत्मीयं निलयं प्राप्य भुक्त्वा विप्रेण संयुतः।
निशि निर्गत्य सहसा पर्यटन् परितः पुरीम्।। ४४
बहिर्नीपवनक्षेत्रादुद्भूतां वैश्यवीथिकाम्।
सम्प्राप्य सञ्चरन् सम्राट् क्वचिदेकत्र तस्थिवान्।। ४५
विवाहोत्सवसम्भूतसम्भ्रमस्य गरीयसः।
भवनस्य प्रतीहारवेदिकायां स्थितावुभौ।। ४६
यमदूतौ घोररूपौ भाषमाणौ परस्परम्।
अत्यन्तकृष्णवर्णाङ्गौ तालवद्दीर्घविग्रहौ।। ४७
दंष्ट्राभीममुखौ क्रुद्धौ पुरुषौ समलोकयत्।
कावेताविति विज्ञातुं तिरोभूय स्थितोऽभवत्।। ४८
पुराकृतानि कृत्यानि बहून्युक्त्वा पुनः पुनः।
अद्यैव कन्यावोढारं गृहीत्वा यममन्दिरम्।। ४९

आवाभ्यां सम्प्रदातव्यमित्याहतुरुभौ तदा।
ताण्डवेशं हृदि ध्यात्वा स्वेष्टदं दृढमानसः ॥ ५०
राजा तदन्तिकं प्राप्य निर्भयः पृच्छति स्म तौ।
मया श्रुतं युष्मदुक्तमुद्वाहेऽद्य मनोहरे ॥ ५१
जामातुः प्राणहरणं युवाभ्यां क्रियते कथम्।
तावुभौ यमदूतौ तं प्राहतुर्वीक्ष्य विस्मितौ ॥ ५२
शृणु राजन्महावीर हननोपायमद्भुतम्।
पाणौ गृहीते कन्याया जामात्रा मुदितात्मना ॥ ५३
चण्डी हन्त्री ह्रस्वतीक्ष्णशृङ्गाभ्यां सहिताऽस्ति गौः।
आवां वेगेन तां गां च विसृजावस्सुबन्धिताम् ॥ ५४
मुक्ता सा शीघ्रमागत्य तं प्रहृत्य वधिष्यति।
तस्यासून् सद्य आदाय गमिष्यावो न संशयः ॥ ५५
मरणे चोदिते काले तृणं वज्रोपमं भवेत्।
अद्य प्रातर्द्विजवधूर्वटमूले मनोहरा ॥ ५६
पुरा व्याधविसृष्टेन पत्रिणा पत्रलम्बिना।
हताऽऽवाभ्यान्तु तद्भर्ता पानीयार्थं तदा गतः ॥ ५७
इति तद्वचनं श्रुत्वा तमाहूय द्विजं जवात्।
तिष्ठात्र त्वं तिरोभूय वचनं यमदूतयोः ॥ ५८
शृणु सर्वं द्विजवर नृप एवं तमब्रवीत्।
तत्र स्थिते द्विजवरे सावधानेन चेतसा ॥ ५९
श्रीमद्धालास्यनाथस्य शम्भोराज्ञाप्रचोदितौ।
आहतुर्यमदूतौ तौ स्वकृत्यानि पुनः पुनः ॥ ६०
तयोर्मध्ये कश्चिदाह स्वविक्रममनुत्तमम्।
सखे कश्चिन्महादन्ती निर्व्याजेन हतो मया ॥ ६१

सिंहः कश्चिन्नृपः कश्चित्सार्वभौमोऽपि संहृतः ।
इति श्रुत्वा वचस्सख्युरन्यः प्राह स्वविक्रमम् ।। ६२
पुरा स्रजैवेन्दुमती द्विजपत्नी मया हृता ।
ब्राह्मणाः क्षत्रिया वैश्याश्शूद्रास्सङ्करजातयः ।। ६३
मृगपक्ष्यादयश्चान्ये जन्तवस्संहृता मया ।
अद्यैव धर्मराजस्य शासनाद्वटमूलगा ।। ६४
व्याधक्षिप्तेन बाणेन वटपत्रावलम्बिना ।
संहृता ब्राह्मणी वक्षःपातितेन नभस्वता ।। ६५
प्राप्ते मरणकाले तु पीयूषं च विषायते ।
गवाऽद्य चण्डया हत्वा जामातरमिमं द्रुतम् ।। ६६
आवाभ्यां हि प्रयातव्यं कृते कालविलम्बने ।
चित्रगुप्तेन सहितो नाथः कोपं करिष्यति ।। ६७
इत्युक्तं यमदूताभ्यां श्रुत्वा प्राह महीपतिः ।
ब्रह्मन् त्वया श्रुतं वाक्यं यत्तथ्यं यमदूतयोः ।।६८
दृष्ट्वा जामातृवृत्तान्तं यास्याव इति तत्र सः ।
द्विजेन सहितस्तस्थौ तयोर्वाक्यं परीक्षितुम् ।। ६९
पुनरप्याहतुस्तौ द्वौ यमदूतौ परस्परम् ।
श्रीमद्वाराणसी पुण्या पञ्चक्रोशसुविस्तृता ।। ७०
अस्माभिर्न प्रयातव्या धर्मराजस्य शासनात् ।
श्रीमद्दक्षिणकैलासः पञ्चक्रोशेन सम्मितः ।। ७१
तत्रापि न प्रयातव्यं कालहस्तीशवैभवात् ।
पुण्डरीकपुरं रम्यं सार्धयोजनयान्वितम् ।। ७२
अत्यन्तपरिशुद्धं तन्न प्रयातव्यमेव हि ।
भूलोकशिवलोकाख्यं क्षेत्रमत्यद्भुतं परम् ।। ७३

मूललिङ्गस्य निलयं योजनद्वयविस्तृतम्।
न गन्तव्यं न गन्तव्यमस्माभिश्शासनात्प्रभोः ।। ७४
सर्वत्र शिवलिङ्गानां परितः क्रोशमात्रकम्।
विहाय सञ्चरिष्याव आवां नाथस्य शासनात्।। ७५
एवं यमभटाभ्यां तु सम्प्रोक्ते क्षेत्रवैभवे।
कुलोत्तुङ्गश्च विप्रश्च श्रुत्वा सन्तुष्टमानसौ।। ७६
पाणिना पाणिमाबध्य तिष्ठतस्तौ परस्परम्।
अथ भेर्यादयो नेदुः पाणिग्रहणमङ्गले।। ७७
घोषं श्रुत्वोन्मुच्य यन्त्रमागत्य शिरसा भृशम्।
जामातरं प्रजघ्ने गौर्व्यसुरासीत्तदैव सः ।। ७८
हाहेति चुक्रुशुस्सर्वे कल्याणार्थं समागताः।
तिरोभूतौ यमभटौ ब्राह्मणो विस्मितोऽभवत्।। ७९
द्विजेन्द्रेण नरेन्द्रोऽपि स्वालयं सहसा ययौ।
नीत्वा रात्रिं प्रभाते तु मन्त्रिभ्योऽकथयत्क्रमात्।। ८०
निखिलं रात्रिवृत्तान्तं हालास्येश्वरकारितम्।
श्रुत्वा सर्वे मन्त्रिणश्च कुलोत्तुङ्गमहीपतिम्।। ८१
प्राहुः प्रशस्य बहुधा प्रमोदभरितान्तराः।
सर्वोत्तुङ्ग गुणोपेत कुलोत्तुङ्ग महाप्रभो।। ८२
सर्वेभ्यश्शिवभक्तेभ्यस्त्वमेव हि शिरोमणिः।
ताण्डवं कृतवान् शम्भुस्त्वत्पितुर्महदद्भुतम्।। ८३
तवाप्यनुग्रहं त्वद्य हालास्येशः करोति च।
एवमुक्ते मन्त्रिभिस्तु पुनः प्राह महीपतिः ।। ८४
शम्भुनाऽवद्यमेतन्मे क्षालितं सुन्दरेण च।
हालास्येशाश्रयफलं प्राप्तमासीन्मयाऽधुना।। ८५

इत्युक्त्वा सचिवैस्सार्धं सन्तुष्टः पाण्ड्यभूपतिः।
बन्धनान्मोचयित्वा तं व्याधमाहूय पार्थिवः ॥ ८६
अज्ञात्वा तव पीडाऽद्य कृताऽस्माभिः क्षमस्व ताम्।
इत्युक्त्वा तञ्च सन्तोष्य दत्वा बहु धनानि च ॥ ८७
प्रेषयित्वाऽथ विप्राय विवाहार्थं धनं बहु।
प्रदाय प्रेषयामास कुलोत्तुङ्गः प्रतापवान् ॥ ८८
सोऽपि गत्वा कृतोद्वाहस्सुखमास्ते स्म पुत्रवान्।
राजाऽपि प्रीतहृदयः प्राप्य रूप्यसभान्तरम् ॥ ८९
श्रीमत्सुन्दरनाथस्य प्रणम्याद्भुतताण्डवम्।
मकुटादीनि चित्राणि प्रदायाभरणानि च ॥ ९०
अनुग्रहाय जगतां दक्षिणस्योद्धृतस्य च।
श्रीमतश्शम्भुपादस्य मञ्जीरमपि मञ्जुलम् ॥ ९१
कटकञ्च ध्वजपटं नवरत्नविचित्रितम्।
समर्प्य भक्तिसम्पन्नस्सर्वसम्पत्समन्वितः ॥ ९२
सार्धं कलत्रैः पुत्रैश्च सुभोगाननुभूय च।
सुखेन मधुरापुर्यां चिरमासीत्स भूपतिः ॥ ९३
पञ्चविंशा तु लीलेयं पञ्चकृत्यविनोदिनः।
पठिता वा श्रुता पुंसां पञ्चत्वभयनाशिनी ॥ ९४

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - विप्रवनितावधनिरूपणं नाम*
*एकत्रिंशोऽध्यायः*

* * *

## அத்தியாயம் - 31

## 25. அந்தணர் மனைவியின் மரணத்தை நிரூபித்தல்

ராஜசேகரன் மறைந்ததும், குலசேகர பாண்டியன் அரசாண்டான். பெருமானின் ஆனந்த தாண்டவத்தைத் தினந்தோறும் தரிசித்து மீனாக்ஷி ஸுந்தரேச்வரர்களை வழிபட்டான். அவனுக்கு பத்தாயிரம் மனைவிகள். ஒவ்வொருவருக்கும் ஆறு புதல்வர்கள். இவர்களில் மூத்தவன் அனந்தகுண பாண்டியன். தந்தைக்கு அரசாட்சியில் பேருதவி புரிந்தான்.

நவபுரம் எனும் திருப்புத்தூரில் வாழ்ந்து வந்த ஓர் அந்தணன் தன் மனைவியையும், பால்குடிக்கிற மகனையும் அழைத்துக் கொண்டு மதுரையின் நடுவிலிருந்த மாமனூர் வீட்டிற்கு வந்தான். வழியில் நாவரட்சி ஏற்பட மனைவியையும் மகனையும் மரத்தடியில் இளைப்பாறவிட்டு, நீர் கொணரச் சென்றான். அந்த மரத்தில் கிளியை அடிக்க வேடன் வீசிய அம்பு இலையில் சிக்கியிருந்தது. காற்றில் கிளை அசைய அம்பு மனைவியின் மார்பில் குத்த அவள் உயிர் நீங்கியது. நீருடன் வந்த அந்தணன் தன் மனைவி இறந்துள்ளதைக் கண்டுகதறினான். தான் வீழ்த்திய பறவையைத் தேடிவந்த வேடனைக்கண்டதும் தன் மனைவியைக் கொன்றவன் இவனே என்று கருதி அவனை அடித்து நிந்தித்தான். அதனை வேடனோ மறுத்தான். அவனைக் கட்டி இழுத்து மனைவியையும், மகனையும் தூக்கிக் கொண்டு குலோத்துங்கனிடம் வந்தான். உண்மை அறிய இயலாத நிலையில் வேடன் சிறையிடப்பட்டான். அரசன் அரசவை கூட்டி ஆலோசித்தான். ஸோமஸுந்தரையும், நடராஜரையும் கண்டு வணங்கி விண்ணப்பித்தான். அசரீரிவாணி எழுந்தது. ''அரசே ! இன்றிரவு மாறுவேடம் பூண்டு நகரப் பாதுகாப்பிற்காகச் செல். அந்தணருடன் நகரை வலம் வருவாய். உண்மை புரியும்''. அரசன் நகர் வெளியில் சுற்றிவந்தபோது அங்கொரு வீட்டில் திருமணம் நடைபெற்றது. மணப் பந்தலுக்கு வெளியே கறுநிறம் கொண்ட இருவர் பேசிக் கொண்டிருந்தனர். அரசனும் அந்தணரும் மறைவில் நின்று கேட்டனர்.

''ஸமயம் நெருங்கிவிட்டது. மணமகனது உயிரைப் பறித்துச் செல்வோம். அங்கே ஒரு முரட்டுப் பசு கொட்டிலில் கட்டப்பட்டுள்ளது. அதனை அவிழ்த்து விடுவோம். கட்டு நீங்கியதும் அது தாவி ஓடி மருண்டு எதிர்படுகிற மணமகனது மார்பில் கொம்பால் முட்டும். நாம் அவனது உயிரைப் பறித்துச் செல்வோம். காலையில் ஒரு அந்தணப் பெண்மணி மரத்தடியில் படுத்திருந்தாள். மரத்தின் கிளையில் சிக்கியிருந்த வேடனது அம்பு காற்றால் கிளை அசையவும் நழுவி அவள் மீது குத்தி அவள் செத்தாள். மரண நேரம் நெருங்கியதும் அமுதமும் விஷமாக மாறும். சிவனது லிங்கம் உள்ள இடத்தில் செல்ல நமக்கு உரிமை இல்லை.காசி, காளஹஸ்தி, சிதம்பரம் இந்த மதுரை முதலிய நகரங்கள் நமது வரம்பில் வராதவை. அங்கு செல்லக் கூடாது.'' இந்தப் பேச்சை அரசனும் அந்தணனும் கேட்டனர். வியப்புற்று நிகழ்வதை உற்று நோக்கினர். பேரி முதலியவை முழங்கின.மணமகன் தாலிகட்ட எழுந்தபோது, கட்டவிழ்ந்த பசு தாக்கி இறந்தான். யமதூதர்களும் மறைந்தனர். இறைவனது அருளால் இந்தக் காட்சியைக் கண்ட அரசன் உடன் அரசவைக்கு வந்தான். வேடனைச் சிறையிலிருந்து விடுவித்து மன்னிப்பு கோரிப் பெருஞ் செல்வமளித்தான். உண்மையறிந்த அந்தணன் தன் மகனுடன் புறப்பட்டதும் அவனுக்கு மறுமணத்திற்கான செல்வமளித்த அரசன் - உடன் ஆலயம் சென்று ஈசனை வணங்கி வழிபட்டான். இது இருபத்தைந்தாவது லீலை.

★ ★ ★

## द्वात्रिंशोऽध्यायः

# २६. पितृहत्याविमोचनम्

**अगस्त्यः -**

**कस्यचिद्द्विजपुत्रस्य पितृघ्नस्यातिपापिनः ।**
**ययाघमीशो हृतवान् तां लीलां कथयामि वः ।। १**

अवन्तीत्यस्ति नगरी सर्वसौभाग्यसंयुता।
तस्यामासीद्द्विजश्श्रीमान्कामिन्या कमनीयया।। २
बाल्ये वयसि तत्पत्नी कश्चित्सुतमजीजनत्।
कालेन यौवनं प्राप्य कामेन स तु मोहितः।। ३
अकरोज्जननीसङ्गं बलात्कारेण सर्वदा।
वञ्चनामवमानं च मतिमान्न प्रकाशयेत्।। ४
इति नीतिवचो ज्ञात्वा तूष्णीमास्ते स्म तत्पिता।
मात्रा रहस्स्थिते पुत्रे पिताऽपश्यत् कदाचन।। ५
पुत्रोऽपि पितरं दृष्ट्वा कोपावेशेन संयुतः।
निवारितोऽपि मात्रा च मास्तु मास्त्विति दुर्मतिः।। ६
शिरश्चिच्छेद वेगेन खनित्रेण पितुर्बलात्।
मातुर्वदनमालोक्य पुनः प्राह द्विजात्मजः।। ७
कामार्तानां कुतो धर्मः कुतस्स्नेहः कुतः कृपा।
कुतः पिता कुतो माता कार्या वा सत्क्रिया कुतः।। ८
इत्युक्त्वा मध्यरात्रे तु दग्ध्वा प्रेतं भिया ततः।
गृहस्थमर्थजातञ्च गृहीत्वा जननीमपि।। ९
आदाय स ययौ रात्र्यां देशान्तरमगोचरम्।
मध्येमार्गं तस्करास्तौ विलोक्यातिमुदान्विताः।। १०
निर्दयास्तं प्रहृत्याशु वित्तमादाय निस्तुषम्।
रम्याकृतिं मातरञ्च गृहीत्वा प्रपलायिताः।। ११
अन्यथा चिन्तितं तेन दैवेन कृतमन्यथा।
कौपीनशेषस्तु तदा याचमानः पथि स्थितः।। १२
दिनानि कतिचिन्नीत्वा मलिनाम्बरकेशवान्।
मात्रा धनेषु यातेषु पश्यन्विधिगतिं धिया।। १३

तीर्थानि प्रययौ स्नातुं गङ्गादीन्यघशान्तये।
प्रयातुः पापिनः पश्चाद्ब्रह्महत्याऽनुधावति॥ १४
पृष्ठे को वा समायाति इति जातभयो द्रुतः।
पश्यमाने द्विजसुते नान्यत्किञ्चन दृश्यते॥ १५
तस्मिन्तीर्थान्तिकं प्राप्ते छाया तमनुकर्षति।
अथासावकृतस्नानो बभ्राम च महीतले॥ १६
पितृघ्नं मातृजारञ्च तं देवः पापिनं द्विजम्।
कृपया रक्षितुं चित्ते विचारयति दुर्मतिम्॥ १७
द्विजस्तदानीं सहसा मधुरां भाग्यतोऽभ्ययात्।
देवीदेवौ च तद्भाग्याच्छृङ्गाररसतत्परौ॥ १८
शबरीशबरौ भूत्वा गोपुरद्वारि तिष्ठतः।
मदनस्य बलीयस्त्वं प्रशंसन्तौ दुरात्मनः॥ १९
मदनार्तः स्वदारेषु निरतश्चेन्न दोषभाक्।
अन्यदारेषु रक्तश्चेत् पतिष्यति न संशयः। २०
संसारमूलं कामो हि चावयोरपि सप्रियः।
वर्तमानं स्मरं धिग्धिगेनमित्याहतुश्च तौ॥ २१
अत्रान्तरे स भाग्येन तयोर्दृष्टिपथं गतः।
तं दृष्ट्वा ज्ञातवृत्तान्तौ धिग्धिगित्येनमूचतुः॥ २२
अनाथत्वादथाज्ञत्वादभाग्यत्वाच्च सुन्दरः।
कृपया परया नुन्नस्तस्मादेनमवोचत॥ २३
पापिन् त्वत्कृतपापस्य प्रायश्चित्तं न विद्यते।
अस्मद्दृष्टिपथं प्राप्तस्तस्मात्ते कथयाम्यहम्॥ २४
रिक्तोऽसि त्वं सत्यमेव तस्माद्दानं न कथ्यते।
दिने दिने त्वं सद्दूर्वाः पानीयं वितराशु गोः॥ २५

अङ्गप्रदक्षिणं नित्यं कुरु शम्भोस्सुभक्तितः ।
तस्याभिषेकतीर्थे च स्नाहि नित्यं त्रिवारकम् ।। २६
तद्भक्तानाञ्च शुश्रूषां विशेषेण समाचर ।
भिक्षान्नेनैकवारञ्च जीव त्वं विजितेन्द्रियः ।। २७
एवं मासत्रयं कृत्वा विपापो मन्यसे जनैः ।
इत्युक्ते सुन्दरेशाने समस्तजनवत्सले ।। २८
लसच्छफरनेत्रा सा कृपां दृष्ट्वा महेशितुः ।
लौकिकैर्वैदिकैस्स्तोत्रैस्तुष्टावाश्चर्यसंयुता ।। २९
अथ देवस्समालोक्य देवीमेवमवोचत ।
विद्यावतो धर्मयुजश्चारित्राढ्यस्य रक्षणे ।। ३०
प्रयासस्सर्वथा कार्यो नैतदाश्चर्यमावयोः ।
मूढस्य धर्महीनस्य त्वनाचारस्य रक्षणम् ।। ३१
आश्चर्यमेतदस्माद्धि कृपामस्मिन्व्यधामुमे ।
एवमादीनि वाक्यानि कथयित्वा मिथश्शिवौ ।। ३२
तिरोभूतौ सोऽप्यकरोत्प्रायश्चित्तं शिवोदितम् ।
मान्योऽवसत्सुखं पश्चाद्विमुक्तो ब्रह्महत्यया ।। ३३
इति षड्विंशिका लीला मया प्रोक्ता शुभप्रदा ।
श्रवणात्सर्वपापघ्नी सर्वसम्पत्प्रदायिनी ।। ३४

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - पितृघ्नदोषहननं नाम*
*द्वात्रिंशोऽध्यायः*

* * *

## அத்தியாயம் - 32

### 26. தந்தையைக் கொன்ற பாபம் நீக்குதல்

அந்தண தம்பதியர்க்கு இளம் வயதில் பிறந்த மகன் வாலிபம் வந்ததும் காமம் மிகுந்து தாயையே கெடுத்தான். இதனைக் கண்ட தந்தையையும் கொன்று, தாயுடன் வீட்டை விட்டு வெளியேறினுன். வழியில் திருடர்கள் அவனிடமிருந்து செல்வத்தையும் இளமைமிக்க தாயையும் பறித்துச் சென்றனர். நிலைமையுணர்ந்த அவன் எதிர்பார்த்ததற்கு மாருக எல்லாவற்றையும் இழந்து தந்தையைக் கொன்ற பாபம் உருக்கொண்டு பின் தொடர அனுதனுக நாட்டைச் சுற்றி மதுரை வந்தவன் உமாமகேச்வரர்களின் அருட்பார்வையில் பட்டான். அவர்களது அன்புக் கட்டளையை ஒட்டி, பசுவிற்குப் புல் அளித்து ஈசனுக்கு அங்கப்ரதக்ஷிணம் செய்து ஈசனின் அபிஷேக நீரில் நீராடிப் பிச்சை எடுத்து ஒரு வேளை உண்டு, மூன்று மாத காலம் கழித்ததும் தந்தையைக் கொன்ற பாபம் நீங்கியது. எவ்வகையிலும் தீராத பாபம் இறைவனருளால் நீங்கியது. இது இருபத்தாருவது லீலை.

## त्रयस्त्रिंशोऽध्यायः

## २७. सिद्धाङ्गच्छेदनम्

अगस्त्यः -

अङ्गं छित्वा चण्डिकेशो लीलां यामकरोत्प्रभुः ।
तां लीलां सम्प्रवक्ष्यामि समस्तापत्प्रभञ्जनीम् ।। १
पुराऽऽसीन्मधुरापुर्यां कश्चिदायुधशिक्षकः ।
शिक्षयित्वा याममात्रं भटान् प्रतिदिनं स वै ।। २
प्रदक्षिणनमस्कारस्तोत्रैरीशमतोषयत् ।
तस्मात्तु बहवो योधाश्शिक्षां प्राप्य मुदान्विताः ।। ३

दक्षिणाश्च यथाशक्ति दत्वा वृत्तिश्च लेभिरे।
कश्चिच्छिष्यः पापबुद्धिस्सिद्धाख्यश्चानुसृत्य तम्॥ ४
असिधेनुमुखा विद्यास्साकल्येन गृहीतवान्।
असावृजुत्वादाचार्यश्शिक्षयामास तं पुनः ॥ ५
स तदा पूर्णविद्यत्वात् निरपेक्षतयाऽन्वितः ।
शालां श्रमाय कृत्वाऽथाशिक्षयद्बहुलान् भटान्॥ ६
पुराऽमुष्य हि सच्छात्रा भटाः क्रोधं समेत्य च।
आचार्यं चोदयामासुरेवमुक्त्वा पुनः पुनः ॥ ७
प्रतिश्रमकुटीं कृत्वा युष्मच्छालासमागतान्।
स सिद्धाख्यो बहून् शिष्यान् युष्मदीयान्समग्रहीत्॥ ८
श्रुत्वेति निर्विकारस्सन् गुणित्वाद्वर्तते स्म सः ।
छद्मना स भटो नित्यमाचार्यगृहमेत्य च॥ ९
आचार्यगृहिणीं प्राप्य ब्रूहि मेऽवसरोऽस्ति किम्।
न वेति स्म प्रार्थयति मन्मथाधीनमानसः ॥ १०
अस्याशयमबुद्ध्वा सा न जानामीत्यभाषत।
यातेष्वेवं कतिपयदिनेषु स भटाधमः ॥ ११
वैजन्यमवलोक्याशु कदाचित्तां समग्रहीत्।
धिक्कृत्यानादरात्साध्वी तं प्रभत्स्यालियं गता॥ १२
वञ्चनामवमानं च मतिमान्न प्रकाशयेत्।
इति निश्चित्य चित्ते तु भर्त्रा सह न साऽब्रवीत्॥ १३
हालास्यनायको देवो भक्तानां हितकृत्सदा।
भटं सिद्धाख्यमभ्येत्य प्राहाचार्यशरीरधृत्॥ १४
त्वं युवाऽहञ्च वृद्धोऽद्य तथाऽप्यावां समुद्यतौ।
अङ्कमेकं करिष्यावश्चण्डिका परमेश्वरी॥ १५

तव वा मम वा सद्यः कार्यसिद्धिं करिष्यति।
तिष्ठात्र वनिता चेत्त्वं पुमांश्चेदुत्थितो भव ।। १६
तच्छ्रुत्वा कुपितो भूत्वा फलकाखड्गसंयुतः ।
वृद्धं सद्यः प्रहर्तुं तमुद्युक्तोऽभूत्स पापधीः ।। १७
आचार्यवेषधारी च भक्तवत्सल ईश्वरः ।
फलकाखड्गपाणिस्सन् शिष्यैरन्यैर्जनैर्वृतः ।। १८
विशालं देशमासाद्य विधिना पूज्य चण्डिकाम्।
आत्मीयमतिचित्रञ्च दर्शयित्वाऽथ विक्रमम् ।। १९
सिद्धागमनपर्यन्तं कालक्षेपश्चकार ह।
सद्यस्संस्नाय भुक्त्वा च सिद्धोऽलङ्कारवेषवान् ।। २०
गृहीत्वा फलकाखड्गं जवात्प्राप तदन्तिकम्।
हन्तुमेकप्रहारेण शक्तस्सुन्दरनायकः ।। २१
लोकतुष्टिं प्रकुर्वाणस्सव्यासव्यक्रमेण तु।
भ्रमणं बहुधा कृत्वा पुनर्हन्तुं समुद्यतः ।। २२
आचार्यपत्नीस्वीकारश्चिकीर्षोर्मनसस्स्थलम्।
प्रहृत्य पूर्वं तस्यास्तु पाणिस्पर्शनलोलुपम् ।। २३
छित्वा पाणिञ्च जिह्वाञ्च सिद्धस्यासत्प्रलापिनीम्।
मानोन्नतं शिरस्तस्य चिच्छेद करवालतः ।। २४
प्रशशंसुर्जनास्सर्वे तमाचार्यं लघुक्रियम्।
तदानीं पश्यतामेव सर्वेषां स तिरोदधे ।। २५
विस्मितास्ते भटास्सर्वे प्राप्याचार्यस्य मन्दिरम्।
काचार्य इति पप्रच्छुर्वनितां रत्नशालिनीम् ।। २६
अधुना सुन्दरं नन्तुमगच्छदिति साऽब्रवीत्।
किमेतदिति सर्वे ते चान्योन्यमतिविस्मिताः ।। २७

तत्र सम्भूय तिष्ठन्ति स्माचार्यभवनाङ्गणे।
नत्वा सुन्दरनाथं तमाचार्यो गेहमाययौ ॥ २८
दृष्ट्वा जनान् स किं यूयमागता इति पृष्टवान्।
युष्मद्वेषधरः कश्चित्तं युष्मत्परिपन्थिनम्॥ २९
हत्वा सिद्धं तिरोभूत इति सर्वे तमब्रुवन्।
तच्छ्रुत्वा कारणाज्ञानात्तूष्णीं तस्थौ निरुत्तरः ॥ ३०
दुर्वृत्तेन च सिद्धेन कृतं कर्मातिनिन्दितम्।
विविच्याकथयत्पत्नी वल्लभोपह्वरे तदा ॥ ३१
तच्छ्रुत्वाऽथ विनिर्गत्य गेहात्सुन्दरनायकम्।
सम्प्राप्य भक्तिभारेण प्रणिपत्य पुनः पुनः ॥ ३२
इति सम्प्रार्थयामास साञ्जलिस्सन्निधौ स्थितः।
सुन्दरेश महादेव भगवन् भक्तवत्सल ॥ ३३
त्वत्पादपङ्कजे भक्तिं दत्वा मां रक्ष सर्वदा।
भुक्तिमुक्तिकरीं सद्यस्समस्तदुरितापहाम्॥ ३४
सर्वशत्रुक्षयकरीं भक्तिं दत्वेश पाहि माम्।
अज्ञानविनिहन्त्रीञ्च सदा सुज्ञानदायिनीम्॥ ३५
भक्तिं प्रदाय मां रक्ष भगवन् पादपङ्कजे।
सालोक्यादिपदप्राप्तिमूलभूतां सुपुण्यदाम्॥ ३६
महापातकसङ्घघ्नीं भक्तिं दत्वा च पालय।
धर्ममर्थञ्च कामं च मोक्षं या सम्प्रयच्छति ॥ ३७
दत्वा तां भक्तिमतुलां पाहि मां करुणानिधे।
इति विज्ञाप्य देवस्य सुन्दरेशस्य सन्निधौ ॥ ३८
अत्राचार्यः पुनः प्राह कृपां शम्भोर्विचार्य च।
त्वयि मेऽतिमिता भक्तिरमिता ते कृपा मयि ॥ ३९

फल्गुत्वं च प्रभुत्वं च बुधैर्निर्णीतमावयोः ।
तस्मात्त्वं पूर्णकृपया भक्तिलेशांश संयुतम् ।। ४०
पाहि पाहि महादेव कदम्बवननायक ।
करुणामृतसंपूर्ण त्वत्कटाक्षावलोकनात् ।। ४१
मदीयवंशसम्भूतान् सर्वदा पालय प्रभो ।
इति सम्प्रार्थ्य संजप्य श्रीमत्पञ्चाक्षरं शतम् ।। ४२
भवनं गन्तुमुद्युक्ते ह्यस्त्रविद्याविचक्षणे ।
तद्वृत्तान्तं जनैश्श्रुत्वा कौतूहलसमन्वितः ।। ४३
कुलोत्तुङ्गमहीपालस्समागत्य तदन्तिकम् ।
अधिरोप्य गजस्कन्धे देववत्परिपूज्य तम् ।। ४४
विविधानि च रत्नानि भूषणान्यम्बराणि च ।
प्रदाय सकलत्राय धनानि सुबहूनि च ।। ४५
प्रशंसन् तस्य माहात्म्यं राजा स्वालयमाययौ ।
स्वकीयं भवनं प्राप्य शस्त्रविद्याविचक्षणः ।। ४६
कलत्रेण समायुक्तश्चिरं जीवति संपदा ।
सप्तविंशा तु लीलेयं सर्वसौभाग्यदायिनी ।। ४७
सकृच्छ्रवणमात्रेण सर्वापत्परिभञ्जनी ।

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - सिद्धाङ्गविशसनं नाम*
*त्रयस्त्रिंशोऽध्यायः*

★★★

## அத்தியாயம் - 33

## 27. ஸித்தனை அழித்தது

மதுரையில் ஒரு ஆயுதப் பயிற்சியாளர் படைவீரர்களுக்கு ஆயுதப் பயிற்சியைத் தினந்தோறும் அளித்துவந்தார். அவரிடம் பலர் ஆயுதக் கலையைக் கற்றுச் சிறந்த படைவீரர்களாகிக் குருவிற்குத் தக்ஷிணை அளித்துச் சென்றனர். அவர்களில் சித்தனும் ஒருவன். தனது பயிற்சி முடிந்ததும் தன் குருவின் பயிற்சிக் குடிலுக்கெதிரேயே குடிலமைத்துத் தானும் போட்டியாகப் பயிற்சிக்களம் அமைத்ததுடன் தன்னிடமே பயிற்சி பெற வலிவில் அழைத்துப் பயிற்சி தந்தான். இதனைத் தன் சீடர் மூலம் அறிந்த குரு எதிர் நடவடிக்கையாக எதுவும் செய்யவில்லை. சித்தனுக்குப் பயமும் கூச்சமும் அகன்றது. குருவின் மனைவியிடம் சென்று கற்பழிக்க முற்பட்டான். அவள் அவனை அடித்து நிந்தித்து விரட்டி விட்டு ஈசனின் ஆலயம் சென்று காக்க வேண்டினாள்.

ஹாலாஸ்யநாதர் அந்த குரு வேஷமேற்று சித்தனிடம் வந்து மல்யுத்தப் போட்டி இட அழைத்தார். சித்தன் இதனை ஏற்றான். போட்டிக் களத்தில் பலரறிய கத்தியும் கேடயமுமேந்திய இருவரும் மற்போரிட்டனர். குருவேட மேற்ற ஈசன் சிறிது நேரம் விளையாட்டாகப் போரிட்டு, குரு பத்னியிடம் தவறாக நடந்த சித்தனை மார்பிலும் கைகளிலும் தலையிலும் வெட்டி வீழ்த்தி விட்டு மறைந்தார். இயல்புக்கு மாறாகச் சித்தனை வெட்டியழித்த குரு மறைந்ததும் அவரைத் தேடவந்த மக்களின் முன் ஆலயத்தில் ஈசனை வழிபடச் சென்று திரும்பிய குரு தென்பட்டார். அவர் இதை அறிந்ததும் ஈசனிடம் சென்று தனக்குப் பக்தி பெருக வேண்டினார். மக்கள் ஈசனே இவர் வேடத்துடன் வந்து சித்தனை அழித்ததை உணர்ந்து பாராட்டினர். அரசன் குலோத்துங்கனும் குருவை யானைமேல் ஏற்றி நகரவலம் வரச் செய்து பாராட்டினான். இது இருபத்தேழாவது திருவிளையாடல்.

★ ★ ★

## चतुस्त्रिंशोऽध्यायः

# २८. सर्पहननम्।

अगस्त्यः -

सर्पस्य हननं शम्भुरकरोल्लीलया यया।
तां लीलां सम्प्रवक्ष्यामि युष्माकं पर्वताकृतेः ।। १
कुलोत्तुङ्गमहीपाले सायुज्यं शाम्भवं गते।
अनन्तगुणपाण्ड्यस्तु राज्यं नीत्याऽभ्यपालयत्।। २
तस्मिंस्तु करुणापूर्णे कमलाकृतकेतने।
जगदाह्लादजनके शिवभक्त्या बृहत्तरे ।। ३
सागरान्तां च पृथिवीं पाण्ड्येशे शासति प्रभौ।
नग्नास्समेत्य सहसा परस्परमचिन्तयन्।। ४
वर्तते जगतीपालश्शम्भुभक्तिपरायणः ।
भस्मरुद्राक्षसम्पन्नः श्रीमत्पञ्चाक्षरप्रियः ।। ५
शिवलिङ्गार्चनरतः शिवभक्तप्रपूजकः ।
तत्समास्तस्य नगरीवासिनस्सकला जनाः ।। ६
नष्टा नग्नादिसिद्धान्ताः किं कुर्म इति ते तदा।
आभिचाराणि निश्चित्य कर्तुं पाण्ड्येश्वरं प्रति ।। ७
अकुर्वन्विविधान् घोरान्मन्त्रवादांस्तु मन्त्रिणः ।
प्रधानाः केचिदेकत्र होमकुण्डं प्रकल्प्य च ।। ८
चक्रुर्होमं समेतास्ते स्वैः स्वैर्मंत्रैरनेकशः ।
चिरे सति गते काले राक्षसः कुण्डमध्यतः ।। ९
अलातद्वयदृष्टान्तलोचनद्वयसंयुतः ।
विशंकटास्यकुहरो दंष्ट्राभ्यां च भयावहः ।। १०

दीर्घाकारो जगत्त्रासकारकः कठिनांसयुक्।
दीप्तपावकसंकाश ऊर्ध्वोच्चलितमूर्धजः ॥ ११
भीमकायो बृहत्कुक्षिः क्रुद्धाशीविषवीक्षणः ।
तस्मादग्नेस्समुत्थाय नग्नान् प्रति वचोऽब्रवीत्॥ १२
महाकुक्ष्यनलज्वालामाला दहति मे तनुम्।
किं ब्रूत किङ्करिष्यामि किमाहूतोऽहमद्य वै ॥ १३
इति तद्वचनं श्रुत्वा नग्नाः प्रीतिपुरस्सराः ।
पाण्डचराट् शिवभक्तस्सन्नुद्युङ्क्तेऽस्मान् प्रबाधितुम्॥ १४
शैलरूपफणीन्द्रस्सन्मधुरां प्राप्य राक्षस।
तं नृपं तस्य नगरीवासिनस्सकलान् जनान्॥ १५
सहसा विषवेगेन संहरेति तमब्रुवन्।
सोऽपि तद्वेषधारी सन्महाकायोऽनलार्चिमान्॥ १६
स्फटां वितत्य जिह्वे द्वे चलयन् ज्वलनप्रभे।
फूत्कारं भीषणं कुर्वन्नाययौ मधुरापुरीम्॥ १७
तं दृष्ट्वा भीतमनसो जना राज्ञे व्यजिज्ञपन्।
स राजा सहसोत्थाय निवारयितुमुद्यतः ॥ १८
फणीन्द्रं पर्वताकारं दृष्ट्वा शङ्कासमन्वितः ।
सुन्दरेशं हृदि ध्यात्वा व्यसृजद्भल्लमुत्तमम्॥ १९
दंशयित्वा भल्लकं स तं खादयितुमुद्यतः ।
पुनश्च व्यसृजद्भल्लाननेकान्भूपतिः स्थिरः ॥ २०
भल्लैर्निकृत्तगात्रस्सन्नुद्ववाम विषं बहु।
विषवेगः प्रवहति नदीवेग इवोल्बणः ॥ २१
तज्ज्वालया भृशन्तप्तास्सहसा मूर्छयाऽन्विताः ।
हाहेति सर्वे क्रोशन्तो नृपाद्यास्सुन्दरेश्वरम्॥ २२

सम्प्राप्य प्रार्थयामासुर्विषसन्तापशान्तये।
सुन्दरेश कृपाराशे हालाहलविषापह।। २३
पाहि नश्शरणापन्नान्विषार्तान्विबुधानिव।
कालकाल पुराराते कामारे भक्तवत्सल।। २४
पाहि नश्शरणापन्नान्विषज्वालाविमूर्च्छितान्।
कदम्बकाननाधीश कमलापतिपूजित।। २५
पाहि नश्शरणापन्नान् पन्नगेन प्रपीडितान्।
कर्पूरसुन्दर शिव कर्पूरात्यन्तशीतल।। २६
कर्पूरधवलाकार सर्पादस्माच्च पाहि नः।
जीवन्मुक्तिपुरेशान जीवन्मुक्तिप्रदायक।। २७
जीवन्मुक्तिं गतानस्माञ्जीवयास्माद्विषोल्बणात्।
भूलोकशिव लोकेश भूलोकामरपादप।। २८
भूलोकहर्तुर्गरलाद्भूलोकं परिपालय।
कल्याणसुन्दरपते कल्याणाद्रिधनुर्धर।। २९
कल्याणं कल्पयास्माकं कल्याणद यमान्तक।
कदम्बवनमध्यस्थ चिदम्बर विभावसो।। ३०
नितम्बिनीवामभाग दिगम्बर नमोऽस्तु ते।
एवं स्तुत्वा नमस्कृत्य भूपाद्यास्सकला जनाः।। ३१
मूललिङ्गं समालोक्य तस्थुस्सम्भ्रान्तचेतसः।
हालास्यनाथो भगवान् गङ्गाचन्द्रकलाधरः।। ३२
राज्ञः प्रजानामार्तिञ्च प्रवाहं गरलस्य च।
विलोक्याविरभूत्सद्यो लिङ्गात्सिद्धस्वरूपवान्।। ३३
अथ सर्पान्तिकं प्राप्य राज्ञा सार्धं जनैरपि।
जटाशशाङ्कज्योत्स्नाभिर्विषज्वालां व्यपोह्य च।। ३४

निस्सन्तापान् जनान् कृत्वा भूपाद्यानखिलानपि ।
कृपाकटाक्षतो वीक्ष्य प्रणतानखिलान् जनान् ।। ३५
अनन्तगुणपाण्ड्यं च सिद्धश्चादर्शनं गतः ।
भूपेन भल्लैर्भिन्नः सन् विसृष्टैश्च पुरा जवात् ।। ३६
भोगी भोगेनातिदीर्घो निर्विषत्वान्ममार च ।
मृतस्स पर्वताकारो हालास्येशशिवाज्ञया ।। ३७
नागशैल इति ख्यातो नगोऽभूद्भुवनत्रये ।
तं क्ष्वेलं मधुरीकृत्य यदाऽऽरक्षत्स तां पुरीम् ।। ३८
सुन्दरेशस्तदारभ्य विश्रुता मधुरेति सा ।
पुरसीमासमीपस्थतत्सर्पस्याभिधानतः ।। ३९
हालास्यमिति तत्क्षेत्रं वर्णयन्तीह केचन ।
राजाऽप्यद्भुतमालोक्य जनैस्सिद्धकृतं त्विदम् ।। ४०
अत्यन्तविस्मयोपेतस्सन्तोषं परमं ययौ ।
अष्टाविंशा तु लीलेयमिष्टार्थप्रतिपादिनी ।। ४१
शिष्टैर्जनैश्च श्रोतव्या तुष्टये पुष्टये सदा ।

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - सर्पहननं नाम*
*चतुस्त्रिंशोऽध्यायः*

* * *

அத்தியாயம் - 34

28. மலைப்பாம்பை அழித்தது.

குலோத்துங்கன் சிவபதமடைந்ததும் அனந்த குணபாண்டியன் சிங்காதனமேறினன். சிவபக்தி மிகுந்து ஈசனின் வழிபாட்டில் பெரிதும் ஈடுபட்ட அவனது மக்களும்

பக்தியுடன் ஈசனை வழிபட்டனர். திகம்பர ஜைனர்கள் தமது வலிவு குன்றுவதை உணர்ந்து சிவபக்தனுன அரசனையும் மக்களையுமழிப்பதற்கென அபிசார ஹோமம் செய்தனர். அதிலிருந்து ஒரு அரக்கன் தோன்றித் திகம்பரர்களைத் தனக்கு பணி அளிக்கக் கோரினுன். மலைப்பாம்பாகி விஷம் கக்கிச் சிவபக்தர்களை அழிக்கத் திகம்பரர்கள் கோரினர். பெரும் மலைப்பாம்பு மதுரையை நோக்கி வந்தது. மக்கள் அதன் விஷத்தால் மயங்கி அரசரை வேண்ட, அனந்த குணன் படையுடன் அதனை அழிக்க முற்பட்டான். ஈட்டிகளால் பல தடவை குத்தியும் அது அவற்றைப் பொருட்படுத்தாமல் முன்னேறியது. ஈசனை மக்கள் வேண்ட ஸித்தர் வடிவில் ஈசன் வெளிப்பட்டுத் தன் சடையை விரித்தாட்டி அதிலிருந்த சந்த்ர கலையாலும் கங்கை நீராலும் விஷப் பிழம்பைத் தணித்து பாம்பை அழித்துவிட்டு ஈசன் மறைந்தார். பெரும் பாம்பின் உடல் மலை போலாகி நாகமலை யாகியது. பாம்பின் விஷத்தை இனியதாகக்கியதால் மதுரா என்ற பெயர் மேலும் சிறப்பு பெற்றது. ஆலவாயர் மறுபடி விஷத்தைப் பருகி மேலும் ஆலவாயரானுர். இது இருபத்தெட்டாவது லீலை.

★ ★ ★

## पञ्चत्रिंशोऽध्यायः

## २९. पशुपर्वतकरणम्।

अगस्त्यः -

यया सुन्दरनाथश्च प्रसिद्धं पशुपर्वतम्।
अकरोद्वृषभाद्रिश्च सा लीला वर्ण्यते मया।। १
फणीन्द्रे निधनं प्राप्ते शेषवद्भीषणाकृतौ।
भीता याताश्च नग्नाद्यास्समेत्य सहसा पुनः ।। २
मन्त्रयामासुरचिरादेवमेव समीरितैः ।
अस्माकं मन्त्रसामर्थ्यादुद्भूतश्च भुजङ्गमः ।। ३

इषु प्रहारकुपितः पाण्ड्येशस्य महीपतेः ।
उद्ववाम विषं भूरि सर्वलोकप्रणाशनम् ।। ४
तद्विषं मधुरीकृत्य सुखेनास्ते स भूपतिः ।
चिरकालकृतः सर्वैरस्माभिर्मन्त्रवित्तमैः ।। ५
प्रयत्नः क्षणमात्रेण वृथाऽभूत्किल केनचित् ।
इतः परं वयं कुर्मः किमिति प्रविचार्य ते ।। ६
गामवध्यां पुनस्स्रष्टुं कुण्डं कृत्वा विधानतः ।
आभिचाराणि कर्माणि चक्रुर्होमपुरस्सरम् ।। ७
तस्मादग्नेस्समुत्पन्नो धेनुवेषधरोऽसुरः ।
नग्नैस्सम्प्रेषितो भूत्वा सपौरं पाण्ड्यभूपतिम् ।। ८
संहर्तुमाययौ वेगादचलानपि चालयन् ।
आधूयाधूय शृङ्गाग्रमतितीक्ष्णं दृढाकृतिः ।। ९
अभ्राणि भ्रामयन् रोषादाययौ मधुरां प्रति ।
खुराघातात्पर्वतांश्च चूर्णीकृत्य महाद्रुमान् ।। १०
उच्छ्वासवायुना तच्च तूर्णं दूरीचकार गौः ।
शृङ्गाग्राभ्यां महाशैलानुत्पाट्यातिबलेन च ।। ११
चिक्षेप दूरतस्सा गौस्तत्पातैः संहृता जनाः ।
अथ जानपदाः पौरा गोः कृत्यामतिभीषणाम् ।। १२
दृष्ट्वा विज्ञापयामासुः पाण्ड्यराजाय विस्मिताः ।
तच्छ्रुत्वा नृपतिर्भीतः सुन्दरेश्वरसन्निधिम् ।। १३
प्राप्य स्तुत्वा नमस्कृत्वा भक्त्या प्रार्थयति स्म तम् ।
कदम्बकाननाधीश करुणामृतसागर ।। १४
शरणागतभक्तानामार्तिहारिन् वृषध्वज ।
समस्तलोकैकविभो सर्वज्ञ शशिभूषण ।। १५

जगतां रक्षणार्थं त्वं कालकूटमहाविषम्।
अन्धकासुरमत्युग्रं कृतान्तञ्च पुरत्रयम्।। १६
कामादीनखिलान् दुष्टान् पुरा समहरः प्रभो।
एवं त्वया पालितानां जगतामतिभीतिदा।। १७
गौरेका पर्वताकारा समायाति जवेन च।
त्वमेक एनां संहर्तुं समर्थोऽन्यो न कश्चन।। १८
येन केनाप्युपायेन तां गां संहर शङ्कर।
इति विज्ञापिते भूपे स्वभक्ते भक्तवत्सलः।। १९
पार्वतीनायकश्शम्भुः क्रियां काञ्चिद्व्यधाच्छिवः।
पुरस्स्थितं ककुद्मन्तं पूज्यं पूज्यजनैस्सदा।। २०
पुरन्दरादिदेवौघैरर्चिताङ्घ्रिचतुष्टयम्।
निर्वीर्यां ताञ्च गां कर्तुं वृषभं प्रैषयद्धरः।। २१
सोऽपि सुन्दरनाथाज्ञां पालयन् परया मुदा।
औन्नत्यादतिधावल्यात् कैलासगिरिसन्निभः।। २२
अत्यद्भुतातिसौन्दर्यं वेषं धृत्वा क्षणेन च।
लिखन्नक्षत्रपदवीं कामार्त इव गर्जयन्।। २३
गोस्तस्याः पुरतो गत्वा तस्थौ वृषभदैवतः।
सा गौर्वृषभमालोक्य कामार्ताऽतीव मोहिता।। २४
तदन्तिकं समागत्य त्यक्त्वा कोपं स्म तिष्ठति।
भूतनाथपदन्यासपवित्रीकृतपृष्ठकम्।। २५
किङ्किणीजालमालाभिरलङ्कृतगलान्तरम्।
कैलासशिखरप्रख्यं ककुदं कामदायकम्।। २६
नन्दीशकरसन्नद्धसन्नाहक्षमरूपिणम्।
वृषरूपमुदाराङ्गं वीतरागादिभिर्नतम्।। २७

विश्वसंरक्षणपरं विमलाकारशोभितम्।
भद्राकारं तं विलोक्य सा गौर्वीर्यं व्यसर्जयत्।। २८
सा वीर्यपातान्निश्शक्तिर्निमीलन्नयनाऽपतत्।
पलायिषत नग्नास्ते सा गौरपि जहावसून्।। २९
पशुपर्वत इत्याख्यां धत्ते यत्र मृता च गौः।
स्वापदानप्रसिद्ध्यर्थं वृषभं वृषभाचलम्।। ३०
अकरोत्सुन्दराधीशो हालास्योत्तरदेशके।
स्वकीयं स्थूलरूपञ्च तत्र स्थाप्य वृषो महान्।। ३१
सूक्ष्मरूपेण चागत्य पुर आस्ते स पूर्ववत्।
आसीनं सुन्दराकारं सुन्दरेशपुरो वृषम्।। ३२
प्रशस्य नत्वा भूपाद्या जनास्सर्वे ययुस्ततः।
कथयन्नपदानं स्वं देव्यै देवो वृषध्वजः।। ३३
वृषमालोकयन्नेव सुखमास्ते स्वधामनि।
यत्काले वृषभाद्रिश्च समुद्भूतोऽतिपावनः।। ३४
तत्काले रघुनाथोऽपि लक्ष्मणेन समन्वितः।
सीतां हनुमता ज्ञात्वा लङ्कापुरनिवासिनीम्।। ३५
सुग्रीवेण ससैन्येन चाययौ वृषभाचलम्।
रामं द्रष्टुं चागतेन मया मलयपर्वतात्।। ३६
प्रभावं सुन्दरेशस्य ज्ञात्वा रामो महाद्भुतम्।
सुवर्णपद्मिनीं प्राप्य स्नात्वा भक्तिसमन्वितः।। ३७
सुमीनाक्षीं महादेवीं पूज्य स्तुत्वा प्रणम्य च।
सुन्दरेशमहालिङ्गमुपचारैः प्रपूज्य च।। ३८
प्रणम्य प्रार्थयामास स्वमनोरथसिद्धये।
शम्भो शङ्कर सर्वज्ञ सर्वकल्याणकारण।। ३९

करुणाकर कालारे कामितार्थप्रदायक।
कालकूटलसत्कण्ठ कदम्बवननायक॥ ४०
भूलोकशिवलोकेश पुरन्दरविमानग।
सन्ति पुण्यान्यनेकानि तव क्षेत्राणि भूतले॥ ४१
हालास्याख्यमिदं क्षेत्रमत्यन्तं महदद्भुतम्।
अनुग्रहार्थं जगतां त्वत्कृतैरपदानकैः ॥ ४२
परितः पर्वताकारैस्त्वत्प्रत्यक्षविशेषतः।
हर्तुस्सर्वाणि दुःखानि दातुस्सर्वाश्च सम्पदः॥ ४३
त्वल्लिङ्गस्य समं नास्ति जनानां दृष्टमात्रतः।
महापापौध संहर्तुः महातीर्थस्य सर्वदा॥ ४४
सर्वाः सिद्धीः संप्रदातुः तुल्यं तीर्थं न विद्यते।
कचित्क्षेत्रस्य माहात्म्यं कचिल्लिङ्गस्य वैभवम्॥ ४५
कचित्तीर्थस्य वैशिष्ट्यं हालास्ये विद्यते त्रयम्।
तस्मादत्र महासिद्धिस्सर्वेषामस्ति जन्मिनाम्॥ ४६
अस्माकमपि कार्याणां सिद्धिस्स्यादत्र निश्चयः।
हालास्येश्वर देवेश मत्कार्यमतिदुष्करम्॥ ४७
तत्सिद्धिश्च यथा सद्यो भविष्यति तथा कुरु।
इत्युक्त्वा साञ्जली रामस्तस्थौ लिङ्गं विलोकयन्॥ ४८
तदानीं मधुरा वाणी समुद्भूता महेशितुः।
महावीर महासत्व राजपुङ्गव राघव॥ ४९
मल्लिङ्गाग्रेयदेशं त्वं गत्वा सेनासमन्वितः।
सागरे सेतुबन्धं च कृत्वा लङ्कां प्रविश्य च॥ ५०
संहृत्य राक्षसान् सर्वान् कुम्भकर्णं च रावणम्।
परिगृह्य कलत्रञ्च पातिव्रत्यपरायणम्॥ ५१

अयोध्या नगरीं प्राप्य सम्पदा यक्षराण्णिभः ।
चिरं पृथ्वीं पालयित्वा पुनर्वैकुण्ठमाविश ।। ५२
एवं शम्भोर्वचश्श्रुत्वा बध्वा चेलाञ्चलेन च ।
गत्वा तं देशमाग्नेयं ससुग्रीवश्च सानुजः ।। ५३
पर्वतैस्सिकताभिश्च सेतुं बध्वा महार्णवे ।
सानुगं सानुजं हत्वा रावणं वरदर्पितम् ।। ५४
विभीषणाय दत्वाऽथ सर्वां तां रावणश्रियम् ।
शिवलिङ्गं प्रतिष्ठाप्य रामनाथाभिधानतः ।। ५५
परित्यक्ताघसंघश्च सुन्दरेशं प्रणम्य च ।
सम्प्राप्य सम्पदस्सर्वास्स्वपुरीं सम्प्रविश्य च ।। ५६
चिरं भुक्त्वा महाभोगान् वैकुण्ठं प्राप राघवः ।
एवं तत्कालवृत्तान्तः प्रसङ्गात्कथितो मया ।। ५७
श्रुतमात्रादघहरो रामायणकथारसः ।
इति वः कथिता लीला चैकोनत्रिंशिका मया ।। ५८
सद्यस्सर्वाघसंहर्त्री श्रोतॄणां शान्तिपुष्टिदा ।

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - नग्रधेनुनिपातनं नाम*
*पञ्चत्रिंशोऽध्यायः*

★ ★ ★

## அத்தியாயம் - 35

## 29. பசு மலையானது

*மலைப் பாம்பு அழிந்ததும் பயந்த திகம்பரர்கள் மறுபடி கூடி ஆலோசித்து அபிசாரஹோமம் செய்ய, அதிலிருந்து ஒரு அஸுரன் பசுவாக வெளியானான். மதுரை மக்களையும் அரசனையும் மாய்க்கும்படி அதனை ஜைனர்கள் ஏவினர். அந்தப்*

பசு கொம்புகளால் மலைகளைப் புரட்டித் தூர எறிந்தது. நகரம் அழியத் தொடங்கியது. மக்களின் வேண்டுகோளை ஏற்ற அரசன் ஈசனை வழிபட ஈசன் தன் வாஹனமான விருஷபத்தை ஏவ, அவர் காளை வடிவில் வெளிப்பட்டார். அந்தக் காளையை க் கண்டதும் இயல்பையொட்டி பசு மயங்கிக் காளையின் அருகே சென்று நின்றது. பசுவின் அபிசார வேகமும் கோபமும் மறைந்தன. காளை தன் வாலிபத்தால் பசுவை அடக்கியது. காளையின் வேகத்தைத்தாங்க இயலாமல் பசு கீழே விழுந்து இறந்தது. அந்த பசு மலையாகியது. அதைப் பசுமலை என்பர். காளை வடிவிலிருந்த விருஷபமும் ஸ்தூலமாக விருஷபாசல(நந்தி மலை)மாகி, ஸூக்ஷ்ம வடிவில் மூல லிங்கத்தின் முன் நின்றார்.

திகம்பரர் ஓடி மறைந்தனர். ஸீதையைத் தேடிவந்த ராமன் ஹநுமானது உதவியால் ஸீதை இருக்குமிடமான இலங்கையை நோக்கிச் செல்லும் போது ஹாலாஸ்யம் வந்து ஈசனை வழிபட்டு தன் கார்யம் ஸித்திக்க அருள் பெற்றார். சில தீர்த்தங்களால் சிறப்புற்றவை. சில க்ஷேத்ரத்தால் சிறப்படைந்தவை. சில லிங்கத்தால் புகழடைந்தன. ஹாலாஸ்யமோ மூன்றாலும் சிறப்பு பெற்றது. ராமனது வழிபாட்டை பெற்ற சிவன் அசரீரியாகக் கடலில் அணை கட்டி இலங்கை சென்று ராவணனை அவனது பரிவாரத்துடன் அழித்து சீதையை மீட்டு அயோத்தியை ஆள வழிகாட்டினார். ராமனும் அவ்வாறே செய்து விபீஷணனுக்கு இலங்கை அரசைத்தந்து அயோத்தியில் பல்லாயிர ஆண்டுகள் அரசாண்டார். இது இருபத்தொன்பதாவது லீலை.

★ ★ ★

## षट्त्रिंशोऽध्यायः

## ३०. सेनाप्रदर्शनम्

**अगस्त्यः -**

**यया सुमहतीः सेनाः राज्ञेऽदर्शयदीश्वरः ।**
**सादिरूपो लीलया तां मुनयः कथयामि वः ॥ १**

अनन्तगुण भूपान्ते तत्पुत्रः कुलभूषणः।
राज्यं चकार नीत्या च शिवभक्त्याऽप्यतुल्यया ॥ २
तस्य सेनापतिस्त्वासीच्छूरः कश्चिद्भटाग्रणीः।
सुन्दरेशाध्यानरतः सुन्दरेश्वरसेवकः ॥ ३
नाम्ना सुन्दरसामन्त इति लोके प्रथां ययौ।
तत्काले चेदिराजाख्यः किरातानां नियामकः ॥ ४
कश्चिद्वन्यपतिर्योद्धुं पाण्ड्येनोद्योगमातनोत्।
तच्छ्रुत्वा पाण्ड्यभूपालः सेनानां स्वीचिकीर्षया ॥ ५
तं भटोत्तममाहूय रहस्येवमवोचत।
क्षोभार्थमस्मद्देशस्य त्वायास्यति समुद्यतः ॥ ६
चेदिराजोऽतिबलवान् बलैः सार्धमिति श्रुतम्।
तदर्थं भूयसीं सेनां नानाजातिसमन्विताम् ॥ ७
मेलयास्मज्जयार्थं त्वं विक्रमातिशयान्वितम्।
अपेक्षितं द्रव्यजातं कोशागाराद्गृहाण च ॥ ८
इत्युक्त्वाऽऽनाय्य ताम्बूलं दत्वा भटवराय च।
प्रेषयामास तं सद्यः कुलभूषणभूपतिः ॥ ९
करिष्येऽहं तथेत्युक्त्वा प्रणम्य द्राक्स निर्ययौ।
तस्य द्रागागमनं दृष्ट्वा मुमुदे भूपतिस्तदा ॥ १०
सद्यो भटाग्रणीः प्राप्य कोशागारं महीभुजः।
यावत् स्थितं धनं तत्र तावत्सर्वं प्रगृह्य सः ॥ ११
संवाह्य किङ्करैस्सद्यस्सेनास्वीकरणाय च।
गमिष्यामीति सचिवैस्सहोक्त्वा तैश्च मानितः ॥ १२
सहायैस्सम्प्रविश्याथ सुन्दरेश्वरमन्दिरम्।
प्रणम्य प्रार्थयामास हालास्येश्वरमीश्वरम् ॥ १३

29

स्वामिन् सर्वजगन्नाथ मन्नायक महेश्वर।
नमस्तुभ्यं सुन्दरेश त्वमेव शरणं मम ।। १४
त्वद्भक्तेभ्यश्च तुभ्यञ्च दत्वा सर्वधनानि च।
राज्ञश्शत्रुवधं सद्यः कर्तुमुद्युक्तवानहम्।। १५
त्वं च सेनां बहुविधां दर्शयित्वा महीपतेः ।
कुरुष्वारिवधादीनि तत्कार्याण्यपि शङ्कर ।। १६
इति विज्ञाप्य सोमेशं नमस्कृत्य पुनः पुनः ।
कारयित्वा महापूजां शम्भोर्विभवविस्तरैः ।। १७
स्वालयं सम्प्रविश्याथ शिवभक्तानभोजयत्।
स्वयं च भुक्तवान्पश्चात्तच्छेषमतिपावनम्।। १८
अथ सुन्दरसामन्तस्समादाय धनं बहु।
रहस्स्थले समाहूय शिवभक्तान् द्विजोत्तमान्।। १९
यज्ञार्थं च विवाहार्थं मौञ्जीबन्धनकर्मणे।
दारिद्र्योन्मूलनार्थं च ददौ तेभ्यो धनं बहु ।। २०
शम्भोर्भक्तान्प्रतिदिनमभोजयदनारतम्।
पयोदधिघृतक्षौद्रशर्करापूपषड्रसैः ।। २१
प्रासादे गोपुरे साले परिवारालयादिषु।
यज्जीर्णमभवत्तेन सम्यक्तत्तु नवीकृतम्।। २२
शताङ्घ्रिमण्डपमपि सहस्रस्तम्भमण्डपम्।
अकारयद्रथमपि सर्वलक्षणलक्षितम्।। २३
शतं सहस्रमयुतमधिकं वा दिने दिने।
व्ययीकरोति धर्मार्थे राज्ञो वसुभटाग्रणीः ।। २४
भटाः केचित्प्रेषिताश्च तेन देशान्तरेषु च।
सेनास्वीकरणायेति मिथ्योक्तं मन्त्रिणां पुरः ।। २५

तत्कापट्यं न व्यजानन्मन्त्रिणस्ते महीभुजः ।
एवं हालास्यनाथस्य तद्भक्तिप्रवणात्मनाम् ।। २६
भक्त्या सुन्दरसामन्तस्सन्तोषमकरोद्धनैः ।
गतेषु षट्सु मासेषु तमाहूय महीपतिः ।। २७
कियन्त इति पप्रच्छ संगृहीतास्त्वया भटाः ।
सुन्दरेशं हृदि ध्यायन् सोऽप्येवं सुदृढोऽब्रवीत् ।। २८
सङ्गृहीता मया सेना पराक्रमसमन्विता ।
मत्कार्यं सुन्दराधीशस्सर्वं सम्पादयिष्यति ।। २९
इति श्रुत्वा तस्य वाक्यमब्रवीत्कुलभूषणः ।
हालास्यनाथो भगवान् वर्तते भक्तवत्सलः ।। ३०
जानाम्येव न सन्देहस्तवेष्टं पूरयिष्यति ।
श्वस्त्वया सङ्गृहीतां च सेनां दर्शय सैन्यप ।। ३१
तथाऽस्त्वित्यभिधायैव निर्विकारस्स निर्गतः ।
महातीर्थे समाचम्य कृतभस्मत्रिपुण्ड्रकः ।। ३२
स्वनाथं सुन्दराधीशं नत्वा स्तुत्वैवमब्रवीत् ।
त्वद्भक्तानां पूजया च त्वच्छ्रीचरणपूजया ।। ३३
राज्ञो वसु च सम्पूर्णं निश्शेषमगमद्व्ययम् ।
नृपोक्तसेनां स्वीकर्तुं न किञ्चिद्विद्यते वसु ।। ३४
इतः परं किं कर्तव्यमिति प्रोक्ते भटोत्तमे ।
शम्भोः खादभवद्वाणी सुव्यक्ता सुस्वना तदा ।। ३५
धीमन् सुन्दरसामन्त भक्तिरत्नमहोदधे ।
धीरो भव प्रभातेऽहं नानाभूषण भूषितान् ।। ३६
नानाविधायुधधराननन्तानद्भुताकृतीन् ।
सुभटान् दर्शयिष्यामि कुलभूषणभूपतेः ।। ३७

स भटान् तान् समालोक्य नृपः प्रीतश्च विस्मितः ।
तुभ्यं सर्वाधिपत्यं च दास्यत्यम्बरभूषणैः ।। ३८
इति शम्भोर्वचश्श्रुत्वा नत्वा स्तुत्वा भटाग्रणीः ।
सुप्रीतस्स्वालयं प्राप्य पत्न्यै वृत्तान्तमब्रवीत् ।। ३९
पत्नी चान्तर्भयं मुक्त्वा जगादैवं सुधीरधीः ।
धैर्यमालम्ब्य तिष्ठ त्वं धर्मो रक्षति धर्मिणम् ।। ४०
साहाय्यं सुन्दरेशस्ते करिष्यति न संशयः ।
इति पत्नीवचश्श्रुत्वा प्रीतिधैर्यसमन्वितः ।। ४१
भुक्त्वा भक्तजनैस्सार्धमासीच्छम्भुगिरं स्मरन् ।
परेद्युरुदयात्पूर्वं साम्बं हालास्यसुन्दरम् ।। ४२
प्रणम्य प्रार्थयित्वेष्टं सुप्रीतस्समलङ्कृतम् ।
भटैः कतिपयैर्युक्तो धीरो गेहाद्विनिर्ययौ ।। ४३
महार्थदं महालिङ्गं मनसा परिशीलयन् ।
मन्दं मन्दं महीपस्य प्रतस्थे मन्दिरं प्रति ।४४
मध्येमार्गं च महतीं चिन्तां प्राप्य स्थिते सति ।
तस्मिन् सुन्दरसामन्ते किमित्यग्रे भविष्यति ।। ४५
कारुण्यमूर्तिर्भगवान् कदम्बवननायकः ।
नन्दीशप्रमुखान् सर्वान् कुण्डोदरमुखानपि ।। ४६
प्रमथान्भूतसङ्घांश्च पुनर्बहुविधान् गणान् ।
भक्तकार्यसुसिद्ध्यर्थं प्राहिणोद्भक्तवत्सलः ।। ४७
ते सर्वे मुदितास्सन्तस्सद्भटाकारतां गताः ।
स्वशरीराण्यलङ्कृत्य सुगन्धाभरणाम्बरैः ।। ४८
निशितायुधहस्ताश्च सहसैव समाययुः ।
काहल्यः पटहा भेर्यो जुघुषुस्तुमुलं पुरः ।। ४९

ध्वजाश्चामरसंयुक्ता नानाचिह्नसमन्विताः ।
अनन्तरं प्रादुरासन् पुरोगतगणैर्धृताः ॥ ५०
केचिच्च दण्डहस्ताश्च कुन्तहस्तास्तथा परे ।
शरचापलसद्धस्ताः खड्गचर्मधराः परे ॥ ५१
अपरे प्रासहस्ताश्च केचिन्मुद्गरपाणयः ।
भ्रमच्चक्रलसद्धस्ता असिधेनुधराः परे ॥ ५२
गणा बहुविधा एवं विविधायुधपाणयः ।
कुर्वन्तो धावनं वक्रं समायातास्सहस्रशः ॥ ५३
नन्दिभृङ्गिमहाकालप्रमुखा गणनायकाः ।
अनेकैस्तुरगारूढैः परितः परिसेविताः ॥ ५४
अलङ्कृतानुत्तमाश्वानधिरुह्य समाययुः ।
भटाग्रणीस्तु तान्दृष्ट्वा विस्मितस्तुष्टमानसः ॥ ५५
वेगेन राजसदनं प्राप प्राप्तमनोरथः ।
मेदिनी निचिता सैन्यैस्सुपक्वकळमैरिव ॥ ५६
राजाऽपि घोषं श्रुत्वाऽथ निर्गत्यान्तः पुराद्द्रुतम् ।
भद्रासनं चाध्युवास बहिरास्थानमण्डपे ॥ ५७
सचिवास्तस्य निकटे तस्थुस्सेनादिदृक्षवः ।
तदा सुन्दरसामन्तस्स्वर्णवेत्रलसत्करः ॥ ५८
सेनामध्यगतो भूत्वा सम्भ्रमातिशयान्वितः ।
अत्र तिष्ठात्र तिष्ठेति मन्दमाताड्य वेत्रतः ॥ ५९
पङ्क्तिक्रमेण विविधान् गणानस्थापयत्पुरः ।
सन्तोषभरितो राजा तदा तं प्राह सैन्यपम् ॥ ६०
भो भो सुन्दरसामन्त भवान् शूरतमः खलु ।
बर्ही नानाविधां सेनां पृथग्दर्शय मेऽधुना ॥ ६१

इति राजवचश्श्रुत्वा ध्यायन् सुन्दरनायकम्।
क्रमात्स दर्शयामास सेनामाश्चर्यदायिनीम्।। ६२
पश्य पश्य महाराज कुलभूषण भूपते।
एते कलिङ्गदेशीया आन्ध्राः कर्णाटका इमे।। ६३
अस्मद्देशोद्भवा एते महाबलपराक्रमाः।
काञ्चीदेशोद्भवा एते बलशौर्यसमन्विताः।। ६४
महाराष्ट्रोद्भवा एते महाविक्रमसंयुताः।
एते मगधसंभूता मालवास्तुलुवा इमे।। ६५
वङ्गालसम्भवा एते व्याधा एते भयङ्कराः।
अतिदीर्घा अतिस्थूला अतिशौर्यबलान्विताः।। ६६
एते काश्मीरदेशस्था धनलोभादिहागताः।
विन्ध्यपर्वतमध्यस्थाः शबरा अतुला बलैः।। ६७
समाहूता इमे सर्वे मयार्पितधनेन च।
एवं क्रमेण विविधां सेनां वीर्यसमन्विताम्।। ६८
अदर्शयत्स सेनानीरत्युद्भुतमनोहराम्।
राजा च सचिवास्सर्वे दृष्ट्वा तां विस्मयं ययुः।। ६९
स च सुन्दरसामन्तस्सम्प्रापात्यन्तविस्मयम्।
आत्ताश्वसादिवेषस्सन्कलयन् कुन्तमद्भुतम्।। ७०
नन्दीशप्रमुखैस्सर्वैः संवृतस्सुन्दरेश्वरः।
सच्छत्रो वेदतुरगसमारूढः क्वचित्स्थितः।। ७१
तं विलोक्यातिसौन्दर्यसंयुक्तं सोमसुन्दरम्।
कोऽयं सुन्दरसामन्तेत्यपृच्छत्कुलभूषणः।। ७२
हर्षातिरेकसम्भ्रान्तचेताः प्राह स तं तदा।
शृणु मन्नाथ विज्ञप्तिं मदीयां मन्त्रिभिस्सह।। ७३

न जाने त्वीदृशीं सेनामेवं च मधुराकृतिम्।
इति तद्वचनं श्रुत्वा पाण्ड्येशश्चातिविस्मितः ॥ ७४
को वा जानाति तत्त्वेन सेनां बहुविधामिमाम्।
इत्युक्त्वा सादिवर्यं च समाहूय गणेश्वरैः ॥ ७५
अत्युत्तमान्यम्बराणि प्रददौ भूषणानि च।
गृहीत्वा तानि सर्वाणि भक्तानुग्रहसुक्षमः ॥ ७६
प्रदाय गणनाथेभ्यस्स्वयमप्यथ धारयन्।
धारासु धावयन्नश्वं स्वकीयमतिसम्भ्रमम्॥ ७७
सेनामध्यं प्रविश्याथ सहसैव तिरोदधे।
तस्मिन् समय आगत्य कश्चिद्दूतस्तमब्रवीत्॥ ७८
नाथ वन्याधिपश्शत्रुरस्माकं हरिणा हतः।
तद्वचस्सचिवैस्सार्धं श्रुत्वा पाण्ड्यस्सुविस्मितः ॥ ७९
अथ सुन्दरसामन्तं सत्कृत्याम्बरभूषणैः।
तस्मै सर्वाधिपत्यं च दत्वा प्राह स भूपतिः ॥ ८०
युद्धकार्यं कृतमभून्नैषा क्लेश्या पताकिनी।
यथादेशं गच्छतेति प्रेषयाशु भटोत्तमान्॥ ८१
इति राजाज्ञया सद्यस्स निर्गत्य नृपान्तिकात्।
गच्छ गच्छेति सर्वांस्तान् भटान् सेनापतिर्जगौ॥ ८२
क्षणादन्तर्हिता सेना नृणां विस्मयकारिणी।
अन्तर्धानं क्षणाद्दृष्ट्वा विस्मिताश्च नृपादयः ॥ ८३
हालास्येश्वरलीलेति निश्चिक्युर्निखिला जनाः।
भटाग्रणीमपि तदा पूजयन्ति महेशवत्॥ ८४
स च सुन्दरसामन्तो मज्जन् सन्तोषसागरे।
सुन्दरेश्वरमभ्येत्य सानन्दं प्रणिपत्य च॥ ८५

वाणिज्येऽतिप्रवीणश्च धर्ममार्गमलङ्घयन्।
पत्न्या सुशीलया सार्धं सुखं जीवति सत्यवाक्॥ ४
अपत्यं नैव तस्यासीज्जन्मान्तरकृतांहसा।
स्वस्रीयं कञ्चिदादाय पुत्रत्वेन स विड्वरः ॥ ५
शिशुं सर्वगुणोपेतं तमेवावर्द्धयन्मुदा।
कदाचित्क्रुद्धया स्वस्रा भर्त्सितश्चोरुसंभवः ॥ ६
अपुत्रत्वाद्भाग्यहीनो मया त्वं पुत्रवानिति।
आकर्ण्य कर्णशल्यं तद्वाक्यमत्यन्त दुःखितः॥ ७
जन्मान्तरे वा पुत्रार्थं तपस्तप्तुं समुद्यतः ।
भागिनेयाय शिशवे दत्वा गेहादिकं धनम्॥ ८
वैश्योऽतिवृद्धः पत्न्या च तपोवनमगादथ।
तस्मिन् गते ज्ञातयोऽस्य समगृह्णन् गृहादिकम्॥ ९
भगिनीभागिनेयाभ्यां ते ददुर्नैव जीवनम्।
सा सपुत्रा सती ज्ञातीनरोधयदतिक्रुधा॥ १०
तां प्रभर्त्स्य प्रहृत्याथ प्रबलाश्रयसंयुताः ।
गृहकेदारगोरत्नकनकादिषु वस्तुषु॥ ११
सपुत्रायै तद्भगिन्यै न किञ्चिदपि ते ददुः ।
साऽथ दैवसहायेन जेतव्या ज्ञातयोऽधुना॥ १२
इति निश्चित्य मनसा सुन्दरेशालयं ययौ।
संस्नाप्य तनयं तीर्थे स्वयं स्नात्वाऽऽदरेण सा॥ १३
परिधायाम्बरं धौतं भस्मना पाण्डरीकृता।
सुन्दरेशपदाम्भोजे भक्त्या परमया युता॥ १४
पञ्चाक्षरं परं मन्त्रमुच्चरन्ती मुहुर्मुहुः ।
सुन्दरेश्वरलिङ्गस्य पुरः पुत्रं निपात्य च॥ १५

देव देव कृपाराशे धर्ममार्गप्रवर्तक।
क्षेमं कुर्विति शंसन्ती प्रणनाम तलेऽवशा ।। १६
तस्यास्तदानीं स्वापोऽभूत् स्वप्ने शम्भुरथावदत्।
उत्तिष्ठाद्य गृहं गच्छ बालेन त्वं सहाबले ।। १७
नय धर्मासनं ज्ञातीन् रुध्वा पाकालयं दृढम्।
गृहादिकं तव भ्रातुर्ज्ञात्या हृतमहं ध्रुवम्।। १८
व्यवहारेण निर्जित्य तुभ्यं दास्याम्ययत्नतः ।
इत्युक्त्वा विप्रवेषस्तां वनितां सुन्दरेश्वरः ।। १९
क्षणेनादृश्यतामाप भक्तानामभयप्रदः ।
योषाऽथ सहसोद्बुध्य विस्मिता पुलकाञ्चिता ।। २०
चिन्तयन्त्यद्भुतं स्वप्नं सानन्दजललोचना।
पुनः पुनः प्रणम्येशं भक्त्या सा भक्तवत्सलम्।। २१
आदाय स्वात्मजं साध्वी प्रार्थ्य कार्यस्य सिद्धये।
स्वगेहमथ संप्राप्य भुक्त्वा चास्ते सुखेन वै ।। २२
श्वोभूते प्रातरुत्थाय पुत्रेण सहिता सती।
देवीं देवं क्रमान्नत्वा ज्ञातीनां प्राप्य साऽऽलयान्।। २३
यथोक्तं सुन्दरेशेन पाकशालानिरोधनम्।
अकरोन्निर्भया साम्बं स्मरन्ती सुन्दरेश्वरम्।। २४
ज्ञातयो बहवस्सर्वे सम्भूय धनिनां वराः ।
ससुतां भूतले क्षिप्त्वा भर्त्सयित्वा बलाच्च ताम्।। २५
धर्मासनान्तिके नीत्वाऽ कुर्वं स्तेऽस्याः पराभवम्।
वाग्भिः पारुष्ययुक्ताभिः पाणिभिश्चरणैरपि ।। २६
भक्तार्तिभञ्जनपरः परिपूर्णः परात्परः ।
नीपाटवीनीलकण्ठः कारुण्यातिशयान्वितः ।। २७

देवो मातुलवेषस्सन् तद्बालस्याबलस्य च।
आययौ वैश्यरूपी स वृद्धत्वातिप्रकम्पितः ॥ २८
भगिनीभागिनेयौ च यत्रास्तां तत्र चागतः।
आलिङ्ग्य तौ रोदिति स्म द्रावयन् सर्वमानसम्॥ २९
स बालो मातुलं दृष्ट्वा साश्रुपातं ननन्द च।
तद्ज्ञातिचरितं भ्रात्रे स्वसाऽवोचत्सविस्तरम्॥ ३०
खेदो मास्त्विति तौ तोष्य प्राप्तोऽस्म्यहमिमान् खलान्।
निर्जित्य सदसि क्रुद्धान् करिष्ये युवयोर्जयम्॥ ३१
इत्युक्त्वा मातुलाकारं दधन्नीपाटवीपतिः।
भगिनीभागिनेयाभ्यां प्राप धर्मासनं ततः॥ ३२
तं दृष्ट्वा ज्ञातयस्सर्वे त्वन्तर्भीता बहिर्दृढाः।
अयं न ज्ञातिरस्माकमित्यूचुरथ ते विशः॥ ३३
तत् श्रुत्वा प्राड्विवाकास्तु मातुल त्वं भणाद्य नः।
व्यवहारपदं कृत्स्नं वक्ष्यामोऽथेति तेऽब्रुवन्॥ ३४
तथेति मातुलाकारस्सुन्दरेशो दयानिधिः।
गृहाणां क्षेत्रजालस्य दासीदासादिकस्य च॥ ३५
नामान्यपि च चिह्नानि ज्ञातीनां प्रत्ययो यथा।
तथा सर्वाण्यकथयत्सर्वज्ञस्सर्वसम्मतः॥ ३६
आकर्ण्य सर्वे तत्रोक्तं नामचिह्नादिकं क्रमात्।
राजदण्डभयात्सद्यो ज्ञातयोऽन्तर्द्धिमाप्नुवन्॥ ३७
अथ सुन्दरनाथश्च लीलया वैश्यवेषभाक्।
प्राह धर्मासनाध्यक्षान् वचसा मधुरेण सः॥ ३८
पश्यन्तु प्राड्विवाकाश्च ज्ञातीनन्यायतत्परान्।
पुत्रत्वेन गृहीतोऽयं भागिनेयः पुरा मया॥ ३९

तदानीं दृष्टवन्तस्ते ज्ञातयस्तद्विधानकम्।
तथाऽप्येवंविधं चक्रुर्लाभाद्दुर्व्यवहारकम्॥ ४०
तेषाञ्चरित्रं जानन्तु भवन्तः पण्डितोत्तमाः।
इत्याकर्ण्य वचस्तस्य शम्भोर्वैश्यस्वरूपितणः॥ ४१
विस्मिताश्चाभवन् सर्वे तेषां दृष्ट्वा पलायनम्।
अथ धर्मासनस्थास्ते सर्वे प्राहुर्विचक्षणाः॥ ४२
क्षम्यतामपराधस्तैः कृतो यो ज्ञातिभिस्त्वया।
भगिनीभागिनेयाभ्यां त्वं गच्छात्मीयमन्दिरम्॥ ४३
पुत्रस्वीकारविधिना गृहीतायार्भकाय च।
प्रयच्छ गृहकेदाररत्नहेमादिवस्तु च॥ ४४
प्रार्थितस्त्विति धर्मज्ञैर्वैश्येशो वृद्धताङ्गतः।
स्वस्रीयं तं स्वसारं तामादाय शनकैर्व्रजन्। ४५
वेश्म प्रविश्य सर्वाभिस्सम्पद्भिः परिपूरितम्।
तत्र तौ स्थापयित्वाऽथ वैश्यस्सद्यस्तिरोदधे॥ ४६
इति मातुलवेषस्सञ्ज्ञातीन् जित्वाऽतिदुर्मदान्।
वैश्यार्भकाय प्रददौ गेहाद्यं सुन्दरेश्वरः॥ ४७
तिरोधानानन्तरन्तु विशस्तस्याखिला जनाः।
सुन्दरेश्वर एवायमित्यजानंस्तमूरुजम्॥ ४८
तमुदन्तं नृपश्श्रुत्वा सुन्दरेशाङ्घ्रिशेखरः।
तौ शम्भुभक्तौ सम्पूज्य ताभ्यां ग्रामादिकं ददौ॥ ४९
सुन्दरेश्वरदेवस्य भक्तवात्सल्यमद्भुतम्।
दृष्ट्वाऽतिविस्मितास्सर्वे तस्मिन् भक्तिं जना व्यधुः॥ ५०
सुन्दरेश्वरपादाब्जे सुन्दरेशाङ्घ्रिशेखरः।
अत्यन्तं भक्तिमान् भूत्वा प्रासादं गोपुरादिकम्॥ ५१

स्वर्णरत्नमयं सर्वं कारयित्वा विशेषतः ।
प्रातस्सायं प्रतिदिनं तत्सेवामकरोन्मुदा ।। ५२
सेवाप्रियस्सुन्दरेशस्तस्मै दत्वाऽधिकां श्रियम्।
पुत्रं वरगुणाख्यञ्च सार्थनामानमार्पयत्।। ५३
पुत्रलाभातिसन्तुष्टः श्रीमान् पाण्ड्यमहीपतिः ।
परिपाल्य चिरं पृथ्वीं शैवीं तनुमथाविशत्।। ५४
सुन्दरेशितुरेकोना या चत्वारिंशिका मता ।
सेयं लीला मया प्रोक्ता सर्वदुःखविनाशिनी ।। ५५

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां हालास्यमाहात्म्ये - वैश्यशिशोर्मातुलरूपेणाविर्भावो नाम पञ्चचत्वारिंशोऽध्यायः*

★ ★ ★

## அத்தியாயம்-45

## 39. மாமனாகி வைசியனைக் காப்பாற்றுதல்

*மதுரையில் அர்த்தபதி (தனபதி) என்ற வைசியன் ஸுசீலை என்ற மனைவியுடன் வாழ்ந்தான். அவன் மகப் பேறு பெறாததால் தன் தங்கையின் மகனைத் தன் புதல்வனாக்கிக் கொண்டான். காரணமின்றி கோபம் கொண்ட ஸகோதரி தன் அண்ணனை துர்ப்பாக்கிய சாலி என்றும் என்னால் தான் உனக்கு வாரிசு கிடைத்தது எனவும் அவமதித்தாள். அடுத்த பிறவியிலாவது புத்திர பாக்கியம் பெறுவேன்என உறுதி பூண்டு அர்த்தபதி தனது மகனாக ஏற்றுக் கொண்டவனுக்குத் தன் செல்வம் அனைத்தையும் அளித்து தவமியற்ற மனைவியுடன் காட்டுக்குச்சென்றான். அவன் அகன்றதும் அவனது உறவினர்கள் வீடு முதலியவற்றைத் தங்கையிடமிருந்து பறித்துச் சென்றனர். ஈசனின் அருள் பெற்று*

உறவினரிடமிருந்து தன் சொத்தை மீட்பேன் என்று உறுதி பூண்ட தங்கை தன் மகனுடன் பொற்றாமரைக் குளத்தில் நீராடித் தூய ஆடை உடுத்தி ஸுந்தரேச்வரரின் திருவடிகளைச் சரணடைந்து பஞ்சாக்ஷர ஜபத்துடன் ஆழ்ந்த பக்தியுடன் வழிபட்டாள். கனவில் வந்த ஈசன், ''வீட்டின் சமையற் கட்டில் உறுதியுடன் தங்குவாய். உன்னைத் தடுப்பவர்களை நீதி ஸ்தலத்திற்கு இட்டுச் செல். அங்கு வாதாடி அதனை உனக்கு நான் மீட்டுத் தருகிறேன்'' என்றார். மறுநாள் காலை சமையற் கட்டிலிருந்து அவளை வலிவுடன் அகற்றி அவமானப்படுத்திய உறவினர் தர்மாஸனத்திற்கு இழுத்துச் சென்றனர். நீதிபதியின்முன் அவளைப் பற்றிக் குற்றம் சாட்டினர். அப்போது ஈசன் அர்த்த பதியின் வேஷத்தில் வந்து தன் செல்வம் அனைத்தையும் தன் தங்கையின் மகனுக்குத் தானே மனமுவந்து அளித்துத் தன் மகனாக்கிக் கொண்டதை விளக்கினார். உறவினரோ இவன் மாமன் அல்ல. மாமனின் வேடமேந்திய வேறொருவன் என்பதால் தன்னை மாமன் என நிரூபித்துக் கொள்ள வேண்டுமென்று வாதிட்டனர். தன் சொத்து அனைத்தின் விவரம், தனது பணியாட்களின் பெயர் முதலியவை, இவற்றின் அடையாளம் முதலியவற்றை உறவினர் நம்பும்படி விளக்க, வாதிட்ட உறவினர் நீதிபதியின் கோபத்திற்கு ஆளாகப்பயந்து ஓடிவிட்டனர். தங்கையையும் மருமகனையும் எல்லா உரிமைகளையும் பெறச் செய்து தன் வீட்டில் அமர்த்திய அர்த்தபதி வேடத்திலிருந்து ஈசன் மறைந்தார். மக்களுக்கும் சாட்சி சொல்லவந்தவர் ஈசனே என்பது புலனாயிற்று. அரசனும் இதனைக் கேட்டறிந்து அவ்விருவருக்கும் மேலும் பல உதவிகளைச் செய்தான். தன் மகன் வர குண பாண்டியனிடம் அரசை ஒப்படைத்துவிட்டு ஸுந்தர பாத சேகரனும் சிவபதம் பெற்றான். இது முப்பத்தொன்பதாவது லீலை.

★ ★ ★

## षट्चत्वारिंशोऽध्यायः

# ४०. ब्रह्महत्यापापविमोचनम्

यया तु लीलया देवो ब्रह्महत्यार्तिनाशनम्।
अकरोत्पाण्ड्यभूपस्य तां शृण्वन्तु मुनीश्वराः ॥ १
श्रीमान्वरगुणः पाण्ड्यः पित्रा दत्तां वसुन्धराम्।
राजलक्ष्मीमपि प्राप्य बभौ विष्णुरिवापरः ॥ २
वेदादिविद्यारूपिण्या सरस्वत्याऽऽननस्थया।
प्रजास्वत्यन्तदयया प्रजापतिरिवापरः ॥ ३
सत्याच्च सर्वज्ञतया जितेन्द्रियतयाऽनिशम्।
अपरश्शङ्कर इव राजते राजवन्दितः ॥ ४
बिडौजसा विक्रमेण राजराजेन सम्पदा।
कन्दर्पेण समः कान्त्या भासा भास्करसन्निभः ॥ ५
रथैर्गजैश्च तुरगैरनन्तैश्च बलैर्युतः।
स महैश्वर्यसंयुक्तो राज्यं चक्रे सनीतिकम् ॥ ६
देवचूडामणिं देवं शङ्करं सुन्दरेश्वरम्।
सर्वसम्पत्प्रदं सद्यस्समस्तार्तिहरं हरम् ॥ ७
पूर्वं वरगुणाभिख्यः पाण्ड्यवंशशिखामणिः।
संसेव्यानुदिनं पश्चात् स्वकृत्यानि मुदाऽकरोत् ॥ ८
एकदा मृगयाहेतोस्सन्नद्धः प्राविशद्वनम्।
इतस्ततः परिभ्रम्य निन्ये तत्रैव वासरम् ॥ ९
रात्रौ निवृत्तस्स्वपुरीं मृगयाभ्रान्तिमोहितः।
मध्येमार्गं शयानञ्च द्विजं कञ्चिदलक्षयत् ॥ १०

स तुरङ्गपदाक्रान्तः क्रन्दन् सद्यो जहावसून्।
अजानंस्तद्वधं राजा सद्म प्राप्य सुखं स्थितः ।। ११
प्रभाते भूसुरास्सर्वे सम्भूय द्वारि भूपतेः ।।
अकुर्वन्त भिया क्रोशं प्रेतमास्थाप्य तत्र तु ।। १२
अथ श्रुत्वा महाघोषं विप्राणां पाण्ड्यभूपतिः ।
समीपस्थांश्च सचिवान् किमेतदिति सोऽब्रवीत् ।। १३
ते सर्वे शीघ्रमागत्य श्रुत्वा विप्रवचांसि च ।
सान्त्ववादेन सन्तोष्य द्रव्यैर्वस्त्रादिभिश्च तान् ।। १४
प्रेषयित्वाऽथ संस्कर्तुं तं प्रेतं भूसुरान् द्रुतम्।
व्यथितास्सहसा गत्वा राज्ञे वृत्तान्तमब्रुवन् ।। १५
श्रुत्वा तं दुःखितो राजा किङ्कर्तव्यमितः परम्।
इति चिन्तान्वितश्चासीच्चिन्तातप्ताश्च मन्त्रिणः ।। १६
पुरोहितमुखास्सर्वे समागत्य विचक्षणाः ।
इत्यवोचन् हितासक्ताः पाण्ड्यराजाघशान्तये ।। १७
गोभूस्वर्णादिदानानि दातव्यान्यविलम्बितम्।
अघमर्षणमन्त्राद्यैः होमः कार्यस्तिलाज्यतः ।। १८
नदीतीरे प्रपां कृत्वा भोज्यन्तां भूमिदेवताः ।
गोभ्यो दूर्वाप्रदानञ्च तच्छृङ्गादात्मसेचनम् ।। १९
पञ्चगव्यप्राशनञ्च वृक्षराजप्रदक्षिणम्।
कर्तव्यं भवता सर्वमेतत् कर्म महीपते ।। २०
विनश्येद्ब्रह्महत्या ते प्रमादापतिता नृप ।
इत्युक्तवत्सु विप्रेषु शास्त्रज्ञेषु तपस्विषु ।। २१

तथेति सर्वं सहसा प्रायश्चित्तं चकार सः।
एवं हि कुर्वतोऽप्यस्य राज्ञश्छाया तु काचन ॥ २२
कृष्णाङ्गी पार्श्वमभ्येत्य सर्वदा सह वर्तते।
श्रीमान्वरगुणाभिख्यः शीलवान् पाण्ड्यभूपतिः ॥ २३
भीतभीतः किं विधेयमिति चिन्तापरोऽभवत्।
ऋषयः -
पुरा प्रोक्ता वृत्रहत्या विनष्टाऽसीद्बिडौजसः ॥ २४
क्षेत्रप्रवेशमात्रेण सञ्चितैरघसञ्चयैः।
राज्ञो वरगुणस्यास्य सदा तत्क्षेत्रवासिनः ॥ २५
कथमासीन्न नष्टा सा विप्रहत्या घटोद्भव।
अगस्त्यः -
साधु पृष्टो हि युष्माभिः प्रश्नः प्रश्नविदां वराः ॥ २६
कृतं सर्वत्र कलुषं पुण्यक्षेत्रेषु नश्यति।
पुण्यक्षेत्रकृतं पापं शिवक्षेत्रेषु नश्यति ॥ २७
शिवक्षेत्रकृतं पापं श्रीहालास्ये विनाश्यति।
श्रीहालास्यकृतं पापं विना भोगैर्न नश्यति ॥ २८
हालास्ये द्वादशान्तस्थे शिवक्षेत्रोत्तमोत्तमे।
कृतस्य सुकृतस्यापि दुष्कृतस्य च जन्तुभिः ॥ २९
अन्तो नास्ति मुनिश्रेष्ठास्सत्यमेव मयोदितम्।
तथाऽपि करुणामूर्तेः श्रीहालास्यपतेः प्रभोः ॥ ३०
प्रसादेन विनष्टा सा हत्या वरगुणस्य च।
शिवप्रसादयुक्तानां किमसाध्यं जगत्त्रये ॥ ३१

तस्मात्प्रसादलाभाय सुन्दरेशं समाश्रयेत्।
सुन्दरेशप्रसादेन सर्वास्सिद्ध्यन्ति सिद्धयः ।। ३२
अन्यत्र चिरकालेन साध्या ये तपसो बलात्।
सद्यस्सिध्यन्ति ते कामा हालास्येऽल्पतपोबलात्।। ३३
पुरोहितायैरुक्ते च प्रायश्चित्ते कृते सति।
श्रीहालास्ये कृता विप्रहत्या नष्टाऽस्य नो यदा।। ३४
तदानीं शिवभक्तेन केनचित्करुणावशात्।
बोधितस्सुन्दरेशस्य प्रदक्षिणपरोऽभवत्।। ३५
दशभिर्दिवसैरेव प्रदक्षिणमहर्निशम्।
अष्टोत्तरसहस्रञ्च कृतं वरगुणेन च।। ३६
नमस्कृत्य च संसेव्य स्तुतिभिस्सुन्दरेश्वरम्।
स्थिते तस्मिन्वरगुणे सुन्दरेशोऽनुकम्पया।। ३७
वाण्या च दिव्यया प्राह भक्तापङ्कजनोद्यतः।
राजन्वरगुण श्रीमन् पुण्यापुण्यफलं शृणु।। ३८
कृताया विप्रहत्यायाः फलस्यान्तो न विद्यते।
तथा मदीयलिङ्गस्य प्रदक्षिणफलस्य च।। ३९
पदे पदेऽश्वमेधानां फलदानरतस्य तु।
प्रदक्षिणस्य तुल्यानि नैव पुण्यान्तराणि हि।। ४०
मेरुमन्दरकैलासकाशीश्रीपर्वतादिषु।
शिवक्षेत्रेषु सर्वेषु चिदम्बरमुखेषु च।। ४१
यानि लिङ्गानि विद्यन्ते तेष्वहं सन्निधानकृत्।
तस्मान्मदीयलिङ्गानि सर्वाणीह न संशयः ।। ४२

मदीयेषु च लिङ्गेषु मध्यार्जुनपुरेश्वरम्।
लिङ्गं महापापहरं सद्यः पुण्यफलप्रदम्।। ४३
तत्रैव मोचयिष्यामि ब्रह्महत्यां त्वया कृताम्।
विद्यते यत्र मल्लिंगं मध्यार्जुनमहेश्वरम्।। ४४
मत्प्रसादेन युद्धे तु चोलं जित्वा समागतम्।
मध्यार्जुने सम्प्रवेशो भवतो भवतु ध्रुवम्।। ४५
इत्युक्त्वा विरते शम्भौ विस्मितः पाण्ड्यभूपतिः।
पञ्चाक्षरेण मन्त्रेण नमस्कृत्य पुनः पुनः ।। ४६
आनन्दसागरे मग्नस्स्वालयं पाण्ड्यपो ययौ।
चोलागमनमन्वीक्ष्य यदा वरगुणः स्थितः ।। ४७
तदा काञ्चीस्थितश्चोलो योद्धुमायात्ससैनिकः।
धैर्यवान् भक्तिमांश्चैव सुन्दरेश्वर ईश्वरे।। ४८
चोलस्याभिमुखं गत्वा तं जिग्ये पाण्ड्यभूपतिः।
चोळश्चास्याहवं दृष्ट्वा प्रशंसन् सुन्दरेश्वरम्।। ४९
सेनाभिरतिवेगेन ययौ काञ्चीपुरीं प्रति।
चोलानुधावनव्याजात् पाण्ड्यो वरगुणः प्रभुः ।। ५०
मध्यार्जुनं महास्थानं शाङ्करं प्राप शान्तिदम्।
तदा पौषी पौर्णमासी दैवयोगात्समागता।। ५१
पुण्यदेशः पुण्यकालस्संयुक्तः पाण्ड्यभूपतेः।
कवेरजानदीतोये स्नात्वा पाण्ड्यस्समाहितः ।। ५२
मध्यार्जुनमहेशानं द्रष्टुमालयमाययौ।
छाया तु मुक्त्वा तं भूपं बहिस्सालस्य संस्थिता।। ५३

लघ्वंगो हृष्टहृदयः शङ्करं प्रणनाम सः ।
उमापते कृपाराशे रक्ष मामघपीडितम् ।। ५४
त्वमेव शरणं नान्य इत्युक्तवति भूभुजि ।
वाणी खादभवद्रम्या भूपालार्तिविलोपिनी ।।५५
पाण्ड्य मद्भक्त एवासि द्विजन्मस्वपि भक्तिमान् ।
तथापि प्राक्कर्मवशाद्ब्रह्महत्याऽभवत्तव ।। ५६
सा त्वद्यैव प्रणष्टाऽभून्नात्र कार्या विचारणा ।
तां वाचं पाण्ड्यराट् श्रुत्वा शम्भुं नत्वा पुनः पुनः ।। ५७
निर्गत्य पश्चिमद्वाराच्छायाक्रान्तिविवर्जितः ।
शिलाभिस्सहसा सालं सगोपुरमकारयत् ।। ५८
मध्यार्जुनमहेशस्य भक्ताभीष्टप्रदस्य सः ।
स्वर्णरत्नैरलङ्कृत्य प्रासादमखिलं मुदा ।। ५९
मधुरानगरीं प्राप्य मण्डितां ध्वजतोरणैः ।
नाथाय नाथनाथाय स्वनाथाय चिदात्मने ।। ६०
जगन्नाथाय हालास्यनाथायानन्दमूर्तये ।
मौक्तिकं च वितानं च च्छत्राण्यत्यद्भुतानि च ।। ६१
रत्नालङ्कृतदण्डानि चामराणि बहूनि च ।
दुकूलानि विचित्राणि श्रीमदाभरणानि च ।। ६२
गोलकं च प्रभां दत्वा नवरत्नविचित्रिताम् ।
स्तुत्वा नानाविधैः स्तोत्रैः प्रणिपत्य शिवं नृपः ।। ६३
कृतार्थस्सन्विनिर्गत्य सुखमास्ते निराधिकः ।
शृण्वन् सदा पुराणानि कालं निन्ये स भूपतिः ।। ६४

सर्वदा सर्वलोकेभ्यः शिवलोको महानिति।
वेदशास्त्रपुराणेषु श्रुत्वा वरगुणो नृपः ॥ ६५
इहैव द्रष्टुमुद्युक्तः सुन्दरेशशिवाज्ञया।
अत्यद्भुतमनौपम्यं शिवलोकं परात्परम् ॥ ६६
कदाचिच्छिवरात्र्यां स शिवलोकदिदृक्षया।
शिवं सम्प्रार्थयामास शिवभक्तशिरोमणिः ॥ ६७
कदम्बकाननाधीश करुणावरुणालय।
सत्यज्ञानादन्दमय लिङ्गमूर्ते सदाशिव ॥ ६८
ब्रह्माण्डोर्ध्वगतं नित्यं त्वदीयं लोकमिष्टदम्।
प्रदर्शय ममात्रैव प्रमथादिगणावृतम् ॥ ६९
एवं विज्ञापितश्शम्भुर्भक्तभक्त्याऽऽर्द्रमानसः।
अदर्शयद्भूतले तं लोकं सर्वाद्भुतालयम् ॥ ७०
सोऽपि राजा वरगुणस्तल्लोकेऽत्यद्भुतानि च।
अनेकानि विमानानि ह्यप्सरोभूषितानि च ॥ ७१
वनानि कल्पवृक्षाणां कामधेनुव्रजानपि।
चिन्तामणिमयाद्रींश्च सुधापूर्णसरांसि च ॥ ७२
वेश्मानि गणनाथानां मेरुणा स्पर्धितानि च।
सगोपुरांश्च प्राकारान् रत्नहेमविचित्रितान् ॥ ७३
दृष्ट्वाऽथान्तः प्रविष्टश्च तेजोराशिविराजितम्।
विमानं शाम्भवं पश्यन् तस्थौ विस्मितमानसः ॥ ७४
तदा नन्दी समागत्य हस्तेन परिगृह्य तम्।
देवेशं दर्शयामास तस्मै विस्मितचेतसे ॥ ७५

तेजोमयविमानस्थसिंहासननिवासिनम्।
हारकेयूरमकुटकटकाद्यैरलङ्कृतम्।। ७६
देवीञ्च वामभागस्थां समालोक्य स्मितान्वितम्।
पार्श्वयोर्गजवक्त्रेण षड्वक्त्रेण च शोभितम्।। ७७
ब्रह्मविष्ण्वादिदेवैश्च गणनाथैस्सुसेवितम्।
दृष्ट्वा वरगुणः पाण्ड्यो भक्त्या परवशीकृतः ।। ७८
प्रस्तुत्य प्रणिपत्याथ प्रार्थयामास शङ्करम्।
कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मि पुनः पुनः ।। ७९
अनन्तपुण्यसुलभात्तव लोकविलोकनात्।
एतत्सर्वं मया दृष्टं त्वल्लिङ्गाराधनेन च ।। ८०
त्वल्लिङ्गाराधनं कर्तुं प्रसीदानन्दसुन्दर।
इत्युक्तवति पाण्ड्येशे शिवलोकस्तिरोहितः ।। ८१
राजाऽपि विस्मितो भूत्वा लिङ्गस्थं तमपूजयत्।
राज्ञाऽथ ज्ञापितास्तत्र सङ्गता भक्तिमज्जनाः ।। ८२
ते सर्वे विस्मितास्सन्तः प्राशंसन् सुन्दरेश्वरम्।
तमुदन्तं जनास्सर्वे श्रुत्वा विस्मितमानसाः ।। ८३
लोकं दर्शयितारं स्वं शङ्करं सुन्दरप्रभुम्।
तं पश्यन्तं पाण्ड्यभूपं प्रशंसन्ति जगत्त्रये ।। ८४
तदा प्रभृति हालास्यं शिवक्षेत्रं परात्परम्।
भूलोकशिवलोकाख्यां बिभर्ति परदुर्लभाम्।। ८५
भूदेवतावधवशादुदितश्च भूरि
पापं प्रमृज्य निजलोकनिदर्शयित्रे।

पृथ्वीपतेर्वरगुणस्य दयान्विताय
हालास्यमध्यनिलयाय नमश्शिवाय ।। ८६
लीला चत्वारिंशिकेयं नीपारण्यनिवासिनः ।
श्रुतमात्रेण सर्वेषां ब्रह्महत्यार्तिनाशिनी ।। ८७
महापापप्रशमनी महापुण्यप्रदायिनी ।
महाविजयकर्त्री च सर्वसम्पत्करी सदा ।। ८८

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां हालास्यमाहात्म्ये - वरगुणपाण्ड्यब्रह्महत्यार्ति शमनं नाम षट्चत्वारिंशोऽध्यायः*

★ ★ ★

## அத்தியாயம் - 46

## 40. பிரும்மஹத்திபாப நீக்கம்

*வரகுண பாண்டியனிடம் லக்ஷ்மியும் ஸரஸ்வதியும் விளையாடினர். வீர்யத்தால் அவன் இந்த்ரன். அழகில் மன்மதன். ஒளியால் ஸூர்யன். மக்களுக்குத் தந்தை, ஈசனிடம் மிக மிக பக்தி கொண்டவன். ஒருநாள் வேட்டையாடக் காட்டிற்குச் சென்றான். இரவில் நாடு திரும்புகையில் அவனது குதிரை வழியில் படுத்திருந்த அந்தணர் மீது தன் காலைப் பதித்து ஓடியது. அந்தணன் இறந்தான். அரசன் களைப்பால் இதனை உணரவில்லை. மறுநாள் காலையில் சவத்துடன் மக்கள் முறையிட அமைச்சர்கள் நிறைய தனம் தந்து சமாதானப்படுத்தி ஈமக்கிரியை செய்ய மக்களை அனுப்பி அரசனிடம் விபரத்தை அறிவித்தனர். பிரும்மஹத்தி நீங்கப் புரோஹிதர்கள் குறிப்பிட்ட ப்ராயச்சித்தங்களைச் செய்த பின்னரும் பிரும்மஹத்தி அரசனை நிழல் போல் சூழ்ந்து நின்றது. முன்னர் விருத்திரனைக் கொன்ற இந்திரனது பாபம் ஹாலாஸ்யத்தில் நுழைந்ததும் அகன்றது. வேறிடத்தில் செய்த*

பாபம் ஹாலாஸ்யத்தில் அகலும். ஹாலாஸ்யத்தில் செய்த பாபத்தின் பின் விளைவை அனுபவித்தே தீர்க்க வேண்டும். எனினும் ஸுந்தரேசனின் திருவடிகளைப்பற்றியவருக்கு அவரே உதவக் கூடும் என்ற நம்பிக்கையுடன் ஈசனை இடையருது அரசன் வலம் வந்தார். அப்போது இறைவன் தன்னை மத்த்யார்ஜுன க்ஷேத்திரத்தில் (திருவிடைமருதூரில்) வழிபடச் சொன்னதும் அரசன் அங்கு சென்ருன். ஆலயத்தினுள் கிழக்கு வாசலில் அரசன்நுழைந்ததும் நிழல் போல் தொடர்ந்து வந்த பிருஹ்ம ஹத்தி கோபுரவாயிலின் வெளியிலேயே அவனைவிட்ட கன்று நின்றது. ஈசனை வணங்கி வழிபட்டு மேற்கு வாயில் வழியே வெளியேறினுன். ஆலயத்தைப் புதுப்பித்துப் பெருமதில்களை அமைத்தான். மதுரையை அடைந்த வரகுணன் சிவனது புராணக் கதைகளைக் கேட்கத் தொடங்கினுன். சிவராத்திரியன்று கைலாயத்தில் ஈசனைக் காணவிரும்பிய அரசனை பிரும்மாண்டத்திற்கு வெளியிலுள்ள கைலாஸத்திற்கு இறைவன் அழைத்துச் சென்ருர். கைலாஸ வாயிலில் எதிர் பார்த்து நின்ற நந்தி வரகுணனைக் கைப்பிடித்து அழைத்துச் சென்று யானைமுகத்தோனும் ஆறுமுகனும் அருகில் அமர்ந்திருக்க - அருள் புரிகிற பார்வதியையும் சிவனையும் காட்ட நேரில் தரிசித்து ஆனந்தமடைந்தான். அங்குள்ள சிவலிங்கத்தை வழிபட நினைத்த வரகுணனின் முன் இதுவரை கண்ட கைலாஸக் காட்சி மறைந்தது. அரசன் ஹாலாஸ்யநாதரின் அருகில்தான் நிற்பதை உணர்ந்தான். பூலோக சிவலோகம் இந்த ஹாலாஸ்யமே என்பதை உணர்ந்த அரசன் ஸுந்தரேசரைச் சிறந்த பக்தி வசப்பட்டு வழிபட்டுவந்தான். இது ஈசனின் நாற்பதாவது லீலை.

★ ★ ★

## सप्तचत्वारिंशोऽध्यायः

# ४१. काष्ठभारवहनम्

अगस्त्यः -

शिरसा काष्ठभारञ्च यया धत्ते स्म सुन्दरः ।
तां लीलां सम्प्रवक्ष्यामि शृण्वन्तु मुनिपुङ्गवाः ॥ १
तस्मिन्वरगुणे पाण्ड्ये नीत्या राज्यं प्रशासति ।
चोलेशाद्गायकः कश्चित्त्यागादानार्थमाययौ ॥ २
सढक्काघोषमालोक्य तं सर्वे विस्मिता जनाः ।
स राजानं समालोक्य जगौ मधुरमद्भुतम् ॥ ३
गानं श्रुत्वा नृपः प्रीतस्तं सम्भाव्यांबरादिभिः ।
अवदत्कुत्रचिद्देशे निवासः क्रियतामिति ॥ ४
तथेति च नृपादेशात् ढक्काध्वनिसमन्वितः ।
गायकः प्रति तं देशं ययौ स्वैरुपगायकैः ॥ ५
हेमवेत्रधरैर्बालैः स्वाज्ञाकारिभिराशु च ।
आहूय गायकं भद्रं पृच्छति स्म निजं नृपः ॥ ६
वरिष्ठः कश्चिदायातो गायको ढक्कयान्वितः ।
जेतुं शक्तिं किं तवास्ति विचार्य वद मा शुचः ॥ ७

भद्रः -

जेतुं शक्तो वा न वेति नाथ मां पृष्टवानसि ।
सुन्दरेशो ममाप्यस्ति भक्ताभीष्टप्रदायकः ॥
तं जित्वोत्सारयिष्यामि गर्वितं गानविद्यया ।
ढक्कावाद्यं तदीयञ्च भग्नीकृत्य सभान्तरे ॥ ९

राजा तस्य वचश्श्रुत्वा सन्तुष्टया परयाऽन्वितः ।
अद्य गच्छेति तं भद्रं प्रेषयामास गूढधीः ।। १०
आत्तवीणाधृतोष्णीषाः कञ्चुकाञ्चितविग्रहाः ।
गायन्तो मधुरावीथ्यां चेरुस्तदुपगायकाः ।। ११
तान् दृष्ट्वा भीतहृदयो गायको भद्रसंज्ञकः ।
किं कर्तव्यमिति क्षीणस्सुन्दरेशे मनो दधौ ।। १२
श्रीहालास्यपतिं शम्भुं भद्रो भक्तार्तिभञ्जनम् ।
सद्यस्सर्वेष्टदातारं प्रणम्य समयाचत ।। १३
देवदेव कृपाराशे भक्ताभीष्टप्रदायक ।
इमामापदमुत्पन्नां मदीयां नाशय प्रभो ।। १४
प्रार्थयित्वैवमगमद्भद्राख्यो भक्तवत्सलम् ।
शुभमात्मीयभवनं सर्वसम्पत्समन्वितम् ।। १५
प्रपन्नार्तिहरो देवः शङ्करस्सुन्दरेश्वरः ।
कदम्बकाननाधीशः कारुण्यात्तकलेबरः ।। १६
काष्टभारं च शिरसा वहन्नंसेन वल्लकीम् ।
जीर्णोष्णीषांम्बरधरो जीर्णकुन्तलदन्तवान् ।। १७
ब्रुवन्काष्टं काष्ठमिति काष्ठसंवाहको बभौ ।
अथागंतोर्गायिकस्य भवनद्वारमागतः ।। १८
काष्ठभारं स संस्थाप्य राकाचन्द्रनिभाननः ।
सार्धं रागविशेषैश्च नारदात्तुम्बरोरपि ।। १९
अतिरम्यमनौपम्यं रागं गान्धारकं जगौ ।
मंचस्थो वनितायुक्तो हेमनाथस्स नामतः ।। २०

श्रुत्वा ध्वनिं कोऽयमिति जिज्ञासुर्गायको जवात्।
बहिर्निर्गत्य तं वीक्ष्य कृशं काष्ठभरोद्वहात्।। २१
अपृच्छत्कस्त्वमिति च वचोभिर्विनयान्वितः।
सोऽब्रवीदार्तवद्भूत्वा नाथ किं माऽद्य पृच्छसि।। २२
दासोऽहं गायकेन्द्रस्य भद्राख्यस्य महाप्रभोः।
एतच्छ्रुत्वा खिन्नमनाश्शिवेत्युक्त्वाऽन्तरं गतः।। २३
बुद्ध्या विचार्य कर्तव्यं निश्चयामास मानसे।
भृत्यस्य गानमीदृक्चेदेतद्भर्तुः किमुच्यताम्।। २४
सद्यो गन्तव्यमस्माभिरिति निश्चित्य बन्धुभिः।
संगृह्य स्वीयमखिलमज्ञातः प्रपलायितः।। २५
विधायैवं सुन्दरेशो गमनं गायकस्य च।
ज्ञातार्थमकरात्स्वप्ने भद्रं भक्तजनार्तिहा।। २६
भद्रः प्रातस्समुत्थाय नत्वा सुन्दरनायकम्।
राज्ञो निकटमासाद्य प्राहात्यन्तसमुद्धतः।। २७
आगन्तुर्गायको राजन् शीघ्रमानीयतामिह।
इत्युक्तवति भद्रे तु शम्भुभक्ते च गायके।। २८
तदाह्वानाय भूपालः कांश्चिद्दूतान्न्ययुङ्क्त सः।
ते गत्वा तमपश्यन्तस्समागत्याब्रुवन् जवात्।। २९
स गायको बन्धुभिश्च समस्तैरुपगायकैः।
अत्यन्तकातरो भूत्वा अज्ञातः प्रपलायितः।। ३०
इत्युक्तवत्सु दूतेषु सन्तुष्टयतिशयान्नृपः।
स्वकीयं गायकं भद्रं वराम्बरविभूषणैः।। ३१

अलङ्कृत्य गजस्कन्धमधिरोप्याम्बरास्तृतम्।
प्रदक्षिणं कारयित्वा महतीं मधुरापुरीम्॥ ३२
स्वकीयकोशमध्यस्थं सर्वं तस्मै ददौ धनम्।
गजस्कन्धाधिरूढस्सन् सोऽपि स्वालयमाययौ॥ ३३
कृतनीराजनविधेर्वन्दिभिश्च कृतस्तुतेः।
सौभाग्यं गायकेन्द्रस्य को वा वर्णयितुं क्षमः॥ ३४
तदा लब्धं धनं सर्वमम्बराभरणादिकम्।
श्री हालास्येश्वरायार्धं दत्वा तत्सन्निधौ स्थितः॥ ३५
अर्थिभ्यश्चावशिष्टं च विप्रादिभ्यः प्रदाय च।
भूयस्स व्यतनोत्त्यागं स्वशक्तिमनवेक्ष्य सः॥ ३६
भक्तानुग्रहकर्तारं परमेशं परात्परम्।
स्तुवन्ति स्म जनास्सर्वे विस्मयातिशयान्विताः॥ ३७
एकचत्वारिंशिकेयं लीलोक्ता सुन्दरप्रभोः।
आपत्समुद्रकल्पान्तद्वादशादित्यसन्निभा।
सम्पत्समुद्रसंवृद्धिराकाचन्द्रनिभा शुभा॥ ३८

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - काष्ठभारवहनं नाम*
*सप्तचत्वारिंशोऽध्यायः*

★ ★ ★

## அத்தியாயம் - 47

## 41. விறகு சுமத்தல்

வரகுண பாண்டியனது ஆட்சியில் ஹேமநாதன் என்ற சோள தேசத்து ஸங்கீதப் பேரறிஞர் உடுக்கையை ஒலித்துக் கொண்டு வந்தார். அரசன் மீது மிக அழகாகப் பாடினார். அரசன் மகிழ்ந்து அவரைச் சில நாட்கள் மதுரையில் தங்கச் செய்தான். தன் ஆஸ்தான காயகரான பத்திரனை அழைத்து ஹேமநாதரை கானத்தில் வெல்லத் தூண்டினான். பத்திரன் ''ஈசனின் அருளால் செருக்குமிக்க ஹேமநாதனை வெல்ல முடியும்'' என்றார். நகரம் முழுவதையும் தனது கானத்தால் மயக்கி வருகிற ஹேமநாதனை வெல்வது எளிதல்ல என்றுணர்ந்த பத்திரன் ஸுந்தரேச்வரரைச் சரணடைந்தான். இறைவன் தலையில் விறகுக் கட்டைகளைச் சுமந்து விறகோ! விறகு எனக் கூவுபவனாக, ஹேமநாதன் தங்கியுள்ள இடம் வந்து வாயிலில் அமர்ந்து பாடத் தொடங்கினார். இறைவனின் கீதத்தைக் கேட்ட ஹேமநாதன் மாளிகையிலிருந்து வெளியேவந்து விறகு வியாபாரியிடம் நீ யார்! நீ எவரிடம் கானத்திற்கான சிக்ஷை பெற்றாய் எனக் கேட்டார். பத்திரன் என்ற கான அறிஞரின் அடிமை நான் என விறகு வியாபாரி கூற, அடிமையே இவ்வாறு இனிக்கப் பாடுவானாயின் அந்தப் பேரறிஞரை வெல்வது மிகக் கடினம் என நினைத்துப் பயந்து உடன் தன் உதவியாளருடன் நகரை விட்டு வெளியேறினார். மறுநாள் சபையில் போட்டிக்காக ஹேமநாதரை அழைக்கச் சென்ற ஸேவகர்கள், அவர் நகரை விட்டு வெளியேறி விட்டதைத் தெரிவித்தனர். அரசன் பத்திரனுக்கு ஆடை அணி செல்வம் முதலியவற்றைத் தந்து கௌரவித்தான். பத்திரனோ தனக்கு இந்த கௌரவம் இறைவனின் அருளால் கிட்டியதென்று உணர்ந்து ஈசனின் வழிபாட்டிலும் அடியார்களின் உபசரணைகளிலும் இந்தச் செல்வத்தைப் பயன்படுத்தினான். இது நாற்பத்தோராவது லீலை.

★ ★ ★

## अष्टचत्वारिंशोऽध्यायः

# ४२. चेरराज्ञे पत्रिकादानम्

अगस्त्यः -

भद्रानुग्रहकृत् पश्चात्पत्रिकालेखनं यया।
चेरं प्रत्यकरोच्छम्भुस्तां लीलां शृणुत द्विजाः ।। १
भद्राभिधानो भाणस्तु सदा शङ्करसक्तधीः ।
भूपालदर्शनं त्यक्त्वा गायतीश्वरसन्निधौ ।। २
गानरूपी गानरतो गायकाग्रेसरोऽपि सः ।
सुन्दरेशोऽस्य कण्ठोक्तरागेणाकृष्टमानसः ।। ३
भवो भक्तपराधीनो भगवान् पार्वतीपतिः ।
शम्भुस्तन्निकटं प्राप्य शृण्वन्नास्ते सदा मुदा ।। ४
स तोषयित्वा सर्वेशं गायको गानविद्यया।
यदा च गन्तुमुद्युक्तस्तदा देवो महेश्वरः ।। ५
कदाचिन्न्यदधात्तस्य पुरोभागे पणान् बहून्।
कदाचिद्भूपतेः स्फीतं न्यदधाद्भूषणं बहु ।। ६
प्रादाच्च जातुचिद्रत्नहारं च कनकानि च।
सौवर्णश्चषकश्चापि रत्नचित्रितदर्पणम्।। ७
भद्रासनस्थपट्टश्च हेमरत्नसमायुतम्।
दण्डश्च चामरस्यापि नवरत्नविचित्रितम्।। ८
राजतं चापि ताम्रं च समस्तं वस्तुजातकम्।
यानि यानि च दत्तानि शम्भुना तानि तानि च ।। ९

लब्ध्वा स मुदितो भूत्वा गायकश्च गृहं गतः ।
छित्वा भित्वा गायकेभ्यो ददौ सर्वाण्यसौ मुदा ।। १०
एवं गच्छति काले स कदाचिद्भद्रसंज्ञितः ।
रिक्तोऽभवत्तदा भूपमर्थाय तु कदाचन ।। ११
नोपागायत्सुन्दरेशं सदा गानैरपूजयत् ।
तथाभूतं स्तुवन्त्येनमुपगायकपङ्क्तयः ।। १२
दातव्यवस्त्वभावेन खिन्नश्शिशये कदाचन ।
दातृत्वमात्मभक्तिश्च दृष्ट्वा भक्तस्य शङ्करः ।। १३
तत्स्वप्ने स्वयमभ्येत्य भक्ताधीनोऽवदच्च तम् ।
भद्र त्वमतिदातृत्वे दीक्षितो नितरामसि ।। १४
राजमन्दिरमध्यस्थं रहस्तुभ्यं ददाम्यहम् ।
सर्वं वस्तु महारत्नस्वर्णरूप्यादि चान्वहम् ।। १५
कोशाध्यक्षास्तु पाण्ड्यस्य सदा क्रोशन्ति भूयसा ।
पणाश्च नैव दृश्यन्ते स्थापिताः कोशसद्मनि ।। १६
भूषाश्च रत्नचित्राश्च हैमानि चषकाणि च ।
अदृष्टश्चोरकः को नु चोरयित्वा गतोऽभवत् ।। १७
नोद्घाटितं कवाटश्च ज्ञाता चेत्सुन्दरेश्वरः ।
एवं क्रोशत्सु बहुशः कोशाध्यक्षेषु हन्त ते ।। १८
पुनश्च किञ्चिद्दद्याश्चेद्दृष्ट्वा त्वां बाधयेन्नृपः ।
प्रायशश्चेर एवाद्य सत्करोति शिवाश्रितान् ।। १९
शीघ्रं गत्वा दर्शयामूं पत्रिकां चेरभूभृते ।
इत्युक्त्वा रम्यया युक्तामार्यया पत्रिकामदात् ।। २०

युष्मत्सेवामहं हित्वा न गच्छामीति सोऽब्रवीत्।
मयोच्यमानो हि भवान् गच्छत्विति शिवोऽवदत्॥ २१
आज्ञोल्लङ्घनमीशस्य पापायेति विचिन्तयन्।
सर्वैरज्ञात एव द्राक् चेरं प्रति ययौ नृपम्॥ २२
दिनैः कतिपयैः प्राप्य चेरस्य पुरमद्भुतम्।
भस्माङ्कितललाटादिरास्ते कोणे प्रपान्तरे॥ २३
भस्मभूयिष्ठसर्वाङ्गं तत्रत्या ददृशुर्जनाः।
चेरं स्वप्ने सुन्दरेशो गत्वा प्राह सविस्तरम्॥ २४
मद्भक्तः कश्चिदायातस्तमन्वीक्ष्य महीपते।
प्रीणयेति वचस्स्वप्ने शृणोति स्म स चेरपः॥ २५
स सम्भ्रमात् समुत्थाय सचिवान् द्राक् समाह्वयत्।
तान् झटित्यागतान् वीक्ष्य प्रोच्य स्वप्ने श्रुतं वचः॥ २६
पुरेऽस्मिन् शिवभक्तः किं नूतनः कश्चिदागतः।
इति पृष्ट्वा जनान् दृष्टश्चेत्तमानयतेत्यशात्॥ २७
तथेति ते जवाद्गत्वाऽन्वेषयन्तः प्रपान्तिके।
निकृष्टवेषं तं दृष्ट्वा गत्वा राज्ञे न्यवेदयन्॥ २८
ततश्चेरो जवाद्गत्वा पद्भ्यामेव तमैक्षत।
अक्षिणी मीलयन् शम्भुं गायन् स पुलकान्वितः॥ २९
पुरःस्थमपि भूपालं नापश्यद्धर्षबाष्पयुक्।
व्याधितोऽपि दरिद्रोऽपि क्षुधितोऽपि य ईश्वरे॥ ३०
भक्त्या भावित चित्तः सन् वर्तते स हि भाग्यवान्।
इति प्रशंसन्मनसा सोऽपृच्छत्तं शिवप्रियम्॥ ३१

भस्मोद्धूलित सर्वाङ्ग शङ्करप्रिय शंस मे।
कुतो भवान् समायातः इत्युक्तः सोऽब्रवीन्नृपम्।। ३२
भक्ताभीष्टप्रद श्रीमत्सुन्दरेशाज्ञया त्वहम्।
मधुरायाः समायातस्त्वां द्रष्टुं शङ्करप्रियम्।। ३३
पश्यामूं पत्रिकां राजन् इति तां प्रददावसौ।
नमस्कृत्य समादाय तावबाचयदात्मना।। ३४
नानाश्चर्ययुतायां मधुरायां भद्र इत्यसौ नाम्ना।
मयि भक्तो दत्वाऽस्मै प्रेषय वसु भूरि शीघ्रतरम्।। ३५
दिव्याक्षरयुतामेवमार्यां दृष्ट्वा मनोरमाम्।
विचार्यानुग्रहं शम्भोः तस्मिन्नत्यन्तहर्षितः ।। ३६
स चेरस्तं गजस्कन्धमारोप्य प्रापयन् पुरीम्।
सुगन्धितैलाभ्यक्ताङ्गं कृत्वा स्नाप्य शुभैर्जलैः ।। ३७
शिवरूपं स्मरन्भद्रं षड्रसैः समभोजयत्।
वासांस्यदान्महार्हाणि चन्दनादिसुवस्तु च।। ३८
यावदायुश्च पार्याप्तं तावच्च व्यवतरद्धनम्।
एवं भद्रं सुसन्तोष्य विनयेनाह पार्थिवः ।। ३९
अद्यैवाहं कृतार्थोऽस्मि युष्मदागमनादिति।
अथाह भद्रभक्तस्तं भाणोऽहं हि महीपते।। ४०
महानुभावस्त्वमिति श्लाघयन् स पुनः पुनः ।
ब्रह्मादिस्तम्बपर्यन्तं जीवाख्यस्तिष्ठतीश्वरः ।। ४१
न जातिभेदस्तत्रास्ति किमेवं भवतोच्यते।
एवमादिवचः प्रोच्य विलम्बनभयान्नृपः ।। ४२

शक्नोमि त्वां न निर्बद्धुं गायकेशाज्ञया व्रज।
इत्युक्त्वा रक्षिभिः सार्धं धनभारवहैरपि ।। ४३
प्रेषयामास भद्रं तं चेरराट् स मुदान्वितः ।
भद्रश्च सुखमागत्य नीरोगः सौम्यवेषधृत् ।। ४४
प्रस्तुत्याभीष्टदं शम्भुं गानैस्तदपदानकैः ।
सर्वैः प्रशास्यमानः सन् स्ववर्गैरितरैरपि ।। ४५
अर्थत्यागविनोदेन हृष्टः प्राप स्वमन्दिरम् ।
गायन् यथा पुरं शंभुं ददन् वसु च पूर्ववत् ।। ४६
मोदमानश्चिरं कालं मधुरायामुवास सः ।
द्विचत्वारिंशिका लीला सुन्दरेशस्य वर्णिता ।।
सकृच्छ्रवणतः पुंसां सर्वसम्पत्प्रदायिनी ।। ४७

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - चेरं प्रति पत्रिकालेखनं*
*नामाष्टचत्वारिंशोऽध्यायः*

★ ★ ★

अத்தியாயம் - 48

## 42. சேர அரசனுக்குக் கடிதம் தருதல்

*பத்திரன் என்ற காயகன் அரசவைக்குச் செல்வதைத் துறந்து ஈசனின் ஸந்நிதியில் பாடத் தொடங்கினான். பாட்டில் மகிழ்ந்த ஈசன் நிறைய பணத்தை ஸம்மானமாகத் தந்தார். மறுபடி ஒரு ஸமயம் பல அழகிய அணிகளை அவன் முன் வைத்தார். இவ்வாறு ரத்தினாபரணம், ஹாரம், தங்கக் கோப்பை, ரத்தினக் கண்ணாடி, சாமரம் என தங்கத்திலோ வெள்ளியிலோ மற்ற உலோகங்களிலோ செய்த பொருள்*

ஏதோ ஒன்றை அன்புடன் அளித்தார். ஈசனளித்ததை பத்திரன் தன்னை அணுகியவர்க்கு அளித்தான். ஒருநாள்அவனது கையில் கொடுக்க ஒன்றுமில்லை. அதனால் வருந்திப் படுத்திருந்த பத்திரனிடம் இறைவன் கனவில் சொன்னார். - ''அரண்மனை கோசத்திலிருந்த பொருளைத் தான் உனக்குத் தருகிறேன். கோசாதிகாரி பொருள் திருட்டு போவதை அரசரிடம் தெரிவித்துவிட்டார். இனி நான் கோசத்திலிருந்து கொடுப்பேனேயாகில் கண்டுபிடித்து உன்னைப் பிடித்துவிடுவார்களே. சேர அரசன் என்னை அண்டியவர்களை உபசரிக்கிறான். அவனுக்கு ஒரு கடிதம் தருகிறேன். அதனை அவனிடம் தந்து ஸன்மானம் பெறுவாய்'' என்றார். சேர அரசரின் தலை நகரில் நீரோடை அருகே அமர்ந்து பத்திரன் பாடத் தொடங்கினான். சேர அரசரின் கனவில் ஈசன் தோன்றி உன்னைத்தேடி வந்துள்ள பத்திரன் என்ற பாடகனுக்கு வெகுமதி அளிப்பாய்''என்று உத்தரவிட்டார். மந்திரிகள் மூலம் தேடிக் கண்டுபிடித்து பத்திரனை அரண்மனைக்கு அழைத்து வந்து உபசரித்து நீ யார் என விசாரிக்க ஸுந்தரேசரின் அருளாணையால் வந்ததைத் தெரிவித்து ஈசன் தந்த கடிதத்தையும் அரசனிடம் பத்திரன் தந்தான். ''மதுரையில் என்னிடம் பக்தி மிக்க பத்திரனுக்கு நிறையத் தனம் தந்து விரைவில் என்னிடம் அனுப்புவாய்'' என்று கடிதச் செய்தியை வாசித்த அரசன் பத்திரனை நன்கு உபசரித்து ஆயுட்காலம் வரை போதுமானதாகத் தனம் தந்து அரசமரியாதையுடன் அனுப்பினான். பத்திரனும் மதுரை வந்து ஈசனைப் பாடிமகிழ்ந்து வள்ளலாகத் திகழ்ந்தான். இது நாற்பத்திரண்டாவது லீலை.

★ ★ ★

## एकोनपञ्चाशोऽध्यायः

## ४३. भद्राय फलकादानम्

**अगस्त्यः -**

**भद्राय फलकादानं चित्रया लीलया यया।**
**अकरोत्सुन्दरेशस्तां वक्ष्यामि मुनिपुङ्गवाः ॥ १**

भद्रस्य वैभवं दृष्ट्वा भाणास्सर्वे समत्सराः ।
कदाऽस्यैश्वर्यभङ्गस्स्यादिति प्राहुस्समन्ततः ।। २
ज्ञात्वा तदाशयं भद्रः अतिशिष्टं व्रतं दधौ ।
प्रातःकाले च मध्याह्ने सायाह्ने सुन्दरेश्वरम् ।। ३
सेवेऽनुदिवसं शम्भुं नार्धरात्रे त्वभीष्टदे ।
भोगस्वर्गापवर्गांश्च दातुं शक्तेऽतिपुण्यदे ।। ४
आधिव्याधिहरे सर्वदुरितध्वंसदीक्षिते ।
अद्यारभ्य च तत्काले करिष्ये शम्भुदर्शनम् ।। ५
सङ्कल्प्यैवं तथा सेवां कुर्वन् पूर्णमनोरथः ।
श्लाघ्यमानो जनैर्भक्तैरर्थिभिस्सोऽवसत्सुखम् ।। ६
भोगाङ्गपूजावसरे शङ्करं सुन्दरेश्वरम् ।
सकृत्संसेव्य सर्वाघैर्मुक्तस्सौख्यं लभेन्नरः ।। ७
तस्मिन्नवसरे भद्रो गानेनापूजयच्छिवम् ।
तत्पुण्यस्यानुभावेन तस्य सिद्ध्यन्ति सिद्धयः ।। ८
लीलारसप्रियो देवो हालास्येशः कदाचन ।
ऐश्वर्याढ्यममुं भद्रं शोधितुं विदधे क्रियाम् ।। ९
आकाशमावृतं कृत्वा निशीथिन्यां पयोधरैः ।
प्रावर्तयद्वर्षधारा भोगिभोगनिभा भृशम् ।। १०
चचाल गेहान्नो कश्चित्तिर्यञ्चोऽपि न निर्गताः ।
भद्रस्तु वर्षधारास्ताः पुष्पवृष्टीरिव स्मरन् ।। ११
भोगाङ्गपूजावसरे साम्बिकं सुन्दरप्रभुम् ।
भक्तिदार्ढ्यात् समभ्येत्य समगायन्महाद्भुतम् ।। १२

वर्षताद्य भृशं मेघा इति शास्ता महेश्वरः ।
अचोदयद्भृशं मेघान् सर्वाध्यक्षस्सदाशिवः ।। १३
घुम्घुमिति गर्जन्तः पवमानयुता भृशम् ।
धाराश्शिलायुजो मुञ्चन्भुज्ज्वलास्ते निशान्तरे ।। १४
भद्रोऽपि वृषदेवस्य पश्चाद्भागे स्थितो दृढम् ।
पूर्वस्मादधिकं गानमगायच्छिवसक्तधीः ।। १५
तन्त्र्यस्सिक्ता नखा आर्द्रा अङ्गुल्यश्च चकम्पिरे ।
अपां रयान्महापंकस्संजातस्तत्प्रदेशके ।। १६
भद्रोऽपि वर्षधारार्त आसित्वा तत्र पङ्किले ।
गातुमुद्योगमकरोत्पङ्काक्रान्तोऽभवत्तदा ।। १७
समुत्पन्नेऽपि वैकल्ये तन्त्र्यादीनामयं दृढम् ।
जगौ भद्रस्तु मधुरं भक्तिभावसमन्वितः ।। १८
दृष्ट्वा गायंतमधिकं भद्रं तं भक्तवत्सलः ।
अनुग्रहपरश्शम्भुस्सुन्दरेश्वर ईश्वरः ।। १९
पङ्कासीनस्य भक्तस्य भद्रस्याधः प्रदेशके ।
स्थापयामास फलकां हेमरत्नविचित्रिताम् ।। २०
इदं कुतस्समायातमिति विस्मितमानसः ।
रत्नप्रभारञ्जितं तत्पीठमध्यास्त पेशलम् ।। २१
गानं भद्रे समाप्याथ तस्मिन् गन्तुं समुद्यते ।
विमलं द्राग्वियदभून्नक्षत्राणि चकाशिरे ।। २२
केनेयं फलका दत्ता मह्यमित्यथ चिन्तयन् ।
भद्रः परमधर्मात्मा फलकां परिगृह्य ताम् ।। २३

गेहं गत्वा च बन्धुभ्य आचख्यौ तमुदन्तकम्।
ते सर्वे फलकां वीक्ष्य विस्मयाविष्टचेतसः ॥ २४
श्रीहालास्य प्रभुश्शम्भुर्भक्ताभीष्टप्रदोऽनिशम्।
स एव फलकां तुभ्यं दत्तवान्नैव चापरः ॥ २५
निरूप्य बान्धवैरेवमुक्ते सति स गायकः।
अत्यन्तप्रीतिहृदयस्तथैवेति सुनिश्चितः ॥ २६
जीवन्मुक्तिपुरेशानश्रीमच्चरणपङ्कजे।
मनो निश्चलमाधाय सुखेनास्ते स्ववेश्मनि ॥ २७
भद्रवृत्तान्तमाकर्ण्य प्रभाते पाण्ड्य भूपतिः।
तमाहूय च संवीक्ष्य फलकां देवनिर्मिताम्।
तत्र संस्थाप्य संपूज्य शम्भुं प्रत्यक्षितं यथा।
प्रदाय तस्मै सद्ग्रामान् सम्पूर्णान् धनधान्यकैः।
प्राह राजा वरगुणो भद्रं प्रीत्यैवमादरात् ॥ २९
वत्सं दृष्ट्वा यथा धेनुस्तं प्रत्येवानुधावति।
तथा त्वामपि दृष्ट्वेशस्सुन्दरेशोऽनुधावति ॥ ३०
सुन्दरेशकृपापात्रं त्वत्तः परतरो नहि।
दिव्यां च फलकामेवं त्वां विना को नु लब्धवान्।
ये भक्तास्ते शिवाः प्रोक्तास्सर्ववेदागमेषु च ॥ ३२
तान् पापिनोऽपि संपूज्य मुच्यन्ते सर्वकिल्बिषैः।
तस्मात्त्वत्पूजनं लोके शिवपूजाविधेः समम् ॥ ३३
इत्युक्त्वा प्रेषयामास भद्रं वरगुणः प्रभुः।
सोऽप्यतिप्रीतहृदयः स्तुतो मागधवन्दिभिः ॥ ३४

अतिथीनामलङ्कुर्वन्नाशामालयमाययौ।
तद्भक्त्यतिशयश्चापि भक्तवात्सल्यमीशितुः ॥ ३५
भवभक्तजनास्सर्वे प्रशशंसुः प्रियान्विताः।
अजस्रं त्यागशीलस्य भद्रस्य च महात्मनः ॥ ३६
चन्द्रोदयेऽब्ध्याप इव तस्यावर्धन्त सम्पदः।
श्रद्दधानास्सुन्दरेशं ये च स्वान्ते दृढव्रताः ॥ ३७
ध्यायन्ति पूजयन्तीह कीर्तयन्ति च ते जनाः।
आयुरारोग्यसम्पद्भिः संपूर्णास्स्युर्न संशयः ॥ ३८
त्रिचत्वारिंशिका लीला श्रीहालास्य प्रभोरियम्।
श्रोतव्या शिवभक्तैश्च शिवानुग्रहहेतवे ॥ ३९

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - भद्राय फलकादानं*
*नामैकोनपञ्चाशोऽध्यायः*

★ ★ ★

## அத்தியாயம் - 49

### 43. பத்திரனுக்குப் பலகை அளித்தல்

*பத்திரனது செழிப்பைக் கண்ட மற்ற பாடகர்கள் பொறுமையுடன் இவனது செல்வம் அழிவதெப்போது என்று ஏங்கினர். இதனைக் கேட்ட பத்திரன் தினந்தோறும் போகாங்க பூஜை நேரத்தில் ஈசனைத் துதித்துப் பாடுவதை வ்ரதமாகக் கொண்டான். ஈசன் பத்திரனைச் சோதிக்க விரும்பினார். வானம் இருண்டு மழை மிகக் கடுமையாகப் பெய்தது. வீடுகளிலிருந்து எவரும் வெளியே வர இயலவில்லை. பத்திரனோ மழையைப் பூமழையாக நினைத்து ஆலயம் வந்து போகாங்க பூஜையின் போது பாடத்*

தொடங்கினன். மழை கடுமை பெற்றது. விருஷபத்தின் பின்புறம் நின்று பாடுகிற பத்திரனின் மீது சேற்றுடன் கலந்த மழை நீர் பாய்ந்தது. வாத்யத் தந்திகள் நனைந்து கலைந்தன. அப்போதும் பத்திரன் இடைவிடாது பாடுவதைக் கண்ட ஈசன் கருணையால் அவனறியாதவாறு ரத்தினங்களிழைத்த பலகையைத் தந்தார். அதன் மீது அமர்ந்து பாடி விட்டுப் பலகையுடன் வீட்டிற்கு வந்த பத்திரனை வரவேற்ற அன்பர்கள் ஈசனே அந்தப் பலகையைத் தந்திருப்பதாக உணர்ந்து மகிழ்ந்தனர். இதனையறிந்த வரகுணன் பத்திரன் வீட்டிற்கு வந்து அந்த ஈசன் தந்த பலகையைத் தெய்வமாக வழிபட்டு நல்ல கிராமங்களையும் தனம் தான்யம் முதலியவற்றையும் பத்திரனுக்கு வழங்கினன். இது நாற்பத்தி மூன்றாவது லீலை.

★ ★ ★

पञ्चाशोऽध्यायः

## ४४. भद्रपत्नीविजयः

अगस्त्यः -

भद्रस्य वनितायाश्च ययाऽदाद्विजयं शिवः ।
सा लीला सकलैः सद्भिः श्रोतव्या शोभनार्थिभिः ।। १
तस्मिन् वरगुणे पाण्ड्ये परिपाल्य चिरं महीम् ।
संप्राप्ते शम्भुसारूप्यं दुर्लभं योगिनामपि ।। २
राजराजश्च तत्पुत्रो राजराजनिभः श्रिया ।
राजाऽभूत्पाण्ड्यराज्यस्य राजभिः परिवन्दितः ।। ३
भद्रस्य वनिता भद्रा भवभक्ता च भद्रवत् ।
कान्तिगानविलासैश्च तत्तुल्या न जगत्त्रये ।। ४
सा कदाचिद्राजराजपत्नीदर्शनलालसा ।
सम्प्राप राजभवनं गानविद्याविचक्षणा ।। ५

भूपस्य भोगिनीनां च मध्ये राजविमोहिनी।
गानविद्यातिकुशला काचिद्वारविलासिनी ॥ ६
तया सार्धं भद्रपत्न्या भद्रायाः कलहोऽभवत्।
कौशलं गानविद्यायां ममैवास्तीति मत्तया ॥ ७
ततः पाण्ड्यमहीपालः स्त्रीवार्तामवलम्ब्य सः।
भग्नां कर्तुं भद्रपत्नीं जयोपायमचिन्तयत् ॥ ८
गानविद्याऽतिकुशला कुत्रास्तीति विचार्य च।
आहूता गायिका काचि न्नृपाप्तैर्द्वीपमध्यतः ॥ ९
रहस्याप्तसमाहूतां समालोक्य महीपतिः।
आहूय भद्रपत्नीश्च गूढधी रेवमब्रवीत् ॥ १०
गायिकां कांचिदायातां जेतुं शक्तिस्तवास्ति किम्।
इतीङ्गितेन पप्रच्छ साऽप्यस्तीति तमब्रवीत् ॥ ११
द्वीपान्तरादागतायै गायिकायै वराणि च।
वस्त्राणि वरभूषाश्च ददौ सोल्लासमानसः ॥ १२
रम्यमावसथं दत्वा तस्यै कुत्रचिदादरात्।
तां गच्छेति समादिश्य भद्रपत्नीं नृपोऽब्रवीत् ॥ १३
भग्नायां त्वयि मे भङ्गो भद्रपत्नि न संशयः।
तस्मात्तां सहसा जेतुमुपायश्चिन्त्यतां त्वया ॥ १४
इत्युक्ता पाण्ड्यभूपेन प्राहैनं भद्रवल्लभा।
पतिव्रताऽहं पाण्ड्येश पातिव्रत्यं हि रक्षति ॥ १५
भक्ताधीनः परशिवस्सुन्दरेशोऽपि वर्तते।
अतो मद्भङ्गवार्ताऽपि न स्यात्तस्यास्सकाशतः ॥ १६
एवमाकर्ण्य तद्वाचं राजराजोऽपि गायिके।
समाह्वयेति श्वश्चोभे दूतं प्राह महीपतिः ॥ १७

अथ राजसमादेशाद्गायिका स्वालयं ययौ।
अतिमात्रेर्ष्यया भूपस्सोऽन्तः कौटिल्यसंयुतः ।। १८
द्वीपान्तरादागतां तामाहूयोपह्वरेऽब्रवीत्।
भृशं भद्रस्य वनितां भर्त्सय त्वमशङ्किता ।। १९
सभान्तरे मयोक्ताऽपि भर्त्सनं मास्तु मास्त्विति।
इत्युक्ता राजराजेन गायिका नूतना तदा ।। २०
ज्ञातभूपाशयाऽसीत्तां भर्त्सितुं कृतनिश्चया।
राज्ञा चान्यैर्दुराहूतां गायिकां भद्रवल्लभाम्।। २१
भविष्यत्कार्यमज्ञात्वा भर्त्सयामास नूतना।
मा भर्त्सयास्मदीयां त्वमित्युक्ताऽपि महीभुजा ।। २२
देशान्तरादागता सा भद्रपत्नीमभर्त्सयत्।
तदा मध्यस्थवद्राजा प्राह ते गायिके इति ।। २३
दासीभावं प्रतिज्ञाय युवाभ्यां गीयतामिह।
गानं गानविदो यस्याः प्रशंसन्ति सभान्तरे ।। २४
सा नायिका भवत्वद्य दासी त्वन्या भविष्यति।
तथेति कृतसन्नाहा नूतनाऽगायदद्भुतम्।। २५
पश्चाद्भद्रस्य वनिताऽप्यगायत्कोकिलस्वरा।
तदा सभागतास्सर्वे जनास्तामेव चास्तुवन्।। २६
तथापि राजा पक्षस्थः प्रशशंस विपर्ययात्।
राजानुगुणमेवाथ सर्वे तुष्टुवुरागताम्।। २७
सद्वाऽसद्वा राजवचः कः क्षमः कर्तुमन्यथा।
स्यातां हि विद्याविषये लोके जयपराजयौ ।। २८

त्वं गच्छ त्वञ्च गच्छेति शङ्कितस्ते नृपोऽब्रवीत्।
नूतना गायिका साऽभून्निमग्नाऽऽनन्दसागरे ।। २९
स्ववासस्थलमासाद्य मञ्चमध्ये निषेदुषी ।
पाण्ड्येशपक्षपातेन भद्रपत्न्यति दुःखिता ।। ३०
सुन्दरेशान्तिकं प्राप्य ययाचे साश्रुलोचना ।
मन्नाथनाथ मधुरानाथ नीपवनाधिप ।। ३१
नाथस्त्वमेव सर्वेषां विशेषान्नः कृपानिधे ।
पक्षपाती पाण्ड्यभूपश्चान्यायेन पराजयम्।। ३२
मम कर्तुं समुद्युक्तो रक्ष रक्ष तदापदः ।
इत्युक्त्वा खिन्नहृदया प्रणनाम महीतले ।। ३३
भीतिर्मास्त्विति खे वाचः श्रुत्वा सा मुदिताशया ।
निजं च निलयं प्राप्य निन्ये तमपि वासरम्।। ३४
परेद्युश्च तयोर्गानं शृणोति स्म स भूपतिः ।
बुधाः पूर्ववदाहुस्ते प्राह राजाऽपि पूर्ववत्।। ३५
एवं बहुश आहूय भद्रपत्नीं महीपतिः ।
अवमेने साऽथ पुनरिति राजानमब्रवीत्।। ३६
पक्षारूढो भवान् सत्यं जानन्त्येते सभागताः ।
सुन्दरेशपुरोभागे रम्ये महति मण्डपे ।। ३७
आवां तत्र प्रगास्यावस्तदा तन्मण्टपे स्थिताः ।
स्तुवन्ति यां मुदा सर्वे सा भविष्यति नायिका ।। ३८
तयेत्युक्तो नृपः प्राह तथाऽस्त्विति हृदा विना ।
साधु साध्विति लोकाश्च प्रशशंसुर्महीपतिम्।। ३९

अन्येद्युस्सुन्दरेशस्य महामण्टपमध्यमे।
आस्थानीं महतीं कृत्वा तत्रैवावस्थितो नृपः ॥ ४०
भद्रपत्नी च मे दासी भविष्यति न संशयः।
इति निश्चित्य मनसा सा ययौ नूतना जवात् ॥ ४१
भद्रस्य वनिता वाचं स्मरन्ती सुन्दरप्रभोः।
मन्दं मन्दं समायाता महान्तं मण्टपं प्रति ॥ ४२
कारुण्यमूर्तिर्भगवान् कविवेषधरो हरः।
आस्थानीमध्यगस्तस्थौ सुन्दरेशस्तिरोहितः ॥ ४३
नूतनाऽऽदौ गायति स्म स्वशक्त्यनुगुणं चिरम्।
गानं श्रुत्वा महीपाद्याः स्तिमिता अभवन् जनाः ॥ ४४
जगौ पश्चाद्भद्रपत्नी चिन्तयन्ती सदा शिवम्।
हा हा चित्रं गानमिदमिति भूपोऽवदत्पुरा ॥ ४५
तथैव सचिवाद्याश्च प्रशशंसुर्लसन्मुखाः।
तस्याः स्कन्धं भद्रभार्याऽधिरुह्य क्ष्वेलिकां व्यधात् ॥ ४६
राजाप्यबुद्धिपूर्वं तत्साधु साध्विति सोऽब्रवीत्।
कविवेषधरस्यारात्सुन्दरेशस्य चाज्ञया ॥ ४७
भद्रपत्न्यां तदालोक्य प्रीतिं राज्ञो वशागताम्।
इच्छाधिकार्थदातारमिच्छावेदिनमीश्वरम् ॥ ४८
अस्तुवन् सुन्दरेशानं सर्वे सम्भूय सज्जनाः।
इष्टकामप्रदानाश्च देवतानां तु मध्यतः ॥ ४९
सुन्दरेश्वर एवायमुपास्योऽन्यो न हि ध्रुवम्।
अन्योन्यमेवं शंसन्तो जना विस्मयसंयुताः ॥ ५०

नत्वा प्रदक्षिणीकृत्य जग्मुस्सर्वे मुदान्विताः ।
सुन्दरेशाश्रयो भद्रस्तत्पत्न्येनां तु गायिकाम् ।। ५१
जितवत्येतदाश्चर्यं किमित्याह तदा नृपः ।
तस्यास्स्कन्धाद्भद्रपत्नीमवरोप्य महीपतिः ।। ५२
ददौ तस्यै सुवस्त्राणि भूषणानि महान्ति च ।
तां विसृज्याथापरायै गायिकायै धनादिकम् ।। ५३
प्रदाय प्रेषयामास स्वदेशगमनाय च ।
दैवमेव परं मन्ये पौरुषन्तु निरर्थकम् ।। ५४
ईशोपास्तिर्हि फलदा अन्योपास्तिस्तु निष्फला ।
एवमादीनि वाक्यानि कथयन् सोऽथ शम्भवे ।। ५५
दत्वा पट्टादिवस्त्राणि मौक्तिकाभरणानि च ।
नत्वा प्रदक्षिणीकृत्य लिङ्गं स्वायम्भुवं महत् ।। ५६
काहलादिप्रवाद्यानां घोषैरन्तःपुरं ययौ ।
सुन्दरेश्वरपादाब्जभक्त्या परमया युतः ।। ५७
सम्पदा राजराजः स्म राजते राजराजवत् ।
लब्ध्वाऽथ सुगुणाख्यश्च तनयं सुगुणैर्युतम् ।। ५८
राजराजो बभौ भूयश्शङ्करः षण्मुखं यथा ।
चतुश्चत्वारिंशिकेयं लीला हालास्यवासिनः ।। ५९
सर्वापत्परिहर्त्री च वर्णिता विजयप्रदा ।
श्रोतव्या पठितव्या च सर्वदा शुभमिच्छता ।। ६०

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - भद्रवनिताविजयप्रदानं नाम*
*पञ्चाशोऽध्यायः*

★ ★ ★

## அத்தியாயம்-50
## 44. பத்திரனின் மனேவியின் வெற்றி

வரகுண பாண்டியனே அடுத்து அவனது புதல்வன் ராஜ ராஜன் அரசாண்டான். பத்திரனின் மனேவி பத்திரையும் கான கலேயில் தேர்ந்தவள். அவள் ராணியைக் காணவந்த போது அரசனின் போகப் பெண்களில் ஒருவளோடு கானப் போட்டியில் பத்திரை வென்ருள். அரசன் பொருமையால் அவளே வெல்லத் திட்டமிட்டு மற்ெருரு காயகியை சபைக்கு அழைத்தான். பத்திரைக்கும் அவளுக்கும் நடந்த போட்டியில் அரசன் பக்ஷபாதத்தால் புதுப்பாடகியே சிறந்தவள் என அறிவிக்க மக்கள் வேறு வழியின்றி ஆமோதித்தனர். பல நாட்கள் போட்டிவைத்தும் புதுப்பாடகியே அரசனின் பாராட்டைப் பெற்ருள். பாடுவதில் வெற்றி பெறுபவளுக்கு மற்றவள் அடிமை என நியமத்தை அரசன் ஏற்படுத்திஞன். அரசனது பக்ஷபாதத்தை உணர்ந்த பத்திரை ஸு்ந்தரேசரின் முன்னுள்ள மண்டபத்தில் அந்த போட்டியை வைத்துக் கொள்ள வேண்டிஞள். அரசன் மன மின்றி அதனே ஏற்ருன். பத்திரை தனக்கு அடிமையாவாள் என்ற பெரும் எதிர் பார்வையுடன் புதுப்பாடகி அரங்கிற்கு வந்தாள். ஸு்ந்தரேசர் ஒரு கவியின் வேடத்தில் அரங்கின் நடுவே அமர்ந்தார். புதுப்பாடகி பாடி முடித்ததும் அரங்கம் ஆரவாரமின்றி அமைதியுடனிருந்தது. பத்திரை பாடத் தொடங்கியதும் அரசன் வியப்புடன் அதனேக் கேட்டு மகிழ்ந்தான். ஸபையோர் கேட்கப் பாராட்டிஞன். தன் அந்தப்புரத்துப் பெண்ணே வென்றதால் ஏற்பட்ட தாபம் மறைந்தது. அரசனேயொட்டி மக்களும் பத்திரையைப் பாராட்டினர். அரசனின் மன மாற்றம் ஸு்ந்தரேசரின் அருளால் நேர்ந்ததாக மக்கள் நினேத்தனர். பத்திரைக்குப் புதுப்பாடகி அடிமையாஞள். பத்திரைக்கு வெகுமதிகள் வழங்கிய அரசன், பத்திரையின் அனுமதியுடன் புதிய பாடகிக்கும் வெகுமதி அளித்து அவள் தேசத்திற்கு அனுப்பிஞன். ஈசனே வணங்கி வழிபட்டு அரசன் தன் மாளிகை சென்ருன். அவனுக்கு ஸு்குணன் என்ற மகன் பிறந்தான். இது நாற்பத்தி நான்காவது திருவிளேயாடல்.

एकपञ्चाशोऽध्यायः

## ४५. वराहशिशुभ्यः स्तन्यदानम्।

अगस्त्यः -

यया क्रोडशिशुभ्यस्तन्मातृरूपी महेश्वरः।
स्तन्यं दत्वाऽपालयत्तान् तां लीलां वर्णयामि वः॥ १
अस्ति वेगवतीतीरे गुरुतीर्थमिति श्रुतम्।
पुण्यक्षेत्रं पुराणज्ञैर्मुनिभिः परिसेवितम्॥ २
पुरा कृतानि गुरुणा दुष्कराणि तपांसि च।
तत्रैवाविरभूतां द्वौ देवौ शङ्करशार्ङ्गिणौ॥ ३
शङ्करो गुरुनाथाख्यः शार्ङ्गी चित्ररथः स्मृतः।
तौ दृष्ट्वा मुच्यते जन्तुरघैर्जन्मान्तरार्जितैः॥ ४
तस्मिन् क्षेत्रेऽवसत्पुण्ये शूद्रः सुकलसंज्ञितः।
कृषिमेव प्रकुर्वाणो नानाधान्यसमृद्धिमान्॥ ५
तस्य भार्या महासाध्वी पातिव्रत्यपरायणा।
सुकला नाम पुण्याङ्गी पूर्णेन्दुसदृशानना॥ ६
पुत्राश्चिरेण कालेन बहुना तपसा तयोः।
बलोत्कटा निकृष्टाश्च सञ्जाता द्वादश क्रमात्॥ ७
अथ ते यौवनं प्राप्ताः कालेन पितृलालिताः।
न शिक्षिताः कदाचिच्च पितृभ्यां भाग्यहानितः॥ ८
तस्मिन्नवसरे तेषां पितरौ च दिवं गतौ।
नानाशया निर्गुणास्ते बभूवुर्निर्दयाशयाः॥ ९
हलैर्निम्नोन्नतां भूमिं कर्षन्तः क्लिष्टजीविनः।
तेषां पुण्यरतिर्नास्ति पापभीतिर्न विद्यते॥ १०

तत्तत्कुर्वन्ति ते सर्वे यद्यत्स्फुरति मानसे।
विधेर्वशात् कदाचित्ते समीपस्थं महद्वनम्॥ ११
मृगयाव्याजतः प्रापुः किरातैस्सह सश्वभिः।
अटन्तः परितो हन्तुं ते मृगान् सम्भ्रमान्विताः॥ १२
अपश्यन् गुल्ममध्यस्थं कश्चिन्मुनिवरं तदा।
ध्यानारूढं दयापूर्णचेतसं तपसि स्थितम्॥ १३
पुळकाञ्चितसर्वाङ्गं सानन्दिजललोचनम्।
ज्वलत्पावकसङ्काशं दुष्प्रेक्ष्यं द्विजतेजसा॥ १४
रागद्वेषभयक्रोधमदमात्सर्यवर्जितम्।
वरवल्कलसंवेशविराजितकटीतटम्॥ १५
स्थाणुवन्निश्चलतरं जटामण्डलमण्डितम्।
परिवृत्य च तं सर्वे परिहासपरायणाः॥ १६
हस्ततालं प्रकुर्वाणा हसन्तो ननृतुर्मुहुः।
गर्वेण बालभावेन प्रदुष्टा अर्भका मुनिम्॥ १७
तृणैर्लोष्टैश्च पाषाणैस्सिकताभिरवाकिरन्।
पुनः पुनः पीडितस्तैर्ध्यानस्तिमितलोचनः॥ १८
समाधिभङ्गात् क्रुद्धस्सन् शशापालोक्य तान्मुनिः।
भ्रूकर्षणोद्यतानाञ्च युक्तं भ्रूकर्षणं हि वः॥ १९
यूयं वराहयोन्यां वै युगपच्च जनिष्यथ।
युष्मासु जातमात्रेषु मृतिः पित्रोर्भविष्यति॥ २०
आतपेनातिसन्तप्ताः क्षुधार्ताश्च भविष्यथ।
एवं शप्ताश्च मुनिना भीताः पञ्जातसूनवः॥ २१

तं नत्वा प्रार्थयामासुश्शान्तरोषं क्षमाधिकम्।
अस्माभिः कृतमज्ञानादपराधं क्षमस्व भो ।। २२
अस्माननाथानधुना रक्ष रक्ष दयानिधे।
इत्यर्भकैः प्रार्थितस्सन्नितरामनुकम्पया ।। २३
संयुक्तस्स मुनिस्तेभ्यः प्रतिशापं ददौ पुनः ।
श्रीसुन्दरेशेन युष्मन्मातृवेषधरेण च ।। २४
यूयं करुणया स्पृष्टाः स्तन्यं दातुं तदा भुवि।
शुद्धज्ञानमयस्तन्यपानेनास्तमनोमलाः ।। २५
मुखं विना मुक्तशापा मानुष्यञ्च वपुर्धृताः ।
प्रधानभूता भूपस्य भुक्त्वा भोगांश्च पुष्कलान्।। २६
सुन्दरेशप्रसादेन सायुज्यञ्च गमिष्यथ ।।
इत्युक्त्वा प्रेषयित्वा तान्मुनिर्ध्यानपरोऽभवत्।। २७
प्रापुरल्पेन कालेन तेऽपि शापं मदार्जितम्।
वने वराहयोन्यां ते जाताश्शूद्रार्भका यदा ।। २८
मृगयार्थं तदा प्राप राजराजोऽपि तद्वनम्।
सोऽपि तत्र वराहांश्च खड्गांश्च महिषानपि ।। २९
निजघान शरैस्तीक्ष्णैरन्यान्दुष्टमृगानपि।
एवं सङ्क्रीडमानस्य कोलः प्रादुरभून्महान्।। ३०
बहुसूकरयूथेन स्वपत्न्या च समन्वितः ।
दृष्ट्वा विस्मयमापेदे राजराजः किटीश्वरम्।। ३१
दृष्ट्वा भूपं सूकरेशः सूकरीमाह गर्वितः ।
मधुराधीश्वरः कान्ते क्रीडते मृगयां प्रति ।। ३२

स दृष्ट्वा मामकं यूथं जिघांसुरभियास्यति ।
न जाने पातकं तन्मे पूर्वजन्मनि सञ्चितम् ।। ३३
येनास्मि सौकरीं योनिमागतोऽहमघेन च ।
अस्य बाणोदकैश्शुद्धैः क्षालयिष्यामि पातकम् ।। ३४
दैवेन यन्ममाद्यैव स्वर्गद्वारमनुत्तमम् ।
उद्घाटितकवाटं तद्यास्यामि समराद्दिवम् ।। ३५
नवप्रसूता त्वं पुत्रान् स्तन्यदानेन रक्षितुम् ।
सहसा पर्वतप्रान्तं गच्छ मोहं मयि त्यज ।। ३६
इत्युक्तवन्तं भर्तारं सूकरी प्राह विस्मिता ।
अलङ्कृतापि या नारी वस्त्रैर्माणिक्यभूषणैः ।। ३७
न भाति पतिहीना सा तथाऽहमपि पुत्रकैः ।
प्रविशामि त्वया सार्धं भूमिं वा स्वर्गमेव वा ।। ३८
त्वया विना न शक्नोमि धर्तुं प्राणान्ममेश्वर ।
ततोऽहमपि यास्यामि द्रष्टुं तव पराक्रमम् ।। ३९
इत्युक्त्वा पुत्रवाञ्छां सा त्यक्त्वा भर्तृपरायणा ।
भर्तारं तं पुरस्कृत्य यूथेशं पृष्ठतः स्थिता ।। ४०
सोऽपि व्यूहं प्रकल्प्योच्चैर्वाराहं बलमास्थितः ।
राजराजस्समालोक्य वराहबलसम्भ्रमम् ।। ४१
अभिप्रतस्थे सुभटैस्तुङ्गं तुरगमास्थितः ।
निशितैरायुधैः शूरा दंष्ट्राघातैश्च सूकराः ।। ४२
अकुर्वन् द्वंद्वयुद्धन्तु स्मरणादपि भीतिदम् ।
दंष्ट्राघातैश्शराघातैर्हताश्शूराश्च सूकराः ।। ४३

निपत्य रक्तदिग्धाङ्गा भूमौ स्वर्गं प्रपेदिरे।
एकावशिष्टं युद्धाय गच्छन्तं प्राह सूकरी ।। ४४
एहि कान्त मया सार्धं को लाभो मरणेन ते।
बोधितः प्रियया चैवं प्राह सूकरनायकः ।। ४५
उभयोस्सिंहयोर्मध्ये सूकरः पिबते जलम्।
द्वयोस्सूकरयोर्मध्ये सिंहो न पिबते जलम्।। ४६
एवं सूकरजातेर्हि दृश्यते वै पराक्रमः ।
यो वीरस्संयुगे प्राणांस्त्यजत्यभिमुखे रिपोः ।। ४७
स याति परमं स्थानं देवदेवस्य धूर्जटेः ।
एवं धर्मं विदित्वा तु कथं यास्ये रणान्तरात्।। ४८
तस्मादनेन राज्ञाऽहं योत्स्याम्यभिमुखे स्थितः ।
इत्युक्त्वा कोलराजोऽपि कुर्वन् घुरुघुरारवम्।। ४९
राजानं प्रत्युदचलत्स जङ्गम इवाचलः ।
पत्तिं विद्रावयामास प्रस्थितैः श्वासमारुतैः ।। ५०
पोत्रेण पृथुना वेगात्स्यन्दनानुदचिक्षिपत्।
अतितीक्ष्णैः खुराघातैस्तुरङ्गानप्यपातयत्।। ५१
दंष्ट्राघातैश्च करिणां शुण्डादण्डानखण्डयत्।
अथ राजा समालोक्य सैन्यं सूकरनिर्जितम्।। ५२
तुङ्गं तुरगमारुह्य सज्यमादाय कार्मुकम्।
सूकरं पर्वताकारं शरवर्षैर्ववर्ष च ।। ५३
स तु निर्धूय बाणौघं दंष्ट्राघातैस्सटाच्छटैः ।
जघान वेगात्तुरगं दंष्ट्रया वज्रधारया ।। ५४
राजा तुरंगादाप्लुत्य त्यक्त्वा तं पतितं हयम्।
आरुह्य स्यन्दनं बाणाभिचखान तदङ्गके।। ५५

स वराहोऽपि दंष्ट्राभ्यां पोत्रेण पृथुना खुरैः ।
जवात्सञ्चूर्णयामास ससूतं सहयं रथम् ।। ५६
अवतीर्य रथाद्राजा सूकरं रोषरूषितः ।
गदया वज्रसमया ताडयामास मस्तके ।। ५७
गदाघातेन तीव्रेण सहसा भिन्नमस्तकः ।
क्षतजालिप्तसर्वाङ्गो निपपात महीतले ।। ५८
स पश्यत्येव नृपतौ हित्वा तां सौकरीं तनुम् ।
दिव्याम्बरो दिव्यवपुर्दिव्याभरणभूषितः ।। ५९
दिव्यं विमानमारुह्य प्रययौ त्रिदशालयम् ।
अथ सा दिव्यवपुषं भर्तारं तं विलोक्य च ।। ६०
तेनैव सह गन्तुञ्च निश्चित्य मनसा स्वयम् ।
युयुधे राजराजेन सूकरी भीतिवर्जिता ।। ६१
निपात्य पत्तिं सञ्चूर्ण्य स्यन्दनांस्तुरगान् गजान् ।
दंष्ट्राभ्यां सा विनिर्भिद्य समरं साऽद्भुतं व्यधात् ।। ६२
ततस्तु झर्झरो नाम लुब्धकस्सूकरीं शरैः ।
विव्याध सा स्वदंष्ट्राभ्यां द्विधा कृत्वा न्यपातयत् ।। ६३
पतमानेन तेनापि सा खड्गेन विदारिता ।
स्रवद्रक्तप्रवाहैश्च सूकरी निपपात हा ।। ६४
जनानां पश्यतामग्रे साऽपि दिव्यवपुर्धरा ।
दिव्यं विमानमारुह्य भर्तृवत्त्रिदिवं ययौ ।। ६५
राजाऽपि विस्मितो भूत्वा महाबलपराक्रमः ।
अवशिष्टैर्बलौघैश्च प्रययौ स्वपुरीं प्रति ।। ६६

यत्रैव पर्वताकारा पतिता सौकरी तनुः ।
वराहपर्वत इति तत्रासीत्पर्वतोत्तमः ।। ६७
तत्र सिद्धा योगिनश्च पर्वतेऽत्यन्तपावने ।
तपश्चरन्ति सततमणिमाद्यष्टसिद्धये ।। ६८

ऋषयः-

वराहपर्वतस्येह वराहप्रभवस्य तु ।
महत्त्वं पावनत्वं च कथमासीद्धटोद्भव ।। ६९

अगस्त्यः-

रङ्गविद्याधरो नाम गन्धर्वः पूर्वजन्मनि ।
पुलस्त्यशापात्क्रोडोऽभूत्पुनस्तत्प्रतिशापतः ।। ७०
सुन्दरेशांशभूतेन राजराजेन ताडितः ।
भूयस्त्रिदिवमापेदे पुण्यवान् कान्तया युतः ।। ७१
तस्य पुण्यवतो गात्रसंभूतः पर्वतोत्तमः ।
अत्यन्तपावनश्चासीत्तत्तुल्यं न तपस्स्थलम् ।। ७२
तस्मात्तत्र तपस्यन्ति देवता दानवादयः ।
तेषामनुग्रहार्थं च सिद्धवेषधरो हरः ।। ७३
सुन्दरेशो दयामूर्तिस्तत्र सान्निध्यकृत्सदा ।
यदा वराहयोन्यां ते सञ्जाताः शूद्रसूनवः ।। ७४
तेषां माता सूकरी च जनकस्सूकरेश्वरः ।
उभौ च मुनिशापेन मृगयागतभूभुजा ।। ७५
युद्धं कृत्वा विक्रमेण प्रापतुस्तौ त्रिविष्टपम् ।
वराहशिशवः स्तन्यपानालाभेन तेऽखिलाः ।। ७६

अरक्षकत्वात्तत्रैव प्रातपन्नातपार्दिताः ।
तत्काले सर्वदेवेशः कृपावान् सर्वरक्षकः ।। ७७
सर्वज्ञस्सुन्दरेशश्च सर्वभूतहिते रतः ।
पार्वत्या सहितो देव्या वामार्धासक्तगात्रया ।। ७८
विमानमधिरुह्येशो वृषभध्वजभूषितम् ।
यदृच्छया सञ्चचार शङ्करस्तद्वनान्तरे ।। ७९
दृष्ट्वा देवी क्रोडपोतान् सन्तप्तान् भानुभानुभिः ।
आलोकयालोकयेति दर्शयामास तान् प्रभोः ।। ८०
वराहपोतानालोक्य वरदानविशारदः ।
तन्मातृवेषधारी सन् तेभ्यस्स्तन्यं प्रदाय च ।। ८१
बलं ज्ञानं च विज्ञानं सामर्थ्यं मानुषीं तनुम् ।
विक्रमं च पुनर्दत्वा शम्भुस्साम्बस्तिरोदधे ।। ८२
तत्स्तन्यामृतपानेन बलज्ञानादिसंयुताः ।
मुखमात्रवराहाभा ववृधुः पृथुकाः क्षणात् ।। ८३
हालास्यनाथो भगवान् कालकूटलसद्गलः ।
एवं स्तन्यप्रदानेन क्रोडपोतानपालयत् ।। ८४
पञ्चचत्वारिंशिकेयं लीला प्रोक्ता महेशितुः ।
महाशापमहापापमहातापापनोदिनी ।। ८५

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - वराहशिशुभ्यः स्तन्यप्रदानं नाम*
*एकपञ्चाशोऽध्यायः*

★ ★ ★

# அத்தியாயம் - 51

## 45. பன்றிக் குட்டிகளுக்கு ஸ்தன்ய மளித்தல்

வேகவதீ நதிக் கரையில் குரு தீர்த்தம் (குரு விருந்த துறை, குருவித் துறை) என்ற புனிதமான க்ஷேத்திரம். அங்கு குருநாதர் என்று சிவனும் சித்ரரதர் என்று விஷ்ணுவும் கோயில் கொண்டுள்ளனர். அங்கு ஸுகலன் என்ற விவசாயி, ஸுகலா என்ற மனைவியுடன் வாழ்ந்தான். அவனுக்குப் பன்னிரண்டு குமாரர்கள். வலிவுமிக்கவர். பெற்றோரை இளம் வயதில் இழந்த அவர்கள் பாபத்தில் பயமின்றியும், புண்யத்தில் நாட்டமின்றியும் மனத்தில் தோன்றியபடி வாழ்ந்தனர். வேட்டையாடச் சென்ற போது ஒரு புதரிடையே தவம் செய்து கொண்டிருந்த முனிவரைப் பரிகாசம் செய்து கல்லையும் மண்ணையும் வாரி இறைத்து அவரது தவத்தைக் கலைத்தனர். முனிவர் கோபத்துடன் பன்றிகளாகும்படி சபித்ததும் வணங்கித் தவற்றை மன்னிக்கக் கோரியதும் ஸுந்தரேசரருளால் சாபத்திலிருந்து மீட்பு பெறலாம் என்றார்.

பன்றியின் வயிற்றில் குட்டிகளாகப் பிறந்த ஸமயத்தில் ராஜராஜபாண்டியன் வேட்டையாடக் காட்டிற்கு வந்தான். எதிரே பெருத்த பன்றி தன் மனைவியுடன் எதிர்பட்டது. காட்டுப் பன்றியாதலால் குதிரை மீதேறிவந்த அரசனுடன் மோதுவதற்கு முன் தன் மனைவியைத் தன்னைப் பின் தொடராதிருக்கவும் குட்டிகளைக் காக்கவும் உத்தரவிட்டது. பெண் பன்றியோ கணவனது உதவியின்றித் தன்னால் குட்டிகளைக்காப்பாற்ற இயலாதாகையால் தானும் கூட வருவதாகக் கூறிப் பின் தொடர்ந்தது. இரு சிங்கங்களின் நடுவே பயப்படாமல் காட்டுப் பன்றி நீர்த்துறையில் இறங்கி நீர் பருகும். இரு காட்டுப் பன்றிகளின் நடுவே ஒரு சிங்கம் நீர்த்துறையில் இறங்கப் பயப்படும். காட்டுப் பன்றியிடம் அத்தகைய முரட்டுத் தனமும் பயமின்மையும் உண்டு. காட்டுப் பன்றி முரட்டுத் தனத்துடன் அரசனது பரிவாரங்கள் மீதும் குதிரை யானை முதலியவற்றின் மீதும் தாக்கி விரட்டியது. வெகு நேரம் எதிர்த்துக் களைத்த காட்டுப் பன்றியைக் கதையால்

தலையிலடிக்கப் பன்றி தலை சிதறி விழுந்தது. பெண் பன்றியும் தனித்து மோதி வேடனின் கத்தியால் வெட்டப் பெற்று இறந்தது. படையினரும் அரசரும் பார்த்துக் கொண்டிருக்கும் போதே பன்றிகளிரண்டும் தேவர் வடிவில் வானில் ஒளிமயமாய்ச் சென்றனர். பன்றிகள் அடிப்பட்டு விழுந்த இடம் பன்றி மலை (வராஹாசலம்) என்று முனிவர் தவம் செய்யுமிடம். அந்தப் பன்றிகள் முன் பிறவியில் ரங்க வித்யாதரன் என்ற கந்தர்வரும் அவரது மனைவியுமாவர். புலஸ்தியரின் சாபத்தால் பன்றிகளாகப் பிறந்தனர். பன்றிக்குட்டிகள் தாயை இழந்ததால் உணவின்றிக் கதறின. ஈசனும் பார்வதியும் அங்கு எப்போதும் உலா வருவர். பன்றிக் குட்டிகளிடம் பரிவு கொண்ட பார்வதி ஈசனிடம் தெரிவிக்க ஈசன் அவற்றின் தாயாகி முலைப்பால் தந்து வளர்த்தார். முகம் மட்டும் பன்றியாகக் கீழுடல் மனிதனாக அவர்களை மாற்றி அறிவையும் வலிவையும் ஏனையதையும் தந்து அருள் பாலித்தார். இது நாற்பத்தைந்தாவது லீலை.

★ ★ ★

द्विपञ्चाशोऽध्यायः

## ४६. वराहपोतानां मन्त्रित्वम्

अगस्त्यः -

तान् क्रोडपोतान्सचिवानकरोत्पाण्ड्यभूपतेः ।
यया शम्भुस्सुन्दरेशस्तां लीलां कथयाम्यहम् ।। १
यदा जुगोप भगवान् स्तन्यदानेन तान् शिशून् ।
तदा ते यौवनं प्राप्ता नराकारा मुखं विना ।। २
ईश्वरस्तन्यपानेन बलवन्तोऽतिविक्रमाः ।
समस्तशास्त्रनिपुणाः सदाचारपरायणाः ।। ३
नरास्समस्तावयवैर्मुखमात्रेण सूकराः ।
राजनीतिप्रवीणाश्च वाचा वाक्पतिना समाः ।। ४

ते सदैकत्र सम्भूयावर्तन्त द्वादशार्कवत्।
दयया क्षमया तेषां न तुल्या भुवनत्रये ।। ५
एवंभूतां तेषु कृपां शम्भोरालोक्य विस्मिता।
सुन्दरेशमवोचत्सा सुमीननयनेश्वरी ।। ६
देवदेव महादेव महेश्वर सदाशिव।
सुन्दरेश दयामूर्ते मम विज्ञापनं शृणु ।। ७
वने व्याघ्रादिसंहारे सृष्टा च मृगया त्वया।
राजधर्मो हि मृगया तस्माद्राज्ञो न किल्बिषम्।। ८
नाथस्त्वं सर्वदेवानां जन्तूनामधमः किटिः ।
किटिवेषं समास्थाय कृपैवं या त्वया कृता ।। ९
तत्कारणं वदेदानीं वरदानविशारद।
इति विज्ञापितः शम्भुः सुमीनाक्ष्या सकौतुकम्।। १०
सर्वात्मा सर्वगः शर्वः सुन्दरप्रभुरब्रवीत्।
ब्रह्मादिकीटपर्यन्तं जङ्गमं स्थावरं जगत्।। ११
निखिलं व्याप्य तिष्ठामि चिदात्माऽहमखण्डितः।
तत्तदात्मतया तत्तच्छरीरेष्वहमेव हि ।। १२
प्रविश्य तत्तत्कृत्यानि करोमि निखिलानि च।
आकाशवदनश्चाहमखण्डोऽहमभेदवान्।। १३
अहं तत्तद्वपुर्धृत्वा पालयाम्यखिलं जगत्।
यथा सर्वजनानाञ्च कराद्यवयवाः समाः ।। १४
तथा ममांशिनोंऽशाश्च ब्रह्माद्यास्सकला जनाः ।
प्राणिनाञ्च यथा मैत्र्यं स्वेषु स्वेषु च वर्ष्मसु ।। १५
तथा ममापि जगति मैत्र्यमासीन्मदात्मनि।

अपि च श्रूयतां तेषां शापजातं तपस्विनः ॥ १६
क्रुद्धश्शान्तो मुनिः पूर्वं शापं तत्प्रतिशापकम्।
अपराधं प्रार्थनां च कुर्वतामकरोत्क्रमात्॥ १७
जनिष्यथ क्रोडयोन्यां यूयं मय्यपराधिनः ।
पुनर्मत्प्रतिशापेन सोमेशः स्तन्यदानतः ॥ १८
रक्षिष्यति दयासिन्धुर्युष्मान् भोगापवर्गदः ।
इत्थं प्राप्तानुग्रहास्ते वराहास्सख्यमाययुः ॥ १९
इति शापान्मोचितास्ते सर्वे सूकरसूनवः ।
वराहपर्वतस्यान्तर्गुहायां निवसन्ति ते ॥ २०
पाण्ड्यभूपस्य सचिवान् कारयित्वाऽद्य तानहम्।
तेभ्यो महाभोगमपि दास्याम्यन्ते परामृतम्॥ २१
इति श्रुत्वा सुमीनाक्षी वचनं सुन्दरेशितुः ।
प्रभूतानन्दसद्भावात्पुलकांचितविग्रहा ॥ २२
पुनः पुनः प्रशंसन्ती मनसा तत्कृपां पराम्।
सुखेनास्ते तस्य पार्श्वे सानन्दाऽऽलिङ्ग्य तं शिवम्॥ २३
अथेश्वरः सुन्दरेशः श्रितसर्वार्थसाधकः ।
राजराजनृपं स्वप्ने समागत्यैवमब्रवीत्॥ २४
वराहो यूथनाथो यः सभार्यस्संहृतस्त्वया।
स एव पर्वताकारस्तत्रासीत्सूकरेश्वरः ॥ २५
तत्पुत्राश्च मुनेश्शापान्मोचिता अधुना मया।
मदीयस्तन्यपानेन ज्ञानविज्ञानसंयुताः ॥ २६
तत्पर्वतगुहामध्ये निवसन्ति मदाज्ञया।
सहसा तान् समाहूय कृत्वा मन्त्रिण आत्मनः ॥ २७

राजकार्याणि सर्वाणि कुरु तैः कृतिनां वरैः।
तेषां सामर्थ्यसम्भूतान्महतोऽर्थान्महीपते॥ २८
जित्वा वसुन्धरां सर्वां चिरं जीवाधिकश्रिया।
शम्भुनैवं बोधितस्सन् स्वप्ने पाण्ड्यमहीश्वरः॥ २९
सचिवैस्तान्समाहूय समालोक्य सुविस्मितः।
आत्मनस्सचिवांश्चक्रे बुध्या गीष्पतिसन्निभान्॥ ३०
भूपतेस्सर्वकृत्यार्हा द्वादशैते सुमन्त्रिणः।
महीपमन्दिरद्वारपार्श्वस्थभवनेषु च॥ ३१
वसन्तश्चाप्रमादेन चक्रुः कृत्यानि भूपतेः।
राजराजमहीपं ते राजराजाधिकं श्रिया॥ ३२
अकुर्वन्मन्त्रसामर्थ्यान्मन्त्रिणो मधुराधिपम्।
सन्ध्यादिसर्वकार्येषु तान् समादिश्य सन्ततम्॥ ३३
सुरेन्द्रवत्सुखेनास्ते मधुरायां महीपतिः।
अथ पाण्ड्यमहीपालस्तेषां वैवाहिकक्रियाम्॥ ३४
सचिवानां कन्यकाभिरकरोदधिकश्रिया।
सार्थं सचिवकन्याभिस्ते सर्वे सूकराननाः॥ ३५
मन्त्रिणोऽपि महत्सौख्यमनुभूय चिरं भुवि।
सुन्दरेशस्तन्यपानप्रक्षालितमनोमलाः॥ ३६
सहिता राजराजेन सायुज्यं प्रापुरैश्वरम्।
एवं सूकरपोतेभ्यस्सचिवत्वं प्रदाय च॥ ३७
सुमीनाक्ष्या महादेव्या क्रीडते सुन्दरेश्वरः।
राजराजात्मजः पश्चात्सुगुणो नाम कीर्तिमान्॥ ३८

अपालयन्महीं सर्वां पितुरप्यधिकः श्रिया।
सर्वभूतनिवासस्य सर्वाभीप्सितदायिनः ॥ ३९
षट्चत्वारिंशिका लीला सम्प्रोक्ता सुन्दरेशितुः ।
सत्कलत्राणि सत्पुत्रान् शृण्वतां सम्प्रयच्छति ॥ ४०

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - क्रोडपोतसचिवत्वप्रकल्पनं*
*नाम द्विपञ्चाशोध्यायः*

★ ★ ★

## அத்தியாயம் - 52

## 46. பன்றிகளை மந்த்ரிகளாக்கியது

*ஈசன் பெண் பன்றியாகி வளர்த்த குழந்தைகள் மனித உடலும் பன்றி முகமும் பெற்று அறிவிலும் ஆற்றலிலும் சிறந்து விளங்கினர். கோடிக் கணக்கில் உடலால் வேறுபடுகிற உயிரினம் அனைத்திற்கும் ஆத்மாவாக, உயிரினத்தின் அன்பிற்கு உறைவிடமாக விளங்கும் ஈசருக்குப் பன்றிகளுக்குத் தாயாவதில் அருவருப்பு இல்லை. ருஷி சாபத்தால் உடலால் பன்றியான அவர்கள் ஈசனருளால் இன்று மனித இயல்புக்கு மாறி எல்லாக் கல்வித் துறைகளிலும் தேர்ந்து பன்றிமலையில் வாழ்ந்தனர். ஈசன் அரசனிடம் அவனால் கொல்லப்பட்ட வராஹ தம்பதியரின் புதல்வர்கள் அவனது மந்த்ரியாகிற தகுதி பெற்றுள்ளதால் அவர்களை அழைத்து வந்து அமைச்சராக்க உத்தரவிட்டார். அரசன் அவ்வாறே செய்தான். மந்த்ரிகளின் புதல்விகளுடன் திருமணம் செய்வித்தான். அவர்களும் அரசனுக்குத் தக்க ஆலோசனை தந்து ஆட்சிக்கு உதவினர். இறுதியில் சிவபதம் பெற்றனர். பிறகு ராஜ ராஜனின் புதல்வன் ஸுகுணன் அரசாண்டான். இது நாற்பத்தாறுவது லீலை.*

★ ★ ★

त्रिपञ्चाशोऽध्यायः

## ४७. खञ्जरीटाय मन्त्रोपदेशः

अगस्त्यः -

खञ्जरीटस्योपदेशं मृत्युञ्जयमहामनोः ।
ययाऽकरोत्सुन्दरेशः सा लीला वर्ण्यते मया ।। १
पुरा बलिभुजस्सर्वे खञ्जरीटान्बलोद्धताः ।
तुण्डैरङ्कुशवत्तीक्ष्णैः ताडयन्ति स्म सन्ततम् ।। २
तत्ताडनेभ्यस्सन्त्रस्ताः खञ्जनाना ययुः पुरीम् ।
अवसन् कोटरेष्वेव वनेषु वनजाशिनः ।। ३
तदा तेषां च यूथेषु पूर्वजन्मनि सञ्चितैः ।
पुण्यैर्युक्तः पापलेशात् पक्षी कश्चिदजायत ।। ४
स खञ्जनः कदाचित्तु काकतुण्डैस्सुताडितः ।
चिन्तयामास हृदये स्वपुण्यपरिपाकतः ।। ५
सर्वेषां शत्रवस्सन्ति जनानां जगतीतले ।
शत्रुभिः पीडिताः केचित्पीडयन्त्यथ तानरीन् ।। ६
एतस्य कारणं किं वेत्यचिन्तयदनारतम् ।
चिरेण निश्चयामास शङ्करोपास्तिमेव सः ।। ७
तदुपास्तिः कुत्र गत्वा कर्तव्येति हृदन्तरे ।
ध्यायमानस्य तस्याराद्गच्छन् कश्चिन्मुनीश्वरः ।। ८
तीर्थयात्रापरश्चैवं प्राह गम्भीरया गिरा ।
आधिना व्याधिना वापि रिपुणा मृत्युनांहसा ।। ९
पुनरन्यैर्बहुविधैर्बाधकैर्बाधितस्य च ।
जन्तोस्सद्यस्सुखावाप्त्यै तद्भीतिविनिवृत्तये ।। १०

श्री हालास्यपतिः शम्भुरेक एव जगत्त्रये।
प्रथितश्च प्रवीणश्च यथाऽस्ति न तथा परः ॥ ११
समस्तशम्भुक्षेत्रेभ्यस्तपस्सिद्धिप्रदं द्रुतम्।
श्रीहालास्यं महाक्षेत्रमिति प्राहुर्विचक्षणाः ॥ १२
महद्भ्यस्तीर्थसङ्घेभ्यः सहसाऽघहरं परम्।
हेमपद्माकरं तीर्थं तथास्ति हि सुदुर्लभम् ॥ १३
सर्वेभ्यश्शिवलिङ्गेभ्यः समस्तवरदं परम्।
सुन्दरेशं प्रशंसन्ति सूक्ष्मतत्वार्थवेदिनः ॥ १४
स एव सर्वधर्मदः स एव सर्वकामदः।
स एव सर्वदार्थदस्स एव सर्वमुक्तिदः ॥ १५
स एव सर्वसिद्धिदः स एव सर्वपापहृत्।
स एव सर्वशत्रुहा स एव सुन्दरेश्वरः ॥ १६
भक्त्या परवशेनैवं मुनिना भाषितानि च।
श्रुत्वा वाक्यानि सर्वाणि भरद्वाजोऽतिविस्मितः ॥ १७
गत्वाऽहमपि हालास्यं स्नात्वा हेमाब्जिनीजले।
नत्वा च सुन्दरेशानं तमेव च हृदन्तरे ॥ १८
ध्यात्वोपास्य विजेष्यामि वायसानात्मबाधकान्।
इति निश्चित्य सहसा तत्क्षेत्रं प्राप्य खञ्जनः ॥ १९
तस्मिंस्तीर्थे च संस्नाय दृष्ट्वा लिङ्गं प्रणम्य च।
परितस्सुन्दरेशानं मन्दं मन्दं परिभ्रमन् ॥ २०
प्रदक्षिणान्यनेकानि कृत्वा तत्सन्निधौ स्थितः।
तं प्रेक्ष्य साम्बमीशानं मनसाऽपूजयत्सदा ॥ २१

एवं स खञ्जरीटस्तु सन्ध्यात्रयमधात्तपः ।
तच्चरित्रं पवित्रं स दृष्ट्वेशो विस्मयान्वितः ।। २२
ब्रह्मादिस्तम्बपर्यन्तभूतानामंतरात्मकः ।
सर्वज्ञस्सुन्दरेशानः सर्वभूतहिते रतः ।। २३
भक्तिं दृष्ट्वा भरद्वाजपक्षिणस्तस्य चात्मनि ।
देव्यै शफरनेत्रायै तां सम्भाष्य पुनः पुनः ।। २४
अतिकारुण्यविवशः कदम्बवननायकः ।
दिवसेषु च गच्छत्सु पुनः कतिपयेषु च ।। २५
मृत्युञ्जयं महामन्त्रं भरद्वाजाख्यपक्षिणे ।
ऋषिच्छन्दोदेवताद्यं तस्मा उपदिदेश ह ।। २६
त्र्यक्षरं मन्त्रमेनं त्वं सर्वकामप्रदं द्रुतम् ।
ब्राह्मे मुहुर्त उत्थाय प्रजपात्यादरेण च ।। २७
तन्मन्त्रस्य प्रभावेन समस्ताभीष्टदेन च ।
न भविष्यति भीतिस्ते बलिभुग्भ्यो न संशयः ।। २८
युष्मद्वंशभवेभ्यश्च युष्मद्वंशविवृद्धये ।
कुरु मन्त्रस्योपदेशं ते सर्वे सन्तु निर्भयाः ।। २९
इति चाह कृपाधीनः सुन्दरेशः सदाशिवः ।
तस्य वाक्यानि चाकर्ण्य भरद्वाजो विहङ्गमः ।। ३०
प्रीतः प्रणम्य तं शम्भुमुक्तकालेऽजपच्च तम् ।
अचिराच्छक्तिरुत्पन्ना भरद्वाजस्य पक्षिणः ।। ३१
तदाद्युपरि काकानां खञ्जनः परितो भ्रमन् ।
तुण्डेनाङ्कुशतीक्ष्णेन तेषां मूर्धस्वताडयत् ।। ३२

वायसांस्ताडयन्तं तं निरीक्ष्य निखिला जनाः ।
नाम्ना बलीयानित्यूचुरल्पसत्वश्च खञ्जनम् ।। ३३
त्रिकालज्ञा योगयुक्ता महात्मानश्चिरन्तनाः ।
प्राशंसन्देवदेवस्य स्वातन्त्र्यं सकलेशितुः ।। ३४
प्रभाते श्रूयतेऽद्यापि खञ्जनानां तु कूजितम् ।
मृत्युञ्जयाख्यमन्त्रेण तुल्यरूपं न संशयः ।। ३५
खञ्जरीटस्य यच्चैतन्मन्त्रजापेन भूतले ।
बलीयानिति नामाभूत्तत्प्रसिद्धतरं बुधाः ।। ३६
सुन्दरेशोपदिष्टश्च भरद्वाजाय पक्षिणे ।
मृत्युञ्जयाख्यमद्यापि प्रभाते मन्त्रमुत्तमम् ।। ३७
य उत्थाय प्रसन्नात्मा जपेदृष्यादिसंयुतम् ।
मृत्युं जयत्यसौ धन्यः समस्तानामयानपि ।। ३८
तन्मन्त्रजपमात्रेण दीर्घमायुररोगताम् ।
लब्ध्वा जनोऽतुलैश्वर्यं समरे विजयी भवेत् ।। ३९
इति विरचितलीलां सुन्दरेशेन हर्षात्
पठति परमभक्त्या सादरं यश्शृणोति ।
विविधसकलभोगान् सोऽनुभूयेह लोके
चरमवयसि सत्यं सत्यलोकं प्रयाति ।। ४०
सप्तचत्वारिंशिकेयं लीला प्रोक्ता महेशितुः ।
सर्वशत्रुप्रमथिनी सम्पद्बलविधायिनी ।। ४१

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - भरद्वाजपक्षिणो मृत्युञ्जयमन्त्रोपदेशो नाम*
*त्रिपञ्चाशोध्यायः*

★ ★ ★

## அத்தியாயம் - 53

# 47. குருவிக்கு மந்த்ர உபதேசம்

முன்பு காக்கைகள் தம் கூரிய மூக்குகளால் குருவிகளைக் கொத்தித் துன்புறுத்தின. குருவிகள் கூட்டிற்குள் அடைந்துகிடந்தன. அவற்றில் ஒரு கரிக் குருவி தான் செய்த புண்யத்தின் வலிவால் சிந்தித்தது. தவறொன்றும் இழைக்காத போதும் துன்புறுத்தப்படுவது ஏன் எனச் சிந்தித்தது. ஈசனின் துணை பெற்றால் இந்த எதிர்ப்பைத் தடுக்கலாம் என எண்ணி ஒரு முனிவரது வழி காட்டலில் மதுரையம்பதியை அடைந்தது. பொற்றாமரைக் குளத்தில் நீராடி மூல லிங்கத்தை வணங்கி மனத்தால் வழிபட்டு அங்கேயே சுற்றி வந்தது. ஈசனின் கருணை அதன் மீது பதிந்தது. ஈசன் ம்ருத்யுஞ்ஜயரின் மூன்றெழுத்து மந்த்ரத்தை அதற்கு உபதேசித்தார். ''விடியற் காலையில் இதனைத் தொடர்ந்து ஜபிக்க உனக்குக் காக்கைகளிடமிருந்து பயம் விலகும். உன் ஸந்ததியினருக்கும் இதனை நீயே உபதேசம் செய்வாய்'' என்றார். குருவி ஜபிக்கத் தொடங்கியதும் காக்கைகளிடமிருந்த பயம் அகன்றது. சில நாட்களில் காக்கைகளுக்கு மேல் பறந்து அவற்றின் தலைகளில் கொத்தத் தொடங்கியது. காக்கைகள் குருவியிடம் பயந்தன. வலிவுமிக்க (வலியன்) குருவி என்ற புகழ் பெற்றது. ம்ருத்யுஞ்ஜய மந்த்ர ஜபத்தைக் குருவி தன் இனத்தாருக்கு உபதேசித்து விடியற் காலையில் ஜபிக்க வழி காட்டியது. அதனால் இன்றும் வலியன் குருவி விடியற் காலையில் ம்ருத்யுஞ்ஜய மந்த்ர ஜபத்தைத் தன் கூவலாகச் செய்து நம்மை எழுப்புகிறது. இது நாற்பத்தேழாவது லீலை.

★ ★ ★

चतुःपञ्चाशोऽध्यायः

# ४८. शरारेर्मुक्तिदानम्

अगस्त्यः -

यया मुक्तिं ददौ शम्भुः पक्षिणे च शरारये।
तां लीलामथ वक्ष्यामि विचित्रां विविधेष्टदाम्।। १
पुरा जनपदे कश्चिच्छरारिस्तु पुरातनः।
अत्यगाधेऽति विस्तीर्णे कस्मिंश्चिदमलोदके।। २
तटाके पुरतो मत्स्यान् गृहीत्वोत्प्लुत्य वेगतः।
भक्षयित्वा चिरं तत्र सुखेनैव स्म तिष्ठति।। ३
अनावृष्ट्या कदाचित्स तटाको निर्जलोऽभवत्।
शरारिरथ खिन्नस्सन् बभ्रामाहारकांक्षया।। ४
तपोवनानि सर्वाणि सञ्चरन् सजलानि सः।
ददर्श सत्यतपसस्तपोवनमनुत्तमम्।। ५
तत्रास्ति पावनं तीर्थमच्छोदमिति चाख्यया।
चतुरश्रं चतुर्दिक्षु सोपानैर्मण्टपैर्युतम्।। ६
क्रोशप्रमाणविस्तीर्णं तीरस्थैः पुण्यभूरुहैः।
सदा पुष्पफलोपेतैः परितः परिशोभितम्।। ७
अगाधेऽत्यन्तविमले तज्जले चातिशीतले।
बालाश्च मध्यमा वृद्धाः सम्भूय च पृथक्पृथक्।। ८
उत्प्लुत्योत्प्लुत्य विविधा मत्स्याश्चिक्रीडुरुद्धताः।
तान् दृष्ट्वा स शरारिश्च जलान्तिकमुपागमत्।। ९
तदानीं स्नातुमायाता मुनयो मुक्तमत्सराः।

आकण्ठसलिले तस्थुः तस्मिन् तीर्थे सुशीतले ।। १०
मत्स्यास्तदा महाकाया दूरे तस्थुरबाधकाः ।
शिशवो निकटे तस्थुरतुदन्तश्च तान्मुनीन् ।। ११
निरीक्ष्य तान्विस्मितस्सन् स शरारिरचिन्तयत् ।
एते मुनीन्न बाधन्ते सेवन्ते दासवर्गवत् ।। १२
अम्भोमात्राशना एते तथाऽपि स्थूलविग्रहाः ।
अहिंसाधर्मनिरता आश्रमस्य प्रभावतः ।। १३
तस्मादेतानहं मत्स्यान्दुष्पूरोदरपूर्तये ।
न भोक्ष्ये व्रतमेतच्च करिष्ये करुणावशात् ।। १४
बुभुक्षा महती मेऽस्ति किं कर्तव्यं मयाद्य वै ।
एवं तस्मिन् चिन्तयति शरारौ पुण्यपाकतः ।। १५
तद्दिनं क्षणवत् क्षीणं त्रियामापि तथा गता ।
बुभुक्षा च प्रणष्टाऽभूच्छरारिर्भुक्तवत् स्थितः ।। १६
अत्यन्तं विस्मितो भूत्वा परेद्युः परितो भ्रमन् ।
सरःकोणे स्वजातीयानपश्यत्स बहून् खगान् ।। १७
आगतं तं समालोक्य ते सर्वे तुष्टिमाययुः ।
तैश्चासौ मुदितो भूत्वा चिरं तत्रावसत्सुखम् ।। १८
तत्तीर्थपश्चिमे भागे मण्टपेऽत्यन्तपावने ।
पुराणानि मुनिभ्यश्च प्राह सत्यतपा यदा ।। १९
तत्समीपं तदा प्राप्तस्स शरारिर्विहङ्गमः ।
श्रुत्वा पुराणवाक्यानि विवशोऽभूद्विधेर्वशात् ।। २०
क्षेत्रमाहात्म्यमध्ये तु हालास्यक्षेत्रवैभवे ।

प्रसक्ते सति सानन्दा अभवन्मुनिपुङ्गवाः ।। २१
शरारिरपि सानन्दश्श्रुत्वा हालास्यवैभवम् ।
स्तम्भवन्निश्चलस्तस्थौ सावधानेन चेतसा ।। २२
मधुरापुरवासी तु सुन्दरेशः शिवो यथा ।
तथा दयापरो नास्ति स्थानेष्वन्येषु शङ्करः ।। २३
सद्यस्तपःफलं प्राप्तुं ये वाञ्छन्ति जना इह ।
तैस्सर्वैराशु गन्तव्यं हालास्यमखिलार्थदम् ।। २४
समाप्तौ सिध्यति तपः क्षेत्रेष्वन्येषु निश्चितम् ।
सिद्ध्यत्यारब्धमात्रेण हालास्ये तु तपःफलम् ।। २५
तपोजपार्चनाहोमप्रमुखान्यखिलान्यपि ।
सत्कर्माणि फलन्त्याशु श्रीहालास्ये कृतानि तु ।। २६
देवानान्तु यथा मध्ये महादेवश्शिवः स्मृतः ।
तथा कदम्बकान्तारं महाक्षेत्रं विदुर्बुधाः ।। २७
तीर्थानामादिभूतानां मध्ये हेमाब्जिनी यतः ।
विशिष्टा विद्यते तस्मात् महातीर्थमितीर्यते ।। २८
लिङ्गानामादिभूतानां सुन्दरेशश्चिरन्तनम् ।
महालिङ्गमिति प्राहुर्वेदविज्ञानतत्पराः ।। २९
महाक्षेत्रं महातीर्थं महालिङ्गमिदं त्रयम् ।
जगतामुपकाराय सम्भूयैकत्र विद्यते ।। ३०
तस्मात्तत्सदृशं नास्ति लिङ्गं वा तीर्थमेव वा ।
क्षेत्रं वा त्रिषु लोकेषु भूयो भूयो वदाम्यहम् ।। ३१
भावनामात्रतः स्वस्य सुन्दरेशो यथाऽऽश्रिते ।

दयापरस्तथा नास्ति त्रैलोक्येऽपि महेश्वरः ।। ३२
यत्रास्ते सुन्दरेशानः शङ्करश्चन्द्रशेखरः ।
तत्र गन्तव्यमश्रान्तं भोगमोक्षेच्छुभिर्जनैः ।। ३३
एवन्तु सत्यतपसो वचांसि विविधानि च ।
श्रुत्वा शरारिश्शकुनिरत्यन्तमपि पिप्रिये ।। ३४
हित्वा तत्सर आसाद्य मधुरां सद्य एव सः ।
संस्नाय हेमपद्मिन्यां पावनायां मुदान्वितः ।। ३५
अथ तद्धाम सम्प्राप्य सुन्दरं सुन्दरेशितुः ।
प्रदक्षिणानि कुर्वाणः प्रणम्य च पुनः पुनः ।। ३६
संवीक्ष्य तन्महालिङ्गं तदग्रे निश्चलः स्थितः ।
हृदयेऽपि शिवं ध्यात्वा द्रव्यैस्सङ्कल्पितैर्हुदा ।। ३७
तमुपास्ते त्रिकालं सः अन्तर्यागविधानतः ।
अनेककोटिलिङ्गानामादिभूतं च नायकम् ।। ३८
श्रीमद्धालास्यनिलयं सच्चिदानन्दविग्रहम् ।
महालिङ्गं महासिद्धिकारणं कलुषापहम् ।। ३९
पुरुषार्थप्रदं सद्यः पुरुहूतप्रपूजितम् ।
सद्यस्समस्तपापघ्नं समस्तापद्विनाशनम् ।। ४०
सर्वसम्पत्प्रदं सद्यद्संसारोत्तारणक्षमम् ।
कारणं सर्वतत्वानां कारुण्यामृतसागरम् ।। ४१
समस्तलोकभयदकालकूटहरं हरम् ।
एवं समाराधयतः शरारेर्विहगस्य च ।। ४२
36 दिनानि पञ्च यातानि त्रिगुणान्यभवन् क्रमात् ।

षोडशे दिवसे प्राप्ते स्नानाय प्रातरुद्यतः ॥ ४३
हेमाब्जिनीतटं प्राप्य तत्रातिष्ठत्क्षणं खगः ।
विविधान् पुरतो मत्स्यान् वीक्ष्य विस्मितमानसः ॥ ४४
स शरारिः क्षुधार्तस्तान्हन्तुं बुद्ध्या त्वचिन्तयत् ।
अथ क्षणेन नष्टाऽभूत्तस्य हिंसारता मतिः ॥ ४५
सञ्जाता सन्मतिस्सद्यः पक्षिणः प्रयतात्मनः ।
विकारहेतौ विषये दृष्टेऽप्यविकृताश्च ये ॥ ४६
त एव हि महात्मानस्त्वत्यन्तं चपलोऽभवम् ।
मत्स्यानां दर्शने जाते धिङ्मां मूढधियं ध्रुवम् ॥ ४७
एवं चिन्तयतस्तस्य स्वभक्तस्य खगस्य च ।
सच्चरित्रपवित्रस्य सच्चिन्तामतिदुर्लभाम् ॥ ४८
ज्ञात्वा श्रीसुन्दरेशानो देव्या शफरनेत्रया ।
समन्वितोऽतिसन्तुष्टस्तदनुग्रहतत्परः ॥ ४९
हेमाब्जिनीं तां निर्मत्स्यामन्यैश्च जलजंतुभिः ।
शून्यांश्च विदधे पूर्वं स्फुरन्मत्स्यादिसङ्कुलाम् ॥ ५०
पश्चाच्च प्रददौ मुक्तिं शम्भुस्तस्मै शरारये ।
सारूप्यरूपिणीं शुद्धामनन्तानन्ददायिनीम् ॥ ५१
हिंसाधर्मोऽप्यहिंसायां निरतत्वाच्छिवाश्रयात् ।
शिवलोकं खगः प्राप्य गणानामग्रणीरभूत् ॥ ५२
अष्टचत्वारिंशिकेयं लीला नीपाटवीपतेः ।
श्रोतृभ्यश्च सकृत्पुंभ्यः सर्वार्थान् सम्प्रयच्छति ॥ ५३

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - कोयष्टेर्मुक्तिप्रदानं नाम*
*चतुःपञ्चाशोऽध्यायः*

* * *

## அத்தியாயம் - 54

## 48. நாரைக்கு முக்தி அளித்தல்

ஒரு பெருங்குளத்தில் கிழ நாரை மீன் பிடித்துத் தின்று வாழ்ந்து வந்தது. மழையின்மையால் குளம் வற்ற, நீர் நிலைகளைத் தேடிச் சென்றது. அச்சோதம் (ஸந்தியாமடம்) என்ற புனிதமான குளம். அதில் நிறைய மீன்கள் நீரின் மீ தெழும்பி விளையாடின. நாரை அவற்றைப் பிடிக்க முற்படும்போது முனிவர்கள் அதில் நீராட வந்தனர். அவர்களைக் கண்டதும் பெரு மீன்கள் விலகின. சிறு மீன்கள் அருகில் சென்று விளையாடின. அஹிம்ஸை அங்கு நிலவியது. நாரையும் மீனைத் தின்பதில்லை என வ்ரதம் பூண்டது. பசி கடுமையாகியது. இரவு கழிந்து பொழுது விடிந்தது. நாரை பசியை உணரவில்லை. வயிறு நிறைந்திருந்தது. தன் இனத்தைச் சார்ந்த பறவைகளும் அவ்வாறே இருந்தன. முனிவர்கள் புராணம் கேட்டனர். அவர்களருகில் சென்ற நாரையும் புராணம் கேட்டது. ஹாலாஸ்யத்தின் பெருமை உணர்ந்ததும் அதைப் போன்ற க்ஷேத்திரம் தீர்த்தம் ஈசனது லிங்கம் என மூன்றிலும் சிறந்தது வேறில்லை எனக் கேட்டதும் உடன் அங்கு சென்று பொற்றுமரைக் குளத்தில் நீராடி ஈசனை அசையாமல் நின்றுகண்டுகளித்தது. மனத்தால் வழிபட்டது. பதினைந்து நாட்கள் கழிந்தன. பதினாரும் நாள் பொற்றுமரைக் குளத்தில் நீராடும் போது மீன்கள் சுற்றிவருவதைக் கண்டதும் பழைய உள்ளத்து வாஸனைமேலிட்டு மீனைப் பிடிக்கத் தாவியதும் எதிர்பாராமல் மனம் மாறியது. ஈசன் மீனாக்ஷியுடன் தரிசனம் தந்தார். பொற்றுமரைக் குளத்தில் உயிரினமனைத்தையும் மறையச் செய்தார். நாரைக்கு ஸாரூப்ய முக்தி வழங்கினார். இது நாற்பத் தெட்டாவது லீலை.

★ ★ ★

पञ्चपञ्चाशोऽध्यायः

# ४९. पुरसीमप्रदर्शनम्

अगस्त्यः -

भूषाभुजङ्गभोगेन पुरसीमावसानकम्।
यया व्यक्तीचकारेशः सा लीलाऽथ मयोच्यते ।। १
राजराजाख्यपाण्ड्यस्य तनयो विनयान्वितः ।
सुगुणाख्यश्चिरं पृथ्वीं परिपाल्य दिवं ययौ ।। २
तदात्मजश्चित्ररथस्तत्पुत्रश्चित्रभूषणः ।
चित्रध्वजस्तस्य सुतश्चित्रवर्मा तदात्मजः ।। ३
तस्माज्जातश्चित्रसेनस्तत्सूनुश्चित्रविक्रमः ।
तत्सुतो राजमार्ताण्डो मार्ताण्ड इव दीप्तिमान् ।। ४
ततस्तु तस्मात्सञ्जातो राजचूडामणिर्नृपः ।
ततस्तु तनयो जातो राजशार्दूल इत्यथ ।। ५
राजशार्दूलतनयो द्विजराजकुलोत्तमः ।
आयोधनप्रवीणोऽभूत् द्विजराजकुलोत्तमात् ।। ६
आयोधनप्रवीणाच्च सञ्जातो राजकुञ्जरः ।
राजकुञ्जरसूनुश्च परराजभयङ्करः ।। ७
उग्रसेनस्तु तत्पुत्रो महासेनस्तदात्मजः ।
शत्रुञ्जयस्तु सञ्जातो महासेनमहीपतेः ।। ८
शत्रुञ्जयाद्भीमरथस्तस्माद्भीमपराक्रमः ।
तस्मात्प्रतापमार्ताण्डस्ततो विक्रमकञ्चुकः ।। ९

युद्धकोलाहलस्तस्माज्जातो विक्रमकञ्चुकात् ।
युद्धकोलाहलात्पाण्ड्याज्जातश्चातुलविक्रमः ।। १०
तस्मादतुलकीर्तिश्च ततः कीर्तिविभूषणः ।
एवं परंपरा पाण्ड्यभूपालानामनुक्रमात् ।। ११
सुन्दरेशांशभूतानां कथिता कल्मषापहा ।
एते पाण्ड्यमहीपाला मधुरानगरीश्वराः ।। १२
क्रमाद्विश्वम्भरां सर्वां परिपाल्य दिवं ययुः ।
ततो मन्वन्तरे प्राप्ते कल्लोलाविद्धमूर्तिकः ।। १३
पृथ्वीमेकोदकां चक्रे स्थलशेषां पयोनिधिः ।
महाप्रलयकालेऽपि न नष्टा मधुरापुरी ।। १४
गमिष्यति विनाशं सा कथं मन्वन्तरादिषु ।
प्रासादस्सुन्दरेशस्य हेमपद्माकरः परः ।। १५
निलयश्च महादेव्या हालास्यक्षेत्रमद्भुतम् ।
प्राप्ते प्रलयकालेऽपि विनाशं प्राप नाब्धिना ।। १६
सुन्दरेश्वरसांनिध्यात्सदा लिङ्गे विशेषतः ।
तल्लिङ्गस्य लयो नास्ति संवर्तेषु महत्स्वपि ।। १७
सुमीनाक्ष्या महादेव्या हालास्यक्षेत्रमद्भुतम् ।
ईशापदानसम्भूतमद्रीणामपि बृन्दकम् ।। १८
हेमपद्माकरस्तीर्थं तथान्यत्सप्तसागरम् ।
पालितं परमेशस्य प्रभावानां प्रसिद्धये ।। १९
महातपैर्महावातैर्महावर्षैश्चराचरम् ।
जगद्विनाशमगमत्प्रवृद्धैरपि सागरैः ।। २०

संवर्तान्ते तु सम्भूते चिरकाले गते सति।
वातवर्षातपाश्शान्ताः प्रवृद्धा अपि सागराः ।। २१
यथापूर्वमभूद्भूमिर्निबिडा काननैस्सह।
देवतिर्यङ्मनुष्याद्यास्स्रष्ट्रा सृष्टाश्च जन्तवः ।। २२
सूर्यात्सोमाच्च सञ्जाताः पार्थिवा अपि पूर्ववत्।
पाण्ड्यश्चेरश्च चोलश्च राजानोऽप्यभवन् क्रमात्।। २३
वंशशेखरपाण्ड्याख्यो राजाऽभूत्पाण्ड्यमण्डले।
सुन्दरेश्वरदेवस्य परितस्तु विमानकम्।। २४
पुरीमल्पीयसीं कृत्वा न्यवसत्कांश्चिदब्दकान्।
कालेन केनचित्तस्मिन्पुरे तेनाभिरक्षिताः ।। २५
प्रजास्संवर्धिता आसन् निबिडाऽऽसीच्च सा पुरी।
प्रजानामपि बाहुल्यं स्वपुरस्याल्पतां च सः ।। २६
दृष्ट्वा विषण्णहृदयः पुनः पुनरचिन्तयत्।
पश्चात्कदाचिद्देवेशं करुणावरुणालयम्।। २७
कदम्बकाननाधीशं शङ्करं प्राप्य भक्तिमान्।
वंशशेखरपाण्ड्योऽसौ विज्ञापनमचीकरत्।। २८
देवदेव महादेव मधुरानगरीश्वर।
चतुराननशार्ङ्गिभ्यामाराधितपदद्वय।। २९
देवतासार्वभौमस्य पुरी तव गरीयसी।
तत्प्रमाणं न जानन्ति मादृशाः पामरा जनाः ।। ३०
यथा व्यक्तं भवेत्तन्मे तथा कुरु कृपानिधे।
इति राज्ञा प्रार्थितस्सन् सुन्दरेशस्सदाशिवः ।। ३१

सर्वज्ञश्चन्द्रमकुटः शरणागतवत्सलः ।
आत्मलिङ्गादाविरासीद्रम्यां सिद्धाकृतिं दधत् ।। ३२
गर्भधाम्नोऽथ निर्गत्य भर्गः पन्नगभूषणः ।
महामण्टपमध्यस्थवंशशेखरभूपतेः ।। ३३
समीपं प्राप्य तं वीक्ष्य कटाक्षेण कृपावता ।
भूषणं स्वस्य भुजगं भुजङ्गं भोगिनां वरम् ।। ३४
वासुकिं प्रेषयामास पुरसीमान्तदर्शने ।
शङ्करस्याज्ञया सोऽपि तद्भुजादवरुह्य च ।। ३५
शम्भोस्तु पुरतः स्थित्वा विज्ञप्तिमिति चाकरोत् ।
जिह्मगः खल्वहं देव सालो जिह्मो भवेद्ध्रुवम् ।। ३६
तस्य सालस्याभिधानं मन्नाम्ना भवतु प्रभो ।
इत्युक्त्वा योजनामात्रं प्राच्यां लिङ्गवरस्य च ।। ३७
गत्वा स्ववालं निक्षिप्य प्रदक्षिणवशेन सः ।
भोगी भोगेन दीर्घेण परितो मधुरापुरीम् ।। ३८
परिवेष्ट्याननं स्वस्य वालप्रान्ते न्ययोजयत् ।
पुरीप्रमाणं राज्ञस्स दर्शयित्वेति वासुकिः ।। ३९
भुजङ्गभूषणस्याथ भुजं प्राप भुजङ्गमः ।
ततस्सिद्धाकृतिः शम्भुर्वंशशेखरभूपतिम् ।। ४०
भोगिभोगप्रमाणेन प्राकारं कारयाद्भुतम् ।
पालिताभिः प्रजाभिस्त्वं चिरं जीवेत्युदीर्य च ।। ४१
अन्तर्दधे महालिङ्गे तरङ्ग इव वारिधौ ।
अथ नत्वा महीपालो लिङ्गमूर्तिं सदाशिवम् ।। ४२

समर्प्य गोलकं तस्मै नवरत्नविचित्रितम्।
गङ्गाचन्द्रकलाभ्यां च किरीटमपि शोभितम्।। ४३
प्रभां सकल्पवृक्षां च सुवस्त्राभरणानि च।
प्राकारं कारयामास जिह्मं जिह्मगवर्त्मना। ४४
तदाप्रभृति तत्क्षेत्रं कदम्बवनसंज्ञितम्।
श्रीहालास्यमिति प्रोक्तं बुधैराशीविषाख्यया।। ४५
योजनद्वयमात्रेण विस्तरेण समन्विता।
मधुरा नगरी चासीदायामेन च तावता।। ४६
श्रीमत्पुष्पवनक्षेत्रं तस्याः प्राग्द्वारमीरिताम्।
दक्षिणद्वारमभवत्सुब्रह्मण्यमहाचलः ।। ४७
श्रीपत्रिकापुरं प्रत्यग्द्वारं पुर्याः प्रकीर्तितम्।
उदग्द्वारप्रदेशस्तु विश्रुतो वृषभाचलः ।। ४८
श्रीहालास्य शिवक्षेत्रप्रमाणमिति कीर्तितम्।
तदन्तरे प्रविष्टा ये जन्तवस्सकला अपि।। ४९
पशुपक्षिमृगाद्याश्च तत्रस्थाः स्थावरा अपि।
जीवन्मुक्ता इति ज्ञेया निरघाश्शङ्करांशकाः ।। ५०
कृत्वा महान्ति पापानि श्रीहालास्ये मृताश्च ये।
ते सर्वे शिवसायुज्यं लभन्ते न हि संशयः ।। ५१
ज्ञात्वा हालास्यमाहात्म्यमित्थं मतिमतां वराः।
निवसन्ति च तत्रैव इहामुत्र सुखेप्सवः ।। ५२
श्रीहालास्याख्यमतुलं वृत्तं प्राकारमद्भुतम्।
निर्वर्त्य पाण्ड्यभूपस्तां पुरीमत्यलकां व्यधात्।। ५३

अम्भोदपदसंरोधिहैमप्रासादसंयुताम्।
ध्वजदण्डाग्रसंस्पृष्टवियद्गङ्गाजलान्विताम्॥ ५४
आदित्यरथसप्ताश्वचर्वितोद्यानपल्लवाम्।
होमधूमपरिक्लिष्टसुरसिन्धुसरोरुहाम्॥ ५५
यजमानद्विजाहूतसर्वदेवसमाकुलाम्।
फुल्लकल्हारकमलकान्तकासारशोभिताम्॥ ५६
एवमत्यद्भुतां कृत्वा महतीं मधुरापुरीम्।
प्रासादं सुन्दरेशस्य प्राकारान् गोपुराणि च॥ ५७
देव्याश्शफरनेत्राया निलयं मण्टपानि च।
अन्यच्च सकलं जीर्णं नूतनीकृत्य वस्तु च॥ ५८
काञ्चनैरपि रत्नैश्च वितानैश्छत्रचामरैः।
अलंचक्रे वस्तुजातं प्रासादाद्यं स भूपतिः॥ ५९
प्रलयात् पूर्वमवनिर्यथाऽसीत्सा तथाऽभवत्।
प्रासादाद्यं शङ्करस्य पूर्ववद्राजते पुनः॥ ६०
राजा च मुदितो भूत्वा देवब्राह्मणभक्तिमान्।
राज्यं चकार मनुवद्धर्ममार्गरतस्सदा॥ ६१
सुमीनाक्षीपतिश्शम्भुस्स भक्तानामनुग्रहम्।
कर्तुं करोति सान्निध्यं सदा लिङ्गे विशेषतः॥ ६२
तत्कारुण्यकटाक्षेण वीक्षितो वंशशेखरः।
वंशचूडामणिं पुत्रं लब्ध्वा च चिरमैधत॥ ६३
इयमेकोनपञ्चाशी लीला प्रोक्ता महेशितुः।
सकृच्छ्रवणतः पुंसां सर्वास्सिद्धीः प्रयच्छति॥ ६४

पुरजित्कृतलीलायाः पुरसीमप्रसिद्धये।
भक्त्या श्रोता च वक्ता च चिरं जीवति भूतले ॥ ६५

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - पुरसीमप्रदर्शनं नाम*
*पञ्चपञ्चाशोऽध्यायः*

★ ★ ★

## அத்தியாயம் - 55

## 49. வாஸுகியால் நகர எல்லை வகுத்தல்

*ஸுகுணன், சித்ரரதன், சித்ர பூஷணன், சித்ரத்வஜன், சித்ரவர்மா, சித்ர ஸேனன், சித்ரவிக்ரமன், ராஜமார்தாண்டன், ராஜசூடாமணி, ராஜ சார்தூலன். த்விஜராஜ குலோத்தமன். ராஜகுஞ்ஜரன், பரராஜ பயங்கரன். உக்ரஸேனன், மஹாஸேனன், சத்ருஜ்ஞயன், பீமரதன், பீமபராக்ரமன், ப்ரதாப மார்தாண்டன் விக்ரம கஞ்சுகன், யுத்த கோலாஹலன், அதுல விக்ரமன், அதுல கீர்த்தி, கீர்த்தி விபூஷணன் என ராஜசேகரனுக்குப் பின் வந்த அரசர்கள். அவர்களுடன் அந்த மன்வந்தரம் முடிந்தது. கடல் பூமியை விழுங்கியது. மதுரையும் ஸுந்தரேசரின் ஆலயமும் பொற்றாமரைக் குளமும் ஸப்தஸாகர தீர்த்தமும் அழியாமல் நிலைத்து நின்றன. மறுபடி உலகம் மலர்ந்து வளர்ந்தது. பாண்டியரும் சேரரும் சோழரும் தம் தம் பகுதியை ஆண்டனர். வம்ச சேகர பாண்டியன் ஆட்சியைப் பெற்றான். மதுரை சிறு நகரமாக இருந்தது. மக்கள் தொகை பெருகியது. பாண்டியன் நகர விரிவாக்கத்திற்காக ஈசனிடம் நகரத்தின் பழைய எல்லையை வகுத்துத் தர வேண்டினான். ஈசன் தன் கங்கணமாயிருந்த வாஸுகியை எல்லையை வகுத்துத் தர ஆணையிட்டார். பாம்பின் நடை வளைந்து வக்ரமாக இருக்கும். அதன்படி வாலை ஆலயத்தின் வாயில் வைத்து நகரைச் சுற்றி அளவு காட்டி மறுபடி வாயை வாலிருந்த இடத்தில் வாஸுகி வைத்தான். அதன்படி எழுப்பிய மதில் வாஸுகி மதில் எனப் பெயர்*

பெற்றது. எல்லை காட்டிய வாஸுகி மறுபடி சிவனது அணியானுன். விஷப் பாம்பால் அளவிடப் பெற்றதால் நகரம் ஹாலாஸ்யம் என்ற பெயர் பெற்றது. கிழக்கில் திருப்பூவணம் தெற்கில் திருப்பரங்குன்றம் மேற்கில், திருவேடகம் வடக்கே விருஷபாசலம் என்ற நான்கெல்லைக்குள் நகரம் விரிவடைந்தது. மன்வந்தர ப்ரளயத்தில் சிதிலமாயிருந்த ஆலயமும் புதுப்பிக்கப் பெற்றது. வம்ச சேகரனுக்கு வம்ச சூடாமணி என்ற புதல்வன் உண்டானுன். இது நாற்பத்தொன்பதாவது லீலை.

★ ★ ★

## षट्पञ्चाशोध्यायः

## ५६. चोलसेनाभञ्जनम्

अगस्त्यः -

वंशशेखरभूपाले वसुधां सति शासति ।

सम्भूय बहवो भूपास्तेन योद्धुं समाययुः ।। १

वीरो विक्रमचोलस्तु तेषां मध्ये महत्तरः ।

प्रधानशत्रुरभवत्तस्य पाण्ड्यमहीपतेः ।। २

नरेशश्च गजेशश्च शूरश्चाश्वपतिर्महान् ।

एते विक्रमचोलस्य नृपाः प्रापुस्सहायताम् ।। ३

असङ्ख्याता गजाश्चाश्वा नराश्शूरतरा अपि ।

तैर्नरेन्द्रैस्सहायाताः पुनरन्येऽपि पार्थिवाः ।। ४

सर्वे ते नृपशार्दूलाः सह्यकन्यातटे शुभे ।

स्कन्धावारं प्रकल्प्याथ न्यवसन्नाहवोद्यताः ।। ५

तद्योधा मधुरां प्राप्य त्वगृह्णन् गोधनं बहु ।

तटाकानाञ्च तीराणि बभञ्जुश्चोन्नतानि च ।। ६

व्रीह्यादीनामायतिश्च परिवृत्य न्यवारयन्।
पाण्ड्योऽपि सचिवैस्साधँ मन्त्रयामास दैष्टिकः ॥ ७
चोलाद्या बहवो भूपा बहुसेनाभिरागताः ।
बलेन जेतुं तान् सर्वानशक्ता दुर्बला वयम् ॥ ८
श्रीहालास्यपतिश्शम्भुश्शरण्यो भक्तवत्सलः ।
स एक एव चास्माकं सहायोऽन्यो न कश्चन ॥ ९
इत्युक्तवति भूपाले शम्भुभक्तिसमन्विते।
तदुक्तं सत्यमेवेति प्रत्यूचुः सचिवा नृपम् ॥ १०
अट्टालसुन्दरं शम्भुमिष्टार्थदमिह द्रुतम्।
सम्प्राप्य प्रार्थयामास वंशशेखरभूपतिः ॥ ११
देवदेव कृपासिन्धो प्राणतार्तिहर प्रभो।
अट्टालवीर वरद विष्टपत्रयतुष्टिद ॥ १२
त्वमेव मम माताऽसि त्वमेव च पिता मम।
त्वमेव मम बन्धुश्च त्वमेवासि गुरुर्मम ॥ १३
त्वमेव मम विद्या च त्वमेव द्रविणं मम।
त्वमेव मे रक्षिता च सर्वं वस्तु त्वमेव मे ॥ १४
चोलेन बहवो भूपा मया योद्धुं समागताः ।
तान् जेतुं मम शक्तिर्न किं कर्तव्यमितः परम् ॥ १५
त्वदीयं क्षेत्रमेवैतत् श्रीहालास्यं परात्परम्।
अत्र स्थिता जनास्सर्वे त्वदीया एव शङ्कर ॥ १६
अहं त्वद्दास एवास्मि नात्र सन्देहकारणम्।
त्वत्क्षेत्रस्य त्वदीयानां जनानां मम वा प्रभो ॥ १७

भविष्यति ध्वंसनश्चेत्तत्तवैव हि दूषणम्।
इत्युक्त्वा सोऽश्रुपूर्णाक्षो दण्डवत् प्रणनाम च ।। १८
मा भैषीर्नृप धीरस्सन् युद्धं कुर्वरिभिस्सह ।
साहाय्यं ते करिष्यामीत्यैशमाविरभूद्वचः ।। १९
तच्छ्रुत्वा विस्मितस्सम्राट् सन्तोषातिशयान्वितः ।
प्रणम्याष्टाङ्गपञ्चाङ्गत्र्यङ्गैश्शम्भुं पुनः पुनः ।। २०
सहसा भस्मनोद्धूल्य स्वकीयञ्च कलेबरम्।
दृढमामुक्तकवचस्स्वयं शूरतरो नृपः ।। २१
स्वल्पसेनारथगजवाजिभिश्च समन्वितः ।
शम्भुं प्रदक्षिणीकृत्य नत्वा युद्धाय निर्ययौ ।। २२
पाण्ड्यनिर्गमनं श्रुत्वा चोलो विक्रमविश्रुतः ।
सहायभूतैरनन्यैश्च भूपैस्सह समाययौ ।। २३
प्रथितौ तावुभौ पाण्ड्यचोलौ विक्रममानितौ ।
आभिमुख्यं प्रापतुश्च वृषाद्रेरुत्तरस्थले ।। २४
द्वंद्वयुद्धमभूत्तेषां योधानां पाण्ड्यचोलयोः ।
धन्विनस्तु भटाः केचित् शरैस्तीक्ष्णतरैरपि ।। २५
सहायभूताश्चोलस्य प्रजघ्नुः पाण्ड्यराड्भटान्।
सिंहनादं समाकर्ण्य योधानां चोलभूपतेः ।। २६
हरश्चाट्टालनिलयो देवो धन्व्यभवज्जवात्।
सुन्दरेश्वर इत्येव स्वनामांकान् बहूनपि ।। २७
पाण्ड्यराड्भटमध्यस्थः शरान्व्यसृजदद्भुतान्।
एकश्चोलस्य योधानां बाधते स्म शतं शरः ।। २८

दृष्ट्वा चोलमहीपस्तं शरं शंभ्वाख्ययाङ्कितम्।
विशिष्टत्वात् बुद्धिमत्त्वादेवं चित्ते ह्यचिन्तयत्॥ २९
सुन्दरेशः स्वभक्तानां कामधुक्कामधेनुवत्।
चिन्तामणिरिवाभाति चिन्तितार्थप्रदानतः॥ ३०
कल्पपादपकल्पश्चानल्पसङ्कल्पकल्पनात्।
भुवनेष्वपि सर्वेषु प्रसिद्धो यः परश्शिवः॥ ३१
तमेव नूनं भूपालः पुरस्कृत्य समागतः।
तेन योद्धुं वयं तस्मान्न शक्ताश्शम्भु वैभवात्॥ ३२
पुरेशो भक्तरक्षार्थमकरोत्काष्ठविक्रयम्।
योत्स्यामश्चेदनेनैव नष्टा एव वयं ध्रुवम्।
इति निश्चित्य योधान् स्वान् ज्ञातार्थानकरोत्तदा।
नराश्वगजनाथाद्यान् भूपानेवमबोधयत्॥ ३४
चोलभूपतिवाक्यं ते श्रुत्वा वंशभवा नृपाः।
विहायायोधनोद्योगं तूष्णीमेव स्थिता भटैः॥ ३५
पुनर्म्लेच्छतुरुष्काद्या इत्युक्तं चोलभूपतिम्।
प्रभर्त्स्य योद्धुमुद्योगमकुर्वन्नतिविक्रमाः॥ ३६
अट्टालवीरं तं शम्भुं दृष्ट्वा प्रत्यक्षतोऽग्रतः।
पाण्ड्यभूपो निर्भयस्सन् तस्थौ धीरो रणाङ्गणे॥ ३७
अट्टालवीरस्सहसा भक्तापद्भञ्जनक्षमः।
स्वनामाङ्कशरश्चैकं व्यसृजत्तानरीन् प्रति॥ ३८
विसृष्टस्तेन देवेन तीक्ष्णस्तेजोमयश्शरः।
सहस्रधा प्रभिन्नोऽभूत्सहस्रांशुरिवांशुभिः॥ ३९

सर्वान् म्लेच्छतुरुष्काद्यान्मानविक्रममोहितान्।
सरन्ध्रानकरोत्सद्यः स शरो हृत्प्रदेशतः ।। ४०
शम्भुनामाङ्कितैर्बाणैस्सर्वे ते भिन्नवक्षसः ।
गजैरश्वैस्स्वकीयैश्च सहिता न्यपतन् स्थले ।। ४१
रणाङ्गणं समालोक्य गजादिशवपूरितम्।
चोलः स्तुवन् सुन्दरेशवैभवं प्रययौ क्षणात्।। ४२
चोलं तुरगमारुह्य गच्छन्तमतिवेगतः ।
आलोक्यान्ये महीपाश्च निश्वसन्तस्तमन्वयुः ।। ४३
एवमट्टालवीरस्तु विजयं च पराजयम्।
ददौ पाण्ड्याय चोलाय स्वतन्त्रो भक्तवत्सलः ।। ४४
किञ्चित् स्मित्वा पाण्ड्यमुखं कटाक्षेण विलोक्य च।
अट्टालवीरश्शम्भुः स्वमट्टालं समुपाविशत्।। ४५
पाण्ड्योऽप्यक्षतसर्वाङ्गश्चाक्षतैः स्वजनादिभिः ।
सहितोऽट्टालगं शम्भुं नत्वा प्रस्तुत्य भक्तितः ।। ४६
मुक्ताफलानि चित्राणि भूषणान्यम्बराणि च।
देवाय प्रददौ तस्मै रत्नचित्रधनुश्शरौ ।। ४७
सर्वे प्रत्यक्षतो दृष्ट्वा वीर्यमट्टालवासिनः ।
प्राशंसन्नाथ नाथेति मधुरावासिनो जनाः ।। ४८
वंशशेखरभूपोऽपि वरवाग्भिः कवीश्वरैः ।
प्रशस्यमानो मग्नोऽभून्महासन्तोषसागरे ।। ४९
अथाट्टालपतेः शम्भोरनुग्रहमभीष्टदम्।
लब्ध्वा सर्वानरीन् जित्वा सार्वभौमोऽभवन्नृपः ।। ५०

इति पञ्चाशिका लीला कदम्बवनवासितः ।
मया प्रोक्ता च युष्माकं श्रोतॄणामिष्टसिद्धिदा ।। ५१

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*

*हालास्यमाहात्म्ये - चोलसेनाप्रभञ्जनं नाम*

*षट्पञ्चाशोऽध्यायः*

★ ★ ★

## அத்தியாயம் - 56

## 50. பாண்டியர் படைக்குத் துணை போதல்

*வம்சசேகரபாண்டியனுக்குப் பல எதிரிகள். அவர்களில் விக்ரம சோழன் முக்யமானவன். சிற்றரசர்கள் பலர் சோழனுடன் கூடிப் பாண்டியனை எதிர்க்கக் காவேரிக் கரையில் முகாமிட்டனர். அவர்களில் சிலர் மதுரைக்கு வந்து பசுக்களைத் திருடுவதும் களத்திலிருந்து கொண்டுவருகிற நெல் முதலானவற்றைப் பறிமுதல் செய்வதும் எனத் துன்புறுத்தினர். பாண்டியனின் படை வலிவு மிகக் குறைவு. ஈசனே கதி, அவர் ஒருவரே நெருக்கடியில் உதவுபவர்; என நம்பி அட்டால ஸுந்தரரைப் பாண்டியன் சரணடைந்தான். ஈசனும் பரிவுடன் ''பயப்படாதே' எதிரிகளுடன் போர்புரிவாய். நான் உதவுவேன்'' என்று கூறினர். ஈசனை வலம்வந்து விருஷபமலையின் வடக்குப் பகுதியில் சோழருடன் போரிட்டான். அட்டால ஸுந்தரரும் வில்லாளியாகிப் போர் முனைக்கு வந்து தன் பெயர் பொறித்த பாணங்களை ஏவ, சோழன் ஈசனது துணை பாண்டியனுக்கு உள்ளதென்பதை உணர்ந்துபோரிலிருந்து பின் வாங்கினன். ம்லேச்சரும் துருஷ்கரும் பின்வாங்க மறுத்துப் போரிட்டனர். ஸுந்தரர் ஏவிய ஒரே அம்பு ஆயிரக் கணக்காக வடிவெடுத்து அந்தப் படையை அழித்தது. சோழர் தோற்றனர். பாண்டியர் வென்றனர். வம்ச சேகரன் வெற்றிமுழக்கத்துடன் மதுரை அடைந்தான். இது ஐம்பதாவது லீலை.*

★ ★ ★

सप्तपञ्चाशोऽध्यायः

## ५१. सङ्घफलकदानम्

अगस्त्यः -

सद्भ्यस्सङ्घफलकान्ददौ हालास्यनायकः ।
लीलया च यया तां वो वक्ष्येऽहं मुनिपुङ्गवाः ॥ १
हिरण्यगर्भो भगवान् ब्रह्मा लोकपितामहः ।
चराचरं जगत्सर्वं सृष्ट्वा विहरति प्रभुः ॥ २
गायत्र्या चैव सावित्र्या सरस्वत्या समन्वितः ।
वाराणसीं महाक्षेत्रं प्राप कर्तुं महाध्वरम् ॥ ३
पितामहेश्वरं लिङ्गं प्रतिष्ठाप्य तदग्रतः ।
दशाश्वमेधिकं तीर्थं ससर्जातुलवैभवम् ॥ ४
नवकश्चाश्वमेधानां कृत्वा शङ्करसन्निधौ ।
तत्तीर्थेऽवभृथं कर्म शक्तिभिस्तिसृभिर्व्यधात् ॥ ५
दशमेऽप्यश्वमेधेऽथ निर्वृत्तेऽवभृथक्रियाम् ।
कर्तुं विरिञ्चिरुद्योगमकरोन्मुनिभिर्यदा ॥ ६
तदा सरस्वती देवी गानं गन्धर्वयोषिताम् ।
शृण्वती मोहिता सद्यो नाययौ भर्तुरन्तिकम् ॥ ७
गायत्र्या चैव सावित्र्या सहितस्स पितामहः ।
निर्वर्त्यावभृथं कर्म तदाऽऽस्तानन्दकानने ॥ ८
सरस्वती त्वथागत्य शक्तिभ्यां सहितं विधिम् ।
विलोक्य भर्त्सयामास भर्तारमतिकोपतः ॥ ९

श्रुत्वा तद्भर्त्सनं सर्वं कोपेन स्फुरिताधरः ।
शापं ददौ सरस्वत्यै पत्न्यै पङ्कजसम्भवः ।। १०
कोपेनानुचितेन त्वं संयुता यत्सरस्वति ।
चत्वारिंशच्च जन्मानि क्रमादष्टोत्तराणि तत् ।। ११
मर्त्यलोके मर्त्यरूपा जनिष्यसि न संशयः ।
इति शप्त्वा भारतीं तां जहौ कोपं पितामहः ।। १२
अथ वाग्वादिनी भीता भर्तुः पादाम्बुजद्वयम् ।
नत्वा स्पृष्ट्वा च पाणिभ्यां प्रार्थयामास तं तदा ।।
मया चाज्ञानवशतः कृतं सर्वं च भर्त्सनम् ।
क्षमस्व करुणासिन्धो कटाक्षेण विलोक्य माम् ।। १४
पुनः पुनरिति ब्राह्म्या प्रार्थितो हंसवाहनः ।
प्रतिशापं ददौ तस्यै भारत्यै चानुकम्पया ।। १५
त्वदङ्गसम्भवा वर्णा आदिसान्ताश्च वाङ्मयाः ।
जनिष्यन्ति मिथो भिन्नैराकारैस्सुधियो भुवि ।। १६
हकाररूपी भगवान् सर्वव्यापी सदाशिवः ।
तेषाञ्च सुधियां मध्ये भवत्वेकः कवीश्वरः ।। १७
आहत्यैकोनपञ्चाशत्संख्यिनस्सत्कवीश्वराः ।
सन्तस्त्वदङ्गसम्भूतास्ते द्राविडकवीश्वराः ।। १८
भूलोकशिवलोके च शिवक्षेत्रशिखामणौ ।
विधातुर्द्वादशान्तःस्थे विधिविष्णादिवन्दिते ।। १९
समस्तपापशापाधिव्याधितूलमहानले ।
श्रीहालास्ये महास्थाने सुन्दरेश्वरसत्पुरे ।। २०

सम्भूय द्राविडान् सर्वे कवित्वातिशयेन च ।
विस्मापयन्तस्सन्तोष्य स्तुतिभिः सुन्दरेश्वरम् ।। २१
लब्ध्वा तस्यानुग्रहं च भुक्त्वा भोगान्महीतले ।
कृत्वा प्रबन्धान्विविधान् राजपूज्यत्वमाप्य च ।। २२
मुक्ता भवन्तु देहान्ते सुन्दरेशप्रसादतः ।
त्वं यथापूर्वमस्माभिस्साधं सर्वसुखानि च ।। २३
सम्भुञ्जानाऽनवद्याङ्गि वस मन्मुखपङ्कजे ।
इत्याज्ञाप्य सुरश्रेष्ठः सुरेशादिसुरार्चितः ।। २४
भारतीं भगवान् ब्रह्मा शक्तित्रयसमन्वितः ।
सत्यलोकमथ प्राप लोकानामुपरि स्थितम् ।। २५
एवं विधातुः शापेन भारत्या वर्णरूपिणः ।
अभवन् भूतले चाष्ट चत्वारिंशत् कवीश्वराः ।। २६
सर्वे नत्कीर कपिल भरणाद्याश्च सङ्घिनः ।
गङ्गाप्रवाहविशदवाग्जालातुलवैभवाः ।। २७
वरवाग्भिर्महीपालान् वर्णयित्वाऽर्थसञ्चयम् ।
जयञ्च लब्ध्वा सर्वत्र सञ्चरन्ति मुदा बुधाः ।। २८
सर्वे कदाचित् सम्भूय सङ्घिनस्सत्कवीश्वराः ।
समस्तभाषानिपुणास्सर्वशास्त्रार्थपारगाः ।। २९
शिवार्चनपरा नित्यं शिवधर्मपरायणाः ।
दक्षा द्रामिडभाषायामत्यन्तं निर्मलाशयाः ।। ३०
भूलोकशिवलोकेशं पुरुहूतप्रपूजितम् ।
भक्ताभीष्टप्रदं सद्यस्सर्वापद्भञ्जनक्षमम् ।। ३१

मनोज्ञशफराक्ष्या च महादेव्या समन्वितम्।
जगतां मूलभूतं च शङ्करं सुन्दरेश्वरम्।। ३२
द्रष्टुं समागताः सर्वे हालास्याख्यां पुरीं प्रति।
हालास्येशविमानन्तु तेषां दृष्टिपथं गतम्।। ३३
शातकुम्भमयं कुम्भं विमानोर्ध्वे विराजितम्।
दृष्टमात्रेण जन्तूनामयत्नेनापवर्गदम्।। ३४
दूरतः सङ्घिनो दृष्ट्वा प्रणिपत्याथ भक्तितः।
उत्थाय निश्चलास्तस्थुरानन्दातिशयेन ते।। ३५
भगवान् सुन्दराधीशो भक्तानुग्रहतत्परः।
कवीश्वरवपुर्धृत्वा तेषामाविरभूत्पुरः।। ३६
कारुण्यार्द्रकटाक्षेण विलोक्य विदुषां व्रजम्।
प्राह प्रगल्भवाग्जालैरीश्वरः सत्कवीश्वरः।। ३७
के यूयं कुत आयाताः कांक्षा वस्तुषु केषु वः।
का विद्या कथयन्त्वार्याः किमर्थमिह चागताः।। ३८
सङ्घिनस्ते समाकर्ण्य गम्भीरं तद्वचः क्रमात्।
प्रत्युत्तरं ददुस्तस्मै प्रत्यक्षशिवरूपिणे।। ३९
वयं विधिवशा वाणी वपुरक्षररूपिणः।
ताम्रपर्णीनदीतीरादायाता अतिपावनात्।। ४०
धर्मार्थकाममोक्षेषु कांक्षाऽस्माकं तु विद्यते।
अस्माकं कविता विद्या घटिकाशतवादिनी।। ४१
श्रीहालास्येशसेवार्थं वयमत्र समागताः।
भवद्दर्शनमात्रेण श्रीहालास्यपतिं शिवम्।। ४२

दृष्ट्वा यथा मनस्तुष्टिस्तथाऽभूत्सत्यमेव नः ।
इतः पूर्वं च नास्माभिरीक्षितस्सुन्दरप्रभुः ॥ ४३
त्वद्दर्शनेन सर्वं च भविष्यत्यस्मदीप्सितम् ।
अस्माकं मित्रभूतस्त्वमस्मास्वेको न संशयः ॥ ४४
तस्मादनुग्रहः कार्यो भवताऽस्मत्सुबन्धुना ।
साहाय्यं कुरु सेवार्थमिदानीं सुन्दरप्रभोः ॥ ४५
इत्युक्ते सङ्घिभिस्सर्वैः सर्वज्ञः स कवीश्वरः ।
स्वकवित्वामृतरसैः प्रीणयित्वाऽथ सङ्घिनः ॥ ४६
जगतां मूलभूतं च मूललिङ्गं चिरन्तनम् ।
देवानां प्रथमं चेति श्रुतिवाक्यपरिष्टुतम् ॥ ४७
दर्शयित्वाऽद्य धर्माद्याः पुरुषार्था भवन्तु वः ।
इत्युक्त्वाऽन्तर्दधे शम्भुः कवीश्वरवराकृतिः ॥ ४८
सङ्घिनो विस्मितास्सन्तः सन्तोष्य स्तवनैश्शिवम् ।
कवित्वसुधया मर्त्यान् प्रीणयित्वा निरन्तरम् ॥ ४९
न्यवसन्मधुरापुर्यां नत्कीराद्याः कवीश्वराः ।
वंशशेखरपाण्ड्योऽपि वरवाक् सुकवीश्वरः ॥ ५०
लोके कवित्वविद्यायाः सार्वभौम इति श्रुतः ।
नवभिश्च रसैः पूर्णं सङ्घिनां कवितामृतम् ॥ ५१
पीत्वा रसज्ञस्तृप्तस्सन् तेभ्यश्चार्थान् बहून् ददौ ।
शम्भोः सेवानन्तरं च तेषां स्थातुं च मण्टपम् ॥ ५२
मध्यागारे महाचित्रं कारयामास पाण्ड्यराट् ।
उपविश्य च ते तस्मिन् सङ्घिनस्सङ्घमण्टपे ॥ ५३

विद्यागोष्ठ्या विशेषज्ञा विहरन्ति निरन्तरम्।
अन्ये केचित्कुकवयः कवित्वं सङ्घिनामपि ।। ५४
प्रदूष्यात्मकवित्वं च सभायां वर्णयन्त्यसत्।
कुकवीनामुदन्तं तं विदित्वा सुकवीश्वराः ।। ५५
आत्मीयविद्याधिक्यं ते व्यक्तीकर्तुं समुत्सुकाः ।
वारराजे सोमवारे वरदं सोमसुन्दरम्।। ५६
सम्प्राप्य स्तुतिपुष्पैस्तं पूजयामासुरद्भुतैः ।
अथ हालास्यनाथं तमनन्तानन्ददायकम्।। ५७
भक्त्याऽतिप्रवणाः सन्तःसङ्घिनस्ते ययाचिरे।
देवदेव महादेव परमात्मन् परात्पर।। ५८
परिपूर्णचिदानन्दमय सुन्दरनायक।
भवतस्सेवितुं नित्यं श्रीमच्चरणपङ्कजम्।। ५९
भवामश्च वयं सर्वे भवत्पार्श्वनिवासिनः ।
विद्यावतामिहास्माकं विद्याधिक्यप्रसिद्धये।। ६०
विद्यापीठं विचित्रं च वयं तु न लभामहे।
देव नः फलकां दिव्यां विशालां सुखमासितुम्।। ६१
देहि प्रकाशयन्तीं च विद्वत्तामप्यनुत्तमाम्।
इति सम्प्रार्थितः शम्भुः सङ्घिभिस्सकलैरपि।। ६२
समस्तजगदाधारो निराधारो महेश्वरः ।
सर्वज्ञानप्रदात्सद्यः सर्वाज्ञानविमोचनात्।। ६३
विद्यापीठात् स्वकीयाच्च पवित्रान्मातृकामयात्।
उत्पाद्य पीठमपरमतिनिर्मलमद्भुतम्।। ६४

अकादिहकारान्तमातृकाक्षरमण्डितम्।
चतुरश्रं शरच्चन्द्रचन्द्रिकाधवलप्रभम्॥ ६५
तेजोमयं दुर्निरीक्ष्यं चण्डांशोरिव मण्डलम्।
मूललिङ्गात् स्वयमपि प्रत्यक्षीभूय शङ्करः ॥ ६६
निर्गत्य गर्भभवनात् कविवेषधरो हरः ।
इहास्थेति प्रोच्य तेभ्यः प्रददौ पीठमुत्तमम्॥ ६७
ते त्वादायारत्निमात्रफलकं मातृकामयम्।
आनन्दसागरे मग्ना अभवन् कविपुङ्गवाः ॥ ६८
विद्यापीठमिति प्राहुस्तत्पीठं मुनयोऽखिलाः ।
केचिद्व्याख्यापीठमिति ज्ञानपीठमितीतरे॥ ६९
सरस्वतीपीठमिति मातृकापीठमित्यपि।
सार्थैश्च नामभिश्चान्यैर्वर्णयन्ति कवीश्वराः ॥ ७०
सर्वैस्तत्सङ्घकविभिः सङ्घपीठमितीरितम्।
प्रथितं भुवने पीठं तत्सङ्घफलकेति च॥ ७१
तां सङ्घफलकां सर्वे नत्कीराद्याः कवीश्वराः ।
सङ्घमण्टपमध्ये तु शुभ्राम्बर समास्तृते॥ ७२
निधाय चक्रुः पूजां च गन्धाद्यैर्मातृकाक्षरैः ।
प्रथमं फलके तस्मिन् नत्कीरस्समुपाविशत्॥ ७३
साऽरत्निमात्रफलका वृद्धिं प्राप्तेश्वराज्ञया।
तामारुरोह कपिलः सर्वज्ञः सत्कवीश्वरः ॥ ७४
ततः सा पूर्ववद्वृद्धिं सम्प्राप क्षणमात्रतः ।
भरणोऽपि कविश्रेष्ठस्तामारुह्याधिकं बभौ॥ ७५

पुनश्च सङ्घफलका प्रवृद्धा शम्भुवैभवात्।
इतरेभ्यश्च सङ्घिभ्यस्साऽवकाशं क्रमाद्ददौ ।। ७६
एवमीशप्रसादेन विद्यापीठे सुखं स्थिताः ।
विद्यागोष्ठीं च विविधां चक्रिरे सङ्घिनस्सदा ।। ७७
फलकामीशदत्तां तामस्तुवन् सकला जनाः ।
विलिख्य सङ्घकवयो विरचय्य प्रबन्धकान् ।। ७८
सङ्घमण्टपमध्ये तु क्षिप्त्वा क्षिप्त्वानुवासरम्।
व्रजन्ति कालतस्ते तु प्रबन्धा बहुला अपि ।। ७९
सङ्कीर्णा अभवन् सङ्घकविभिः कृतिभिः कृताः ।
एकदा विदुषां तेषां विवादोऽभूत्परस्परम् ।। ८०
प्रबन्धो मामको रम्यः प्रबन्धात्तावकादपि ।
अहं कृती त्वन्तु हेय इति वक्तृत्वगर्विणाम् ।। ८१
समवेता वयं सर्वे निरूप्यास्मत्प्रबन्धकान्।
तारतम्यं परिज्ञाय तेषु गृह्णीम रम्यकान् ।। ८२
अरम्यांस्तु त्यजामेति समयश्चक्रिरे बुधाः ।
त्वरया परया युक्तास्सर्वे सङ्घकवीश्वराः ।। ८३
शरीराहन्तया ग्रस्तचेतना मदमोहिताः ।
सङ्घमण्टपमासाद्य पश्यन्ति स्म प्रबन्धकान् ।। ८४
सर्वान् प्रबन्धान् सङ्कीर्णानधरोत्तरपार्श्वगान्।
दृष्ट्वा विषण्णास्ते सर्वे म्लानवक्त्राः समासत ।। ८५
हकाररूपी हालास्यनायकः करुणानिधिः ।
अनर्घरत्नकनककृताखिलविभूषणः ।। ८६

अतिशुभ्रांबरोष्णीषोत्तरीयैस्समलङ्कृतः ।
गात्रं कुङ्कुमपङ्केन कुर्वन् बालारुणप्रभम् ।। ८७
कविवेषधरो भूत्वा कवित्वातिशयेन तान् ।
विस्मापयन् कवीन् सर्वान् प्रादुरासीत्सभान्तरे ।। ८८
विलोक्य तान्कृपादृष्ट्या भगवान् भक्तवत्सलः ।
प्राह प्रगल्भवाग्जालैर्मधुरैर्मधुराधिपः ।। ८९
किं यूयं म्लानवदना ब्रूत खेदं ममाद्य वः ।
तत्सर्वं व्यपनेष्यामीत्युक्तास्ते तमथाब्रुवन् ।। ९०
कवीश्वर महाप्राज्ञ लक्ष्यलक्षणवित्तम ।
अस्माकं मित्रभूतस्त्वं नायकोऽपि त्वमेव हि ।। ९१
अस्मत्कृतान् प्रबन्धांश्च सङ्कीर्णानधरोत्तरान् ।
पृथत्पृथक्समादाय सन्धायाद्यार्पयाशु नः ।। ९२
अष्ट चत्वारिंशदेव भवामस्सङ्ख्यया वयम् ।
अस्मास्वेको नायकश्च भविष्यति भवानपि ।। ९३
इति श्रुत्वा वचस्तेषामीश्वरः सत्कवीश्वरः ।
तथा करिष्य इत्युक्त्वा तान् प्रबन्धान् पृथक्पृथक् ।। ९४
प्रगृह्य प्रददौ तेभ्यः सद्भ्यः सुन्दरेश्वरः ।
शम्भोः किमेतदाश्चर्यं सर्वसङ्कटकस्य हि ।। ९५
ते तस्य पाटवं दृष्ट्वा सङ्घस्थास्सत्कवीश्वराः ।
सुप्रीता विस्मितास्सन्तः पुनः प्राहुस्तमीश्वरम् ।। ९६
त्वं सङ्घफलकायाश्च सहास्माभिः कवीश्वर ।
उपविश्यास्मदीयांश्च प्रबन्धानवलोकय ।। ९७

एवं सम्प्रार्थितस्तैस्स कविवेषधरो हरः ।
फलकां तामारुरोह महतीं मातृकामयीम् ।। ९८
बभौ तत्फलकामध्ये निवसन् सुकवीश्वरः ।
ज्योतिर्मण्डलमध्यस्थः पूर्णचन्द्र इवामलः ।। ९९
संवृतः सङ्घकविभिः सर्वावरणदैवतैः ।
दक्षिणामूर्तिरिव च राजते सुन्दरेश्वरः ।। १००
सङ्घिनां हृद्गतान्याशु तमांसि परिसंहरन् ।
विकासयति तेषाञ्च हृत्पद्मानीशभास्करः ।। १०१
तारतारापरिवृतः परिपूर्णः शशी यथा ।
सङ्घिभिश्चावृतस्सर्वैः तथा भाति कवीश्वरः ।। १०२
विलोक्य सङ्घिनस्सर्वे विद्वद्वेषधरं हरम् ।
देवो वा मानुषो वायमेवमन्तरभावयन् ।। १०३
ईशश्च तेषामेकस्सन् तान् प्रबन्धान् विलोक्य च ।
दोषादोषौ स्फुटीकृत्य प्रोच्य तैस्सह तस्थिवान् ।। १०४
शास्त्रं त्वथाधिकाराख्यमकरोत्तीक्ष्णया धिया ।
सर्वज्ञः सर्ववेदान्तप्रतिपाद्यः सदाशिवः ।। १०५
स्वं स्वं प्रबन्धं दृष्ट्वा ते सङ्घिनो हर्षसंयुताः ।
शब्दार्थदोषादोषौ च वर्णयन्ति परस्परम् ।। १०६
अथाहोत्थाय नत्कीरस्तेषां मध्येऽतिमत्सरी ।
मत्प्रबन्धे पञ्चमस्य गेयस्य सदृशः पुनः ।। १०७
शब्दार्थसुन्दरः शब्दो युष्मत्कृतिषु नैव हि ।
इति तद्वचनं श्रुत्वा देवदेवः कवीश्वरः ।। १०८

शब्दार्थकोमलतरान् शब्दान् प्रोच्य स्वयं क्षणात् ।
मदीयेन कवित्वेन शब्दार्थसुभगेन च ।। १०९
लक्ष्यलक्षणयुक्तेन त्वत्कवित्वं समं न हि ।
मदीयं वा त्वदीयं वा रम्यं ब्रूयुर्बुधा इति ।। ११०
सस्मितं प्रोच्य तैस्सार्धं क्रीडते सुन्दरेश्वरः ।
ईशोक्तगेयमखिलमाकर्ण्यातिमनोहरम् ।। १११
पुनः पुनश्शिरः कम्पं चक्रुस्सङ्घकवीश्वराः ।
मानसेषु ननन्दुस्ते माधुर्यातिशयान्वितम् ।। ११२
तत्कवित्वं नवरससम्पूर्णं सत्कवीश्वराः ।
मत्तस्याशुकवित्वेन रोषमात्सर्यवारिधेः ।। ११३
नत्कीरस्य समक्षं ते किञ्चिन्नोक्त्वाऽवतस्थिरे ।
नत्कीरस्त्वब्रवीद्दोषमीशगेयस्य मोहतः ।। ११४
महामधुरवाक् प्राह मधुरापतिरीश्वरः ।
मत्सरीति प्रसिद्धस्त्वमतथ्यं त्वद्वचो भृशम् ।।। ११५
अन्योऽपि कश्चिद्दोषं मद्गेयस्य कथयेद्यदि ।
तदा त्वद्वचनं सत्यमित्युक्त्वा रोषमास्थितः ।। ११६
नान्यः कश्चिदपि प्राह दोषं गेये तु शाङ्करे ।
तदाऽशरीरिणी वाणी खादभून्मोहनुत्तये ।। ११७
युष्मद्विवादशान्त्यर्थं युष्मास्वेकः कवीश्वरः ।
सुन्दरेश्वर एवायं वर्तते नमतामुकम् ।। ११८
इति शम्भोर्वचश्श्रुत्वा गगने गर्जितं यथा ।
सङ्घिनो भीतहृदयाः कविरूपं महेश्वरम् ।। ११९

स्तुवन्तश्च नमन्तश्च वर्तन्ते वीतमत्सराः ।
कृपापूर्णकटाक्षेण सङ्घस्थान् सत्कवीश्वरान् ।। १२०
आलोक्यानुग्रहं तेषामकरोत्स सदाशिवः ।
शिवप्रसादलाभेन सर्वे सङ्घकवीश्वराः ।। १२१
भुञ्जाना दुर्लभान् भोगान् जीवन्ति स्म चिरं भुवि ।। १२२
एकपञ्चाशिका लीला लोकनाथस्य धूर्जटेः ।
शोकपा पतमोभीतिहन्त्री वः कथिता मया ।
श्रोतव्या पठितव्या च बुधैर्भोगापवर्गदा ।। १२३

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*

*हालास्यमाहात्म्ये - सङ्घिभ्यस्सङ्घफलकप्रदानं नाम*

*सप्तपञ्चाशोऽध्यायः*

★ ★ ★

## அத்தியாயம் - 57

## 51. சங்கப்பலகை அருளுதல்

*காயத்ரீ ஸாவித்ரீ ஸரஸ்வதீ என்ற தம் மனைவியருடன் பிரும்மா காசியில் ப்ரஹ்மேச்வர லிங்கத்தை ஸ்தாபித்து அதன்முன் பத்து அச்வமேத யாகங்களைச் செய்தார். பத்தாவது அச்வமேதம் முடிந்ததும் அவப்ருத ஸ்நாநத்தை மனைவியருடன் செய்ய முற்படுகையில், ஸரஸ்வதி மட்டும் கந்தர்வப் பெண்களின் கானத்தில் லயித்ததால் நீராட வரத் தாமதம் ஏற்பட்டது. ப்ரஹ்மா மற்ற இருவருடன் நீராடி வந்தார். ஸரஸ்வதி தன்னைப் புறக்கணித்ததால் கோபித்தாள். ஸரஸ்வதி தன் தவற்றை உணராமல் கோபித்ததால், நாற்பத்தெட்டு தடவை மனித உலகில் பிறவி எடுக்குமாறு சபித்தார். ஸரஸ்வதி வணங்கி வேண்டிக் கொண்டதும் "அ" முதல் "ஸ" வரை நாற்பத்தெட்டு ஸரஸ்வதியின் அக்ஷரவடிவங்களாக நாற்பத்தெட்டு கவிகள் தோன்றுவர். அவர்களைத் தவிர,*

'ஹ'எழுத்தின் வடிவமாக ஸதாசிவரே தோன்றுவார். த்ராவிட தேசத்தில் தோன்றவிருக்கிற கவிகள் ஹாலாஸ்யத்தில் கூடி ஸுந்தரேச்வரரை வணங்கி வழிபட்டுப் பல நூல்களை இயற்றி அரசர்களின் பாராட்டு பெற்று ஈசனருளால் இறுதியில் முக்தி பெறுவர். அதன்பின் நீயும் உன் முன் நிலை பெற்று எனது வாயில் வசிப்பாய்'' என்று சாப மாற்று தந்தார். நக்கீரர் கபிலர், பரணர், முதலிய கவிகளாக ஸரஸ்வதி தோன்றினாள். த்ராவிட மொழியில் தேர்ந்த சிவபக்தர்களான கவிகள் ஹாலாஸ்ய நாதரைக் காண மதுரைக்கு வந்தனர். ஈசனும் ஒரு கவியாகி அவர்கள் ஈசனின் தரிசனம் பெறச் செய்தார். அரசன் அவர்களை வரவேற்றுப் பாராட்டி வெகுமதி அளித்தான். அவர்கள் கூடிப் பேசுவதற்கென ஆலயத்தின் நடுவே ஸங்கமண்டபம் அமைத்துத் தந்தான். மண்டபத்திலமர்ந்து ஈசனின் பெருமையை விளக்கி அவரவர் காவியங்களை இயற்றினர். தமக்குள் சிறந்தவரை அடையாளம் காட்ட ஒரு பீடமமைத்துத் தரும்படி இறைவனை வேண்டினர். ஈசனும் அக்ஷர சக்தியமைந்ததொரு பலகையைத் தந்தார். அது ஒரு சாணளவு பரப்பு கொண்டது. ஈசனே கவி வடிவில் தோன்றி இதில் அமருவீர் என்றதும் நக்கீரர் முதலில் ஏறி அமர்ந்தார். சங்கப் பலகை மற்றவரும் ஏறி அமரும்படி விரிவடைந்தது. அவரவர் எழுதிய நூல்களை வரிசையாகப் பலகையில் வைத்து விட்டு இரவில் தம் இருப்பிடம் திரும்பினர். நூல் சுவடிகள் நிறைந்ததும் ''தனது நூல் தான் சிறந்தது. அது மேலே இருக்க வேண்டும் என்ற எண்ணம் ஒவ்வொருவருக்கும் எழுந்தது. கவியாக வந்த ஈசன் அவரவரது நூலை அவரவர் கையில் கொடுத்தார். நக்கீரர் தனது கவிதையே சிறந்ததாக ஏற்கத் தக்கதென வாதிட்டார். சிறந்த தொன்றை ஸபையில் கூடிய அறிஞர்களே தேர்ந்தெடுப்பர் என்று ஈசன் தந்த ஒப்பந்தத்தை எல்லோரும் ஏற்றனர். முதலில் நக்கீரர் தன் பாட்டைப் பாடினார். உடன் கவியான ஈசன் தன் பாட்டைப் பாடினார். நக்கீரர் அதில் குறை உள்ளதென்றார். அறிஞர்களோ மிகச் சிறந்ததென ஈசனது பாட்டைப் பாராட்டினர். நக்கீரர் இதனை ஏற்கவில்லை. அசரீரியாக ஈசன் சொன்னார்.

நாற்பத்தொன்பதாமவராகக் கவியாகக் கலந்து கொண்டவர் ஈசனே. நீங்கள் அனைவரும் கவிகளில் சிறந்தவர்களே'' இதனைக் கேட்டு வியப்படைந்த கவிகள் ஈசனை வணங்கி வழிபட்டனர். வெகு நாட்கள் வாழ்ந்து ஸரஸ்வதியாகி ப்ரஹ்மலோகம் சென்றனர். இது ஐம்பத்தோராவது லீலை.

★ ★ ★

अष्टपञ्चाशोऽध्यायः

## ५२. सुन्दरनाथाय स्वर्णनीवीदानम्

अगस्त्यः -

आदिशैवद्विजशेष्ठसुतायोद्वाहकांक्षिणे ।
पाण्ड्येशभावानुगुणां दत्वाऽऽर्यां सदसीश्वरः ॥ १
जित्वा कवीन् राजबद्धां नीवीं निष्कसहस्रिकाम् ।
यया प्रदापयामास तां लीलां कथयामि वः ॥ २
वंशशेखरपाण्ड्योऽपि संघिभिस्सत्कवीश्वरैः ।
गीयमानचरित्रस्सन् गन्धर्वैः किन्नरैरपि ॥ ३
चिरं जीवन्महीं सर्वां शास्त्रनीत्याऽनुशास्य च ।
पुत्रं राज्याधिपं कृत्वा सायुज्यं प्राप शाम्भवम् ॥ ४
वंशशेखरपाण्ड्यस्य वंशचूडामणिः सुतः ।
विक्रमेण कवित्वेन कान्त्या करुणया श्रिया ॥ ५
महत्या मनुनीत्या च महा देवाङ्घ्रिपङ्कजे ।
अतिदुर्लभया भक्त्या पितुरप्यधिकोऽभवत् ॥ ६
पल्लवैश्च फलैः पुष्पैरन्वितैरतिपावनैः ।
श्रीवृक्षाद्यैः पुण्यवृक्षैरसंख्यैश्चम्पक द्रुमैः ॥ ७

सुन्दरेश्वरपूजार्थं विधायोपवनानि सः ।
नित्यं पुष्पविशेषैश्च सोमेशं समपूजयत् ।। ८
कदाचिच्चैत्रमासे तु चैत्र्यां विभवविस्तरात् ।
पयोदधिघृतक्षौद्रप्रमुखैस्सुपवित्रकैः ।। ९
अभिषेकोचितैर्द्रव्यैरभिषिच्याखिलैः शिवम् ।
चन्द्रचन्दनकस्तूरीकुङ्कुमादिसुगन्धकैः ।। १०
हिमतोयकृतैः पङ्कैर्महालिङ्गं सपीठकम् ।
समालिप्य समापूर्य पुष्पैश्चम्पकसम्भवैः ।। ११
धूपाद्यैरुपचारैश्च क्रमाच्छम्भुं प्रपूज्य सः ।
आलोक्य सुन्दरेशस्य सौन्दर्यातिशयं मुदा ।। १२
तस्याकरोन्नामधेयमिति चम्पकसुन्दरम् ।
तदाप्रभृति लोकेषु लोकास्सर्वे वदन्ति हि ।। १३
शिवं नीपाटवीनाथं नाम्ना चम्पकसुन्दरम् ।
नित्यं चम्पकपुष्पैस्स पूजयन् सुन्दरेश्वरम् ।। १४
प्राप्य चम्पकपाण्ड्याख्यां सौख्येन चिरमैधत ।
स कदाचिन्महिष्याऽसौ मुखनिर्जितपद्मया ।। १५
समं सौधतले चारुचन्द्रिकाशीतले वसन् ।
मलयाचलसम्भूतमन्दमारुतवीजितः ।। १६
मधुरापुरमाधुर्यं महिलारत्नमण्डितम् ।
विलोकयन् विस्मयेन विजहार नृपस्तदा ।। १७
पद्मिन्या निकटस्थायाः पवमानवशागतम् ।
उपमारहितं देव्या आजिघ्रे केशसौरभम् ।। १८

स्वाभाविकः किं गन्धोऽयं पुष्पसंसर्गजोऽथ वा।
चिन्तयन्निति भूपालः शीघ्रं काश्चित् क्रियां व्यधात्॥ १९
मच्चिन्तासदृशं सद्यः कवनं यो जनो वदेत्।
तस्मै निष्कसहस्रेण नीवीं दास्यामि निर्मिताम्॥ २०
इति निश्चित्य निर्माय नीवीं निष्कसहस्रगाम्।
बध्वा प्रलम्बयामास सङ्घमण्टपसन्निधौ॥ २१
सङ्घस्थाः कवयस्सर्वे कृतगेयाः पृथक् पृथक्।
राजानं श्रावयामासुः स्वं स्वं गेयं मुदान्विताः॥ २२
स्वचिन्तानुगुणं गेयं नाशृणोत् पाण्ड्यभूपतिः।
खिन्नास्ते कवयो जग्मुस्तत्र नीवी च लम्बते॥ २३
तस्मिन् काले त्वादिशैववंशवारिधिचन्द्रमाः।
पदवाक्यप्रमाणज्ञश्शैवसिद्धान्तपारगः॥ २४
सुन्दरेश्वरपादाब्जभक्तिरत्नमहोदधिः।
नाम्ना सुन्दरनाथश्च पित्रा हीनो धनेन च॥ २५
सुन्दरेश्वरमीशानमुपगम्य प्रणम्य च।
एवं सम्प्रार्थयामास विवाहायार्थलिप्सया॥ २६
उद्वोढुं चोदितः कालो ह्यत्येति शिव मे प्रभो।
लज्जा मां बाधतेऽतीव सच्छात्राणान्तु मध्यके॥ २७
पिता मम त्वं माता च धनं बन्धुस्त्वमेव हि।
भगवत्पादयोः पूजां कर्तुं चाहं महाक्रतुम्॥ २८
अनुग्राह्यस्त्वया सद्यः कटाक्षेण कृपावता।
कर्मणा मनसा वाचा त्वामेवाराधयाम्यहम्॥ २९

राज्ञा कृतो यस्समयो नीव्या स्वाशयबोधकः ।
भवता स विधेयोऽद्य मम वैवाहिकः प्रभो ॥ ३०
इति विप्रात्मजवचश्श्रुत्वा जातदयश्शिवः ।
राज्ञश्चित्तानुसदृशीमार्यामित्थं हृदाऽस्मरत् ॥ ३१
जानासि पुष्पगन्धान् भ्रमर त्वं ब्रूहि तत्वतो मेऽद्य ।
देव्याः केशकलापे तुल्यो गन्धेन किंगन्धः ॥ ३२
एतामार्यां विलिख्याशु कविवेषधरो हरः ।
प्रत्यक्षीभूय दत्वाऽऽह तस्मै च ब्रह्मचारिणे ॥ ३३
वत्सेमां पत्रिकां सद्यस्सङ्घस्थेभ्यः प्रदर्शय ।
तैस्सार्धं प्राप्य राजानं भणार्यामर्थसिद्धये ॥ ३४
इति गर्भगृहादेत्य कविना शम्भुनेरितम् ।
वचश्श्रुत्वा ब्रह्मचारी प्रीतिविस्मयसंयुतः ॥
तथा करिष्य इत्युक्त्वा पत्रिकां तां प्रगृह्य च ।
प्रणम्य प्रययौ तत्र वर्तन्ते यत्र सङ्घिनः ॥ ३६
सङ्घपीठोपविष्टेभ्यः सङ्घिभ्यस्स मुदान्वितः ।
पत्रिकां दर्शयामास प्राप्तां शम्भोरनुग्रहात् ॥ ३७
तामादाय विलोक्याथ त आर्यां परिपठ्य च ।
सञ्जातविस्मयास्सर्वे सङ्घिनस्त्वभवन् क्रमात् ॥ ३८
अथ चम्पकपाण्ड्यं ते प्राप्य सङ्घकवीश्वराः ।
तामार्यां श्रावयामासुः शब्दार्थसुमनोहराम् ॥ ३९
स्वचित्तानुगुणामार्यां श्रुत्वा पाण्ड्यमहीपतिः ।
मच्चिन्तानुगुणैवैषा केनोक्ता स महान् कविः ॥ ४०

इति तेनोक्तमाकर्ण्य प्रदर्श्य ब्रह्मचारिणम्।
अयमेवोक्तवानार्यामित्यूचुः सङ्घकोविदाः ॥ ४१
सदाचाररतं शान्तं सकलागमपारगम्।
आदिशैवसुवंशोत्थसुवृत्तशुचिमौक्तिकम्॥ ४२
नाम्ना सुन्दरनाथाख्यमतिसुन्दरमङ्गकैः।
आलोक्याश्चर्यसंयुक्तः प्राह पाण्ड्यमहीपतिः ॥ ४३
वक्ता नीवीं प्रगृह्णातु स्वर्णटङ्कैर्विनिर्मिताम्।
इत्युक्त्वा प्रेषयामास गन्तुं सर्वान् गृहान्प्रति॥ ४४
अथ चम्पकपाण्ड्योऽपि मनस्यत्यन्तविस्मयात्।
आस्थानमण्टपात्तस्मादुत्थायान्तःपुरं ययौ॥ ४५
यदा ग्रहीतुमुद्युक्तस्तां नीवीं शम्भुविप्रजः।
आर्याया दूषणं प्राह नत्कीरो मत्सरी तदा॥ ४६
द्विजोऽथ शम्भुं सम्प्राप्य नत्वा स्तुत्वा च भक्तितः।
नत्कीरो दूषयत्यार्यामिति प्रोवाच साञ्जलिः ॥ ४७
करुणासागरश्शम्भुः कविवेषं प्रगृह्य च।
सङ्घमण्टपमासाद्य सङ्घस्थानब्रवीत् कवीन्॥ ४८
युष्मासु कोऽस्या आर्याया दूषणं कविरब्रवीत्।
इत्युक्ते सुन्दरेशेन कविवेषमुपेयुषा॥ ४९
क्रुद्धस्तदा स नत्कीरो वक्ताऽहमिति चाब्रवीत्॥ ४९
कथमुक्तं त्वया चात्र दूषणं कुकवे वद॥ ५०
आक्षेपश्च समाधानं वदतोरुभयोरपि।
आवयोर्मतिचातुर्यं जानंत्वेते कवीश्वराः ॥ ५१

इति धृष्टं वचश्श्रुत्वा कविरूपशिवस्य सः।
ततः प्रोवाच नत्कीरः क्रुद्धाशीविषसन्निभः ॥ ५२
गन्धस्स्वाभाविको नास्ति केशस्येति मयोदितम्।
अर्थदूषणसंज्ञो यो दोषस्सोऽत्र तु विद्यते ॥ ५३
नत्कीरस्य वचश्श्रुत्वा हालास्येशः कवीश्वरः।
अतिप्रगल्भया वाचा पुनः प्राहावलोक्य तम्॥ ५४
पद्मिनीकेशभारस्तु पद्मकल्हारगन्धवान्।
इति लोकप्रसिद्धोऽपि न ज्ञातस्स कथं त्वया ॥ ५५
आकर्ण्यादिकवेर्वाक्यं नत्कीरोऽथ तमब्रवीत्।
तासां केशभरोऽप्यन्यगन्धसंसर्गवानिति ॥ ५६
ईश्वरः
दिव्यस्त्रीकेशभारस्य गन्धस्सहज एव हि।
तमन्यथयितुं को वा शक्तस्त्रिजगतीतले ॥ ५७
कवीशेनेश्वरेणेति प्रोक्तं श्रुत्वा वचः कविः।
नत्कीरोपि पुनः प्राह कोपप्रस्फुरिताधरः ॥ ५८
पारिजातप्रसूनाद्यैरन्यैः कस्तूरिकादिभिः।
तत्केशा अपि संस्कारैस्सगन्धा नान्यथा ध्रुवम् ॥ ५९
नत्कीरवच आकर्ण्य कवीशः कामशासनः।
द्राक् तं निरुत्तरीकुर्वन् वचो वक्तुं प्रचक्रमे ॥ ६०
तथाविधाः किं गौर्याश्च कुन्तला अतिकोमलाः।
नित्यैः परिमलैर्युक्ता नित्या नीलप्रभातुलाः ॥ ६१

जनवन्नाथशम्भोश्च श्रीकार्याणि बहूनि च।
कारयामास तैर्भक्त्या भावि कार्यमचिन्तयन्॥ ६८
धनानि प्रेषयामास सुन्दरेशितुरप्यसौ।
श्रीकार्यार्थं भक्तियुक्तः स्वजनैराप्तसज्जनैः॥ ६९
दिनैः कतिपयैः क्षीणमर्थजातं महीभुजः।
गायन् श्रीवाचकान्येवं निश्शङ्कं चरति स्म सः॥ ७०
तस्मिन् काले तु सचिवा इतरे पाण्ड्यभूपतेः।
सूचयन्ति स्म वृत्तान्तं राज्ञे वातपुरेशितुः॥ ७१
क्रुद्धस्तच्छ्रवणाद्राजा लेखयामास पत्रिकाम्।
कोशागारस्थमखिलं गृहीतं भवता धनम्॥ ७२
क्रयाय तुरगाणाञ्च नाययुस्ते हि सत्वरम्।
क्रीत्वोत्तमांश्च तुरगांस्त्वमागच्छ ममान्तिकम्॥ ७३
विलिख्य पत्रिकामेवं दूतेनाप्रेषयद्द्रुतम्।
गत्वा दूतस्तत्र तस्मै दर्शयामास पत्रिकाम्॥ ७४
अथ वातपुरेशस्तां वाचयित्वा च पत्रिकाम्।
कर्तव्यं कार्यमज्ञात्वा तस्थावेकत्र निश्चलः।
सुन्दरेशं हृदि ध्यात्वा मीनाक्षीमपि भक्तितः॥ ७६
जनवन्नाथमेत्याथ स्तुत्वा भक्त्या प्रणम्य सः।
भीतभीतोऽप्रार्थयत्तं साञ्जलिस्साश्रुलोचनः॥ ७७
जनवन्नाथ सर्वज्ञ मम विज्ञापनं शृणु।
तुरगानानयेत्यद्याप्रेषयत्पत्रिकां नृपः॥ ७८

वाजिनस्तु मया नैव क्रीताश्चार्थैस्तदीयकैः ।
तेऽर्थाः पुनर्मया दत्तास्त्वद्भक्तेभ्यो विशेषतः ।। ७९
सुन्दरेशस्य तव च श्रीकार्यार्थिश्च मन्दिरे ।
किं कर्तव्यं मयाऽज्ञेन पाहि मां त्वं कटाक्षतः ।। ८०
दत्तवानसि भूतिश्च त्वमेव शरणं मम ।
इत्युक्ते खादभूद्वाणी दिव्या तस्यार्तिहारिणी ।। ८१
सोपचारं लिखित्वाऽद्य पत्रिकां पृथिवीपतेः ।
भक्तवर्य प्रेषय त्वं मा भैषीरहमस्मि ते ।। ८२
स्थिरो भव त्वं मद्ध्याने दत्तं भक्तेषु मे धनम् ।
मच्छ्रीकर्मणि चातस्ते सुप्रीतस्सुतरामहम् ।। ८३
इति वातपुरेशश्च तामाकर्ण्य गिरं मुदा ।
विलिख्य प्रेषयामास पत्रिमां दूतहस्ततः ।। ८४
आनयिष्यामि तुरगान् पञ्चषैर्दिवसैर्नृप ।
कल्प्यन्तां मन्दुराः शीघ्रं खन्यन्तां सत्सरांसि च ।। ८५
अलंक्रियन्तां वीथ्यश्च मधुरापुरमध्यगाः ।
वाचः शृणुष्व नेदानीं सूचकानां महीपते ।। ८६
ज्ञेयास्ते भवता स्वामिन् तत्र सन्ति ममारयः ।
यथापुरं मां विश्वस्य सुखमास्व महाप्रभो ।। ८७
पत्रिकामिति सम्प्रेष्य शिवचिन्तनतत्परः ।
चाश्चल्यमगमन्मन्त्री ज्ञानभक्तियुतोऽपि सः ।। ८८
चिन्ताकुले शयाने च तस्मिन् वातपुरेश्वरे ।
कृपया परया नुन्नः स्वप्ने शम्भुस्तमब्रवीत् ।। ८९

वत्स वातपुरेश त्वं यथा भक्तस्तथा मयि।
भक्तो नान्योऽस्ति लोकेषु पूर्णकामो भविष्यसि ।। ९०
पुनस्त्वं त्वरया गच्छ मुदा पाण्ड्यनृपं प्रति।
अश्वानपि प्रदास्यामि राज्ञे तस्मै मनोजवान्।। ९१
स्वातन्त्र्यमपि ते भूयात्सन्तोषश्च सदा हृदि।
इति प्रत्यक्षवद्दृष्ट्वा स्वप्नं वातपुरेश्वरः ।। ९२
समुत्थाय महाधीमान् भस्मोद्धूलितविग्रहः।
नत्वाऽथ जनवन्नाथं मधुरामाययौ जवात्।। ९३
आस्थाने सचिवैस्सार्धमासीनं पाण्ड्यभूपतिम्।
ददर्शोल्लासिवदनं तं दृष्ट्वा सोऽपि पिप्रिये।। ९४
उत्सार्य सर्वान् सचिवानथ राजाऽरिमर्दनः।
पप्रच्छ परया प्रीत्या मन्त्रिणं दीर्घदर्शिनम्।। ९५
अर्थैः कियद्भिः क्रीताश्च भवता सत्तुरङ्गमाः।
जाताः केभ्यश्च देशेभ्यः कियन्तस्सङ्ख्यया च ते।। ९६
कानि कानि च विद्यन्ते तेषु सल्लक्षणानि च।
सुलक्षणैर्लक्षितेषु कियन्तस्तेषु मद्धिताः ।। ९७
इति पृष्टो महीपेन प्राह मन्त्री शिवं स्मरन्।
क्रीता अर्थैरसङ्ख्यातैर्नानादेशसमुद्भवाः ।। ९८
अश्वा अनन्ता अभवन् सल्लक्षणसमन्विताः।
यावन्तो वाजिनस्सर्वे सद्धयास्त्वद्धिताश्च ते।। ९९
अनन्ताश्चर्ययुक्तानामनन्तानां च सङ्ख्या।
अश्वानां वैभवं वक्तुमशक्तोऽहं महीपते।। १००

दृष्टेषु तेषु विशदा तेषामुत्कृष्टता भवेत्।
नाम्ना पाण्ड्यपतिः ख्यातिमश्वानां पतिरित्यपि।। १०१
गमिष्यसि न सन्देहस्सत्यमुक्तं मया प्रभो।
मदीयमिह सामर्थ्यमहं वक्तुं न हि क्षमः ।। १०२
इत्युक्ते सचिवे तस्मिन् संहृष्टहृदयो नृपः।
चित्रैराभरणैर्वस्त्रैस्तं सम्भाव्य च सद्गिरा।। १०३
गच्छेति भवनं तस्मै प्रीत्याऽनुज्ञां ददौ प्रभुः।
सोऽपि शीघ्रं विनिर्गत्य सुन्दरान्नृपमन्दिरात्।। १०४
हेमपद्माकरं प्राप्य स्नात्वा सन्ध्यामुपास्य च।
भस्मरुद्राक्षमालाभिरलङ्कृतकलेबरः ।। १०५
तत्तीरस्थं विघ्नराजं स्तुत्वा नत्वा षडाननम्।
स्वमनोरथसिद्ध्यर्थं सुन्दरेश्वरसुन्दरीम्।। १०६
मनोज्ञां मीननयनां सम्प्राप्य प्रणिपत्य च।
श्रीहालास्यप्रभुं शम्भुं सर्वज्ञं सर्वकामदम्।। १०७
भक्त्या प्रक्षिणीकृत्य प्रणम्य च मुहुर्मुहुः।
भक्त्या विज्ञापयामास मन्त्री स्वेष्टसुसिद्धये।। १०८
विज्ञापनान्ते खाद्वाणी वरदस्य महेशितुः।
प्रादुरासीत्सुस्वरा च खेदो मास्तु मनागपि।। १०९
इत्यमात्यस्समाकर्ण्य वाचमाकाशसम्भवाम्।
शम्भुं प्रदक्षिणीकृत्य नत्वा प्रीत्या गृहं गतः ।। ११०
राज्ञेऽवश्यं सदश्वांश्च प्रदास्यति महेश्वरः।
ममाप्यनुग्रहं सद्यः करिष्यति दयानिधिः ।। १११

इति निश्चित्य मनसि भक्त्या वातपुरेश्वरः ।
भोजयित्वा शम्भुभक्तान् बान्धावानितरान् द्विजान्।। ११२
स्वयं भुक्त्वाऽथ निश्शङ्को निर्विकारस्सुखं स्थितः ।
मनोहरं मञ्चमध्यमध्यास्ते मन्त्रिणां वरः ।। ११३
तद्वर्ग्या द्विजवर्यास्तु तमभ्येत्य ससाध्वसाः ।
प्रसार्य पुरतः पाणीन् प्राहुरेवमुपह्वरे ।। ११४
साधु मार्गं परित्यज्य राजसेवां करोषि च ।
राज्ञो मन्त्र्यभवः पश्चाद्राजद्रोहः कृतस्त्वया ।। ११५
राजा तु तन्न जानाति श्रीहालास्येश्वराज्ञया ।
ज्ञाते सति क्षितिभुजा त्वपराधे त्वया कृते ।। ११६
त्वाञ्च बन्धुजनानस्मान् बाधेत स न संशयः ।
इति खेदादुक्तवत्सु बान्धवेष्वखिलेषु च । ११७
निस्सङ्गस्तेषु मन्त्री स प्राहैवं धैर्यसंयुतः ।
ज्ञातज्ञेयेन च मया किं कार्यं भवतामिह ।। ११८
अस्माकमपि के यूयं युष्माकं वा वयञ्च के ।।
संसारवासना नष्टा जनवन्नाथसेवया ।। ११९
राजद्रोहो न कर्तव्य इति बुद्ध्या समागतः ।
उपायेनानृणो भूत्वा गमिष्यामि यथेच्छया ।। १२०
इति तद्गिरमाकर्ण्य प्रययुस्तस्य बान्धवाः ।
बन्धुतायाश्च तस्यापि मिथो निस्सङ्गताऽभवत् ।। १२१
पयसः पद्मपत्राणां स्वभावेन यथा तथा ।
अथापरेद्युः पाण्ड्येशो दूतैराहूय मन्त्रिणम् ।। १२२

अश्वाः कदाऽऽगमिष्यन्तीत्यपृच्छदतिकौतुकात्।
सचिवोऽपि तदोवाच सुन्दरेशं हृदि स्मरन्।। १२३
अश्वा अप्यद्य वा श्वो वा परश्वो वा महीपते।
अवश्यमागमिष्यन्ति पुरीं सम्यगलंकुरु।। १२४
इत्युक्तवति तस्मिंश्च पाण्ड्यराडरिमर्दनः।
ध्वजैश्च चामरैश्छत्रैर्वितानैस्तोरणैरपि।। १२५
पूगैश्च कदलीभिश्च पूर्णकुम्भैस्सुदीपकैः।
सेचनैः पुष्पमालाभिरलश्चक्रे पुरीं निजाम्।। १२६
पुरे स्थिताः सर्ववर्णाः अश्वालोकनकौतुकाः।
वर्तन्ते स्म मुदायुक्ताः प्रभाते कृतकृत्यकाः।। १२७
अगस्त्यः-
प्रोक्ताष्टोत्तरपञ्चाशी लीला शम्भोर्मयाऽधुना।
सर्वपापक्षयकरी पशुपाशविमोचनी।। १२८
शिवभक्तिप्रदा पुंसां भुक्तिमुक्तिप्रदायिनी।
प्रसादजननी शम्भोस्सुन्दरेशमहेशितुः।। १२९

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - श्रीवातपुरेशस्य ज्ञानदीक्षाकरणं नाम*
*चतुष्षष्टितमोऽध्यायः*

★ ★ ★

## அத்தியாயம் - 64

## 58. வாதபுரேசருக்குச் சிவஜ்ஞான தீக்ஷை அளித்தல்

*வாதபுரம் என்ற ஆதவூரிலிருந்த ஸுந்தரநாதர் (சம்புபாதசரிதர்) என்ற சிறந்த சிவபக்தருக்கு ஸ்ரீ வாதபுரேசர்*

(வாதவூரர்) என்ற புதல்வர் பிறந்தார். சிறுவயதிலேயே வேதம் தர்ம சாஸ்த்ரம் புராணம் வேதாங்கங்கள், தர்கம், பூர்வ மீமாம்ஸை, உத்தர மீமாம்ஸை முதலியன கற்று அரசாட்சிக்கு உரிய அர்த்த சாஸ்திரம், அச்வ சாஸ்திரம், கஜ சாஸ்திரம், அரச நீதி, முதலியன கற்றுப்பதினாறு வயதிலேயே எல்லாம் அறிந்தவர் எனப் புகழ் பெற்றார். அரசன் கோரியதால் சிறந்த அமைச்சருமானார். யானை குதிரை முதலியவற்றின் லக்ஷணங்களை நுட்பமாக ஆராய்ந்து அரசாங்கத்து குதிரைப் படை, யானைப் படை முதலியவற்றை நன்கு அமைத்தார்.

படையிலிருந்த குதிரைகள் முதுமையால் நோயுற்று இறந்து விடுவதால் புதுக் குதிரைகள் வாங்க அவசிய மேற்பட்டதால் குதிரைகளின் தரமறிந்த வாதவூரர் பெரும் கோசத்துடன் கடலோரத்திற்குக் குதிரைகள் வாங்க அனுப்பப்பட்டார். வாதவூரர் ஈசனின் . ஆலயம் வந்து முறையே கணேசர், ஸ்கந்தர், மீனாக்ஷீ, ஸுந்தரேச்வரர் இவர்களை வணங்கி வழிபட்டார். பெரும்தனம் தன்னிடம் ஒப்படைக்கப்பட்டுள்ளதால், குதிரைகள் வாங்கி வீண் செலவு செய்வதைத் தவிர்த்து ஈசனின் அடியார்களுக்கும் ஈசனுக்கும் பணிவிடையாக அதனைப் பயன்படுத்தத் தாம் விரும்புவதை ஈசனிடம் விண்ணப்பித்தார். எதிரில் ஒரு சிவபக்தர் வந்து விபூதி தர அதனையே நற்சகுனம் எனக் கொண்டு கிளம்பிக் கடற்கரையில் ஸ்ரீ மஹா ஸ்தானம் எனும் திருப்பெருந்துரை வந்து சேர்ந்தார். அந்த இடம் வந்ததுமே மனம் மெழுகாய் இளகி அமைதி பெற்றது. அங்கேயே தங்குவதாக நிர்ணயம் செய்தார். தன்னுடன் கூட வந்த படை வீரர்களைத் திருப்பி அனுப்பி அவர்கள் மூலம் அரசருக்குச் ''ஆடி மாதத்தில் குதிரைகள் கப்பல்களில் வந்திறங்கலாம். அவற்றை வாங்கி ஆவணிக்குள் தலைநகர் வருகிறேன்'' எனச் செய்தி அனுப்பினார்.

திருப்பெருந்துரையில் சிவகங்கையில்நீராடி அங்கு கோயில் கொண்டுள்ள ஜனவன்னாதரை (ஆத்மநாதரை) தரிசிக்கச் சென்றபோது குருந்த மரத்தடியில் குருவேடத்தில்

வந்த சிவனேக் கண்டு அவரால் ஆட்கொள்ளப்பட்டார். கண் பார்வை வழியே தீக்ஷை அளித்த அந்த குரு அவரது உள்ளக் கிடக்கையை உணர்ந்து ஸ்தூல - ஸூக்ஷ்ம பஞ்சாக்ஷர மந்த்ரங்களை உபதேசித்தார். உடன் பேரறிவும் அருங் கவிதையும் வாதவூரரிடம் வெளிப்பட்டன. உலக வாஸனை மறைந்தது. தன்னையே ஆர்வத்துடன் தரிசிக்கின்ற வாதவூரரை "உன்னால் சில பணிகள் நடைபெற வேண்டியுள்ளது. நீ இங்கே இரு" என குரு பணித்ததும் வாதவூரர் பசி தூக்க மற்றவராகச் சிவனைப்பாடினர். அந்தத்திருவாசகத்தைக் கேட்ட சிவனடியார்கள் மெய்மறந்தனர். அடியார்களுக்குப் பணிவிடை செய்வதிலும் சிவனது வழிபாட்டிலும் குதிரை வாங்கக் கொண்டுவந்த பெருஞ் செல்வம் செலவிடபபட்டுத் தீர்ந்தது. பாண்டிய அரசன் தூதர்வழியே பெருந்துறையில் நிகழ்வதை அறிந்து வெகுண்டு வாதவூரரை உடன் மதுரைக்குக் குதிரைகளுடன் வரும்படி செய்தி அனுப்பினன். வாதவூரர் ஈசனைப் பணிந்து வழிகாட்ட வேண்டினர். ஈசனே அசரீரியாகக் குதிரைகளுடன் ஐந்தாறு நாட்களில் வருவதாக அரசனுக்குச் செய்தி அனுப்பச் செய்தார். வாதவூரனை உடன் மதுரை செல்லும்படி கட்டளையிட்டுத்தான் குதிரைகளைக் கொணர்வதாகக் கூறினர். வாதவூரர் மதுரை சென்று அரசனிடம் அன்றே மறுநாளோ குதிரைகள் வந்து விடுமென்று உறுதியாகச் சொன்னர். அரசன் குதிரைகள் தோன்றிய தேசம், இனம், மற்றும் எண்ணிக்கை பற்றிக் கேட்க, எண்ணற்ற குதிரைகள் பல தேசங்களைச் சார்ந்திருப்பதால் திட்டவட்டமாகக் கூற இயலாமையைக் கூறி நேரில் பார்த்துத் தெரிந்து கொள்ளலாம் என விடை அளித்தார். மனம் அமைதி பெற ஹாலாஸ்யநாதரையும், மீனுக்ஷியையும், விநாயகரையும், கந்தரையும் கண்டு வணங்கி வழிபட்டார். வாதவூரரது உறவினர்கள், உண்மையறிந்து அரசர் வாதவூர்ரையும் தங்களையும் தண்டிக்கக்கூடும் எனப் பயந்தனர். ஈசன் காப்பாற்றுவார் என்ற நம்பிக்கையுடன் வாதவூரர் அமைதியுடனிருந்தார். இது ஐம்பத்தி எட்டாவது லீலே.

★ ★ ★

# पञ्चषष्टितमोऽध्यायः

## ५९. मायाश्वविक्रयः

अगस्त्यः -

मायाश्वविक्रयं शम्भुर्भूपालाय यथाऽकरोत्।
तां लीलां चाद्य वक्ष्यामि जनविस्मयकारिणीम्॥ १
अद्य श्वो वा परश्वो वाऽप्यागमिष्यन्ति वाजिनः।
इति विश्वस्य सचिववाक्यं पाण्ड्यमहीपतिः॥ २
तटाकानि समुत्पाद्य सम्पूर्णानि च सज्जलैः।
हर्षेण महता युक्तो निनाय च दिनत्रयम्॥ ३
चतुर्थे च दिने प्राप्ते नाययुस्तुरगास्तु ते।
मन्त्री च नात्यजद्धैर्यं शिववाक्यं सुविश्वसन्॥ ४
कोपानलोऽभूद्भूपस्य वर्धितस्सूचकानिलैः।
तस्मिन् काले समायातस्सोऽपि वातपुरेश्वरः॥ ५
राज्ञो निकटमीशं च स्मरन् द्रष्टुं महीपतिम्।
दृष्टमात्रेण भूपोऽपि महाकोपाकुलस्तदा॥ ६
श्रीमद्वातपुरेशं तं क्षिप्रं दग्धुमिवोद्यतः।
अथ राजा समीपस्थान् दण्डहस्तान् स्वकिङ्करान्॥ ७
निर्बन्धमखिलं कर्तुममात्यं प्रत्यचोदयत्।
ग्रहीतव्यं धनं सर्वं नायातास्तुरगा इति॥ ८
क्रुद्धास्ते सचिवं प्राप्य समाकृष्य जवेन तम्।
राजाज्ञया बृहन्तं च पाषाणं तस्य पृष्ठके॥ ९

वहेति न्यदधुः सोऽपि दधौ तं च महामनाः ।
श्रमेण श्रमहर्तारं शिवमेव हृदि स्मरन् ।। १०
तद्भारं स च नाज्ञासीत् शिवे निश्चलधीः सुधीः ।
वहत्ययं शिलां तूलमूतवत् बलवानिति ।। ११
सारदारुमयैर्दण्डैः पादौ पाणी च तस्य ते ।
अपीडयन् तदा सोऽपि शिवेत्याक्रन्दनं व्यधात् ।। १२
पिठरे स्थापामासुरतिभारां शिलां पुनः ।
यत्नेनारोपितां तैस्तां प्ररुदन् सर्वसत्वतः ।। १३
उवाह शङ्करं ध्यायन् मन्त्री वातपुरेश्वरः ।
एवं पीडां बहुविधामनुभूय पुनः पुनः ।। १४
अभुक्त एव खिन्नस्सन् तद्दिनं च निनाय सः ।
रात्रौ कारागृहमपि नीतो राजाज्ञया भटैः ।। १५
काराध्यक्षा अपि जनास्तमत्यन्तमभर्त्सयन् ।
तद्भर्त्सनमशक्तस्सन् श्रोतुमार्यामथाब्रवीत् ।। १६
शङ्कर सद्यस्तुरगानानय मूढेति भर्त्सयन्ति भटाः ।
न सहे त्यक्ष्ये प्राणान् त्वं चेत्त्राता मम क्षणाद्रक्ष ।। १७
आर्यामेवं स बहुशः प्रोच्चरन् पुण्यकृद्वरः ।
निशामपि निनायाथ सूर्ये समुदिते सति ।। १८
कारागृहात्स निर्गत्य सुन्दरेशविमानगम् ।
शातकुम्भमयं कुम्भं पश्यन् रक्षेति चाब्रवीत् ।। १९
अथ श्रीवाचकैर्नव्यैः प्रस्तौति स्म महेश्वरम् ।
सुन्दरेशोऽपि तां श्रुत्वा प्रीतो भूत्वा कृपानिधिः ।। २०

नन्द्यादिगणनाथेभ्यः अश्वान् कर्तुं शिवागणान्।
ददावनुज्ञां सहसा जीवन्मुक्तिपुरीश्वरः ।। २१
सुन्दरेशाज्ञया पश्चाद् गणास्सर्वे मुदान्विताः ।
सर्वान् सृगालान् भूमिस्थान् व्यधुस्सत्तुरगान् क्षणात्।। २२
सादिवेषधरास्सन्तस्तुरगानुत्तमोत्तमान्।
गणाश्चारुरुहुस्सर्वे मायामानुषविग्रहाः ।। २३
अनादयन् काहलांश्च वाद्यानि विधानि ते ।
प्रतस्थिरे च सहसा हालास्याभिमुखा गणाः ।। २४
उदजृम्भत धूलिश्च गगने नितरां तदा।
आगच्छन्तीह तुरगास्सादिवर्यैरधिष्ठिताः ।। २५
पुरधूलिश्च सञ्जाता दृश्यते खे जना इति।
अवदन्मन्त्रिणे तस्मा उदन्तं कृपयान्विताः ।। २६
एवं वृत्तान्तमाज्ञाय मन्त्री वातपुरेश्वरः ।
अन्तः खिन्नो रुदन्नार्यामेवमाह शिवं प्रति।। २७
जनवन्नाथ त्वत्कं वचनं विश्वस्य सुदृढ एवास्मि।
प्रादुर्भव सद्यस्त्वं तुरगैर्मां सत्यवादिनं कुर्वन्।। २८
तदा प्रीता जनाः केचिदागत्य व्याहरन् पुनः ।
मन्त्रिवर्य महाभाग समायान्ति तुरङ्गमाः ।। २९
राज्ञे ज्ञापय सद्यस्त्वं जहि दुःखं महामते।
तेषां तद्वचनं श्रुत्वा नितरां प्रीतमानसः ।। ३०
तथा चक्रे मुदा सोऽपि मुक्तः पीडाकरैर्भटैः ।
मन्त्रिणो वचनं श्रुत्वा पाण्ड्योऽपि मुदितो भृशम्।। ३१

बाह्यालिमण्टपं प्राप्य समस्तसचिवान्वितः।
वारकन्याचमत्कारवीज्यमानसुचामरः ॥ ३२
धृतोत्कृष्टलसद्भूषो विनोदानवलोकयन्।
कालक्षेपं च कुर्वाणश्चिरं तत्रैव तस्थिवान्॥ ३३
तुरगा नाययुः क्षिप्रं सुन्दरेशस्य लीलया।
तदा पाण्ड्यस्तु कुपितः किङ्करानेवमब्रवीत्॥ ३४
प्रलपत्येष सचिवो गाढं तं प्रहरन्त्वतः।
इति भूपवचश्श्रुत्वा चिञ्चाशाखाः प्रगृह्य च॥ ३५
तं प्रहर्तुं निर्दयास्ते चाययुस्तस्य किङ्कराः।
आगच्छतस्तानालोक्य सचिवश्शिवभक्तितः॥ ३६
श्रीवाचकैस्तदास्तौषीद्द्रावयन् द्राविडान् कवीन्।
आर्यां च काञ्चित् प्राहाथ रञ्जयन्सुधियां धियः॥ ३७
भक्तापद्भञ्जन शिव सद्यः प्रादुर्भव क्षणात्तुरगैः।
पुरुषा भूपस्य भृशं काश्चा ब्रूहीति ताडयन्त्यद्य॥ ३८
जनवन्नाथ त्वत्कं वचनं विश्वस्य सुदृढ एवास्मि।
प्रादुर्भव सद्यस्त्वं तुरगान् भूपो विलोकितुं त्वरते॥ ३९
तस्मिन्वदति सत्येवं श्रुतोऽभूत्काहलध्वनिः।
तुरङ्गमखुरोद्भूता धूलिः प्रादुरभूदथ॥ ४०
राजाऽपि तं समानाय्य सचिवं भ्रान्तवत् स्थितम्।
मा रोदीरिति चाश्वास्यापश्यच्चाश्वागतिं पुरः॥ ४१
विविधोष्णीषकूर्पासभूषणाम्बरमण्डिताः।
बालभानुतटित्तप्तकाञ्चनाभकलोबराः॥ ४२

प्रमथाश्शङ्कुकर्णाद्या नानायुधलसत्कराः ।
ऊरुभ्यां चोदयन्तोऽश्वानाविरासन्नृपाग्रतः ।। ४३
आलोलन्मणिकुण्डलस्सुकवची हाराङ्गदालङ्कृतो
वेदाश्वं परिवर्तयन् लघुगतिं सव्यापसव्यक्रमात् ।
गाढाकृष्टखलीन पाशमसकृद्धारासु सञ्चोदयन्
आधून्वन् करवालमाविरभवल्लोकैकसादी हरः ।। ४४
तुल्याकृतीन् तुल्यवर्णान् तुल्यायुधविभूषणान् ।
तुरङ्गसादिनो वीक्ष्य विस्मितोऽभून्महीपतिः ।। ४५
अथ पाण्ड्यमहीपालः परमानन्द संयुतः ।
प्रधानभूतमेतेषां ब्रूहित्याह च मन्त्रिणम् ।। ४६
तदा राजानमालोक्य मन्त्री प्रत्युत्तरं ददौ ।
दृष्टवानेकवारं तमीश्वरं सादिनां वरम् ।। ४७
तस्मै सर्वं धनमदामिदानीं पीडया तव ।
मनः क्षोभयुतोऽहं तु कथं वा सादिनां वरम् ।। ४८
बहुसेनामध्यगतं जानीयां तं नरेश्वर ।
इति तस्य वचश्श्रुत्वा पुनः प्राह स पाण्ड्यराट् ।। ४९
विहाय चित्तक्षोभं त्वं मत्प्रीत्यै तं प्रदर्शय ।
इत्युक्तवति पाण्ड्येशे मन्त्री शिवमचिन्तयत् ।। ५०
आधार(व)यन् कमपि चाण्डजमण्डधाता
पाशच्छिदा करतलेन गृहीतपाशः ।
शश्वत्पदाब्जमचलं चलयन् पुरस्तात्
अक्षागतिः पशुपतिस्स्वयमाविरासीत् ।। ५१

पाण्ड्येश्वर महाभाग पश्य त्वं मामिति ब्रुवन्।
सादिवर्यस्स्वतुरगं विचित्रं समधावयत्॥ ५२
अन्येऽपि प्रमथास्सर्वे स्वान् स्वानश्वानचोदयन्।
प्लुतादिगमनं तेषामश्वानां वीक्ष्य विस्मितः ॥ ५३
गम्भीरया मधुरया वाचा तानश्वसादिनः।
भो भो युष्मासु कस्स्वामीत्यपृच्छत्पाण्ड्यराण्मुहुः ॥ ५४
नायकं दर्शयामासुरंगुलीसंज्ञयाऽथ ते।
सेनामध्यगतं शम्भुं सोमसुन्दरमीश्वरम्॥ ५५
ददर्श पाण्ड्यभूपोऽपि लीलातत्परमीश्वरम्।
तेजोराशिं दुर्निरीक्ष्यं तस्य रूपं च वीक्षितुम्॥ ५६
नाशकत्कृपयाऽथास्य तन्ददर्श नृपः प्रभुम्।
मनोभवरिपुस्त्वारान्मनो भूपस्य मोदयन्॥ ५७
मनोवेगतुरङ्गेण मनोज्ञेन समाययौ।
पुरोगतं पुरारातिं तेजोराशिसमुज्ज्वलम्॥ ५८
वीक्ष्य पाण्ड्योऽपि भीतस्सन् भ्रान्त्या सद्यस्समुत्थितः।
अतिष्ठत्साञ्जलिकरश्चित्रन्यस्त इवाग्रतः ॥ ५९
आसीदस्याञ्जलिश्शीर्षे कृत्याकृत्यमजानतः।
तमन्येऽप्यवशास्सर्वे नेमुः कृत्वाऽञ्जलींस्तदा॥ ६०
उत्थानं नार्हमस्माकमिति बुद्ध्वा स भूपतिः।
आसितुं चासने पश्चाल्लज्जितः स्थित एव सः ॥ ६१
तं भूपतिं पशुपतिरिति प्राह पुरस्स्थितम्।
शृणु पाण्ड्यमहीपाल शशिवंशशिखामणे॥ ६२

अनेन मन्त्रिवर्येण कुर्वता हितमेव ते।
यावन्तोऽर्थास्त्वद्गृहीता भवतः कोशसम्भृतः ।। ६३
तावन्तोऽर्था गृहीताश्च मदीयानुचरैर्मया।
सुन्दरेश्वरभक्तं त्वां वीक्ष्य चैनं कृपावता ।। ६४
तवैश्वर्यादपि महदैश्वर्यं विद्यते मम।
ऐश्वर्यापेक्षया सत्यं गृहीतं त्वद्धनं न हि ।। ६५
अथापि पीडामकरोर्मन्त्रिणोऽस्य महीपते।
तस्य दुःखादहं दुःखी मां त्वं पीडितवानसि ।। ६६
किञ्चिदप्यस्य हस्ते त्वद्धनं नास्ति नृपाधुना।
त्वन्मूल्यार्थाद्बहुगुणमश्वीयं त्वाहृतं मया ।। ६७
सल्लक्षणाश्च सद्देश्या आयातास्तुरगा इह।
श्वो न स्यादिति चाश्वत्वं तुरगाणां प्रकीर्तितम् ।। ६८
अश्वांस्त्वं यदि भूपेमान् ग्रहीतुं वाञ्छसि प्रभो।
तत्पाशानां विनिमयः कार्योऽद्य सहसा त्वया ।। ६९
शुभाशुभं नैव जाने पाशानां व्यत्ययात्परम्।
ग्रहीतुं ते धनान्यद्य पुनरिच्छास्ति चेन्नृप ।। ७०
धनानि दास्ये द्विगुणं विना मन्त्रं वदाशु मे।
इति श्रुत्वा तस्य वाचं नृपः प्रीतस्तमब्रवीत् ।। ७१
सादिवर्य महाभाग भवान् सर्वज्ञ एव हि।
पाशव्यत्ययतः पश्चादश्वानां तु शुभाशुभम् ।। ७२
ममैव स्यात्तु युष्माकं सम्बन्धो न हि वाजिषु।
मम मास्तु धनान्यद्य ददस्वाश्वानृतं ब्रुवे ।। ७३

प्रयच्छ सद्यस्तुरगान् सुवेगांश्च सुलक्षणान्।
त्वत्सहायमहं लब्ध्वा विजेष्यामि रिपून्रणे ॥ ७४
सर्वेषां मन्त्रिणां मेऽद्य मन्त्री वातपुरेश्वरः ।
मत्कार्यकारिणां मध्ये प्रवरश्चास्त्वितः परम् ॥ ७५
एनं वातपुरेशानं पूजयामि च मन्त्रिणम्।
एवं को वा नु मत्कार्यं करोत्यन्येषु मन्त्रिषु ॥ ७६
दृष्टमात्रेण तुरगा जनानां विस्मयं वरम्।
कुर्वन्ति हि यथा त्वञ्च करोष्यद्य परां मुदम् ॥ ७७
प्रसादय प्रसन्नस्त्वं मह्यमश्वान्मनोहरान्।
इत्युक्त्वा पूर्ववत्तस्थौ विस्मितो निश्चलो नृपः ॥ ७८
इति तद्वाक्यमाकर्ण्य सादिराट् सुन्दरेश्वरः ।
पूर्वं तल्लक्षणान्युक्त्वा पश्चाद्दातुं तुरङ्गमान् ॥ ७९
समुद्युक्त इति प्राह वाचा भूपं प्रगल्भया।
श्रीमन् पाण्डमहीपाल महीतलपुरन्दर ॥ ८०
श्रुत्वा तल्लक्षणान्यादौ मनस्तुष्ट्यै शुभाय च।
मनोवेगातिवेगाढ्यान् गृहाणाश्वानथ प्रभो ॥ ८१
सर्वलक्षणसंयुक्ता यत्र तिष्ठन्ति वाजिनः ।
तस्य राज्यं यशो लक्ष्मीर्विजयोऽपि भवत्यथ ॥ ८२
रणे खड्गखणात्कारभीषणे पतिमर्वणाम्।
स्वयं वृणोति वीरश्रीः शुभ्रया कीर्तिमालया ॥ ८३
अहो विलोकयाद्याश्वान्मदीयान् पुरतः स्थितान्।
मृगेन्द्रवेगान् शार्दूलवेगान् वेगे मृगोपमान् ॥ ८४

गजैश्शशैर्वानरैश्च शरभैश्च शरैरपि।
वेगेन सन्निभानश्वान्वायुवेगान्मनोजवान्॥ ८५
आयामोत्सेधविस्तारपरीणाहमनोहरान्।
एकवर्णान् पञ्चवर्णानिति भिन्नाननेकधा॥ ८६
शङ्खस्वस्तिकचक्राभपुण्ड्रमण्डलमण्डितान्।
निगाले देवमणिना स्वावर्तैश्च परैर्युतान्॥ ८७
अष्टमङ्गलसम्पन्नान् पञ्चकल्याणशोभितान्।
कुङ्कुमागरुकर्पूरकस्तूरीगन्धगन्धितान्॥ ८८
शङ्खांबुवाहशरभसिंहगम्भीरहेषितान्।
अंघ्रिदोषैर्विरहितान् शिक्षाविधिसुशिक्षितान्॥ ८९
अभितो धावने प्राप्तेऽलातचक्रसमानपि।
पुरुषारूढमात्रेण तदूरुवशवर्तिनः॥ ९०
पीयूषखण्डसदृशफेनमालाभिमण्डितान्।
नौसन्निभानापगासु गन्तुं शक्तांश्च दुर्गमे॥ ९१
प्राकारबन्धवार्यंघ्रिपरिलङ्घनसुक्षमान्।
जाताष्टवर्षदेशीयानाशङ्कारहितानपि॥ ९२
एवमादिगुणैर्युक्तानश्वानत्यन्तदुर्लभान्।
वाहनान्युचितानीह राज्ञां प्राहुर्विचक्षणाः॥ ९३
त्वद्योग्या एव तुरगा आनीता अखिला अपि।
इत्युक्त्वा पाण्ड्यभूपालं नन्द्यादिगणनायकान्॥ ९४
किञ्चिदालोकयामास कटाक्षेण महेश्वरः।
ते सर्वे स्वस्वतुरगान् शरवायुमनोजवान्॥ ९५

धारासु चोदयामासुस्सम्यक्पञ्चविधासु च।
वल्गचक्रमवल्गौ द्वौ धाटीमण्डलवक्रमौ॥ ९६
मन्दाख्या गतिरित्येताः पञ्च धाराः प्रकीर्तिताः।
विलोक्य विस्मितोऽत्यन्तमश्वानामद्भुतां गतिम्॥ ९७
मन्त्रिभिर्मुमुदे राजा वातग्रामेशमन्त्रिणा।
अथ देवोऽपि वेदाश्वं स्वकीयं परिवर्तयन्॥ ९८
सव्यापसव्यमार्गेण बभौ सूर्य इवापरः।
सव्यापसव्यगतिभिस्सञ्चरन्नतिवेगतः॥ ९९
एकोऽनेक इवाभाति जनानां शाङ्करो हयः।
प्रासायामभितो गत्यामथ शङ्करवाहनम्॥ १००
अलातचक्रसदृशमाभाति सुचिरं जवात्।
पुरवीथीषु दीर्घासु द्रुतामृजुगतिं गतः॥ १०१
वीथीदैर्घ्यसमायामं वाजी प्राप्त इवाभवत्।
एवं बहुविधाभिश्च गतिभिस्तुरगस्य च॥ १०२
नृपादीनां जनानां चाकरोदत्यद्भुतं शिवः।
अथ भूपपुरोभागे तुङ्गं तुरगमात्मनः॥ १०३
निश्चलीकृत्य तं भूपमिति प्राह पिनाकधृत्।
एते काम्भोजजा अश्वा एते बाह्लीकदेशजाः॥ १०४
एते वनायुजा अश्वा एते गान्धारदेशजाः।
आरट्टसम्भवा एते सिन्धुदेशोद्भवा इमे॥ १०५
एते यवनदेशीया एते कन्दरदेशजाः।
पार्वतेया इमे अश्वा एते काश्मीरसम्भवाः॥ १०६

द्वीपान्तरोद्भवा एत इमे केकयदेशजाः ।
वासन्तिकाश्च सौवीरा मालवास्तौलवा इमे ॥ १०७
पाञ्चाला अपि साल्वेया इमे मगधदेशजाः ।
कौरुक्षेत्राश्च कालिङ्गा एते सौराष्ट्रजा हयाः ॥ १०८
एते हैमवता अश्वा हेमकूटभवा इमे ।
पारियात्रोद्भवा एते मन्दरादागता इमे ॥ १०९
श्वेताश्शोणाश्च पिङ्गाश्च कृष्णा मिश्रास्तुरङ्गमाः ।
वर्णभेदात्पञ्चविधा भवन्ति जगतीतले ॥ ११०
हारक्षीरशशाङ्कशङ्खरजतप्रालेयवर्णास्सिताः
आलक्तद्युतिदाडिमीकुसुमवद्रक्ताश्च शोणाश्शुभाः ।
कृष्णास्त्वञ्जनकोकिलांबुदनिभा भृङ्गांगनागोपमा
हेमाभा हरयः प्रदीप्तहुतभुग्गोरोचनाभाश्शुभाः ॥ १११
ये वर्णभेदसम्मिश्रा अश्वा मिश्राः प्रकीर्तिताः ।
नानावर्णा विचित्राश्च नानादेशभवा अपि ॥ ११२
नानासुलक्षणयुता इमे अश्वास्समागताः ।
शिरोवक्षःपुच्छमुखपादा येषां च पाण्डराः ॥ ११३
ते त्वष्टमङ्गलोपेतास्तानश्वानवलोकय ।
मुखं च चरणं येषां गता धवलतां च ते ॥ ११४
पञ्चकल्याणसम्पन्नास्तान् पश्य तुरगानपि ।
येषां निगाले त्वावर्तस्स्याद्देवमणिसंज्ञितः ॥ ११५
ते स्वामिने प्रयच्छन्ति हयास्सर्वाश्च सम्पदः ।
उरसि द्वौ शिरसि च द्वावास्ये द्वौ च नासयोः ॥ ११६

ललाटमध्ये त्वेकश्च पायावेकः प्रकीर्तितः ।
एते दश ध्रुवावर्ताः प्रशस्तास्सर्ववाजिनाम् ॥ ११७
एतैर्विरहिता अश्वाः प्रोक्ता दुर्लक्षणा इति ।
श्रीवत्सो वक्षसि प्रोक्तस्त्वावर्तैः पञ्चभिर्भवेत् ॥ ११८
मध्यमे च चतुर्दिक्षु सम्भूतैस्सुप्रदक्षिणैः ।
श्रीवत्सकी तुरङ्गश्च भर्तुस्सर्वार्थदायकः ॥ ११९
भवेतां यस्य चाश्वस्य द्वावावर्तौ ललाटजौ ।
रिपून् जयति तत्स्वामी धनधान्यसुपुत्रवान् ॥ १२०
ललाटे त्रिभिरावर्तैर्यस्य निश्रेणिरस्ति हि ।
लभते वाजिना तेन धनधान्यजयं नृपः ॥ १२१
सव्यावर्तैश्चतुर्भिश्च ललाटस्थैस्तुरङ्गमाः ।
कुर्वते स्वामिनं सद्यः पुत्रवन्तं महीपतिम् ॥ १२२
आवर्तौ वृषभाख्यौ तु कर्णमूले समाश्रितौ ।
यस्य तु स्वामिनस्तस्य लभन्ते भूषणानि च ॥ १२३
एवमादिशुभावर्तैरङ्किता अश्वपुङ्गवाः ।
असङ्ख्याता आगताश्च तानिमान् पश्य भूपते ॥ १२४
आवर्तौ गलमध्यस्थौ भर्तुः क्षुद्दुःखमृत्युदौ ।
भर्तुर्जङ्घोद्भवावर्तौ भयबन्धनदुःखदौ ॥ १२५
स्वामिनो मातरं हन्ति ह्यावर्तस्तूत्तरोष्ठजः ।
कक्षावर्तस्तुरङ्गाणां हन्ति स्वामिनमाहवे ॥ १२६
घोणावर्तो जनयति कश्मलं मृत्युमाशु च ।
गण्डावर्तो भयगदजनकस्स्वामिनो भवेत् ॥ १२७

जान्वावर्तः क्षपयति सकुलं स्वामिनं द्रुतम्।
एवमाद्यशुभावर्तैस्सहिताश्च हयाधमाः ॥ १२८
शालायां न प्रवेश्याश्च नागता इह तद्विधाः।
द्वात्रिंशदायुरश्वानां दशाश्च कथिता दश ॥ १२९
त्रीणि वर्षाणि मासौ द्वौ दिनानि द्वादशैव हि।
आयुषो दशमो भागो दश प्रोक्ता क्रमाद्दश ॥ १३०
मध्यस्थास्तासु षट्चैव प्रशस्ताः स्युर्दशाः क्रमात्।
सर्वे वर्णाः प्रशस्तास्स्युः श्वेतवर्णेन संयुताः ॥ १३१
अन्यवर्णयुतश्श्वेतो वाजिनामप्रशस्तकः।
अश्वस्तु कृष्णः शोणो वा कुक्षौ वक्षसि वा सितः ॥ १३२
वाजी वैजयिको नाम्ना भर्तुस्सर्वार्थसाधकः।
अश्वस्तु कृष्णः श्वेतो वा कुक्षौ वक्षसि वाऽरुणः ॥ १३३
भर्त्रे ददाति भाग्यं च विजयं च रणाङ्गणे।
अश्वस्तु जठरे श्वेतः पुत्रं भर्त्रे ददाति च ॥ १३४
वलक्षवक्षा अनन्दं ग्रीवायां पाण्डरो धनम्।
मुखे शुक्लस्तु विजयं सौख्यं पृष्ठे तु पाण्डरः ॥ १३५
वामपार्श्वे सितो दारान् धान्यं दक्षे वलक्षवान्।
यस्य स्युः पृष्ठवालास्तु श्वेतास्सोऽश्वो जयप्रदः ॥ १३६
सैन्यस्य पुरतो नेयो जयार्थं पृथिवीभुजा।
श्वेताश्वस्य श्वेततरं शिरो यस्य च लक्ष्यते ॥ १३७
भर्तुस्सर्वार्थकृत्स स्यात् सूर्यकान्ताभिधानवान्।
अश्वस्य नाभिमारभ्य पूर्वार्धं बालभानुवत् ॥ १३८

अपरार्धं पाण्डरं चेद्दिवा वैजयिको हि सः।
पूर्वमर्धं शशाङ्काभं पश्चिमं बालसूर्यवत्॥ १३९
यस्याश्वस्य भवेदेवं निशावैजयिकश्च सः।
दिवावैजयिका अश्वा निशावैजयिका अपि॥ १४०
आनीतास्तव सौभाग्यात् सर्वसम्पत्समृद्धये।
आरादत्र समायातास्तानप्यालोकय प्रभो॥ १४१
पादे कन्तुकवत् स्थितौ च किरिवत् स्वास्फालने सिंहवत्
नेत्रे नीरजवज्जवे पवनवद्धेषारवे मेघवत्।
विन्यासे नटवन्मुखे कुलवधूवक्त्रेन्दुवद्वाजिनो
ये स्युस्ते भुवि राजवाहनपदे सम्भावनीयास्सदा॥
वक्षो ललाटं जघनं हयानां
त्रीणि प्रशस्तानि पृथूनि विद्यात्।
पृष्ठञ्च कर्णावथ कुक्षिनासं
ह्रस्वानि चत्वारि शुभानि विद्यात्॥ १४३
वालाश्च रोमाणि च केसराश्च
त्रीणि प्रशस्तानि मृदूनि विद्यात्।
आस्यञ्च नेत्रे च शिरो हयानां त्रीणि
त्रीणि प्रशस्तानि महान्ति विद्यात्॥ १४४
ओष्ठौ च जिह्वा त्वथ सृकणी च
त्रीणि प्रशस्तानि तनूनि विद्यात्।
ग्रीवाऽथ जङ्घा वदनं हयानां
त्रीण्येव दीर्घाणि शुभानि विद्यात्॥ १४५

उपचितबलशोभास्सत्वसारैरुपेताः
सुरभिकुसुमगन्धाश्शङ्खमेघेभनादाः ।
बहुविधशुभवर्णास्संहताङ्गस्स्वरूपाः
शुभगतिजवयुक्ता वाहवर्यास्सुनेत्राः ॥ १४६
जीमूतवर्णो घनघोषहेषः सदाज्यगन्धो गजसिंहगामी ।
प्रियश्च माल्ये च विलेपने च सोऽप्यश्वराजो नृपवाहनं स्यात् ॥
शताङ्गुलसमुत्सेध उत्तमाश्वस्य कीर्तितः ।
ततष्षोडशभागोनं प्रमाणं मध्यमस्य तु ॥ १४८
मध्यमादष्टभागोनं प्रमाणं स्यात् कनीयसः ।
राजाऽप्येवंविधानश्वान् रूपलक्षणसंयुतान् ॥ १४९
गन्धैर्माल्यैश्च विविधैः पूजयेत्तान् विधानतः ।
पूजय त्वं च तुरगान्परीक्ष्यैवं सुलक्षणान् ॥ १५०
विजयाय यशोवृद्ध्यै सर्वकामार्थसिद्धये ।
कान्तात्मरूपान् गान्धारान् काठिन्यखुरसंयुतान् ॥ १५१
सत्वयुक्तांश्च सद्वर्णान् सदावर्तान् जवाधिकान् ।
सल्लक्षणांश्च सद्देश्यान् दुर्लक्षणविवर्जितान् ॥ १५२
महाभारसहिष्णूंश्च महाक्षुत्तृट्सहानपि ।
एतान् गृहाण तुरगानखिलानवनीपते ॥ १५३
इति प्रोच्य क्रमादश्वान् शिवागण कृतान् शिवः ।
प्रादात्तस्मै महीपाय पुरः प्रसृतपाणये ॥ १५४
प्रत्यग्रहीत्तान्राजाऽपि तत्पाशस्पर्शमात्रतः ।
मुदा परमया युक्तः पाण्ड्यराडरिमर्दनः ॥ १५५

आहूय सकलान् शक्तानात्मीयानश्वपोषकान्।
मन्दुरासु मदीयासु बध्यन्तां तुरगालये।। १५६

इत्याज्ञां प्रददौ तेभ्य स्तथाऽकुर्वन् भटाश्च ते।
आम्नायमयमात्मीयमश्वमेकं विना तदा।। १५७

शिवः शिवामयानश्वान् प्रददौ पार्थिवाय वै।
तुरङ्गसादिनां मध्ये विहङ्गमपतिं यथा।। १५८

सञ्चरन्तं सदश्वेन तं दृष्ट्वा देवपुङ्गवम्।
प्रीतिविस्मयसंयुक्तो भूषणानि प्रदाय च।। १५९

पुनस्सर्वोच्चमार्याय सादिवर्याय शम्भवे।
चन्द्रिकाधवलं प्रादाद्भूपश्चेलमनुत्तमम्।। १६०

अवरुह्य तुरङ्गात्तत्समादाय महेश्वरः।
स्वस्य भक्तस्य रक्षार्थं कृपया शिरसा दधौ।। १६१

आमुक्तभूषणमधिष्ठितवाहवर्यं
अङ्गीकृतासिलतमीश्वरमद्रिजेशम्
चूडापदेन सुरसिन्धुमिव द्वितीयां
चेलां दधानममलामवनीन्द्रदत्ताम्।। १६२

पल्याणिनस्समवरुह्य शिवस्तुरङ्गात्
पाण्ड्यस्य हन्त शिरसाऽस्य बिभर्ति चेलम्।
सञ्जातमस्तक इवापहसेदमुष्य
दिग्वाससः करतलेन धृतःकपालः।। १६३

गणा इत्यब्रुवन् सर्वे हर्षाश्रुपुलकान्विताः।
स्थाने स्थाने च तिष्ठन्तो मुदा परमया युताः।। १६४

इतरेभ्यश्च सादिभ्यश्चेलाः प्रादाद्वरा नृपः ।
बद्ध्वा शीर्षेषु ते सर्वे नन्द्यादिगणनायकाः ।। १६५
आम्नायतुरगारूढं नाम्ना नीपवनेश्वरम् ।
सादिवर्यं पुरस्कृत्य हसन्तो लीलयाऽस्य तु ।। १६६
अरिमर्दनपाण्ड्यस्य भाग्यं कस्यापि नेति च ।
वदन्तस्सुन्दरेशस्य सन्निधिं प्रापुरञ्जसा ।। १६७
आहूय मन्त्रिवर्यं तं नृपो वातपुरेश्वरम् ।
चाटुना सान्त्ववादेन सन्तोष्य नितरामपि ।। १६८
नानारत्नसमायुक्तां स्वर्णपट्टां मनोरमाम् ।
सर्वैराभरणैस्साधं चेलामत्युत्तमामपि ।। १६९
तस्मै प्रदाय सचिवान् सूचकानिदमब्रवीत् ।
हे मन्त्रिणोऽयं मन्मन्त्री सुन्दरेश इवापरः ।। १७०
सभायामाभया भाति सामर्थ्यातिशयेन च ।
अश्वा भवद्भिर्दृष्टाश्च समानीता अनेन हि ।। १७१
काले विलम्बितेऽप्येवं मन्त्री वातपुरेश्वरः ।
अस्मत्कार्यमशेषञ्च शुभमेव व्यधात्सुधीः ।। १७२
एवं पुनः पुनर्भूपो वदन् सन्तोषसंयुतः ।
आस्थानमण्टपे तत्र चिरं भद्रासनेऽवसत् ।। १७३
मध्यं गतेऽथ मार्ताण्डे दिवसस्य महीपतिः ।
मन्त्रिमुख्यान् जनान् सर्वान् गन्तुं स्वान् स्वान् गृहान् प्रति ।।
आज्ञाप्य ज्ञापयामास वातग्रामेशमप्यथ ।
गन्तुं सन्तोषसन्मानपूर्वं राजाऽरिमर्दनः ।। १७५

तेषु सर्वेषु गच्छत्सु मन्त्रिमुख्यजनेषु च।
ययौ वातपुरेशोऽपि गृहं पूर्णमनोरथः ॥ १७६
चिल्लकाहलघोषेण पूरयन् पुरमात्मनः।
राजा च पश्चात्स्वं प्राप मन्दिरं मङ्गलालयम् ॥ १७७
दृष्टवन्तो जनास्सर्वे विचित्रश्चाश्वविक्रयम्।
वदन्तोऽत्यद्भुतमिति स्वं स्वं गेहं ययुस्ततः ॥ १७८
सुन्दरेशोऽपि भगवान् हसन् गणवरैस्सह।
प्राप्य प्रलयकालेऽपि स्वालयं लयवर्जितम् ॥ १७९
मूललिङ्गे तिरोधानं प्राप सर्वैर्गणैस्सह।
लीलाविशेषमाश्चर्यं भक्तार्थं कृतमात्मना ॥ १८०
गौर्यै स कथयामास साऽपि श्रुत्वा सुविस्मिता।
एकोनषष्टिर्लीलेयं श्रीहालास्यपतेः प्रभोः ॥ १८१
समस्तदुःखगहनदावानलशिखोपमा।
शृण्वतां स्तुवतां नृणां सुन्दरेशाश्वविक्रयम् ॥
ज्येष्ठा पलायते सद्यस्समायाति कनीयसी ॥ १८२

*इति श्री स्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - मायाश्वविक्रयो नाम*
*पञ्चषष्टितमोऽध्यायः*

★ ★ ★

## அத்தியாயம்-65

## 59. மாயக் குதிரைகளைக் கொணர்தல்

இன்றோ நாளையோ குதிரைகள் வந்துவிடுமென்று நம்பி அரசன் குளங்கள் வெட்டி நீர் நிரப்பினான். மூன்று நாட்கள்

கழிந்தன. குதிரைகளைக் காணுமல் கோபம் மிகுந்து துடிக்கிற அரசன் முன் வாதவூரர் வந்தார். அவரை அடித்தோ உதைத்தோ குதிரைகளுக்காக எடுத்துச் சென்ற தனமனைத்தையும் திரும்பப் பெறும்படி அரசன் வீரர்களைப் பணித்தான். முதுகில் பெரும் பாறையைச் சுமக்கச் செய்தும் கைகளையும், கால்களையும் தடிகள் கொண்டடித்தும் துன்புறுத்தி இரவில் சிறையிலடைத்துத் துன்புறுத்தினர். ஈசனிடம் வாதவூரர் விண்ணப்பித்துத் திருவாசகப் பாடல்களால் துதித்தார். ஈசன் நரிகளைக் குதிரையாக்கி, காஸாரியாகத் தன் கணத்தைச் சார்ந்தவர்களை அவற்றை ஓட்டிவரப் பணித்தார். எக்காளமும் முரசுகளும் முழங்க, பெருந் தூசிப் புயல் வானில் படர, அரசன் வெளியாளி மண்டபத்தில் அமர்ந்து குதிரைகளை எதிர்பார்த்து நின்முன். குதிரைகள் வராததைக் கண்ட அரசன் மறுபடி வீரர்களை ஏவ அவர்கள் புளியமிளாறுகளால் வாதவூரரை அடிக்கத் தொடங்கினர். வாதவூரர் வலியால் துடித்து மறுபடி ஈசனை வேண்ட அலைபோல் குதிரைகள் வரிசையாக நகரினுள் நுழைந்தன. ஈசனும் தனது வேதக் குதிரைமீதேறி குதிரையை விசித்திர நடைகளில் நடத்திவந்தார். அரசன் மகிழ்ச்சியுடன் வாதவூரரை குதிரைப் படைத் தலைவனை அறிமுகப் படுத்தச் சொன்னுன். வாதவூரர் தனது இயலாமையைத் தெரிவிக்க, அரசனே குதிரை வீரர்களைத் தலைவரைக் காட்டும்படி கேட்டான். அவர்கள் சைகையால் காட்ட, ஈசனும் குதிரையை அரசனின் முன் நிறுத்தினுர். அரசமரபில் எழுந்து வரவேற்கத் தயங்கி, உட்கார்ந்திருக்கவும் தயங்கித் தலைகுனிந்து அரசன் நிற்க ஈசன் சொன்னுர். —

"அரசே ! குதிரைகளுக்காக நீர் கொடுத்த தனமனைத்தையும் தந்து இந்தக் குதிரைகளை வாதவூரர் உமக்காக வாங்கியுள்ளார். உமது தனத்திற்காக இவற்றை நான் விற்கவில்லை. பெரும் செல்வமுள்ள நான் இவருக்காகவே குதிரைகளைக் கொணர்ந்தேன். உமது தனத்தை விடப் பல மடங்கு பெறுமானமுள்ளவை இவை. நாளை இராது (ச்வ: ந) என்பதால் இவற்றை அச்வம் என்பர். குதிரைகளைப் பாரும். பெற விருப்பமிருந்தால் கடிவாளக் கயிறு மாற்றிக்

கொள்வோம். கயிறு மாறும்வரை என் பொறுப்பு. கயிறு மாறியதும் அதன் நல்லதும், கெட்டதும் உம் பொறுப்பு. உமக்கு வாங்க விருப்பமில்லையேல் நீர் கொடுத்ததைவிட இருமடங்கு தந்து குதிரைகளுடன் திரும்பிச் செல்வேன்.'' இதனைக் கேட்ட அரசன் அதற்கு ஸம்மதித்துக் குதிரைகளைப் பெற முன்வந்தான். வாதவூரரை விடுவித்து அவரே எனது முதல் அமைச்சர் என முழக்கத்துடன் அறிவித்தான். ஈசன் அரசனுக்குக் குதிரைகளின் அங்க அடையாளம், அவைகள் பிறந்த தேசம், மரு, மச்சம், நிறம், நடை முதலியவற்றை விரிவுடன் விளக்கி இவை அரசரது வெற்றிக்கும் நாட்டின் நலனுக்கும் மக்களின் மன நிறைவிற்கும் ஏற்றவை என ஒவ்வொன்றையும் அரசருக்குக் காட்டி அறிமுகப்படுத்தினர். மக்கள் அரிமர்தன பாண்டியன் பெற்றுள்ள பாக்கியத்தை மிகவும் கொண்டாடிப் பாராட்டினர். அரசன் மிகவும் மகிழ்ச்சியுடன் குதிரை வணிகத் தலைவருக்கும், உதவியாளருக்கும் நல்ல மதிப்பு மிக்க ஆடைகளை அளித்து மகிழ்வித்தான். குதிரைகள் அரசரது லாயங்களில் இடம் பெற்றன. வாதவூரரை மிகவும் பாராட்டி அவரைப் பற்றிக் கோட் சொல்லிய தூதர்களிடம் அவரது பெருமையை விளக்கி அவர்களைக் கண்டித்தான். ஈசனும் தன் கணங்களுடன் மூல லிங்கத்தினுள் மறைந்தார். இது ஐம்பத்தொன்பதாவது லீலை. (இந்த அத்தியாயத்தில் குறிப்பிடப்பட்டுள்ள குதிரைகள் பற்றிய லக்ஷணங்கள் ஆராயத் தக்கவை.

★ ★ ★

## षट्षष्टितमोऽध्यायः

# ६०. नदीप्रवाहाकर्षणम्

अगस्त्यः -

महाप्रवाहानयनं शम्भुर्नद्यां यया ऽतनोत्।
अथाभिधास्ये तां लीलामतिचित्रामघापहाम्॥ १

मायया तुरगाकाराः सृगाला अखिला अपि।
निशीथे पूर्वरूपञ्च प्रापुश्शङ्करलीलया।। २
अथ ते चिन्तयामासुरन्योन्यं हर्षसंयुताः।
गाढं बद्धा वयं सर्वे पुराऽश्वत्वं समाश्रिताः।। ३
लब्धान्यात्मीयरूपाणि दैवादस्माभिरद्य तु।
रज्जुभिश्शृङ्खलाभिश्च पुरा बद्धा वयं नरैः।। ४
तद्बन्धनेभ्यो मुक्तानां नः पथ्यं हि पलायनम्।
नानुभूताः क्वचिदपि बाधा एवंविधाः पुरा।। ५
वर्तन्तेऽद्यापि देहेषु बन्धनव्रणवेदनाः।
अत्र स्थितानां हृद्यानि भक्ष्याण्यपि न सन्ति नः।। ६
कुलुत्थमुद्गचणकतृणं दास्यन्ति पोषकाः।
तद्भक्ष्यं नार्हमस्माकं कार्यमेव पलायनम्।। ७
इति निश्चित्य सहसा सृगाला अभितो ययुः।
पलायिताश्च तास्सर्वाः शरवेगयुताः पुरात्।। ८
पुरवीथीषु सर्वासु सर्वगेहाङ्गणेषु च।
उद्यानेषु समस्तेषु सर्वदेवालयेषु च।। ९
महाप्राकारमध्यस्थप्रदेशेष्वखिलेष्वपि।
सर्वत्र बद्धद्वारत्वात्सञ्चरन्त्यभितश्शिवाः।। १०
पुरद्वारकवाटेषु प्रभाते विवृतेष्वथ।
शिवा यूथा विनिर्गत्य जग्मुस्ते काननं प्रति।। ११
रात्रावेव पुरद्वाररक्षकाः पीडिताश्च तैः।
कवाटोद्घाटनं चापि कुर्वन्ति स्म प्रपीडिताः।। १२

शिवाभिः खादिता दष्टा अनेके पुरवासिनः ।
प्रभाते पोषकास्सर्वे राजानमरिमर्दनम् ॥ १३
प्राप्य भीता नमस्कृत्य प्राहुर्वृत्तान्तमर्वणाम् ।
राजन् पाण्डचकुलाधीश शासितारातिमण्डल ॥ १४
वीक्ष्याकर्णय चास्माकं विज्ञप्तिमधिकाद्भुताम् ।
अश्वा अभिनवास्सर्वे निशीथे फेरुरूपिणः ॥ १५
अकुर्वन्नादमत्युच्चैरात्मीयमतिभीषणम् ।
नादं श्रुत्वा वयं सर्वे फेरूणां मन्दुरान्तरे ॥ १६
किमेतदित्यथोत्थाय तत्र जग्मिम सत्वरम् ।
दृष्टश्शिवागणोऽस्माभिर्न दृष्टो वाजिनां गणः ॥ १७
अस्मद्दर्शनतो भीता उत्प्लुत्योत्प्लुत्य वेगतः ।
अगच्छन् केचिदुल्लङ्घ्य सृगालास्सालमुन्नतम् ॥ १८
जलधारायनैः केचिद्द्वाक्षैरपि केचन ।
रन्ध्रैर्नानाविधैश्चापि ययुर्वेगेन वञ्चकाः ॥ १९
गन्तुं केचिदशक्ताः स्म वर्तन्ते फेरवः पुरे ।
केचिन्महान्तः क्रोष्टारः क्रुद्धा अश्वान् पुरातनान् ॥ २०
ददंशुस्सर्वगात्रेषु ह्यस्माभिः प्रहृता अपि ।
अस्मानपि ददंशुस्ते दन्तैस्तीक्ष्णतरैः पुनः ॥ २१
अभवन् भिन्नमुष्काश्च केचिदश्वा विचेतसः ।
कीलानुद्धृत्य केचिच्च मन्दुराया बहिर्गताः ॥ २२
शिवाश्च नगरेऽनन्ता धावन्त्यः परितो मुहुः ।
निजेन ध्वनिना सर्वा दिशो मुखरयन्ति च ॥ २३

चतुर्द्वारि च विवृते पुरस्य मृगधूर्तकाः ।
धावन्ति स्म वनं सर्वे सहसा तमसा सह ।। २४
अयन्तु मन्दुरोद्भूतो वृत्तान्तोऽस्माभिरीरितः ।
इत्यश्वपोषकाणां तद्वाक्यं श्रुत्वा महीपतिः ।। २५
शोकसागरमग्नोऽभून्मुहूर्तं स विचेतनः ।
अन्तःपुरेषु पीडाश्च शिवाभिश्श्रुतवान्नृपः ।। २६
सर्वेऽथ सचिवा एत्य तदा तन्निकटे स्थिताः ।
श्रुतः किं मन्दुरोदन्त इत्यपृच्छत्स तान् नृपः ।। २७
अस्मद्गृहेषु च निशि शिवापीडा महत्तरा ।
स्वामिन्नद्य श्रुताऽस्माभिरित्युक्त्वा तेऽप्यधोमुखाः ।। २८
विस्मिता दुःखिता आसन् राज्ञश्शोकं विलोक्य च ।
तदा वातपुरेशोऽपि कृतकृत्य इति स्मरन् ।। २९
राज्ञस्समीपं मनसि शम्भुं ध्यायन् समागतः ।
तं दृष्ट्वा नितरां क्रुद्धः प्रोवाचेति महीपतिः ।। ३०
सम्यक्त्वया समानीता अश्वा वातपुरेश्वर ।
इन्द्रजालमहाजालविद्या मे दर्शिता त्वया ।। ३१
अश्वाः पूर्वस्थिताश्चापि गताः पौराश्च पीडिताः ।
इत्युक्तस्सोऽथ तं प्राह ध्यायन् शम्भुं नृपं प्रति ।। ३२
राजन् तुरङ्गानयने को दोषः कथयाद्य मे ।
तेऽत्र बन्धं समानीता इन्द्रजालादिकं त्विति ।। ३३
वदसि त्वं नाहमस्मि कर्ता द्रोहस्य कार्यकृत् ।
दृष्टास्त्वया मन्त्रिभिश्च तेऽश्वाध्यक्षजनैरपि ।। ३४

पुरस्थितैर्जनैश्चापि तुष्टस्त्वं नितरां प्रभो।
व्युत्पत्तिमश्वशब्दस्य श्रुत्वाऽपीशमुखात्ततः ॥ ३५
धनं मास्तु ददस्वाश्वानिति पाशं गृहीतवान्।
अहञ्च मोहितस्तेन हयाध्यक्षेण शम्भुना॥ ३६
श्रुत्वाऽश्वानां लक्षणञ्च दृष्ट्वा सन्तोषसंयुतः।
सन्मानञ्च त्वया तस्य कथं कृतमहो नृप॥ ३७
नाहं विक्रीतवानश्वान् व्यक्रीणादीश एव ते।
शिवे भक्तियुतो यस्मात्त्वं तच्छम्भुस्तवेदृशीम्॥ ३८
लीलां दर्शितवान् सत्यं त्वं कृती शम्भुदर्शनात्।
इति धीरोऽब्रवीन्मन्त्री सोऽथ श्रुत्वेति तद्वचः ॥ ३९
ईशमायामोहितस्सन्नब्रवीत्तं नृपः पुनः।
ते तुरङ्गाः शिवा भूत्वा मन्दुरासु पुरास्थितान्॥ ४०
मन्दराचलसंकाशान् महामेरुसमानपि।
बडबानलतुल्यांश्चात्युच्चैरुच्चैश्श्रवस्समान्॥ ४१
ददंशुरश्वानखिलान् तेऽप्युच्छिद्य स्वशृङ्खलाः।
ताभिश्शिवाभिस्सहिता गतास्सद्योऽटवीं प्रति॥ ४२
एवमुक्त्वा तु भूपालो नितरां क्रुद्धमानसः।
अत्यन्तरक्तनयनः प्राह स्वाज्ञाकरान् भटान्॥ ४३
तुरङ्गाहरणार्थञ्च यावद्दत्तं धनं पुरा।
तावत्सर्वं प्रहृत्यैनमद्य गृह्णीत सत्वरम्॥ ४४
इति राज्ञो वचश्श्रुत्वा तेऽपि निर्दयमानसाः।
बध्वा वातपुरेशानं दण्डयन्ति स्म पूर्ववत्॥ ४५

निर्बन्धमखिलं सोढुमशक्तस्सन् स्वशक्तितः ।
सर्वापत्परिहर्तारं सुन्दरेश्वरमीश्वरम् ।। ४६
श्रीवाचकगणैर्नव्यैरनेकैर्भुक्तिमुक्तिदैः ।
प्रस्तुत्य परया भक्त्याऽप्यार्यामेवमथाब्रवीत् ।। ४७
तुरगास्सृगालरूपा याता राजाऽद्य बाधते द्रविणम् ।
वितरेति मे विशेषादीश भवानेव केवलं शरणम् ।। ४८
इति स्तुतस्सुन्दरेशः पावनैः परमाद्भुतैः ।
स्तोत्रैर्वातपुरेशेन कृतैः प्रीतः परात्परः ।। ४९
अथैवश्चिन्तयामास तस्यार्तिहरं ईश्वरः ।
उपायं कश्चिदाश्चर्यं निम्नगानयनात्मकम् ।। ५०
पीड्यमानस्य भक्तस्य रक्षार्थं स्वस्य लीलया ।
अथ वेगवतीमेवं चोदयामास शङ्करः ।। ५१
आपगे शीघ्रमागच्छ जलैः कूलङ्कषैर्भृशम् ।
मधुरापुरवीथीष्वप्यपः प्रवह भीकरी ।। ५२
इति ब्रुवाणे गौरीशे वेगाद्वेगवती नदी ।
क्षणेन रोदसी पूरैरम्भसामत्यवाहयत् ।। ५३
अत्युत्तुङ्गैस्तरङ्गैश्च प्रोल्लसच्छफरीगणैः ।
वेगाकृष्टमहावृक्षैर्महावर्तैरनेकशः ।। ५४
फणिभिर्भीषणैः फेनैः सहिता सरितां वरा ।
पुरवीथीगता भूत्वा पौराणां साऽकरोद्भयम् ।। ५५
ये पीडयन्ति सचिवं राजाज्ञाकारिणो भटाः ।
तं विहाय ययुस्तेऽपि नद्यंभोजातसम्भ्रमाः ।। ५६

स्वीयजायापुत्ररक्षां कर्तुं स्वान् स्वान् गृहान् प्रति ।
यदा जना भयं प्रापुर्मधुरापुरवासिनः ।। ५७
पीडाकरा अपि भटास्त्यक्त्वाऽऽत्मानं यदा गताः ।
तदा निर्भयतां प्राप्य मन्त्री वातपुरेश्वरः ।। ५८
पुनश्श्रीवाचकैरन्यैः स्तुत्वा सुन्दरनायकम् ।
सर्वालङ्कारसंयुक्तं साम्बं ध्यायन् हृदम्बुजे ।। ५९
कारागृहान्मुदा युक्तस्सुन्दरेशालयं गतः ।
स्नात्वा च स्वर्णपद्मिन्यां परिधायाम्बरं स्वकम् ।। ६०
भूतिरुद्राक्षधारी सन्नित्यकृत्यं विधाय च ।
तीरस्थं विघ्नराजञ्च सर्वसिद्धिप्रदं नृणाम् ।। ६१
नत्वा स्तुत्वा गुहं चापि बर्हिवाहं षडाननम् ।
नत्वा स्तुत्वा प्रार्थयित्वा श्रीमीनाक्षीं विलोक्य च ।। ६२
नत्वा भक्त्या स्तुतिं कृत्वा रक्ष मामिति चार्थयन् ।
प्रदक्षिणत्रयं कृत्वा प्रादक्षिण्येन साञ्जलिः ।। ६३
वृषभाग्रे नमस्कृत्य त्रिवारं भक्तिसंयुतः ।
द्वारपालान्नमस्कृत्य नन्दिकेशं प्रणम्य च ।। ६४
सुयशाश्च नमस्कृत्य प्रविश्यालयमीशितुः ।
नटेशञ्च नमस्कृत्य चन्द्रशेखरपूर्वकान् ।। ६५
दृष्ट्वा तं नटनं सम्यक् द्वादशान्तस्थलेऽमले ।
कृतार्थोऽस्मीति विज्ञाप्य स्वेष्टं सम्प्रार्थ्य तत्र तम् ।। ६६
महामण्टपमासाद्य अन्तर्गृहमवाप्य सः ।
द्वारपालान्नमस्कृत्य तत्रापि गणपुङ्गवम् ।। ६७

दृष्ट्वाऽऽदिलिङ्गममलं सुन्दरेशस्य भक्तितः।
आनन्दसागरे मग्नस्सानन्दजललोचनः ।। ६८
पुलकाञ्चितसर्वाङ्गो लिङ्गमध्येऽम्बिकायुतम्।
ध्यात्वा विलोक्य भक्तेष्टदायकं सन्निधौ स्थितः ।। ६९

अगस्त्यः -

श्री हालास्यपतेश्शम्भोष्षष्टिसङ्ख्यासुपूरणी।
लीला मया वर्णिता च पापतूलानलोपमा ।। ७०
एतां लीलां महापुण्यां शृणुयाद्यो महीतले।
स हि सर्वां महीं भुक्त्वा शम्भोस्सारूप्यमेष्यति ।। ७१

*इति श्री स्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - नदीप्रवाहाकर्षणं नाम*
*षट्षष्टितमोध्यायः*

★ ★ ★

## அத்தியாயம் - 66

## 60. வைகை வெள்ளப் பெருக்கு

ஈசனின் மாயையால் குதிரைகளாக வந்த நரிகள் நள்ளிரவில் சுய உருவம்பெற்றன. "கொள்ளும் பயறும் கடலையும் புல்லும் தமக்கு உணவல்ல" என நினைத்துக் கட்டுகளை அகற்றி அங்குமிங்கும் ஓடத் தொடங்கின. குதிரை லாயத்திலிருந்த காசாரிகள் பயந்தோட, அவை லாயத்தை விட்டு வெளியேறி, வீதிகளிலும் தோட்டங்களிலும் சுற்றி வந்து மக்களைக் கடித்தும் ஊளையிட்டும் பயமுறுத்தின. நகர மாந்தரிடம் பயந்து ஒளிந்தன. கோட்டைக் கதவுகள் முத்திரையிட்டுப் பூட்டப்பட்டிருந்ததால் வெளியேற

இயலாமல் வாயிற் காவலர்களைத் துன்புறுத்த அவர்கள் கதவைத் திறக்க, விடியற் காலையில் காட்டிற்குள் சென்று மறைந்தன. லாயத்திலிருந்த நல்ல குதிரைகளையும் கடித்துக் குதறித் துன்புறுத்தியதால் அவையும் வெறிபிடித்து நரிகளுடன் நகரத்தை விட்டு வெளியேறிக் காட்டினுள் சென்றன. இதனை மக்களும் லாயக் காவலர்களும் அரசனிடம் தெரிவிக்க அவன் கடும் கோபமுற்ருன். அச்சமயம் அரசரைப் பாராட்ட வாதவூரரும் அரசரின் முன் வந்தார். குதிரைகள் நரியானதுடன் பழைய குதிரைகளும் புண்பட்டு ஓடிவிட்டதைக் கூறிச் சிறையிலிட்டு அவரை வாட்டி, குதிரைக்காக எடுத்துச் சென்ற தனத்தைத் திருப்பித் தரும்படி அரசன் கேட்டான். வாதவூரரோ ''குதிரை வணிகன் தனத்தை இருமடங்கு திருப்பித் தர முன் வந்தும் தடுத்து, தனம் வேண்டாம், குதிரை வேண்டும் என அரசர்தான் அவற்றை நேரில் வாங்கிக் கொண்டார். அதனால் இதில் தனக்கு ஒரு தொடர்புமில்லை'' என வாதிட அரசன் மறுத்துச் சிறையிலிட்டுத் துன்புறுத்தினன். வாதவூரர் சிவனிடம் மன்ருட, சிவன் வைகை நதியைப் பெருக்கெடுத்து நகருக்குள் நுழையும்படி உத்தரவிட்டார். வைகையின் வெள்ளம் நகரினுள் புகுந்தது. வீடுகளும் மரங்களும் சாய்ந்தன. மக்கள் கதறி வீடுகளை விட்டு வெளியேறினர். சிறைக் காவலர்களும் வாதவூரரை விட்டு விட்டுத் தம் தம் மனைவி மக்களையும் வீடுகளையும் பாதுகாக்க விரைந்தனர். சிறையிலிருந்து விடுபட்ட திரு வாதவூரர் ஆலயம் சென்று வணங்கித் திருவாசகப் பாசுரங்களால் இறைவனைப் பாடி ஆனந்தமடைந்தார். இது அறுபதாவது லீலை.

★ ★ ★

## सप्तषष्टितमोऽध्यायः

# ६१. पिष्टकृते मृद्धरणम् बौद्धविजयश्च

अगस्त्यः -

दधौ पिष्टाय मृद्भारं यया सुन्दरनायकः ।
तां लीलामभिधास्यामि विचित्रां विविधेष्टदाम् ।। १
पयः पूरैर्वेगवत्या मधुरापुरवासिनः ।
पीडिताश्च प्रभीताश्च जनाश्चक्रुर्महारवम् ।। २
अन्तःपुरगतो राजा पाण्ड्योऽप्याकर्ण्य तद्ध्वनिम् ।
किमिदं भयमापन्नं पौराणां सकलात्मनाम् ।। ३
अभूदार्तस्वरो हाहा हेति मत्वा महामतिः ।
निर्गत्यान्तःपुरात्तूर्णं बहिर्वेगवतीभवम् ।। ४
अपश्यत्पुरवीथीषु प्रवृद्धं परितो जलम् ।
तीरमुल्लङ्घ्य चायाति जलस्रोत इतीरिते ।। ५
नदीकूलं बन्धयितुं समुन्नतमशेषकम् ।
सहसा चोदयामास सचिवानथ भूपतिः ।। ६
ते नदीतीरमासाद्य शासनात् पाण्ड्यभूपतेः ।
वोढारः कर्षका नास्यां पुरीदानीमितीरिते ।। ७
विभज्य निम्नं तत्तीरं पौराणां गृहमेधिनाम् ।
अतिद्रुतं प्रतिगृहं षष्टिपादप्रमाणकम् ।। ८
मृद्भारैरुन्नतं कर्तुं स्वं स्वमंशं पृथक् पृथक् ।
पौरेषु धनिभिर्द्वित्रा दरिद्रैरेक एव च ।। ९

विसृज्यन्तां तु भृतका बलिनः कर्मकारिणः।
इत्थमाज्ञापयामासुस्तीरबन्धाय नागरान्।। १०
तथैव पौरास्ते सर्वे स्वं स्वमंशं मृदां भरैः।
वोढृभिः पर्वतीचक्रुः तेभ्यो दत्वोचितं धनम्।। ११
वोढारो नगरीमध्ये दुर्लभा अभवन् यदा।
तदा तु पिष्टविक्रेत्री पुर्या आग्नेयकोणतः।। १२
निवसन्ती स्वकीयांशं त्रिंशत्पादप्रमाणकम्।
दृढं तीरस्थलं बद्धुं स्वस्याश्च बलहानितः।। १३
अन्वीक्ष्य भृतकं कश्चिद्बभ्राम कटकान्तरे।
सा तु भक्ता शिवेऽतीव मीनाक्षीरमणे प्रभौ।। १४
न सन्ति तस्याः पुत्राद्या अस्ति सङ्कुचितं गृहम्।
ब्राह्मणी सा स्नानपरा सदा शुचिरकल्मषा।। १५
शिवपूजारता नित्यं भूतिरुद्राक्षधारिणी।
नित्यं नियमतस्सेवां करोति प्रातरेव सा।। १६
मीनाक्ष्यास्सुन्दरेशस्य प्रदक्षिणपरायणा।
पिष्टं प्रतिदिनं पक्त्वा विक्रीय स्वोदरम्भरा।। १७
पिष्टविक्रयलाभार्थं पिष्टमादौ सुपाचितम्।
प्रीत्यर्थं परमेशस्य ददाति ब्राह्मणाय सा।। १८
स्वजीवनस्याधिक्येन लब्धमप्यथ सा धनम्।
अनित्यं देहमित्येव ज्ञात्वा परदिनस्य च।। १९
न स्थापयति तत्सम्यक् ज्ञानिनी जरढाऽपि सा।
स्वजीवनाधिकं वस्तु दत्ते भक्तेभ्य आदरात्।। २०

अशीतिवृद्धा वोढारं सा त लब्ध्वा कचित्तदा।
शिवालयं द्राक्सम्प्राप्य दृष्ट्वा श्रीसुन्दरेश्वरम्।। २१
सकलार्तिहरं सांबं मीनाक्षीपतिमीश्वरम्।
नत्वा मां रक्ष रक्षेति प्रार्थयित्वा च सा सती।। २२
सम्यक्पकान् सुपिष्टांश्च समर्प्येशाय भक्तितः।
स्वामिन्मां राजपुरुषैर्बाधितां पाहि सत्वरम्।। २३
राजभृत्या बाधयन्ति पुरुषं विसृजेति माम्।
कुर्वन्ति च गृहच्छिद्रं धनं मेऽस्तीति कोपतः।। २४
पुरुषं विसृजामि द्राङ्न कार्यं गृहमोटनम्।
न बाधयध्वं मां दीनामिति सम्प्रार्थ्य तानहम्।। २५
आगता सन्निधानं ते रक्ष मां झटिति प्रभो।
अन्विष्य चापि वोढारं वीथ्यां पश्यामि नैव तु।। २६
अनाथनाथ कृपया ममार्तिं शमयाधुना।
इति सम्प्रार्थ्य जरढा सुन्दरेशं प्रणम्य सा।। २७
पुनर्बभ्राम वीथीषु पश्यन्ती भृतकं द्विजाः।
एवमत्यार्तियुक्तायास्तस्याः कर्तुमनुग्रहम्।। २८
सर्वव्यापी सुन्दरेशः षोडशाब्दाकृतिश्शिवः।
स्मितमाधुर्यमधुरमुखमण्डलमण्डितः।। २९
सौन्दर्यसागरोद्भूतशङ्खसन्निभकन्धरः।
कवाटकठिनोरस्कः कमनीयकराम्बुजः ३०
कच्छबन्धात्तनुतरकटीतटविराजितः।
कदलीकाण्डसौभाग्यजयिजङ्घोरुशोभितः।। ३१

कमठीकर्पराकारप्रपदः प्रमथेश्वरः ।
ब्राह्मं शिरः कपालं च पिटकं प्रविधाय वै ।। ३२
खनित्रं परशुं कृत्वा शिरसांसेन ते वहन् ।
खनकाकारवान् मर्त्य इव लिङ्गात्समुद्गतः ।। ३३
अशीतिवृद्धां पिष्टाम्बां प्राप्यापृच्छद्दयापरः ।
अम्ब कं त्वं समन्वीक्ष्य भ्रमसीतस्ततो मुहुः ।। ३४
अस्ति किं भृतकापेक्षा तवाद्य कथयाशु मे ।
इति तस्य वचश्श्रुत्वा खनित्रपिटधारिणः ।। ३५
अस्तीत्युक्त्वा मुदा प्राह ससम्भ्रममवेक्ष्य तम् ।
तात वोढुं भवान्शक्तो मृद्भारं यदि साम्प्रतम् ।। ३६
मदंशमापगाकूलं दृढं कुरु समुन्नतम् ।
शिवेन प्रेरितोऽसि त्वं मद्रक्षायै न संशयः ।। ३७
इति तस्या वचश्श्रुत्वा मह्यं त्वं किं ददासि वै ।
इति तां कृपयाऽपृच्छद्धसन्नीपाटवीपतिः ।। ३८
सा पुनः प्राह जरती भृतकं तं मुदान्विता ।
अर्थो नैवास्ति मद्धस्ते सत्यमेव वदाम्यहम् ।। ३९
पिष्टान् सोष्णान् प्रदास्यामि मुद्गयुक्तान् सशर्करान् ।
सनारिकेलान् सद्गन्धान् विघन्ते तेऽद्य मद्गृहे ।। ४०
क्रीताः पणाधिकास्ते स्युरेलाद्यैश्च सुवासिताः ।
आदाय मत्तस्तानाशु भक्षयित्वा मृदं वह ।। ४१
तथा करिष्य इत्युक्तवते वैतनिकाय वै ।
तस्मै सा प्रददौ पिष्टान् सोऽपि प्रत्यग्रहीन्मुदा ।। ४२

तानापूर्याथ कक्ष्याया अन्तरे विवृते शिवः ।
आगत्य तटिनीतीरं तत्र मृद्वाहकान् जनान् ।। ४३
वीक्ष्योत्कूलां नदीञ्चापि पिष्टाम्बांशसमीपतः ।
अदन् पिष्टान् हसन्मन्दं चचार तटिनीतटे ।। ४४
एकस्स्वादु न भुञ्जीतेत्याहुस्सर्वे विचक्षणाः ।
इत्युक्त्वाऽऽहूय भृतकानन्यांस्तेभ्यश्च तान्ददौ ।। ४५
पिष्टाभावेऽथ तामेत्य शङ्करो लीलयाऽवदत् ।
अम्ब कूले तवांशस्तु सर्वांशेभ्यो दृढीकृतः ।। ४६
मिथ्येति मा विजानीहि तत्साक्षी सुन्दरेश्वरः ।
त्वञ्च तत्पश्य पिष्टास्ते सरसा भक्षिता मया ।। ४७
अतीव श्रमभाजाऽद्य पुनर्वाञ्छाऽस्ति तेषु मे ।
यावन्तः सन्ति विस्रस्ताः पिष्टा देया ममाशु ते ।। ४८
तेनेत्युक्तं वचस्सत्यं मन्वाना मुदिताशया ।
तथेति पिष्टान् पक्वांस्ते विस्रस्तांश्च मुहुर्मुहुः ।। ४९
मायावैतनिकायास्मै ददौ सा च स चाग्रहीत् ।
भक्षयन् भक्षयन्मन्दं पुनः प्राप्य नदीतटम् ।। ५०
अर्भकेभ्यश्च तान्दत्वा पिष्टाम्बांशसमीपतः ।
गायन् मधुरया वाचा देवः क्रीडति निर्भयः ।। ५१
गणनायां प्रवृत्तायां गणकेन नृपाज्ञया ।
अत्यन्तमलिनाकार कच्छबन्धलसत्कटिः ।। ५२
दधत्खनित्रमंसेन पिटकं शिरसा वहन् ।
धूलिधूसरगात्रस्सन् समभ्येत्य त्वरान्वितः ।। ५३

भृतकं पिष्टविक्रेत्र्याः कायस्थ गणयाशु माम्।
पुनः पुनरिति प्राह भृतकाकार ईश्वरः ।। ५४
असौ न किञ्चिद्वहति मृदमित्यवदन् परे।
भृतका गणकं वीक्ष्य तमथाह हसन् शिवः ।। ५५
पश्यन्पश्यन् समस्तांश्च मधुरापुररक्षकः ।
मयैव सर्वं कायस्थ नदीकूलं दृढीकृतम् ।। ५६
असत्यवादिनामेषां न विश्वास्यं वचस्त्वया।
इति प्रगल्भवचनं भृतकं सुन्दराकृतिम् ।। ५७
विलोक्याश्चर्यसंयुक्तो लिखित्वा स ययौ जवात्।
गतेऽथ गणकेऽन्यत्र पुनस्स भृतकाकृतिः ।। ५८
शिरोपधानं पिटकं कुर्वन् पादौ खनित्रगौ।
वदन्विनोदवाक्यानि तीरस्थैर्भृतकैस्सह ।। ५९
उच्चैर्गायन् क्वचिच्छेते शुभे वेगवतीतटे।
एवं लीलां प्रकुर्वाणे भृतकाकार ईश्वरे ।। ६०
भृतकानां प्रशास्ता यस्स तत्रागत्य रोषतः ।
कोऽयं लीलापरश्शेत इत्यपृच्छत्समीपगान् ।। ६१
पिष्टाम्बाया असौ भृत्य इति तेऽकथयन् जनाः ।
ततस्स तं समुत्थाप्य प्रभर्त्स्य भृशमब्रवीत् ।। ६२
आकारेण भवान् पूज्यो नृपेश इव लक्ष्यते।
पूज्योऽयं न तु वोढेति ज्ञायते तेजसा जनैः ।। ६३
भवतैकोऽपि मृद्भारो न क्षिप्तोऽद्य नदीतटे।
त्वदंशोऽम्भः प्रवाहोऽयं तटं सम्भिद्य गच्छति ।। ६४

सचिवाभ्याशमेहि त्वां दर्शयिष्यामि दुर्मदम्।
पिष्टान् गृहीत्वा बहुलान् भुक्त्वा शेषे च निर्भयः ।। ६५
एवमुक्तवता तेन सार्धं कलहवान् हरः ।
सचिवं सहसा प्राप सस्मिताननमण्डलः ।। ६६
सचिवोऽपि तमालोक्य ह्यपृच्छत्कस्त्वमित्यथ ।।
अहन्तु मधुरामध्ये निवासी सर्वभारभृत्।। ६७
पिता च माता भ्राता च नास्ति मे बान्धवा अपि।
कश्चिदुत्तरदेशेऽस्ति सखा धनपतिर्मम ।। ६८
सतां सहायभूतोऽहं भिक्षुको दीनरक्षकः ।
मया कार्यं किन्तवाद्य न बिभेमि नृपादपि ।। ६९
पिष्टाम्बायां करुणया मृद्भारं धर्तुमागतः ।।
इत्युक्तवन्तं भृतकं मन्त्री प्रत्यब्रवीत्क्रुधा ।। ७०
त्वन्तु निर्गुण एवासि गुणवानिव लक्ष्यसे।
नितरां गर्वयुक्तश्च स्वाधीनोऽहं वरप्रदः ।। ७१
न बिभेमि च भूपालादिति सम्भाषसे किल।
अपि प्रहारयोग्यं त्वां धर्मान्न प्रहराम्यहम्।। ७२
सद्यः पूरय गम्भीरं त्वत्कूलं मृद्भरैस्तथा।
न करिष्यसि चेद्राज्ञा प्रहारस्ते भविष्यति ।। ७३
आगमिष्यति राजाऽद्य द्रष्टुं नद्यास्तटं प्रभुः ।
कोपयुक्तस्तु राजाऽयमरिमर्दननामवान्।। ७४
इत्युक्त्वा प्रेषयामास मन्त्री तं भृतकं तदा।
पुनस्स भृतकोऽभ्येत्य पूर्ववत्तटिनीतटे।। ७५

आसीनस्सन् शयानस्सन् पिष्टान् सम्भक्षयन् स्थितः।
भूपाज्ञाकारिणः केचित् वटवः पटवोऽप्यथ ॥ ७६
तटमालोकयन्तस्तं निम्नं देशं विलोक्य च।
कस्यांशोऽयं निम्नतर इत्यपृच्छन् समीपगान् ॥ ७७
ते प्रोचुरिति वोढारः पुरस्याग्नेयकोणतः।
वसन्त्याः पिष्टविक्रेत्र्या अंशो निम्नतरो ह्ययम् ॥ ७८
शेते तद्भृतकोऽप्यत्र गायन् पिष्टानदन्नदन्।
इत्याकर्ण्य वचस्तेषां वटवः पटवश्च ते ॥ ७९
हठादुत्थाप्य चाकृष्य तं प्रभत्स्यैवमब्रुवन्।
रे रे भृतक दुर्बुद्धेऽस्त्यंशो निम्नतरस्तव ॥ ८०
कारणं कथयास्य त्वं जानास्याज्ञां न भूपतेः।
त्वं पिष्टान् भक्षयित्वाऽद्य पिष्टांबायाश्च वेतनम् ॥ ८१
न दधासि मृदं किञ्चिदपि भिन्नश्च तत्तटम्।
त्वद्दुष्टकृत्यं दुर्बुद्धे जानाति यदि भूपतिः ॥ ८२
दृढप्रहारस्सर्वेषां तव चैव भविष्यति।
तस्माद्दृढीकुरु क्षिप्रं त्वदंशं तटिनीतटम् ॥ ८३
इत्युक्तवत्सु वटुषु राजशासनकारिषु।
तृणीकृत्य च तान् सर्वान् प्राह वाचं स ईश्वरः ॥ ८४
तूष्णीं भवन्तो गच्छन्तु स्वाधीनोऽहं तु निर्भयः।
सर्वेषां भूभृतां राजाऽप्यहमेव हि पाण्ड्यपः ॥ ८५
नायं राजा मम पुनर्भृत्य एषोऽरिमर्दनः।
राज्ञः पुरो वदंत्वेवं मत्प्रभावमवैतु सः ॥ ८६

इति तद्गिरमाकर्ण्य कृतिनः प्रतिघान्विताः ।
ते प्राप्य पाण्ड्यभूपालं प्राहुश्श्रेष्ठाश्च तत्कृताः ॥ ८७
खातितश्च नदीतीरमापातालं तदंशके ।
स्रोतोवेगेन सर्वैरप्यनिवार्यं विभाति तत् ॥ ८८
इति तेषां वचश्श्रुत्वा नृपोऽतिकुपितस्तदा ।
कृत्याकृत्यमविज्ञाय ईशाज्ञापारवश्यगः ॥ ८९
आस्थानमण्टपात्तूर्णं विनिर्गत्य भटैस्सह ।
सौवर्णवेत्रविलसत्पाणिपल्लवभासुरः ॥ ९०
आययावतिवेगेन तत्रैव तटिनीतटे ।
निम्नं तरङ्गिणीतीरं वारिवेगातिखातितम् ॥ ९१
मायया भृतकाकारं सुन्दरेशं विलोक्य च ।
पुनः कोपानलज्वाला ववृधे पाण्ड्यभूभुजः ॥ ९२
कोपातिरक्तनेत्रस्सन् यदाऽपश्यन्नृपश्च तम् ।
प्रहर्तुमुद्यतं भूपम् तदा दृष्ट्वा भयान्विताः ॥ ९३
वह मृद्भारमाशु त्वं प्रहर्तुश्चाययौ नृपः ।
इत्यूचुर्भृतकाकारमीश्वरं भृतकाः परे ॥ ९४
श्रुत्वा भीतियुतैरुक्तां वाचं भीतिविवर्जितः ।
मृद्भारं शिरसा धृत्वा खनित्रं स्कन्धदेशतः ॥ ९५
मन्दं मन्दं चचालासौ न निक्षिप्य मृदं तटे ।
रोधप्रबन्धने चास्य नहीच्छा विद्यते यतः ॥ ९६
प्रहार एव कर्तव्य इति निश्चित्य पाण्ड्यराट् ।
तत्समीपञ्च सम्प्राप्य त्वरया तस्य पार्श्वगः ॥ ९७

पद्मकोमलपाणिस्थसुवर्णमयवेत्रतः ।
उद्गाढं ताडयामास तद्देहापरभागके ।। ९८
राजन्मां किं प्रहरसि गमिष्यामीति स ब्रुवन् ।
तिरोदधे वोढृमध्ये ददृशुस्तं न केचन ।। ९९
पिष्टाम्बायाः कुटीं प्राप्य तीरबन्धाधिकारिणः ।
आकृष्य जरढां शीघ्रं तां पीडयितुमुद्यताः ।। १००
क्व ते भृतक इत्यूचुस्तं दर्शय पुरोऽधुना ।
तदेत्याह च सा स्वान्ते स्मरन्ती सुन्दरेश्वरम् ।। १०१
श्रीहालास्यप्रभो शम्भो साक्षी त्वं सर्वकर्मणाम् ।
भृतकाय च कस्मैचिदिष्टाः पिष्टा मयाऽर्पिताः ।। १०२
नदीतीरं द्रढयितुं तत्कृत्यं सोऽपि नाकरोत् ।
अनाथनाथ भगवन् दयालो मे दयां कुरु ।। १०३
न सहेऽहमिमां बाधां व्यपोह्यैनाश्च शङ्कर ।
त्वत्पादभक्तां शीघ्रं मां संसारादुद्धर प्रभो ।। १०४
इति तद्दीनवचनमाकर्ण्य करुणाकरः ।
वृषभारूढ आगत्य गौर्या सह शिवो गणैः ।। १०५
महद्विमानमारोप्य तां कैलासमनीनयत् ।
जरढात्वं परित्यज्य पिष्टाम्बा युवती सती ।। १०६
तदा सा व्योमयानस्था दिव्यरूपा सखीजनैः ।
महता वाद्यघोषेण कैलासं प्रययौ मुदा ।। १०७
सर्वे जनाश्च तां दृष्ट्वा विस्मयं परमं गताः ।
प्रोचुश्च राज्ञे वृत्तान्तं पिष्टाम्बाया गतिं तदा ।। १०८

राजाऽप्याकर्ण्य तद्वृत्तं स्तिमितोऽभूदहेतुवित्।
यदा प्रहृतवान् भूपस्तं शिवं भृतकाकृतिम्॥ १०९
पाणिस्थ स्वर्णवेत्रेण प्रहारं द्विगुणं पुनः।
स्वदेहापरभागे स लब्ध्वाऽगात्तीव्रवेदनाम्॥ ११०
पश्चाद्भागेषु जगतां जङ्गमस्थावरात्मनाम्।
सर्वेष्वपि च लिङ्गेषु तदाऽभूद्वेत्रताडनम्॥ १११
तत्रस्थाश्च जनास्सर्वे वेत्रताडनवेदनाम्।
स्वदेहपृष्ठभागोत्थमन्वभूवन् सुदुःखिताः॥ ११२
परस्परं ते ददृशुः पिठरेषु च तद्व्रणम्।
तटश्च पूरितो मृद्भिः पिष्टांबांशो विशेषतः॥ ११३
नादृश्यत प्रवाहोऽपि यथापूर्वमभून्नदी।
राजा च सचिवास्सर्वे पौरजानपदाः स्त्रियः॥ ११४
सन्ताडिता विस्मिताश्च विशेषेण भयाकुलाः।
अथ सर्वेऽपि सम्भूय भूपालस्याग्रतो जनाः॥ ११५
ताडनव्रणहेतुं च प्रवाहागमकारणम्।
सश्चिन्त्य बहुधाऽप्यासन् ज्ञातुं शक्ता न ते यदा॥ ११६
तदा तु खादभूद्वाणी सुन्दरेशमहेशितुः।
राजन् पाण्ड्यमहीपाल तव धर्मार्जितं धनम्॥ ११७
आत्तं वातपुरेशेन सर्वं तत् कोशमध्यगम्।
मद्भक्तेभ्यश्च मह्यं च धर्मार्थं स ददौ ततः॥ ११८
अनन्तपुण्यं ते लब्धं कोशं पूर्णं धनेन च।
तस्योपद्रवमज्ञानात् कारितं वीक्ष्य च त्वया॥ ११९

तच्छान्तये प्रवाहोऽद्य नद्यां संवर्धितो मया।
पिष्टाम्बायाश्च रक्षार्थं तव चापि विशेषतः ।। १२०
भृतकाकारमास्थाय पिष्टार्थं मृद्धृता मया।
वेत्रप्रहारोऽद्य मया क्षान्तस्तव न मे व्यथा।। १२१
पुरा यथाऽर्जुनधनुःप्रहारोऽभूत्सुखावहः ।
भूपते ते भविष्यन्ति सम्पदस्सकला ध्रुवम्।। १२२
वेदोक्तायुश्च ते भूयाच्चिरं रक्ष्यसि मेदिनीम्।
अश्वा अनन्ता भूयासुर्मदनुग्रहतः पुनः ।। १२३
श्रीमद्वातपुरेशश्च मामकं विद्धि मत्प्रियम्।
स्वच्छन्दवृत्तयेऽद्यैव मुञ्चैनं मम शासनात्।। १२४
मम पाण्ड्यमहीपाल भक्तेष्टकरणं व्रतम्।
एवं गगनसम्भूतामाकर्ण्य सकला गिरम्।। १२५
विस्मिताश्च भयाविष्टा राजानं प्रत्यपूजयन्।
भक्तप्रियस्य वागेषा श्रीहालास्यप्रभोरिति।। १२६
वदन्विस्मयसंयुक्तः पुळकाञ्चितविग्रहः ।
अतिभीतियुतो राजाऽप्यात्मानपराधिनम्।। १२७
मत्वा कम्पितसर्वाङ्गः सामन्तगणसंयुतः ।
सद्यो वातपुरेशस्य समीपं प्राप्य पार्थिवः ।। १२८
दण्डवत्प्रणनामाथ नेमुस्सर्वे जना अपि।
प्राञ्जलिः प्राह पाण्ड्यस्तं प्रेक्ष्य वातपुरेश्वरम्।। १२९
अपराधास्त्वनन्ता ये मयाऽज्ञानवशात्कृताः ।
क्षन्तव्यास्ते त्वया सर्वे मदनुग्रहहेतवे ।। १३०

यथा शिवस्तथा त्वं हि तद्भक्तोऽसि शिवप्रियः ।
इतः परं मया पूज्यः सदा त्वं श्रेयसे मम ।। १३१
मत्कार्यं पूर्ववत्कृत्वाऽ कृत्वा वा रक्ष रक्ष माम् ।
इति तद्वचनं श्रुत्वा श्रीमान् वातपुरेश्वरः ।। १३२
प्रत्यवोचत्प्रीतियुक्तः शङ्कराधीनमानसः ।
राजन् पाण्ड्यमहीपाल महीतलपुरन्दर ।। १३३
भवान् भवांश एवास्ति संशयो न हि विद्यते ।
यतस्त्वां विषयीकृत्य गगने शम्भुवागभूत् ।। १३४
सुतरां शिवभक्तस्य तव सर्वाश्च सम्पदः ।
दीर्घमायुश्च पुत्राश्च भूयासुः कुशलानि च ।। १३५
त्वामाश्रित्याखिला धर्मा वैदिकाश्शिवतुष्टये ।
अनुष्ठिता मया सम्यक् चित्तशुद्धिरभूत्ततः ।। १३६
चित्तशुद्ध्याऽभवद्भक्तिरीश्वरे नितरां दृढा ।
तन्नास्ति मम संसारवासनेशप्रसादतः ।। १३७
जीवन्मुक्तदशा प्राप्ता चैक्यरूपा चिदात्मिका ।
परिपूर्णः परशिवो हालास्येश्वर ईश्वरः ।। १३८
मेरुमन्दरकैलास काशीश्रीपर्वतादिषु ।
पुण्यक्षेत्रेषु सर्वेषु लिङ्गेषु प्रतिमास्वपि ।। १३९
आविश्य सन्निधत्तेऽदस्सत्यमित्याहुरागमाः ।
एक एव हि रुद्रोऽयं स्वस्रा चांबिकया सह ।। १४०
न द्वितीयाय तस्थे स ध्येयः प्राप्यो मुमुक्षुभिः ।
एवं वेदान्तवाक्यौघैः प्रतिपादित ईश्वरः ।। १४१

सुन्दरेश्वर एवेति विदुर्वेदान्तवेदिनः ।
वेदस्यार्थोपदेशं च सुन्दरेशो यदाऽकरोत् ॥ १४२
कण्वादिभ्यो महर्षिभ्यस्तदैवं प्राह तत्वतः ।
एकं ब्रह्माद्वितीयं च पूर्णमित्याह यत् श्रुतिः ॥ १४३
तन्मूललिङ्गमेवेदं श्रीहालास्येश्वराभिधम् ।
तस्मात्सान्निध्यकृत्त्वत्र वेदानामर्थ ईश्वरः ॥ १४४
सर्वव्यापी च सर्वज्ञस्सच्चिदानन्दविग्रहः ।
सर्वक्षेत्रप्रभुश्शम्भुर्मीनाक्षीपतिरव्ययः ॥ १४५
एवंरूपस्सुन्दरेशः सर्वप्रेरक ईश्वरः ।
श्रीमच्चिदम्बरक्षेत्रं चिदानन्दमयं निजम् ॥ १४६
गच्छ गच्छेति सहसा केन वा हेतुनाऽधुना ।
आज्ञापयति मां सत्यं मन्मनोमन्दिरस्थितः ॥ १४७
तस्मात्तदाज्ञया सद्यो गमिष्यामि चिदम्बरम् ।
न स्वाम्याज्ञा लङ्घनीया तद्भक्तेन त्वयाऽपि च ॥ १४८
मामतः प्रेषय क्षिप्रं गन्तुं तच्च चिदम्बरम् ।
इति तद्गिरमाकर्ण्य पाण्ड्यराडरिमर्दनः ॥ १४९
अनुज्ञां प्रददौ तस्मै गच्छ त्वमिति मन्त्रिणे ।
अथ श्रीवाचकगणैर्गायन् सुन्दरनायकम् ॥ १५०
प्रतस्थे प्रथितं क्षेत्रं श्रीमद्वातपुरेश्वरः ।
अनुगच्छन् क्रोशमात्रं पथि तेन निवारितः ॥ १५१
तं विसृज्य ययौ प्रेम्णा मधुरां पाण्ड्यभूपतिः ।
अथासाद्य महेशस्य महान्तं मण्डपं पुरः ॥ १५२

महीपो मन्त्रिभिस्सार्धं शम्भोः कारुण्यमद्भुतम्।
प्रशशंस मुदा भक्त्या श्री हालास्यप्रभोर्मुहुः ॥ १५३
हे मन्त्रिणस्संशृणुत भक्तरक्षाकरस्य तत्।
कारुण्यं करुणामूर्तेर्महेशस्य महाप्रभोः ॥ १५४
निन्दितं च कृतं तेन हिताय जगतां किल।
विषं व्याधस्य पिशितं शिशुमांसं च पिष्टकम्॥ १५५
प्रियं जातं कस्यचित्तु नित्यं पाषाणताडनम्।
धनुषा ताडनं वेत्रताडनं चाद्य मत्कृतम्॥ १५६
तस्मात्सर्वेश्वरे कार्या भक्तिरेव हितेप्सुना।
इति प्रशंसन् बहुशो मन्त्रिभिस्सह भूपतिः ॥ १५७
अन्तःपुरमगात् प्रीत्या स्मरन् चरितमीशितुः।
देवेषु सर्वेष्वप्येष एक एवाश्रितार्तिहा ॥ १५८
इति निश्चित्य पाण्डेयशशिशवमेव सदाऽऽश्रयन्।
श्रीहालास्येश्वरायाथ गोभूहेमाम्बरादिकाः ॥ १५९
उपदा विविधाः प्रादान्नवरत्नवरान्विताः।
इन्दूदयेऽब्ध्याप इव तस्यावर्द्धन्त सम्पदः ॥ १६०
मीनाक्षीशस्य कृपया सोऽरिमर्दनपाण्ड्यपः।
पुत्रं लब्ध्वा जगन्नाथं सर्वसद्गुणसंयुतम्॥ १६१
राज्यं चकार सुचिरं यथा सुन्दरपाण्ड्यपः।
स वातग्रामनाथोपि सह्ययोनितटोद्भवम्॥ १६२
पुण्यक्षेत्रमशेषञ्च दृष्ट्वा संसेव्य शङ्करम्।
तत्र तत्र स्वशिष्यैश्च प्राप श्रीमच्चिदम्बरम्॥ १६३

स्नात्वा च शिवगङ्गायां दृष्ट्वा साम्बं नटेश्वरम्।
श्रीमूलनाथलिङ्गञ्च लिङ्गानामुत्तमोत्तमम्॥ १६४
तस्मिन् तिल्लवने रम्ये क्रीडां कृत्वाऽनुगैस्सह।
मृगवृत्त्या सञ्चरन् स पर्णाशी न्यवसच्चिरम्॥ १६५
समाधिनिश्चलमनास्त्यक्त्वा च विषयादरम्।
निद्रां हित्वा निराहारश्शिवानन्दामृतं पिबन्॥ १६६
महायोगी मृगैस्सार्धं सञ्चचार सदा मुदा।
तदा बौद्धास्समायाता द्वीपान्तरनिवासिनः॥ १६७
सुसम्प्रदाय संयुक्ताश्शापानुग्रहकारिणः।
अनेकपुस्तकभरैश्शिष्यैः कर्मकरैस्सह॥ १६८
जेतुं च वैदिकांस्तत्र शिवे परमकारणे।
नास्तिक्यवादिनस्सर्वे कुतर्ककुशलास्सदा॥ १६९
पिञ्छसम्मार्जनकरा मुण्डिनः परवञ्चकाः।
जित्वाऽनेकस्थले वादैः स्वमतं स्थाप्य सर्वतः॥ १७०
चिदम्बरमथ प्रापुश्शिवक्षेत्रशिखामणिम्।
द्विजानां त्रिसहस्रं च भक्तान् शैवांश्च योगिनः॥ १७१
बौद्धा निरोधयामासुर्विवादाय परस्परम्।
ऊहापोहैरनेकैस्ते कृत्वा तर्कं शिवाश्रितैः॥ १७२
मोक्षदाता शिवो नास्ति सर्वं बुद्धमयं जगत्।
इति स्वशास्त्रैर्विजयं व्यधुस्सर्वत्र पापिनः॥ १७३
सर्वान् निर्जित्य शैवांस्ते पुनरूचुर्जयैषिणः।
वेदा निरर्थकास्सर्वे असाध्वर्थं वदन्ति हि॥ १७४

वृथा विश्वस्य वेदार्थमतथ्यं परमार्थतः ।
शिवे भस्मनि भक्ताश्च भवन्तो मोहमाश्रिताः ॥ १७५
न धार्यं भस्म मोक्षार्थं भोगार्थं चाक्षमेव वा ।
निस्सम्बन्धं त्रयं चापि शिवभस्माक्षकं द्विजाः ॥ १७६
वृक्षबीजं ह्यग्निजं च स जन्यस्स शिवोऽपि च ।
निस्सम्बन्धं त्रयं चेदं सोऽस्ति चेत्तं ब्रुवन्तु नः ॥ १७७
कस्सम्बन्धश्चेश्वरस्य भस्मनो वेदवादिनः ।
शिवेन विधृतं भस्म पवित्रं यदि होमजम् ॥ १७८
श्मशानभस्मकं चापि ह्यपवित्रं पवित्रकम् ।
शिवस्य वा भस्मनो वा महत्त्वं च पवित्रता ॥ १७९
निस्सन्देहं विनिश्चित्य वदन्तु वरमेतयोः ।
दिनानि सप्त दत्तानि भवद्भयो निश्चयाय वै ॥ १८०
तयोराधिक्यमेकस्य नोक्तं युष्माभिरत्र चेत् ।
करिष्यामो विहारं च कनकैः कल्पितां सभाम् ॥ १८१
तेषां वाक्यमिति श्रुत्वा शम्भुभक्ता बुधा मिथः ।
विचार्य चोत्तरं वक्तुमशक्ता इदमब्रुवन् ॥ १८२
अग्निरित्यादिभिर्वाक्यैरध्वरेशस्य चाध्वरे ।
समुत्पत्तिर्धारणं च भस्मनश्शिवशासनात् ॥ १८३
धर्तव्यं भोगमोक्षार्थं सर्वैस्तदिति विश्रुतम् ।
वेदागमपुराणादिवाक्यैर्विहितमेव च । १८४
तद्धार्यमन्यथा नृणां निरये पतनं ध्रुवम् ।
यूयन्तु पापिनस्सर्वे ध्रुवम् निरयगामिनः ॥ १८५

इत्युक्ता वैदिकैस्सर्वैस्तेऽप्यूचुः पापिनो वचः ।
न सम्मतास्ते सर्वेऽपि वेदा मिथ्याप्रलापिनः ॥ १८६
युक्त्या वदन्तु साङ्गत्यमित्युक्तास्सौगतैर्द्विजाः ।
दुःखितास्स्वगृहान् जग्मुरन्योन्यं विजयाय ते ॥ १८७
दिनषट्के गते पश्चात् त्रिसहस्रमुनीश्वराः ।
सभापतिं नमस्कृत्य चक्रुर्विज्ञापनं त्विदम् ॥ १८८
तेषां शिवोऽवदत् स्वप्ने स्वभक्तानां जयाय च ।
द्विजवर्यवपुर्धृत्वा भूतिरुद्राक्षभूषितः ॥ १८९
अस्मिन् तिल्लवने कश्चिन्मम भक्तो महीसुरः ।
वाग्विभूत्या द्रामिडया वरवाक् सोऽतिविश्रुतः ॥ १९०
वन्यैश्च प्राणिभिस्सार्धं चरति व्याघ्रपादवत् ।
युष्माकं कार्यसिद्धिस्स्यात्तेन सत्कविना ध्रुवम् ॥ १९१
वने गत्वा तमानीय प्रीणयित्वा च सान्त्वतः ।
तेनैव सौगतान् सर्वान् वेदविद्याविदूषकान् ॥ १९२
जयन्तु मद्गिरा यूयं ज्ञानविज्ञानसिन्धुना ।
स तु वातपुरेशाख्यस्ततो माणिक्यवाचकः ॥ १९३
एतदर्थं प्रेषितश्च सुन्दरेशेन शम्भुना ।
बोद्धानां विजयायात्र मधुरावाससादरः ॥ १९४
एवं माहेश्वरास्सर्वे दृष्ट्वा स्वप्नं सुमङ्गलम् ।
अन्योन्यं स्वप्नवृत्तान्तमूचुर्विस्मितमानसाः ॥ १९५
सम्भूय शम्भोरग्रे ते सन्तोषाधिक्यसंयुताः ।
शाम्भवैस्तैः परिजनैर्वाद्यानां सुस्वनैर्वने ॥ १९६

परितस्सञ्चरन्ति स्म मृगयन्तः शिवाश्रितम्।
तदा तु कुत्रचिद्दृष्टो मृगमध्ये महामुनिः ॥ १९७
क्षणाददृश्यतां प्राप वाद्यभीतमृगैस्सह।
पुनरप्यतियत्नेन विना वाद्यं विना जनैः ॥ १९८
द्वित्रा भक्ता वनं प्राप्य परितश्चेरुरुत्सुकाः।
तदाऽपि कुत्रचिद्दृष्टो मृगमध्ये महामुनिः ॥ १९९
आयाहि रक्ष रक्षेति प्रोचुर्गत्वा तदन्तिकम्।
अनुग्रहं कुरु कुरु स्वामिन्निति सुवादिनः ॥ २००
कृताञ्जलींश्च शीर्षेषु विलोक्य विनयानतान्।
अश्रद्धया परित्यज्य तान् योगी स गतो मृगैः ॥ २०१
पुनः कैश्चिज्जनैर्वेगात् गन्तुं शक्तैश्च शाम्भवैः।
कचित् कचित्स दृष्टस्सन् प्रार्थितोऽपि जवाद्ययौ ॥ २०२
तदा सम्भूय ते भक्ता दुःखितास्तस्थुरन्तरे।
खिन्नश्च तेऽथ सम्प्राप्ता नृत्तराजस्य सन्निधिम् ॥ २०३
ऋषयः प्रार्थयामासुस्त्रिसाहस्रा नटेश्वरम्।
पलायते मृगैस्साकमाहूतोऽपि ससादरम् ॥ २०४
बौद्धानां विजयायाद्य कर्तव्यं किं वद प्रभो।
तदाऽशरीरिणी वाणी गम्भीरा गगनादभूत् ॥ २०५
लास्यतत्परहालास्यनायकस्यानुकम्पया।
भो भो भाग्यवतां श्रेष्ठास्त्रिसहस्रमुनीश्वराः ॥ २०६
भक्ता भवन्तश्शृण्वन्तु मद्वाक्यं सावधानतः।
उपायो निरपायोऽस्ति तदाह्वाने त्वयत्नतः ॥ २०७

पुरा मया महातीर्थे गुरुणा कुन्दमूलके।
दिव्यदृष्ट्या वीक्षितस्य दिव्यमन्त्रोपदेशतः ॥ २०८
माणिक्यवाचक इति दीक्षानाम प्रकल्पितम्।
तेन कुर्वन्तु चाह्वानं सर्वे सर्वहिताय च ॥ २०९
आयास्यति नमन् सोऽथ स्मरन् द्राङ्निकटं हि वः।
इति श्रुत्वा शम्भुवाक्यं भक्तास्ते परया मुदा ॥ २१०
पुनर्ययुस्तिल्लवनं सोऽपि दृष्टोऽथ दूरतः।
हालास्येश्वरवाक्येन वयं प्राप्तास्तवान्तिकम् ॥ २११
माणिक्यवाचक एहीत्युच्चैः प्रोचुश्शिवाश्रिताः।
शैवसिद्धान्तसिद्ध्यर्थं बौद्धानां निग्रहाय च ॥ २१२
शिवाज्ञया त्वां सम्प्राप्ता वयमेहि कृपाभरात्।
वातग्रामेश्वरो दीक्षानामश्रवणमात्रतः ॥ २१३
माणिक्यवाचक इति एह्येह्यन्तिकमद्य नः।
गुरुमूर्त्या शिवेनाहमाहूतोऽनुग्रहाय यत् ॥ २१४
तस्याज्ञयैव तन्नाम लब्धवन्तश्शिवाश्रिताः।
एतदर्थं प्रेषितवान् जीवन्मुक्तिपुरात्स माम् ॥ २१५
कृतार्थोऽस्मि कृतार्थोऽस्मीत्युच्चरन् स मुहुर्मुहुः।
प्रणिपत्य प्रतिपदं शाम्भवान् प्रति चाययौ ॥ २१६
तेऽपि प्रीता नमस्कारैः परिपूज्य च तं मुनिम्।
वृत्तान्तमुक्त्वा बौद्धानां शासनञ्चेशितुस्ततः ॥ २१७
तमालिङ्ग्य प्रहर्षेण स्कन्धमारोप्य कस्यचित्।
गायन्तश्शिवनामानि नृत्यन्तस्तालनादतः ॥ २१८

यत्रातिष्ठन्त बौद्धास्ते क्षणात्तं देशमाययुः ।
तं योगिनं पुरस्कृत्य शिवभक्तान् समागतान् ।। २१९
आलोक्य बौद्धाः प्राहुस्तान् वहन्तोऽमुं स्वकन्धरे ।
आयाता यूयममुना निश्चितः किं स संशयः ।। २२०
इति तेषां वचश्श्रुत्वा गम्भीरध्वनिना तदा ।
सुनिश्चितस्स सन्देहो विजयोऽस्माकमेव हि ।। २२१
पराजयस्तु युष्माकमित्यूचुस्त्रिसहस्रिणः ।
क्रुद्धा बौद्धाः पुनः प्राहुस्सन्देहो निश्चितः कथम् ।। २२२
विविच्य शीघ्रमस्मभ्यं यूयं वदत मोहिताः ।
इत्युक्त्वा प्रोचुरेनश्च वातग्रामाधिपं रुषा ।। २२३
वद त्वया यथा ज्ञातं वरः को भवभस्मनोः ।
एवमुक्तवतां तेषामग्रे वातपुरेश्वरः ।। २२४
वेदवाक्यैरुत्तरञ्च सम्बन्धं प्राह तत्वतः ।
त्रियायुषं बृहत्साम आवो राजानमित्यपि ।। २२५
अग्निरित्यादिभिर्मन्त्रैर्विभूतिप्रतिपादकैः ।
ते प्राहुर्वेदवाक्यार्था असत्यास्सर्व एव हि ।। २२६
तर्कतो वद चास्माकं युक्तियुक्तनिदर्शकैः ।
इति तेषां वचश्श्रुत्वा बौद्धानां स तदग्रतः ।। २२७
शुष्कं गोमयमानाय्य वह्निना समयोजयत् ।
धारणार्थं तद्विभूतेस्तन्मन्त्रांश्च जपन् पुनः ।। २२८
स गोमयमयः पिण्डो दग्धो भस्ममयो बहिः ।
अन्तरग्निमयश्चासीत्तदेत्याह स तान्सुधीः ।। २२९

नाममात्रेण सर्वज्ञा यूयमज्ञा यथार्थतः।
अग्निरूपश्शिवश्शम्भुस्सर्वैरपि सुनिश्चितः॥ २३०
सामानाधिकरण्यं च सम्बन्धश्शिवभस्मनोः।
अस्मिन् गोमयपिण्डे तु दृष्टं प्रत्यक्षमेव वः॥ २३१
सम्बन्धो जन्यजनकभावोऽप्यस्तीशभस्मनोः।
तस्मादेवं पवित्रत्वं तज्जन्यत्वाच्च भस्मनः॥ २३२
तदज्ञात्वा वृथा जल्पं कुर्वतां मूढचेतसाम्।
युष्माकं पुरतोऽस्माभिर्दृष्टान्तोऽयं प्रदर्शितः॥ २३३
सोग्निश्शिवमयः प्रोक्तो भस्म तस्य विभूषणम्।
तद्धारणाद्भुक्तिमुक्ती सर्वेषाञ्च शिवाज्ञया॥ २३४
शिवेन विधृतं सर्वं भुक्तिमुक्तिप्रदायकम्।
रुद्राक्षस्य च गङ्गायाः पावित्र्यं शिवधारणात्॥ २३५
स्वभावतो यथा वह्निर्भस्मनाऽऽच्छादितस्तथा।
स्वभावेन शिवश्चापि भस्मनोद्धूलितः प्रभुः॥ २३६
इति वातपुरेशस्य श्रुत्वा वचनमद्भुतम्।
ते वक्तुं प्रतिवाक्यञ्च न शक्तास्तमभर्त्सयन्॥ २३७
न युक्तिमत्त्वदुक्तं हि जितोऽस्यस्माभिरित्यपि।
यूयमेव जिता मूढा उत्तरोक्त्यक्षमा इति॥ २३८
सुगताश्शिवभक्ताश्च मिथः कलहकारिणः।
आययुश्चोळभूपालमाराम्नगरवासिनम्॥ २३९
राज्ञः पुरश्च ते सर्वे शङ्कोत्तरमथाब्रुवन्।
कलहञ्च मिथः प्रोचुर्नृपे मध्यस्थवाचके॥ २४०

अथोभयेषां कौशल्यमीक्षितुश्च परीक्षितुम्।
एवमाह सा राजाऽदौ तद्वाक्यं स्यात् प्रमाणकम्।। २४१
निर्वर्तयेन्मदुक्तं यस्तयेत्याहुश्च सौगताः ।
स्वभावमूकां स्वां पुत्रीं राजाऽऽनाय्य सुरूपिणीम्।। २४२
अग्रे संस्थाप्याह वाचं योगीन्द्रं क्षपणानपि।
मत्पुत्र्या मूकतामाशु विनाश्य विधिकल्पिताम्।। २४३
वाक्पाटवं ये कुर्वन्ति तेषामेव जयोऽधुना।
इति तद्गिरमाकर्ण्य सर्वे शैवाश्च सौगताः ।। २४४
मिथोऽकुर्वन् प्रतिज्ञां ते भीमां भूपतिसन्निधौ।
ये त्वत्रापजयं प्राप्तास्ते सर्वे नृपपूरुषैः ।। २४५
शिलामयेक्षुयन्त्रैश्च पेषितव्यास्सुदुर्मदाः ।
इत्यन्योन्यं प्रतिज्ञाय प्रापुस्ते कन्यकान्तिकम्।। २४६
बौद्धास्तु प्रथमं मन्त्रैर्मन्त्रितैः कुण्डिकाम्बुभिः ।
तदाननं च प्रक्षाल्य मूकतापगमाय ते।। २४७
सिद्धैर्मन्त्रैर्यतन्ते स्म सुतरां ध्यानतत्पराः ।
न नश्यति स्म मूकत्वं तज्जयाशैव नश्यति।। २४८
तेऽतिम्लानमुखा दुःखादाहुर्वातपुरेश्वरम्।
त्वत्सामर्थ्यं वयं द्रष्टुं इच्छामो योगिपुंगव।। २४९
नाशय त्वं मूकतां तु कन्यकाया नृपस्य भो।
इत्युक्तस्तैर्नृपस्याग्रे नृपेणापि सुमानितः ।। २५०
माणिक्यवाचको योगी स्वचित्ते च चिदम्बरे।
श्रीहालास्ये चैक ईशो नृत्यतीति दृढं स्मरन्।। २५१

साम्बं सदा लास्यकरं ध्यायन् हालास्यनायकम्।
श्रीवाचकैर्नवैः स्तौति तन्मूकत्वनिवृत्तये ।। २५२
स्तुत्वा विंशतिसंख्याकैर्द्विपदाद्विपदं पुनः ।
अगायत्स स्वयं तां च गायस्वेत्यन्वशान्मुनिः ।। २५३
विहाय साऽथ मूकत्वं कन्या वाक्पाटवान्विता ।
अगायत्सुतरां तोषं कुर्वाणा भूपतेर्भृशम् ।। २५४
मूकत्वमगमन्नाशं वाचि वाणी स्म नृत्यति ।
मनोऽपि निर्मलमभूद्राजपुत्र्याश्शिवाज्ञया ।। २५५
तदाऽपठद्राजपुत्री श्रीवाचकगणान् बहून्।
श्रीमद्वातपुरेशाख्यकविना प्रेरिता सती ।। २५६
एतदद्भुतमालोक्य राजा सन्तोषसंयुतः ।
अचोदयत् किङ्करान्स्वान् हन्तुं बौद्धगणान् जितान् ।। २५७
चोळदेशोद्भवास्सर्वे जनाश्चोलनृपान्विताः ।
विशेषतश्शम्भुभक्ता अभवन् तेन योगिना ।। २५८
शिवाश्रितानि कार्याणि वेदोक्तानि बहूनि च ।
द्रामिडानि सुगेयानि कृत्वा शम्भोरनुग्रहात् ।। २५९
सशरीरं च सायुज्यं प्राप माणिक्यवाचकः।
अरिमर्दनपाण्ड्योऽपि हालास्येशप्रसादतः ।। २६०
पुत्रे निक्षिप्य भूभारं जगन्नाथे जगत्प्रिये ।
प्रापापवर्गमन्येषां योगिनामपि दुर्लभम् ।। २६१
जगन्नाथाख्यपाण्ड्योऽपि जनानां च हितं सदा ।
कुर्वन् भक्तिं सुन्दरेशे राजराजसमोऽभवत् ।। २६२

एकषष्टितमा लीला प्रोक्ता हालास्यवासिनः ।
मुहुर्मुहुश्च श्रोतव्या शिवभक्तिप्रदायिनी ।। २६३
भोगमोक्षेच्छुभिस्सर्वैर्दुरितानां च मुक्तये ।
पिष्टमृद्धरणं शम्भोः क्षपणानां च निग्रहम् ।। २६४
कृतं माणिक्यवाचेन शृण्वतां पठतां नृणाम् ।
ध्रुवं स्यान्मेदिनीलाभः श्रेयःप्राप्तिश्च शाश्वती ।। २६५

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - पिष्टमृद्धरण-बौद्धहननं नाम*
*सप्तषष्टितमोध्यायः*

★ ★ ★

## அத்தியாயம் - 67

## 61. பிட்டிற்கு மண் சுமந்தது, பௌத்தர்களை வென்றது

*வைகையின் வெள்ளத்தால் மதுரை மக்கள் மிகவும் துயருற்றனர். ஆற்றின் கரை பல இடங்களில் உடைந்தது. கரையைச் சீர்ப்படுத்த உடன் மண் சுமப்பவர் கிடைக்கவில்லை. ஒவ்வொரு வீட்டிற்கும் அறுபதடிக்கு மண் போட்டுக் கரையைச்சீர்படுத்தும்படி நகர மக்களுக்கு அரசன் உத்தரவிட்டான். பெரும் பணக்காரருக்கு இரண்டு அல்லது மூன்று பங்கு வேலை தரப்பட்டது. அவரவர் தம் பணியாளரைக் கொண்டு மண் சுமந்து கரையைக் கட்டினர். சிவபக்தையான ஒரு பிட்டுசுட்டு விற்கும் முதியவளுக்கு முப்பதடி அளவில் மண் நிரப்பப் பணியாள் கிட்டவில்லை. அவளுக்கு மகனோ உறவினரோ இல்லை. பிட்டு விற்றதில் அதிகலாபம் கிட்டினால் ஈசனது பணியில் பயன்படுத்தும் அவளை அதிகாரிகள் பணியை முடிக்க நிர்பந்தித்தனர். வேறு கதியின்றி ஈசனிடம் முறையிட்டாள். ஈசன் தன் கோடரியை*

மண் வெட்டியாகவும் கபாலத்தைக் கூடையாகவும் மாற்றிப் பணியாளாக பிட்டுக்கு மண் சுமப்பவராக அந்தப் பெண்மணியை அணுகினூர். பயறும் சர்க்கரையும் தேங்காயும் சேர்த்துச் செய்த சூடான பிட்டு கூலியானது. பிட்டைத் தின்றுவிட்டு கூடையையும் மண்வெட்டியையும் சுமந்து ஆடிப் பாடிப் பொழுதைக் கழித்த பணியாள் ஒரு பிடி மண் கூட உடைப்பில் போடவில்லை. அதிகாரிகள் அதைப் பற்றித் தட்டிக் கேட்ட போது தன்னை எவரும் அதட்டி வேலை வாங்க முடியாதெனத் திமிருடன் கூறினுன். பசி மிகுந்துள்ளதெனக் கூறி உதிர்ந்த பிட்டைத்தரும்படி பாட்டியைக் கெஞ்சிக் கூத்தாடி பிட்டொன்றும் மீதமாகாதபடி உண்டான். உடைப்பு நிரப்பப்படாததால் வெள்ளத்தைத் தடுக்க முடியவில்லை. அக்கம் பக்கத்திலுள்ள பணியாட்கள் இதனை அதிகாரிகளிடம் கூறினர். அதிகாரிகள் வரும்போது தானே எல்லா உடைப்புகளுக்கும் மண் போட்டு நிரப்புவதாகக் கூறிப் பொழுதைக் கழித்தான். ''எனக்கு உற்றூர் உறவினர் எவருமில்லை. வடதேசத்தில் ஒரு மிகப் பணக்காரனுன நண்பன் உண்டு. எல்லோருக்கும் உதவுகிற நான் பிட்டுப் பாட்டியிடம் பரிவால் இந்தப் பணியைச் செய்கிறேன் என்பான். மற்றவருடன் அரட்டையடித்து விட்டு மரத்தடியில் படுத்துத் தூங்குவான். அரசன் அன்று உடைப்பைப் பார்வையிட வரக் கூடும் என்று எதிர் பார்ப்பிருந்ததால் பணிமேலாளர் படுத்திருக்கிறவனை எழுப்பி வேலை செய்யத் தூண்டினர். பணியில் குறையிருந்தால் தண்டனை ஏற்க நேரும் என மிரட்டினர். ''பாண்டியன் எனக்கு அரசனல்ல. அவன் எனது பணியாள். அவனிடம் நேரில் இதனைச் சொல்வீர். அவன் என் பெருமை அறிவான் என உதாசீனமாகப் பேசினுன். அரசன் இதனை அறிந்து ஆற்றங்கரையைப் பார்வையிட வந்தான். தலையில் மண்ணைச் சுமந்து, மண்வெட்டியைத் தோளில் செருகி மெள்ள மெள்ள அசைந்தாடி வருகிற இவனைக் கண்டதும் இவனுக்கு அடைப்பை அடைப்பதில் விருப்பமில்லை என்பதை உணர்ந்து அரசன் கையிலிருந்த தங்கப் பிரம்பால்

முதுகில் அடித்தான். அடிவாங்கிய பணியாள் உடன் மறைந்துவிட்டான். உடன் பிட்டு விற்கும் பெண் மணியிடம் சென்று உன் பணியாள்எங்கே என மேலாளர் மிரட்டினார். அவள் ஈசனிடம் தன் நிலையை முறையிட ஈசன் விருஷபமேறி அவளுக்கு முன்நின்று அருள் புரிந்து தன் பதத்தை அளித்தார். பணியாளைப் பாண்டியன் முதுகில் அடித்ததும் அந்த வலிய அடி அவன் முதுகிலும் விழுந்தது. அங்கிருந்த மக்கள் அனைவரும் தம் தம் முதுகில் அடிவிழுந்ததை உணர்ந்தனர். புட்டு விற்கிற பெண்மணி நிரப்ப வேண்டிய பள்ளமும் மண் நிரம்பி கரை அடைபட்டிருந்தது. நீர் பெருக்கின் வேகம் குறைந்து ஆறு கரைக் கடங்கி ஓடியது. திகைப்பும் வியப்பும் மிகுந்த சூழ் நிலையில் அசரீரி நிலையை உணர்த்தியது. 'வாதவூரரிடம் குதிரை வாங்கக் கொடுத்த பணம் அரசின் கோசத்தில் உள்ளது. அது எனக்காக அறப் பணிகளுக்காக வாதவூரரால் கொடுக்கப்பட்டது. வாதவூரரிடம் அரசன் தவறாக நடந்ததைக் கண்டிக்கவே வெள்ளப்பெருக்கு என்னால் உண்டாக்கப்பட்டது. பிட்டு விற்ற பெண்மணியைக் காப்பாற்றப் பணியாளாக நான் தான் வந்தேன். என் ஸங்கல்பப்படி வெள்ளம் அடங்கிவிட்டது. பெருத்த ஐச்வர்யமும் குதிரைப் படையும் நாட்டின் செழிப்பும் பெற்றுப் பெரு வாழ்வு வாழ்வாய். வாதவூரர் என் விருப்பப்படி பணியாற்றியதால் அவரை உடன் விடுவிப்பாய்''. அசரீரியைக் கேட்ட அரசனும் மக்களும் அடியார்களிடம் ஈசன் கொண்டுள்ள அன்பை உணர்ந்தனர். வாதவூரர் தன்னை வணங்கிய அரசனிடம் கூறினார். ''நீர் சிறந்த சிவபக்தர். எனக்கு உலக வாழ்க்கையில் ஈடுபாடு குறைந்து விட்டது. பரம்பொருள் ஒன்றே. அதுவே மூல லிங்கமாகக் காட்சி தந்து ஸுந்தரேச்வரராக அருள் புரிகிறது. எங்கும்நீக்க மறநிறைந்துள்ள ஈசனைக் காணச் சிதம்பரம் வரும்படி இறைவன் அழைக்கிறார். எனக்கு அனுமதி தாரும்'' என வேண்டினார்.அரசன் நல்லன்புடன் அவரைத் தொடர்ந்து சென்று வழி அனுப்பினான். சிதம்பரம் வந்த வாதவூரர் ஈசனைத் தரிசித்து தில்லைக் காட்டில் மற்ற மிருகங்களுடன் வாழ்ந்து வந்தார்.

பௌத்தர்கள் நாஸ்திகம் பேசிக் கொண்டு இறைவனடியார்களை வாதுக்கழைத்து வாதத்தால் வேதம் முதலியவற்றின் பிரமாணத்தை மறுத்து எதிர்ப்பவர்களை வென்று பௌத்த மதத்தை ஸ்தாபித்து வந்தனர். சிதம்பரத்தில் தில்லை மூவாயிரத்தாரை வெல்ல வந்தனர். தில்லை அந்தணர்கள் வேதாகமங்களைப் பிரமாணமாகக் காட்டி சிவனே முக்தி தருபவர் எனக் கூறினர். வேதங்கள் பொருளற்றவை. தவருன வழிகாட்டுபவை. அதனை நம்பி சிவனிடத்திலும் விபூதியிலும் அசட்டு நம்பிக்கை கொண்டு வாழ்க்கையை வீணடிக்காதீர். மரத்தின் விதை ருத்ராக்ஷம். எரிந்ததன் சாம்பல் விபூதி, சிவனும் ஆங்காங்கு தோன்றுபவர். நிலைத்தவரல்ல. சிவனுக்கும் விபூதிக்கும் எந்தத் தொடர்புமில்லை. சிவனது பெருமையையோ சாம்பலின் பெருமையையோ இரண்டில் எது சிறந்ததென்றோ தக்க யுக்திகளுடன் நிரூபிக்கஒரு வாரம் அவகாசம் தருகிறோம். நிரூபிக்காவிடில் கனக ஸபை புத்த விஹாரமாகிவிடும் என்று கூறிச் சென்றனர். வாதத்திற்கான ப்ரமாண யுக்திகளைத் தேடுவதில் ஆறு நாட்கள் சென்றன. தில்லை வாழ் அந்தணர்கள் ஈசனைச் சரணடைந்தனர். ''தில்லைக் காடுகளில் அலைகிற வாதவூரரை அழைத்து வாரீர். அவர் என்னைப் பற்றித் திருவாசகம் என்ற பாசுரங்களைப் பாடியவர். திருவாசகத்தின் இனிமை உணர்ந்த நான், அவருக்கு மாணிக்க வாசகர் என்ற தீக்ஷா நாமம் தந்தேன். வெளிமனிதர் எவரும் அறியாத அந்த தீக்ஷாநாமத்தால்அவரை அழைப்பீர். அவர் உடன் வந்து பௌத்தரை வாதில் வெல்வார் எனக் கூறினுர்.

விபூதி பெரிதா சிவன் பெரியவரா என்று வாதம் தொடங்கியது. தக்க யுக்திகளுடன் வேதப் ப்ரமாணங்களுடன் விபூதிக்கும் சிவனுக்கும் பேதமின்மையையும் தில்லை அந்தணர்கள் விளக்கினர். கோமயத்தின் உருண்டை மீது வைத்த அக்கினியால் கோமயம் சாம்பலாகியது. அக்னியே சிவன். சிவஸம்பந்தம் பெற்றதனைத்தும் சிவாம்சம் பெறுகின்றன. ருத்திராக்ஷமும் கங்கையும் சிவன் அவற்றைத் தரிப்பதால் பெருமை பெற்றன. நெருப்பு சாம்பல்

மூடியிருப்பது போல், சிவன் விபூதி பூசியுள்ளார் என வாதிட்டனர். பௌத்தர் பிடிவாதத்தால் இதனை மறுத்தனர். இரு பிரிவினரும் அரசரிடம் வந்தனர். அரசனுக்கு ஒரு ஊமைப் பெண். அவளைப் பேச வைத்தவரே வாதத்தில் வெற்றி கொண்டவராவார் என்றான் அரசன். வாதிடுபவர்களோ தோற்றவர் கரும்பாலையிலிட்டு அரைக்கப் படுவர் என பந்தயம் வகுத்துக் கொண்டனர். முதலில் பௌத்தர் தம் மந்திர பலத்தால் பேசவைக்க முயன்று தோற்றனர். மாணிக்க வாசகர் இருபது திருவாசகப் பாசுரங்களைப் பாடி விட்டு இதனை நீயும் பாடுவாய் என ஊமைப் பெண்ணை ஊக்குவித்தார். ஊமைப் பெண் நன்கு அதனைப் பாடினாள். நியமப்படி பௌத்தர்கள் கரும்பாலையிலிடப்பட்டனர். மாணிக்க வாசகர் தன் திருவாசகத்தால் மக்களைச் சிவபக்தர்களாக செய்தார். ஈசனைப் பாடிக் கொண்டே ஈசனிடம் லயமடைந்தார். அரிமர்தன பாண்டியனும் தன் புதல்வனான ஜகன்னாதனிடம் அரசை ஒப்புவித்து சிவனடி சேர்ந்தார். இது அறுபத்தோராவது லீலை.

★ ★ ★

## अष्टषष्टितमोऽध्यायः

## ६२. कुब्जपाण्ड्यस्य कुब्जतापनयनम्।

यया तु कुब्जपाण्ड्यस्य ज्वरं तत्कुब्जतामपि।
शङ्करः शमयामास सा लीलाऽथ मयोच्यते।। १
जगन्नाथश्चिरं भूमिं परिपाल्य दिवं ययौ।
संसारसागरान्मुक्तः सुन्दरेशप्रसादतः।। २
वीरबाहुश्च तत्पुत्रो वीर्येण महतीं महीम्।
पालयामास सुचिरम् पितुरप्यधिकः श्रिया।। ३
अथ विक्रमबाहुश्च चिरं पृथ्वीमपालयत्।
ततश्च पालिता पृथ्वी सा पराक्रमबाहुना।। ४

ततः सुरभिपाण्ड्योऽपि राज्यं कृत्वा दिवं गतः ।
ततः कुङ्कुमपाण्ड्यस्तु पूज्य कुङ्कुमपङ्कतः ॥ ५
सुन्दरेशं प्रतिदिनं चिरं राज्यमपालयत् ।
ततः कर्पूरपाण्ड्यस्तु पूज्य कर्पूरसुन्दरम् ॥ ६
सदा कर्पूरपङ्केन परं कैवल्यमाप्तवान् ।
ततः कारुण्यपाण्ड्यस्तु कारुण्यातिशयान्वितः ॥ ७
कार्तवीर्यार्जुन इव चिरं पृथ्वीमपालयत् ।
पुरुषोत्तमपाण्ड्योऽपि यथा स पुरुषोत्तमः ॥ ८
रक्षां करोति जगतां तथाऽरक्षद्वसुन्धराम् ।
शत्रुशासनपाण्ड्योऽपि चेरचोलौ विजित्य च ॥ ९
देशत्रयाधिपो भूत्वा भाति पाण्ड्यशिरोमणिः ।
तदात्मजः कुब्जपाण्ड्यः कुङ्कुमारुणविग्रहः ॥ १०
मधुरानगरीनाथो बभूवातिबलान्वितः ।
वसन् काञ्चीपुरे चोलस्स्वां कन्यां वनितेश्वरीम् ॥ ११
प्रदाय तस्मै पाण्ड्याय स्वराज्यं प्राप्तवान् तदा ।
चेरोऽपि कुब्जपाण्ड्याय बहुधान्यधनानि च ॥ १२
समर्प्य राज्यं सम्प्राप तन्महीपप्रसादतः ।
पाण्ड्योऽपि वनितेश्वर्या चोळस्य सुतया तया ॥ १३
नारायण इवाभाति क्षीरसागरकन्यया ।
आयातो वनितेश्वर्या मन्त्री चोलनृपस्य यः ॥ १४
चोलेन स प्रदत्तश्च पाण्ड्याय परितुष्टये ।
कुलबन्धन इत्याख्या विश्रुता तस्य मन्त्रिणः ॥ १५

स्वस्यापि मन्त्रिणं कृत्वा पाण्ड्यस्तं कुलबन्धनम्।
सर्वाणि राजकार्याणि कारयामास तेन च ।। १६
यथा तु कुब्जता तस्य जन्मान्तरकृतांहसा।
तथा क्षपणता चासीद्वैदिकैरतिनिन्दिता ।। १७
तस्य क्षपणसिद्धान्तदीक्षितस्य महीपतेः।
आज्ञया भस्म रुद्राक्षं त्यक्त्वा राज्ञी च मन्त्रिराट्।। १८
त्रिपुण्ड्रं परमम्भोभिः शम्भुभक्त्या च तावुभौ।
अन्तर्यागविधानेनाकुरुताश्च शिवार्चनम्।। १९
विना सुन्दरलिङ्गस्य दर्शनं नावयोर्भवेत्।
प्राणधारणमित्युक्त्वा राज्ञा चानुमतौ तथा।। २०
नित्यं तद्दर्शनं कृत्वा वसतस्तावुभावपि।
वेदबाह्यश्च तं भूपं केनोपायेन वैदिकम्।। २१
कुर्व इत्यनुवेलं तावभूतां चिन्तयान्वितौ।
कुब्जपाण्ड्याज्ञया तौ च पुरग्रामनिवासिनः ।। २२
जनाश्च भस्म रुद्राक्षं त्यक्त्वा च शिवपूजनम्।
राजानुमतमाचारं चक्रुरन्तश्शुचान्विताः ।। २३
राजदोषात् प्रणष्टा भूः पर्जन्योऽपि न वर्षति।
दुर्जनास्सुखिनोऽभूवन्साधवो दुःखिनोऽभवन्।।
एवं काले गते देवाच्छिवानन्दमहामुनिः।
श्रीहालास्यप्रभुं नन्तुमाययौ श्रीचिदम्बरात्।। २५
कुलबन्धनराज्ञीभ्यां दृष्टस्सन् शङ्करालये।
पृष्टश्च स मुनिः प्राह चोलदेशोद्भवाद्भुतम्।। २६

श्रीमद्ब्रह्मपुरे पुण्ये ब्रह्मणस्तपसस्स्थले।
शिवपादाब्जहृदय इति कश्चिदभूद्द्विजः ।। २७
पुत्रतामगमत्तस्य शरजन्मा शिवाज्ञया।
अशिवायासज्जनानां सज्जनानां शिवाय च ।। २८
तस्मै ददौ सा स्तन्यञ्च पार्वती करुणावती।
तत्स्तन्यपानमात्रेण कवीनामग्रणीरभूत् ।। २९
त्रिसंवत्सरदेशीयो ज्ञानविज्ञानसागरः ।
ज्ञानसम्बन्ध इत्याख्यां स च धत्ते यथार्थतः ।। ३०
क्षेत्राणां वीक्षणे शम्भोर्मनस्तस्याभवच्छुभा।
जनकस्कन्धमारुह्य प्राप्य शम्भोः स्थलानि सः ।। ३१
श्रीगेयैर्द्राविडैश्शम्भुं स्तुत्वा भक्त्याऽनवद्यया।
छत्रं चामरयुग्मं च मुक्ताफलविचित्रितम् ।। ३२
चतुरन्तं महायानं लब्ध्वा शम्भोरनुग्रहात्।
तत्रत्यान् वेदबाह्यांश्च शिक्षयित्वा दुरात्मनः ।। ३३
शैवसिद्धान्तिनां सौख्यमकरोच्छिशुरप्यसौ।
अत्रत्यानपनेतुञ्च क्षपणान्वेददूषकान् ।। ३४
आगमिष्यति सोऽत्रापि हालास्येशञ्च सेवितुम्।
इति तद्वाक्सुधां पीत्वा श्रवणैः पात्रतां गतैः ।। ३५
महिषीमन्त्रिणौ तौ तु महानन्दमवापतुः ।
ज्ञानपूर्ण ज्ञानमूर्ते ज्ञानविज्ञानशेवधे ।। ३६
ज्ञानसम्बन्ध भगवन् श्रीमद्वैदिकवारण।
सर्वज्ञ गुहरूपाद्य लोकानुग्रहकारक ।। ३७

भक्तानां रक्षणार्थाय शिक्षितुं क्षपणानपि।
सुन्दरेशं प्रणन्तुश्च समायातु भवानिह।। ३८
शरणं त्वां गतावावां राज्ञी च कुलबन्धनः।
विलिख्य पत्रिकामेवं महिषीमन्त्रिणावुभौ।। ३९
प्रेषयामासतुः शीघ्रं प्रति वैदिककुञ्जरम्।
सोऽपि विज्ञानवान्योगी महावैदिकवारणः।। ४०
विज्ञायैवंविधोदन्तं पत्रिकागमनात्पुरा।
स्थापितुं वेदमार्गश्च तदन्यांश्च निरासितुम्।। ४१
हालास्येशं च मीनाक्षीं सेवितुं भक्तिसंयुतः।
विचक्षणत्वादकरोच्चिन्तामेवंविधां तदा।। ४२
शिवभक्त्याऽतुलश्चोलस्तथा तद्देशजा जनाः।
पाण्ड्यो नग्नाटसिद्धान्ते नितरां दृढभक्तिमान्।। ४३
तस्मात्तद्देशजास्सर्वे तत्समा अभवन् जनाः।
तं भूपं वैदिकं कर्तुं गन्तव्यं त्वरितं मया।। ४४
इति चिन्तासमायुक्ते तस्मिन्वैदिकवारणे।
सा पत्रिकाऽप्याययौ तां वाचयित्वा तुतोष सः।। ४५
सद्यो निर्गन्तुमुद्युक्ते तस्मिन्वैदिकवारणे।
अरम्यं तिथिवाराद्यमद्य वैदिकवारण।। ४६
तिथिश्च नवमी चाद्य वारस्तु रविवासरः।
वञ्चकाः क्षपणाश्चापि बहुसाहस्रसङ्ख्यकाः।। ४७
त्वं तु बालो बाल एव विद्याज्ञानादिभिस्तथा।
इत्याप्ताः कथयामासुः पितृमुख्याश्च केचन।। ४८

सोऽपि तद्वचनं श्रुत्वा जानन् क्षपणवञ्चनाम्।
बान्धवान् तानित्युवाच शिवं ध्यायन् सदुत्तरम्।। ४९
सुन्दरेश्वरसेवार्थं प्रस्थितस्य हि बान्धवाः।
सर्वं मे तिथिवाराद्यं शुभमेव भविष्यति ।। ५०
इत्युक्तवन्तं तं बालमबालञ्च स्वभावतः।
न गन्तव्यं त्वयाऽद्येति न्यरुन्धन् बान्धवा भृशम्।। ५१
तथाऽपि सुन्दरेशस्य महताऽऽज्ञाबलेन तु।
प्रेरितो वायुना तूल इव सोऽभूत्समुत्थितः ।। ५२
प्रणन्तुं सुन्दरेशानं प्रयातस्य ममाद्य हि।
सर्वञ्च तिथिवाराद्यमनुकूलं भवेद्ध्रुवम्।। ५३
आम्नायबाह्याः क्षपणा हालास्येशप्रसादतः।
पराजिता भविष्यन्ति पक्षीशात् पन्नगा इव।। ५४
इत्युक्त्वा दश गेयानि श्रीमन्ति प्रोच्य भक्तितः।
निर्ययौ ज्ञानसम्बन्धो निग्रहानुग्रहक्षमः ।। ५५
शिष्यैष्षोडशसाहस्रैर्भक्तिरत्नमहार्णवैः।
प्रशंसद्भिः प्रशस्तानि शम्भुनामानि सन्ततम्।। ५६
भस्मपाण्डरगात्रैस्तैः परितः सेवितः सुधीः।
आरुह्य चतुरन्ताख्यं यानवर्यञ्च मौक्तिकम्।। ५७
छत्रेण मुक्ताचित्रेण चामराभ्यां च वीजितः।
मुक्ताफलादिचित्रैश्च भूषणैः समलङ्कृतः ।। ५८
क्षीरसागरसम्भूतचन्द्रमा इव भूगतः।
भूलोकशिवलोकाख्यामाययौ मधुरापुरीम्।। ५९

वैदिकानुग्रहार्थश्च नग्नानां निग्रहाय च।
सर्वज्ञोऽयं ब्रह्मपुरादाययौ क्षपणान्तकः ।। ६०
श्री ज्ञानसम्बन्धनामा सुब्रह्मण्यांशसम्भवः ।
दुष्टानां निग्रहार्थाय शिष्टानां रक्षणाय च ।। ६१
आविर्भूतः कुमारोऽयमायातो गुहविग्रहः ।
चिह्नकाहलवाद्यानि स्वर्णराजतकानि च ।। ६२
पुरतो घोषयामासुरित्थं तत्कुशला जनाः ।
एवंभूतो वाद्यघोषः सर्वदिक्षु विभृम्भितः ।। ६३
कोऽयमेवंविधेनैव वाद्यघोषेण चागतः ।
इति सम्भ्रान्तचित्तास्ते बौद्धाः क्षपणसंज्ञकाः ।। ६४
स्वदूतान् प्रेषयामासुर्विज्ञातव्य इति द्रुतम्।
ते तमभ्येत्य वृत्तान्तं विज्ञाय च तदीयकम्।। ६५
आगत्य तानार्हतांश्च ज्ञातार्थान् सहसा व्यधुः ।
ज्ञानपूर्णोऽपि भगवान् ज्ञानविज्ञानवित्तमः ।। ६६
दूरे विमानं दृष्ट्वा च हालास्येशस्य गोपुरम्।
नत्वा स्तुत्वा पुनर्गेयैः प्राप्य वेगवतीं नदीम्।। ६७
तत्र स्नात्वा च सन्तर्प्य पितॄन् देवानृषीनपि।
सप्तसागरतीर्थे च स्नात्वा देवान् प्रतर्प्य च ।। ६८
ज्ञानतीर्थं समासाद्य कर्तव्यं तत्र कर्म यत्।
विधाय विधिना पश्चाद्विघ्नेशं सम्प्रणम्य च ।। ६९
षडाननं च नत्वाऽथ श्रीमीनाक्षीं प्रणम्य च।
स्तुत्वा स्तोत्रैस्सुगेयैश्च प्रादक्षिण्यक्रमेण च ।। ७०

सुन्दरेशालयं प्राप्य सर्वमङ्गलदायकम्।
गणनाथैर्गजैः सिंहैर्विधृतं दिग्गजैरपि ।। ७१
दृष्ट्वा विमानमाश्चर्यं देवेन्द्रेण समर्पितम्।
अन्तर्धाम प्रविश्याथ द्वारपालान् प्रणम्य च ।। ७२
तत्र हालाहलधरं हालास्याधिपतिं शिवम्।
लिङ्गमूर्तिधरं चादौ सच्चिदानन्दरूपिणम् ।। ७३
चिदानन्दामृतमयं विश्वलिङ्गं विमुक्तिदम्।
विश्वालयं दयासिन्धुं पञ्चाशद्वर्णरूपिणम् ।। ७४
आलोक्यानन्दविवशो निश्चलाङ्गः स साञ्जलिः ।
अनुभूय चिदानन्दमवाङ्मनसगोचरम् ।। ७५
आनन्दबाष्पपूर्णाक्षः पुलकाङ्ककलेबरः ।
पुरुहूतविमानस्थं पुरातनतरं शिवम् ।। ७६
अस्तौषीत् गेयवर्यैश्चादृष्टपूर्वं मनोहरम्।
तल्लिङ्गमध्ये दृष्ट्वाऽम्बासहितं परमेश्वरम् ।। ७७
ध्यात्वाऽर्चयित्वा विधिवदनुज्ञातो विनिर्ययौ।
कुलबन्धनराज्ञ्यौ च नत्वा सम्पूज्य तं तदा ।। ७८
प्रपन्नौ शरणं स्वामिन् भवच्चरणपङ्कजम्।
आवां मत्वा शिष्यभूतौ रक्ष रक्षेति चोचतुः ।। ७९
अनुगृह्य स तौ राज्ञीमन्त्रिणौ चाभयं ददौ।
वागीश इति कश्चिद्वै शिवयोगी महातपाः ।। ८०
भूतिरुद्राक्षधारी सन् शिवलिङ्गार्चकोऽनिशम्।
मधुरायां मठं कृत्वा तिष्ठति स्वेन तेजसा ।। ८१

वागीशेन च ताभ्याश्च प्रार्थितो भोजनाय सः ।
प्रययौ तन्मठं साकं सर्वैश्शिष्यैः प्रतापवान् ।। ८२
कुलबन्धनराज्ञीभ्यामुपहारैरनेकशः ।
तन्मठः पूरितः क्षीरदध्याज्यसुफलादिभिः ।। ८३
सर्वे सम्पूजितास्तेन शिष्याष्षड्रसभोजनैः ।
श्रीपूर्वज्ञानसम्बन्धनामायं शिवमर्चयन् ।। ८४
नितरां पूजितस्तेन भुक्त्वाऽशेत शिवं स्मरन् ।
नगर्या नातिदूरस्थपर्वतेषु निवासिनः ।। ८५
नग्नास्सर्वे च सम्भूय होमं कृत्वाऽभिचारिकम् ।
हव्यकव्यैस्तोषयित्वा वह्निन्तु विधिवत्पुनः ।। ८६
तं वह्निं प्रेषयामासुर्दग्धुं वैदिकवारणम् ।
तेनाग्निना सहायाता नग्नशिष्याश्च केचन ।। ८७
सोऽग्निश्च तन्मठं प्राप्य वीर्यहीनोऽभवत्तदा ।
दग्धुं किञ्चिन्न शक्तश्च नग्नैश्च परितः स्थितैः ।। ८८
संप्रेरितोऽपि बहुधा सुन्दरेशस्य चाज्ञया ।
नग्नास्संगृह्य तं वह्निमष्टदिक्षु मठे पुनः ।। ८९
संयोज्य वीजयित्वा च दाहयन्ति प्रयासतः ।
तन्नाज्ञासीद्द्ज्ञानपूर्णश्श्रान्त्या निद्रावशेन च ।। ९०
शिष्याः षोडशसाहस्रा अपि नग्नविचेष्टितम् ।
तद्ज्ञात्वा करुणासिन्धुः कदम्बवननायकः ।। ९१
निर्वीर्यमकरोदग्निं मठे किञ्चिन्न दह्यते ।
मठोपरि स्थितो वह्निः प्रदीप इव भासते ।। ९२

दृष्ट्वा शिष्याः पुनर्वह्निं मठस्योपरि दीपितम्।
आचख्युः स्वामिने ज्ञानसम्बन्धाय त्वरान्विताः ।। ९३
शिष्यैर्बोधितवृत्तान्तः समुत्थाय शिवं स्मरन्।
ज्ञानपूर्णस्स भगवान् गेयैस्तुष्टाव शङ्करम्।। ९४
साम्बस्य सुन्दरेशस्य शासनादेष पावकः ।
उपैतु कुब्जपाण्ड्यं तु नग्नसिद्धान्तिनं शनैः ।। ९५
ज्वररूपेण तापाग्निपीडितोऽस्तु स वै द्रुतम्।
इति गेयं जगौ सोऽग्निः प्राप पाण्ड्यकलेबरम्।। ९६
तेनैव ज्वररूपेण पीडितः पाण्ड्यभूपतिः ।
तापज्वरेण नितरामत्युग्रेणासनं विना।। ९७
भूमौ विवेष्टनं कुर्वन्नतिसन्तापवानभूत्।
क्षिप्तश्च वह्निरस्माभिर्न ददाह मठं क्वचित्।। ९८
किमेतदिति नग्नास्ते खिन्ना गत्वा यथागतम्।
प्रेरितस्त्वाभिचाराग्निस्तन्मठं न ददाह वै।। ९९
इति विज्ञापयामासुः शिष्या आचार्यसन्निधौ।
नग्नाः समीपमागत्य भीतियुक्ताश्च देशिकाः ।। १००
विचारमापुस्सम्भूय पीडां कर्तुं पुनश्च ते।
लुठतो भुवि भूपस्य ज्वरस्य शमनाय च।। १०१
चक्रुः प्रतिक्रियां वैद्याश्चौषधैर्जपपूर्वकैः ।
बहुवैद्यौषधैश्चापि न शशाम स तु ज्वरः ।। १०२
अभिचारसमुद्भूतो नग्नानां सोऽग्निरुत्कटः ।
प्रवीणा अपि वैद्याश्च दुःखिताश्चिन्तयान्विताः ।। १०३

आभिचारोद्भवः सोऽग्निरिति जानन्ति नैव ते।
न शान्तो ज्वर इत्येव प्रभर्त्स्य भिषगुत्तमान्।। १०४
तान् गच्छतेति चाज्ञाप्य प्राह मन्त्रिमुखान्नृपः।
मन्त्रवादरतान्नग्नानाहूयाचार्यपूर्वकान्।। १०५
भवन्तो ज्वरशान्तिं मे कुर्वंत्वित्यब्रवीच्च सः।
तेऽपि चाहूय तान्नग्नान् ज्वरशान्तिं नृपस्य तु।। १०६
कुर्वंत्वित्यवदन् तेऽथ नग्नाचार्यास्ससशिष्यकाः।
विलोक्य ज्वरितं भूपं पिञ्छैस्स्पृष्ट्वाऽभिमन्त्र्य च।। १०७
पुनः पुनर्महायत्नं भावनाभिश्च चक्रिरे।
कुण्डिकाम्बुप्रोक्षणैश्च बहुयत्नैस्समाहिताः।। १०८
तथाऽपि ज्वर एतस्य किञ्चिन्नोपशमं ययौ।
अनुक्षणं वर्द्धते स्म बडबाग्निरिवाम्भसा।। १०९
दूरीकृत्य च तान्नग्नान् प्रभर्त्स्याचार्यकानपि।
ज्वरवेगासहिष्णुश्च वीक्ष्य जायां च मन्त्रिणम्।। ११०
पतन् प्रणष्टसंज्ञोऽभूत् कुब्जपाण्डय महीपतिः।
तदा मन्त्री च महिला उभावभ्येत्य भूपतिम्।। १११
बोधयामासतुस्तेऽस्य पुण्यपाकबलेरितौ।
समयोऽयमिति ज्ञात्वा नृपस्य च हिताय तौ।। ११२
हे राजन्नौ शृणु वचः प्राणरक्षण हेतवे।
ज्ञानपूर्ण इति ख्यातः कश्चिद्द्विप्रवरात्मजः।। ११३
श्रीहालास्यशिवं नन्तुमागत्यात्रैव तिष्ठति।
चोलदेशाच्छिवानन्दयोगीन्द्रस्य तु वै मठे।। ११४

शक्तिमानिति तं सर्वे प्रशंसन्ति च सज्जनाः ।
शैवसिद्धान्तिनां श्रेष्ठश्शैवाचार्यश्च बुद्धिमान् ।। ११५
वयसा बालरूपोपि ह्यबालो ज्ञानविद्यया ।
शङ्करेऽतीव भक्तश्चानुगृहीतश्शिवेन सः ।। ११६
तमेवाहूय कर्तव्यः प्रतीकारो ज्वरस्य हि ।
इत्यावयोर्मतं राजन् यदीष्टं कुरु तत्क्षणत् ।। ११७
एवं तयोर्वचश्श्रुत्वा तदा पाण्ड्यमहीपतिः ।
ज्वरितोऽपि रुषा युक्तं प्राह चैवमुभौ प्रभुः ।। ११८
आगतश्चेद्भस्मना मां स्पृशेत्स ज्वरशान्तये ।
अहं नग्नाटसिद्धान्ती भस्म मे नार्हमेव हि ।। ११९
इत्युक्तवति भूपाले पूर्वजन्मकृतांहसा ।
तद्वाक्यमेवं श्रुत्वा तौ पुनर्वाचमथोचतुः ।। १२०
वेदसिद्धं पावनञ्च भस्म न त्याज्यमेव नः ।
अवैदिकाः पापिनस्ते नग्नास्सत्यं ब्रुवीवहि ।। १२१
भस्माक्षत्यागिनां नृणां निरयं प्रब्रुवन्ति च ।
आपत्काले शृणु वचस्तव तापोपशान्तये ।। १२२
सर्वाघशान्तये चापि पितृपैतामहैर्धृतम् ।
रुद्राक्षं भस्म पूजा च शिवस्य सकलेशितुः ।। १२३
नग्नांश्च त्वं समाहूय प्रार्थय ज्वरशान्तये ।
मध्ये च क्षपणाचार्य वैदिकाचार्यवर्ययोः ।। १२४
यः करिष्यति तच्छान्तिं तं गुरुं स्वीकुरु प्रभो ।
इत्युक्ते सति ताभ्यां प्रबलज्वरपीडितः ।। १२५

तथाऽस्त्विति ददावाज्ञां नग्नानां तस्य हूतये।
मन्त्रिणा मह्लिलेश्वर्या चाहूताः प्रेषितैर्जनैः ॥ १२६
नग्नाश्च सम्भ्रमैर्युक्ताः समायाता नृपान्तिकम्।
अथ राज्ञी च मन्त्री च तन्मठं प्राप्य सत्वरम्॥ १२७
तौ तं नत्वा च सम्प्रार्थ्य तमाहूय समागतौ।
प्रशान्तस्सन् समायातः सोऽपि वैदिकवारणः ॥ १२८
शिष्यैः षोडशसाहस्रैर्गणपैश्च यथा शिवः।
आसने तूपविष्टानां क्षपणानां तु मध्यतः ॥ १२९
शिष्यप्रदत्तपीठे स्वे ह्युपविष्टः शिवं स्मरन्।
मत्तेभाष्टसहस्राणां मध्ये सिंहशिशुर्यथा॥ १३०
तथैवासीत् ज्ञानपूर्णो जनानां पश्यतामपि।
आवाभ्यामयमाहूतो बालो वैदिकवारणः ॥ १३१
वेदबाह्या इमे सर्वे नग्नाः पञ्चास्यसन्निभाः।
राज्ञोऽपि भृशमिष्टाश्च वर्तन्ते तर्कतोऽतुलाः ॥ १३२
वैदिकावैदिकानाञ्च मध्ये केषां जयोऽधुना।
इति भीतौ समालोक्य तौ राज्ञीमन्त्रिणावपि॥ १३३
ज्ञानपूर्णः स्तुवन् गेयैस्साम्बं सुन्दरनायकम्।
चिन्ताऽद्य युवयोर्मास्तु मदीयहृदये स्थितः ॥ १३४
श्रीहालास्यपतिर्माभैरित्यतोषयदिङ्गितैः।
नग्नास्ते तर्ककुशलाः सम्भ्रमैश्च सगर्विताः ॥ १३५
राज्याश्च मन्त्रिणश्चाग्रे प्रतिज्ञां चक्रुरित्यपि।
नृपस्य दक्षपार्श्वस्थमयं शमयतु ज्वरम्॥ १३६

शमयामो वयं वामभागस्थं सहसा ज्वरम् ।
सामर्थ्यमस्याप्यस्माकं पश्यन्त्वत्र स्थिता जनाः ।। १३७
एवं प्रतिज्ञामाकर्ण्य नग्नानां वैदिकाग्रणीः ।
तथाऽस्त्वित्यनुमेने तां राज्ञी मन्त्री ननन्दतुः ।। १३८
ज्ञानसम्बन्धसंस्पर्शो ज्वरबाधाप्रबाधितः ।
पाण्ड्योऽप्यनुमतिश्चक्रे पुण्यपाकप्रचोदितः ।। १३९
भस्म तावत्समादाय भवान्या भावयन् भवम् ।
ज्वरितं तञ्च संस्प्रष्टुं ज्ञानपूर्णस्समुद्यतः ।। १४०
भस्मादानं तदा दृष्ट्वा ज्ञानपूर्णेन तेऽपि च ।
तिष्ठ तिष्ठेति गर्जन्तो नग्नाः प्राहुर्निरुध्य तम् ।। १४१
औषधेन युतं भस्म त्वमादाय समुद्यतः ।
न मन्त्रशक्त्या युक्तं तत् भवानज्ञश्च बालकः ।। १४२
ज्वरश्शमयितुं नार्हस्तद्भस्मक्षेपणात् पुनः ।
ज्वरशान्त्यै भस्मनश्चेच्छक्तिः स्वेनैव तेजसा ।। १४३
तव हस्तगतं मास्तु भस्म चौषधसंयुतम् ।
अन्येन भस्मना बाल ज्वरं तं शमयाधुना ।। १४४
भस्म तत् गर्हितं प्रोक्तं स्पर्शने चापि निन्दितम् ।
तेन ज्वरः कथं शान्तिमेति वै तादृशेन च ।। १४५
प्रवीणता शमयितुं सत्या चेद्भस्मनोऽपि च ।
अन्येन भस्मना शान्तं कुरुष्व ज्वरमर्भक ।। १४६
अन्येन भस्मना चाद्य ज्वरं चेच्छमयिष्यसि ।
प्रवीणता तव तदा सत्या सर्वज्ञताऽपि च ।। १४७

इति तद्वचनं श्रुत्वा यूयमादाय भस्म तत्।
प्रयच्छत च मद्धस्ते हालास्येशमहानसात्॥ १४८
इति तान् प्राह सकलान्नग्नान् वैदिकवारणः।
तेऽथोचुर्भस्म नास्माभिर्द्रष्टव्यमतिनिन्दितम्॥ १४९
स्प्रष्टुं कथं शक्यते तदज्ञैस्त्वत्सदृशैर्धृतम्।
त्वदीया अपि भृत्याश्च तदानयनकर्मणि॥ १५०
नोचिता एव नितरां कुर्युरौषधसङ्करम्।
इति तद्वाक्यमाकर्ण्य प्राह वैदिकवारणः॥ १५१
श्रीभस्मस्पर्शने यूयं नार्हाः पापा हि सत्यतः।
युष्मदीयास्मदीयेभ्योऽप्यन्ये ये सन्त्यवञ्चकाः॥ १५२
त आनयन्तु तद्भस्म श्रीमहानससम्भवम्।
प्रयच्छन्तु च मद्धस्ते राजशासनकारिणः॥ १५३
एवं तस्मिन्नुक्तवति प्रेरयामासु रार्हताः।
नृपास्तान् पुरुषान् कांश्चित्तद्भस्मानयने द्रुतम्॥ १५४
ते गत्वा सहसाऽऽदाय श्रीभस्म श्री शिवालयात्।
समर्पयन्त्यञ्जलौ स्म ज्ञानसम्बन्धयोगिनः॥ १५५
सोऽपि प्रगृह्य तत्प्रीत्या हालास्येशमहानसात्।
आनीतं पाण्डरं भस्म विशेषादतिपावनम्॥ १५६
साम्बस्य हालास्येशस्य भावनादार्ढ्ययोगतः।
अकरोत् स्पर्शनं तस्य नृपस्याघप्रशान्तये॥ १५७
तेजोमयमिदं भस्म साम्बस्येति स्मरन् बुधः।
मनसा शिरसा नत्वा साम्बं तं सुन्दरेश्वरम्॥ १५८

जप्त्वा पञ्चाक्षरं मन्त्रं जपतां विजयप्रदम्।
भस्मस्तुतिमयं गेयमगायज्ज्वरशान्तये ।। १५९
वेदबाह्यस्य भूपस्य स्पर्शनं वर्ज्यमेव नः ।
तथाऽपि हालास्येशस्य भावनादार्ढ्य वैभवात्।। १६०
करोमि स्पर्शनं तस्य पापभीतिं विहाय च।
इति सञ्चिन्त्य तत्पार्श्वे भस्म चिक्षेप दक्षिणे ।। १६१
ज्वरो दक्षिणपार्श्वस्थो हित्वा तं भागमाशु सः ।
वामभागं ददाहास्य तद्भागज्वरसंयुतः ।। १६२
यदा स्पृष्टोऽपि पिञ्छाग्रैः क्षपणैरभिमन्त्रितः ।
तदा तु द्विगुणो भूत्वा ज्वराग्निस्तं ददाह च ।। १६३
प्राहरंश्च पुनः पिञ्छैर्नग्नास्तं भागमाग्रहात्।
कुण्डिकान्तर्गतजलैः सेचयाञ्चक्रिरेऽधमाः ।। १६४
सन्धुक्षितः पिञ्छवातैः कुण्डिकाजलसर्पिषा।
अतीव स प्रजज्वाल ज्वराग्निस्त्रिगुणः पुनः ।। १६५
पिञ्छाग्राणि च दग्धानि भूपो नग्नानभर्त्सयत्।
नग्नास्तदानीमित्यूचुर्निर्लज्जाः पृथिवीपतिम्।। १६६
अमृतं पार्श्वमभ्येत्य शमयामास बालकः ।
वामभागो विषाख्यो यत्तज्ज्वरो न शशाम च ।। १६७
वामभागज्वरश्चापि शमयिष्यति चेदयम्।
तदा महान्न बालोऽयं भर्त्सयास्मान् ततो नृप ।। १६८
इत्युक्तोऽथाह निर्लज्जैः क्षपणैर्ज्वरितो नृपः ।
वामभागज्वरं चापि नाशय त्वं शिवोऽसि नः ।। १६९

ज्ञानसम्बन्ध भगवन् प्राणान्रक्ष मम प्रभो।
इति सम्प्रार्थितो राज्ञा ज्ञानसम्बन्धदेशिकः ।। १७०
वामभागज्वरं चापि शमयिष्ये प्रभो तव।
मा भयं नृपते भूयादागते मयि साम्प्रतम्।। १७१
इत्युक्त्वा तं च भागं स पस्पर्श भसितेन वै।
ज्वरो नग्नानिवर्त्योऽपि वामभागाच्छमं ययौ।। १७२
सर्वात्मना ज्वराग्निः स संशान्तो नृपदेहगः ।
ज्वरनाशान्नृपस्याङ्गं शीतलं बलसंयुतम्।। १७३
पूर्वस्मादधिकं सौख्यं पुष्टिं चाप स पाण्ड्यराट्।
राजाऽथ राज्ञीं सचिवं प्रशस्य च पुनः पुनः ।। १७४
राजा प्रणम्य साष्टाङ्गं तदा वैदिकवारणम्।
ज्ञानपूर्णमिति प्राह मदाहङ्कारवर्जितः ।। १७५
स्वामिन् सर्वज्ञ मन्नाथ जगन्नाथ जगद्गुरो।
बालोऽप्यबाल एवासि वाण्या च वरया प्रभो।। १७६
तत्त्वज्ञानेन भक्त्या च शङ्करे परमात्मनि।
त्वत्समो न हि लोकेषु समस्तेष्वपरो बुधः ।। १७७
त्वद्दर्शनेन चास्माकमज्ञानमगमद्व्ययम्।
सुज्ञानमप्येधते त्वं शिव एव न चापरः ।। १७८
आश्रित्य नग्नसिद्धान्तं पुरा मूढा वयं हताः ।
तत्पापपङ्कादस्मांश्च रक्ष रक्ष कृपानिधे।। १७९
इत्युक्तवति भूपाले स्वपुण्यपरिपाकतः ।
ज्ञानपूर्णोऽथ भगवान् ज्ञानविज्ञानसद्गुरुः ।। १८०

विधाय चाक्षुषीं दीक्षां कुब्जपाण्ड्यस्य तस्य तु।
कुब्जतां नाशयामास सुन्दरं च वपुर्व्यधात्।। १८१
पञ्चवर्णोपदेशञ्चाकरोद्वैदिकवारणः।
शिवलिङ्गं तस्य दत्वा पूजाञ्चाप्युपदिष्टवान्।। १८२
अत्याश्चर्यञ्च तद्दृष्ट्वा राज्ञस्स्वर्णमयं वपुः।
हाहेति विस्मिताः सन्तो जनाः सर्वे तदा भृशम्।। १८३
ज्ञानपूर्णञ्च सर्वज्ञं प्रशशंसुर्मुदान्विताः।
राज्ञोऽन्तिकस्थाश्च जना दधुः फालेषु भस्म च।। १८४
अन्तं जगामाज्ञता च यया कुब्जतया सह।
सौन्दर्यमतुलं वीर्यमभूद्राज्ञो विशेषतः।। १८५
राजन् सुन्दरपाण्ड्याख्यो लोके भूया इतः परम्।
इति तं प्राह भगवान् ज्ञानसम्बन्धदेशिकः।। १८६
विहाय कुब्जपाण्ड्याख्यां जन्मप्रभृति विश्रुताम्।
सोऽभूत्सुन्दरपाण्ड्याख्यो नामतः परमार्थतः।। १८७
राजा सुन्दरपाण्ड्याख्यो ज्ञानसम्बन्धदेशिकम्।
भद्रासनं समारोप्य भद्राकारं जगद्गुरुम्।। १८८
शिववन्नावयित्वा तं गन्धपुष्पादिभिस्तदा।
पूजयित्वा भूषयित्वा वस्त्रैः सूक्ष्मैश्च भूषणैः।। १८९
छत्रध्वजैश्चामराद्यैः तौर्यत्रिकसमन्वितैः।
चतुरन्तसुयाने च स्थाप्य मुक्तास्रजावृते।। १९०
कृत्वा महोत्सवं तस्य ज्ञानपूर्णस्य भूपतिः।

मन्दं मन्दश्च नगरीं प्रदक्षिणमकारयत्।। १९१
मठे संस्थाप्य भूयश्च सोपचारं सशिष्यकम्।
कृताञ्जलिपुटस्तस्थौ सन्निधौ तस्य भक्तितः ।। १९२
सोऽपि श्रीज्ञानसम्बन्धः परितोषेण संयुतः ।
अन्तःपुरं प्रेषयित्वा राजानं प्रश्रयान्वितम्।। १९३
मीनाक्षीं सुन्दरेशञ्च भक्ताधीनं परात्परम्।
परितोष्य स्तवैर्नव्यैः गेयैः शब्दार्थकोमलैः ।। १९४
जनैः प्रशस्यमानः सन् ज्ञानपूर्णो मठं ययौ।
सा राज्ञी सोऽपि मन्त्री च परिपूर्णमनोरथौ।। १९५
उपदाभिरनेकाभिस्तोषयामासतुश्च तम्।
नग्नास्तु खिन्नमनसो व्रीलावनतकन्धराः ।। १९६
तिरस्कृताश्च पाण्ड्येन भर्त्सिता गर्हिता जनैः ।
विलोकयन्तो वक्त्राणि भूमिश्चापि परस्परम्।। १९७
प्रययुर्भीतिसंयुक्ताः स्वस्वमावासपर्वतम्।
राजा सुन्दरपाण्ड्यस्तु सुन्दरेशं सदा स्मरन् ।। १९७
तस्मै जगन्नायकाय श्रीमन्त्याभरणानि च।
प्रभां हिरण्मयीं कल्पवृक्षेण सुमनोरमाम्।। १९९
वाहनानि च सर्वाणि वृषराजमुखानि च।
मौक्तिकं हैमकञ्चापि पीठं सिंहासनादि च।। २००
छत्रचामरबृन्दश्च क्षेत्राणि सुबहून्यपि।
दत्वा सम्प्रीणयामास मीनाक्षीं सुन्दरेश्वरम्।। २०१
इत्थं सुन्दरपाण्ड्यस्तु शिवभक्तशिखामणिः ।

अभवद् ज्ञानपूर्णेन क्षपणत्वं विहाय सः ॥ २०२
शम्भोः [illegible]लीलेयं दम्भोलिः पापभूभृताम् ।
ज्ञानविज्ञानभावाय श्रोतव्या सज्जनैस्सदा ॥ २०३

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - कुब्जपाण्ड्यज्वरशमनं नाम*
*अष्टषष्टितमोऽध्यायः*

★ ★ ★

## அத்தியாயம் - 68

## 62. கூனிப் பாண்டியனின் கூனலை நீக்குதல்

*ஜகன்னாதனுக்குப் பின், வீரபாஹு, விக்ரம பாஹு, பராக்ரம பாஹு, ஸுரபி பாண்டியன், குங்குமப் பூவால் ஈசனை வழிபட்ட குங்கும பாண்டியன், பச்சக் கர்பூரத்தால் ஈசனை மகிழ்வித்த கர்பூர பாண்டியன், காருண்ய பாண்டியன், புருஷோத்தம பாண்டியன், சேரரையும் சோழரையும் வென்ற சத்ரு சாஸன பாண்டியன், குப்ஜ (கூன்) பாண்டியன் என அரச பரம்பரை மதுரையை ஆண்டது. காஞ்சிபுரத்துச் சோழ அரசன் வநிதேச்வரி (மங்கையர்க்கரசி) என்ற தன் பெண்ணை குப்ஜனுக்கு மணம் செய்வித்துத் தன் சோழ அரசை இவனிடமிருந்து மீட்டான். சேரனும் தானியமும், தனமும் பெருமளவில் தந்து தன் அரசை மீட்டான். கூன்பாண்டியனின் மந்திரி குலபந்தனர் (குலச் சிறையார்). இவர் மங்கையர்க் கரசியுடன் காஞ்சிபுரத்திலிருந்து வந்தவர். கூன் பாண்டியன் பௌத்தனானான். விபூதி பூசுதலும் ருத்ராக்ஷம் தரித்தலும் தடை செய்யப் பெற்றது. இதை ராணியும் மந்திரியும் கூட பின் பற்ற நேர்ந்தது. மனத்தளவில் அவற்றைத் தரித்த அவர்கள் ஸுந்தர லிங்கத்தைத் தரிசனம் செய்யாவிடில் உயிர் தரிக்க இயலாதென அரசரிடம் வற்புறுத்தி அனுமதி பெற்றனர். அரசனை மறுபடி சைவ மரபிற்கு மாற்றுவது பற்றிச் சிந்தித்தனர். ஒரு சமயம் மழையின்மையால் பஞ்சம்*

பரவியது. சிவானந்தர் (திருநாவுக்கரசர்) என்ற முனிவர், சிதம்பரத்திலிருந்து ஸுந்தரரைத் தரிசனம் செய்ய மதுரை வந்து அங்கு ஒரு மடத்தில் தங்கியிருந்தார். அவரிடம் சென்று மங்கையர்க் கரசியும் மந்திரியும் நாட்டின் நிலையைக் கூற அவர் கூறினார்.''சோழ தேசத்தில் பிரும்மபுரத்தில் (சீர் காழியில்) சிவபாத ஹ்ருதயரின் மகனாக ஷண்முகனின் அம்சமாகத் தோன்றிய ஜ்ஞான ஸம்பந்தர் என்ற பாலகன், பார்வதி தேவியிடமிருந்து முலைப்பால் பெற்றுச் சிறந்த புலவராகி சிவாலயங்களைத் தரிசிக்க வந்து கொண்டிருக்கிறார். ஆங்காங்கு கோவில் கொண்டுள்ள சிவபெருமானைப் பதிகங்களால் துதிக்கிறார். தந்தையின் தோளின் மீதேறி வந்தவர் தற்போது ஈசன் அளித்த பல்லக்கில் அமர்ந்து ஈசனளித்தப் பொன்னாலான தாளத்துடன் ஈசனைப்பாடி வருகிறார். ஹாலாஸ்யத்திற்குப் புறப்பட்ட அவரை, இன்று நன்னாளில்லை, கிளம்பினால் கேடு நேரும் என பலர் பயமுறுத்தினர். ஈசனை வழிபடுபவனுக்கு கோள்களும் நாளும் நல்லவையே எனக் கூறிக் கிளம்பிவிட்டார். பதினாறாயிரம் அடியார்களுடன் வருகிற அவரை வரவேற்போம். அவரது சிவபக்தியால் சமணர்களின் கொட்டம் அடங்கி விடும்'' என்றார்.

திரு ஜ்ஞான ஸம்பந்தர் மதுரைக்கு வந்தார். அவருடன் வந்த பெரு அடியார் கூட்டமும் பாட்டும் தாளமும் சமணரைக் கலக்கின. ஸம்பந்தர் வைகையிலும் பொற்றாமரை குளத்திலும் நீராடி, விபூதி ருத்திராக்ஷம் தரித்து அடியார்களுடன் விநாயகர், ஷண்முகர், மீனாக்ஷி மற்றும் ஸுந்தரேசரை வலம் வந்து வணங்கி வழிபட்டார். ஆனந்தத்தில் ஆழ்ந்து ஈசனை நினைந்து கசிந்துருகிப் பாடினார். ஆலயத்திலிருந்து வெளிவந்த ஸம்பந்தரை மந்திரி குலச் சிறையாரும் ராணி மங்கையர்க்கரிசியும் வணங்கி அரசரின் நிலை பற்றி விண்ணப்பித்து வேண்டி நின்றனர். வாகீசரின் (திருநாவுக்கரசரின்) மடத்தில் ஸம்பந்தர் தங்கி அரசியாரும் மந்திரியாரும் கொணர்ந்த நிறைந்த பண்டங்களால் அடியார்களுக்கு உணவளித்து அமர்ந்திருந்தார். சமணர்கள்

கோபவசப்பட்டு ஹோமம் வளர்த்து அபிசார வழிப்படி ஹோமம் செய்து அந்தத் தீயை ஸம்பந்தர் தங்கியிருந்த மடத்திற்கு அனுப்பி அங்கு தங்கியவரனைவரையும் எரித்துச் சாம்பலாக்க உத்தரவிட்டனர். மடத்திற்குள் வந்த நெருப்பு தன் அபிசாரத் திறமையை இழந்தது. உடன் வந்த சமணர்கள் அதை மடத்தைச் சுற்றிப் பற்றவைத்தனர். ஸம்பந்தரோ அதனை தீபத்தினுள் அடக்கி மடத்தின் மீது அடையாளமாக வைத்தார். ஈசன் அருளால் நெருப்பைக் கூன் பாண்டியன் மீது ஏவி அவனைக் கடுந்தாப ஜ்வரத்திற்கு உள்ளாக்கினுர். வைத்யர்களும் சமணர்களும் அரசனின் ஜ்வர நோயைத் தணிக்கச் செய்த உபாயங்கள் அனைத்தும் பயனற்றுப் போயின. சமணர்கள் மயில்த் தோகையால் விசிறித் தாபத்தைக் குறைக்க முற்பட மேலும் தாபம் வளர்ந்தது. மந்திரியும், அரசியும் ஸம்பந்தரை அழைத்து வர அனுமதி வேண்ட, நோயின் உச்ச நிலையிலிருந்து அரசன் அதற்கு சம்மதித்தான். சமணர்கள் இடப் புறத்திலும் சைவர்கள் வலப் புறத்திலும் அமர்ந்து நோய் தீர உதவட்டும். எவர் பக்கத்தில் தாபம் தணிகிறதோ அவர்களைக் குருவாக ஏற்பேன் என அரசன் சம்மதித்தான். ஜ்ஞான சம்பந்தர் வந்ததும் விபூதி மந்திரித்து வலப் புறத்தில் தடவத் தொடங்கினுர். மருந்து ஏதேனும் கலந்திருக்குமாதலால் அரசரின் சேவகர் கோவில் சமையற் கட்டுக்குச் சென்று அங்கிருக்கிற சாம்பலைக் கொணரட்டும். அதனை ஸம்பந்தர் பூசட்டும் எனச் சமணர் வாதிட்டனர். அவ்வாறே கொணர்ந்த சாம்பல் பூசப்பட வலப் பக்கத்துத் தாபம் குன்றியது. இடது பக்கத்துத் தாபம் அதிகமானது. அதைக் கண்ட அரசனது கோபம் சமணர்கள் மீது பாய்ந்தது. இடப் பக்கத்தில் தான் நோய் விளைவித்த விஷம் தங்கியுள்ளது. வலப் பக்கத்தில் அதன் தாபம் மட்டும் பரவியிருந்தது. இடப் பக்கத்துத்தாபத்தை ஸம்பந்தர் நீக்கட்டும் எனச் சமணர் கூற, ஸம்பந்தர் சாம்பலை இடது பக்கத்திலும் பூசத் தாபம் முழுவதும் நீங்கி இன்பம் நிறைந்தது. ஸம்பந்தரின் திருவடிகளில் வணங்கி எழுந்த அரசன் தன் தவறுன கொள்கைப் பிடிப்பால் விளைந்த பாபத்தின் பயனுக நோயால்

துயருற நேர்ந்ததை உணர்ந்தான். சிவனிடமும் விபூதியிடமும் சமணர்களின் உபதேசத்தால் வெறுப்பை வளர்த்து மக்களையும் தவறான பாதையில் இட்டுச் சென்றதற்குப் பரிஹாரம் கேட்டான். ஸம்பந்தர் அவனை அமைதிப் படுத்தி கண்களின் பார்வையால் சிவ தீக்ஷை அளித்து அவனது கூனை நிமிர்த்தி அழகனாக்கிப் பஞ்சாக்ஷர உபதேசம் தந்து சிவலிங்கத்தைத் தினந்தோறும் வழிபடச் செய்தார். பிறவியிலிருந்தே கூன் விழுந்து கூன்பாண்டியனெனப்பெயர் கொண்டவன் இன்று ஸுந்தர பாண்டியனானான். திருஜ்ஞான ஸம்பந்தரை பத்ராஸனத்தில் அமர்த்தி ஈசன் என்ற பாவனையுடன் அனைத்து உபசாரங்களாலும் கொண்டாடினான். சமணர்களோ, நிலையிழந்து வெட்கி மலைகளில் ஒளிந்து கொண்டனர். அரசன் ஆலயத்தை மறுபடி புதுப்பித்து மீனாக்ஷியையும், ஸுந்தரேசரையும் மாபெரும் விழாக் கொண்டாடி வழிபட்டான். இது அறுபத்திரண்டாவது திருவிளையாடல்.

★ ★ ★

एकोनसप्ततितमोऽध्यायः

## ६३. नग्नानां शूलाधिरोपणम्

**अगस्त्यः-**

**ज्ञानपूर्णेन भूतेशो यथा शूलाधिरोपणम्।**
**नग्नानां कारयामास सा लीलाऽद्य निगद्यते ॥ १**

**कुलबन्धनमन्त्री च राज्ञी च वनितेश्वरी।**
**ज्ञानपूर्णं समभ्येत्य रहस्येवमवोचताम् ॥ २**

**श्री ज्ञानपूर्ण संबन्ध श्रीमद्वैदिकवारण।**
**वैदिकानां स्थापनाय शाम्भवानुग्रहाय च ॥ ३**

**अवैदिकानां शिक्षार्थमवनी धृतविग्रह।**
**आवयोः पालनार्थं च पाण्ड्यराजावनाय च ॥ ४**

पाण्ड्यदेशजभक्तानां रक्षार्थं चागतो भवान्।
लोको नग्नाटभूयिष्ठश्शैवं प्रमुषितं मतम्॥ ५
तस्माच्छास्यास्त्वया नग्ना उपायैर्बुद्धिमत्तर।
राज्ञः स्नेहो न विश्वास्यः स्वच्छन्दा हि महीक्षितः॥ ६
अतस्त्वं कुरु नग्नानां शासनं ज्ञानवारिधे।
शृणु वाचं गुरो स्वामिन्नावयोर्गुहविग्रह॥ ७
क्षपणास्ते महापापाः सङ्ख्ययाऽष्टसहस्रकाः।
वश्याकर्षणविद्वेषस्तम्भनोच्चाटनादिषु॥ ८
कर्मस्वतिप्रवीणाश्च घृणारहितबुद्धयः।
तच्चरित्रं गदितुमप्यावयोर्जायते भयम्॥ ९
सहायभूतश्चास्माकमत्र कोऽपि न विद्यते।
कृत्वा च शासनं तेषां पश्चाद्गन्तुं त्वमर्हसि॥ १०
श्रीमद्ब्रह्मपुरं ब्रह्मन् वस त्वं वत्सरं त्विह।
रक्षणार्थं च भक्तानामावयोः प्रार्थनेन च॥ ११
इति तत्प्रार्थनां श्रुत्वा महान् वैदिकवारणः।
प्राह प्रगल्भया वाचा शङ्करं हृदि भावयन्॥ १२
यस्येशबलमल्पं वा विद्यते तस्य जन्मिनः।
सिद्ध्यन्ति सर्वकार्याणि सद्यो नश्यन्ति वैरिणः॥ १३
इति निश्चित्य सुदृढं वर्तेथां चिन्तया विना।
लब्ध्वाऽनुज्ञामुमेशस्य सुन्दरेशस्य शासनम्॥ १४
नग्नानां श्वः करिष्यामि गम्यतामद्य मन्दिरम्।
धैर्यादेवं स तावुक्त्वा प्रेषयामास तद्दिने॥ १५

परेद्युः प्रातरुत्थाय महान् वैदिकवारणः ।
नित्यकर्माणि सर्वाणि नियमांश्च विधाय सः ।। १६
शम्भोरनुज्ञां नग्नानां हिंसायै लब्धुमुद्यतः ।
राज्ञः कलत्रमन्त्रिभ्यां सहितः प्रययौ शिवम् ।। १७
विघ्नेशं सम्प्रणम्यादौ सुमीनाक्षीश्च षण्मुखम् ।
ईशालयं प्राप्य युक्तं सर्वावरणदैवतैः ।। १८
नत्वा स्तुत्वा सुन्दरेशमेवमप्रार्थयच्छिवम् ।
स्वामिन् सर्वजगन्नाथ सर्वज्ञ शशिशेखर ।। १९
सुन्दरेश्वरभक्तानामिष्टसिद्धिप्रदायक ।
क्षपणानष्टसाहस्रान् पर्वतेष्वष्टसु स्थितान् ।। २०
प्रधानभूतानाचार्यान् तच्छिष्यानपरानपि ।
वयं शिक्षितुमिच्छामो वैदिकस्थैर्यहेतवे ।। २१
तवापि तत्क्रियेष्टा चेदस्मानाज्ञापय प्रभो ।
विजयश्चापि वादेषु क्रियास्वपि च नः कुरु ।। २२
इत्युक्त्वा निश्चलस्तस्थौ साम्बं मनसि भावयन् ।
तदा व्योम्नि प्रादुरासीद्वाणी नीपाटवीशितुः ।। २३
मद्भक्तानामभीष्टं यत्तन्ममापीष्टमेव हि ।
निग्रहायावैदिकानां वैदिकानुग्रहाय च ।। २४
जयो भवतु युष्माकं नग्नानां च पराजयः ।
इति श्रुत्वा शम्भुवाक्यं ज्ञानसम्बन्धपूर्वकाः ।। २५
पुनस्तस्थुर्मुदा शम्भुं स्मरन्तस्तस्य सन्निधौ ।
पुनश्च प्राह वाणी सा सुव्यक्ता शृण्वतां तदा ।। २६

हृद्यवाक्यमिदं बुध्वा साध्वसं प्रविहाय च।
पाण्ड्यभूपस्य पुरतो भवद्भिर्विजिगीषुभिः ॥ २७
तैर्विवादश्च कर्तव्यः कुतर्ककुशलैर्जनैः ।
युष्माभिः कलहायात्र नग्ना आसन्नमृत्यवः ॥ २८
स्वयमेवागमिष्यन्ति ते सर्वेऽप्याज्ञया मम।
भविष्यत्येव तेषां च तरुशूलाधिरोहणम् ॥ २९
मद्भक्तानामशेषाणां विजयश्च भवविष्यति।
इत्युदीरितमाकर्ण्य शम्भुना व्योममूर्तिना ॥ ३०
मन्त्रिणा वनितेश्वर्या सार्धं वैदिकवारणः ।
लब्ध्वाऽऽनन्दमनन्तं च प्रणम्येशं पुनः पुनः ॥ ३१
तयोराननमुद्वीक्ष्य कृतकृत्य इवाभवत्।
विश्वासातिशयेनैव ज्ञानपूर्णश्च तावुभौ ॥ ३२
त्रयस्ते बन्धयामासुश्चेलान्ते वाङ्मयं मणिम्।
अथ प्रणम्य प्रस्तुत्य सुन्दरेश्वरमादरात् ॥ ३३
स्वं स्वमावासमाप्याशु कृताहाराः कृतोद्यमाः ।
पुनश्च चिन्तयामासुस्सार्यं सम्भूय मण्टपे ॥ ३४
लोकाः क्षपणसिद्धान्तनिरतास्सर्व एव हि।
न कृतश्चेत्प्रतीकारः स सिद्धान्तः समेधते ॥ ३५
श्रुत्युक्तः शैवसिद्धान्तस्त्वन्तमेष्यत्यसंशयम्।
तत्सिद्धान्तविनाशे तु निखिलं कर्म वैदिकम् ॥ ३६
वेदोक्तश्चाश्वमेधान्तो यज्ञः कालेन नश्यति।
तन्नाश इन्द्रादिदेवा निराहाराः सुकोपिताः ॥ ३७

अनावृष्टिं करिष्यन्ति ह्यनावृष्ट्या भवेद्भयम् ।
जनानां पापवृद्धिश्च भविष्यति न संशयः ।। ३८
नृपोऽपि वैदिकध्वंसादधः पतनमेष्यति ।
तदधः पतनात्सर्वे पतिष्यन्ति जना अपि ।। ३९
इममर्थं वेदयित्वा राज्ञे तेनोदिताः क्रियाः ।
अस्माभिरथ कर्तव्या राजा धर्मस्य कारणम् ।। ४०
इति निश्चित्य तं प्राप्य तस्मै तत्कार्यमब्रुवन् ।
राजाऽपि तन्मतं श्रुत्वाऽनुमेने नग्नभञ्जनम् ।। ४१
लब्ध्वाऽऽदेशं सुन्दरेशान्नृपाज्ञां प्रतिपद्य च ।
प्रहर्षातिशयेनैव जहुर्निद्रां च तन्निशि ।। ४२
कळत्रपुत्रशिष्याद्यैः स्वजनैश्चापि निन्दिताः ।
व्यलीकातिशयेनैव नग्ना अपि च तां जहुः ।। ४३
पाण्ड्यज्वरं शमयितुं न क्षमाः क्षपणा जनाः ।
तिरस्कृताश्च राज्ञाऽपि ज्ञानपूर्णपराजिताः ।। ४४
विविशुः स्वं स्वमावासं व्रीलावनतकन्धराः ।
तदा तानेवमाहुस्तत्पत्न्यो निन्दान्विता गिरः ।। ४५
प्रवीणैः क्षपणाचार्यैः प्रथितैः पिञ्छभूषितैः ।
पदवाक्यप्रमाणज्ञैर्बुधैः कैश्चिन्न निर्जितैः ।। ४६
अस्मद्वंशभवैः पूर्वमार्जितं यद्यशो महत् ।
युष्माभिर्विहतं सद्यः कुपुत्रैरिव सत्कुलम् ।। ४७
बालादपजयं लब्ध्वा यूयं सर्वे ह्रिया विना ।
राज्ञः सकाशादस्माकं विशेषेण तु सन्निधौ ।। ४८

किमर्थमागता यूयं जल्पथाद्य मृतिं विना।
गर्वोऽवर्तत यः पूर्वं सोऽद्य बालेन नाशितः ॥ ४९
गजसृष्टिर्नागसृष्टिर्भूतसृष्टिरथाद्भुता।
अस्मत्पूर्वैरयत्नेन कृता वै मन्त्रवैभवात्॥ ५०
न विद्यते किं युष्माकमद्य तन्मन्त्र वैभवम्।
वश्याद्यनेक कृत्येषु युष्माकं या प्रवीणता॥ ५१
प्रथिता सा विनष्टा किमद्यार्भकपराजिताः ।
इन्द्रजालमहाजालमन्त्रजालविचक्षणाः ॥ ५२
मूढा इव भवन्तोऽद्य तूष्णीं तिष्ठन्ति केन हि।
अन्याऽनेकविधा शक्तिरपि युष्माकमस्ति हि॥ ५३
नानार्थकारिणी सा च क्व गता शक्तिमद्वराः ।
इतः पूर्वं कुशलता भवतां नैव दूषिता॥ ५४
बालः कश्चित्तामिदानीमत्यन्तं दूषयत्यहो।
अस्माकं खल्वभूल्लज्जा युष्माकं तु पराजयात्॥ ५५
सा लज्जा न हि वः किं वा मानिनामग्रयायिनाम्।
येन केनाप्युपायेन तं न निर्जित्य वः सुखम्॥ ५६
न भविष्यति कुत्रापि कर्तव्यस्तज्जयस्ततः ।
तूष्णीं तिष्ठथ चेद्यूयं गृहे लज्जावशाद्वयम्॥ ५७
विसृजामोऽद्य नः प्राणान् सन्देहो नैव विद्यते।
इति तैर्भर्त्सिताः सन्तः कलत्राद्यैस्तु कुत्सिताः ॥ ५८
विहाय भोजनाद्यं च निर्निद्राः क्षपणाधमाः ।
अवृद्धं ज्ञानवृद्धं तं जेतुमासन् कृताशयाः ॥ ५९

अथापरेद्युरखिला आर्हतानां च देशिकाः ।
अग्निस्तम्भजलस्तम्भप्रमुखैश्चित्रकर्मभिः ॥ ६०
जेतुं तं ज्ञानसम्बन्धं निर्ययुस्स्वगृहाच्च ते ।
तदानीं तत्कलत्राणि दुस्स्वप्नान् सुबहून् भिया ॥ ६१
निशि दृष्टानकथयन् स्वं स्वं प्राणपतिं प्रति ।
सर्वान्भग्नान् बालजितान्राजाज्ञाकारिणो भटाः ॥ ६२
प्रहृत्य कशया शस्त्रैः परश्वथमुखैरपि ।
मुष्टिभिस्ताडनाद्यैश्च सम्प्रपीड्य पुनः पुनः ॥ ६३
शूलेष्वारोपयामासुर्मृतास्तिष्ठन्ति तेषु ते ।
वयं च वनिताः सर्वा वक्षस्स्वाताड्य दुःखिताः ॥ ६४
विलोक्य स्वस्वभर्तारं पितरं भ्रातरं सुतम् ।
शूलप्रोतं मृतं चापि निमग्नाः शोकसागरे ॥ ६५
तस्मादद्य न गन्तव्यं युष्माभिस्तज्जयं प्रति ।
दृष्टोऽस्माभिरुषःकाले स्वप्नस्सत्यं भविष्यति ॥ ६६
इत्युक्त्वा क्षपणाचार्यान्निर्गतान् स्वगृहाङ्गणात् ।
नार्यो निरोधयामासुः तेषां साश्रुविलोचनाः ॥ ६७
एवं नानाविधान् स्वप्नानुक्त्वा चातिभयङ्करान् ।
पाणीनाकृष्य भर्तॄणां न्यरुन्धन् क्षपणस्त्रियः ॥ ६८
क्रुद्धा निनिन्दुर्नः पूर्वमद्यैतास्साधुवृत्तयः ।
आसां गिरा वयं जोषं स्थिताश्चेत् परुषोक्तयः ॥ ६९
भविष्यन्ति प्रतिदिनं स्त्रियस्तन्मरणं वरम् ।
इत्यालोच्य तदा तासां बलात्पाणीन्विधूय ते ॥ ७०

प्रस्थिताः क्षपणास्सर्वे तत्पारुष्यासहिष्णवः ।
अनादृत्यात्मवचनं प्रस्थितानात्मनायकान् ।। ७१
युष्माकं तु जयो नास्तीत्यशपंस्ताः स्त्रियः क्रुधा ।
स्त्रीवचश्शृण्वतां पुंसामत्यनर्थो भविष्यति ।। ७२
इति ब्रुवन्तो नग्नास्ते प्रययुर्मधुरां प्रति ।
अथ सर्पाः सृगालाश्च बिडाला विधवादयः ।। ७३
आयाता आभिमुख्येन क्रमाद्दुश्शकुनं ह्यभूत् ।
पक्षिणोऽपि पुरस्तिर्यग्ययुश्च विपरीततः ।। ७४
गवां क्षुतं मानुषं च प्रस्थानेऽत्यन्तगर्हितः ।
दृष्ट्वाऽपि प्रययुस्सर्वे नग्ना आसन्नमृत्यवः ।। ७५
तेषां शिष्यप्रशिष्याद्याः पुरतस्तान् प्रणम्य च ।
प्रोचुर्दुश्शकुनात् भीता न गन्तव्यमिति स्फुटम् ।। ७६
अथाप्यगच्छन् क्षपणाः कार्याकार्याविचक्षणाः ।
श्यामलाः कृकलासाश्च न्यपतन् बौद्धमूर्धनि ।। ७७
स्खलनं च प्रतिपदमभूत्तेषां दुरात्मनाम् ।
वामं चक्षुस्स्फुरति च वामपार्श्वकरस्तथा ।। ७८
मधुरायाः प्रान्तदेशे सर्वे सम्भूय जीवकाः ।
निश्चित्य कर्म कर्तव्यं पूर्वं प्रापुश्च भूपतिम् ।। ७९
बालेन ज्ञानवृद्धेन विवादं कर्तुमागताः ।
वयमद्य ततोऽनुज्ञा कर्तव्येत्यब्रुवंश्च तम् ।। ८०
तथा कुरुध्वमित्युक्ताः पाण्ड्यभूपेन गर्विताः ।
अभ्येत्याज्ञां नृपस्याथ जग्मुर्वैदिकवारणम् ।। ८१

सोऽपि प्रातः प्रणम्येशं प्रस्थितस्स्वमठं प्रति।
मध्येमार्गं निरुद्धस्सन् तैस्सार्धं प्राप पाण्ड्यपम्।। ८२
सभायां राजसदने राज्ञा राज्ञ्या च पूजितः।
सोऽपि स्वभद्रपीठं तदत्युन्नतमनूपमम्।। ८३
स्वर्णरत्नमयं चारु चारुरोह गुहांशकः।
तस्याराक्तं प्रणम्याथ साष्टाङ्गं तत्पदाम्बुजे।। ८४
स्वर्णपुष्पैश्च सम्पूज्य नमस्कृत्य पुनः पुनः।
विनीतः साञ्जलिस्तस्थौ राजा पाण्ड्यमहीपतिः।। ८५
भक्त्या निजकलत्रेण मन्त्रिणा च समन्वितः।
नग्नास्तदानीं निर्लज्जा नितरां निर्दयाशयाः।। ८६
ज्ञानसम्बन्धमभ्येत्य विना भीतिं नृपाग्रतः।
तमेवमूचुरव्यग्रा हसन्तश्च पुनः पुनः।। ८७
नास्ति मन्त्रस्तव वटो घुणकीटलिपिर्यथा।
सोऽभवत् काकताळीयन्यायेन फलितस्तव।। ८८
त्वज्जयो न जयश्चातस्त्वां जेतुं वयमागताः।
त्यज गर्वं ततो जातं पुनश्च फलितस्स चेत्।। ८९
युष्मत्कुशलता सत्या नो चेद्विजय एव नः।
त्वन्मन्त्रमस्मन्मन्त्रं च पत्रेषु सुविलिख्य तु।। ९०
तेषु क्षिप्तेषु वह्नौ यः शृतपत्रस्स वै जितः।
अग्नौ न दग्धं यत्पत्रं स एव विजयी ध्रुवम्।। ९१
इति प्रतिज्ञां कुर्वत्सु नग्नाचार्येषु सस्मितः।
तथाऽस्त्वित्यब्रवीन्मन्दं ज्ञानपूर्णः शिवं स्मरन्।। ९२

इहैव वह्नेः कुण्डं स कुरुतेति नृपाश्रितान्।
उवाच ते होमकुण्डं कर्तुं तत्र समुद्यताः ॥ ९३
नग्नास्तदा पुनः प्राहुस्तं वञ्चयितुमुद्यताः।
शिवप्रियमिदं क्षेत्रं तद्भक्तानामभीष्टदम्॥ ९४
हित्वाऽन्यत्रैव गन्तव्यं द्रष्टुमस्मत्प्रवीणताम्।
एतस्मात् प्रागुदग्देशे विशालं स्थलमस्ति च॥ ९५
पञ्चक्रोशाद्बहिश्चैव द्विगुणात्सुमनोहरम्।
तत्र गत्वा महत्कुण्डं कृत्वा तस्मिन् हुताशनम्॥ ९६
सारदारुभवैः काष्ठैः प्रज्वाल्याज्यादिभिः पुनः।
वर्धिते सति तद्वह्नावस्माभिरपि च त्वया॥ ९७
कृता प्रतिज्ञा कर्तव्येत्युक्त्वा जग्मुश्च तत्स्थलम्।
परिहासं च कुर्वन्तो ज्ञानपूर्णं परस्परम्॥ ९८
सन्धुक्षयन्तः कुण्डेऽग्निं तस्थुः क्षपणपुङ्गवाः।
मन्त्रिणा वनितेश्वर्या शिष्यैरन्यैः शिवाश्रितैः॥ ९९
सार्धं जगाम तं देशं सोऽपि वैदिकदेशिकः।
वत्सं स्वैरं प्रधावन्तमनुधावति गौर्यथा॥ १००
तथा हालास्यनाथोऽपि तं बालमनुधावति।
तेषां तस्य च कृत्यं च दिदृक्षुस्सपरिच्छदः॥ १०१
पाण्ड्यभूपोऽपि तां प्राप विशालां पावकस्थलीम्।
नग्नाटा अष्टसाहस्रा मन्त्रयन्त्रविशारदाः॥ १०२
अबालतालपत्रेषु सान्द्रेषु सुदृढेषु च।
विलिख्य मन्त्रान् संसिद्धान् चिरकालजपार्जितान्॥ १०३

तानि पत्राणि तद्वह्नावक्षिपन् सहसैव ते।
ज्ञानपूर्णस्त्वपूर्णोऽपि वयसा परिपूर्णधीः ॥ १०४
मीनाक्षीशं हृदि ध्यायन् पत्रं चिक्षेप चात्मनः।
स्वपुस्तकस्थितेष्वेकं सर्वेषामपि पश्यताम् ॥ १०५
पत्राण्यष्टसहस्राणि क्षपणानां दुरात्मनाम्।
दग्धानीक्षुदलानीव क्षिप्तमात्रेण सत्वरम् ॥ १०६
ज्ञानपूर्णस्य तत्पत्रं क्षिप्तं प्रज्वलितेऽनले।
जले स्थितमिवाभाति विकार रहितं च तत् ॥ १०७
सर्वे जनास्तदाश्चर्यं दृष्ट्वा विस्मितमानसाः।
ज्ञानपूर्णं प्रशंसन्ति साक्षाद्गुह इति स्वयम् ॥ १०८
भक्तायत्तं शिवं चापि मीनाक्षीरमणं प्रभुम्।
अथ नग्ना एवमूचुर्दृष्ट्वा वैदिकवारणम् ॥ १०९
भवान् प्रायो भवत्येव वह्निस्तम्भनमन्त्रवित्।
पूर्वमेव मठेऽस्माभिः क्षिप्तो वह्निः स्म नश्यति ॥ ११०
यत्पत्राण्यस्मदीयानि दग्धानि त्वत्कमन्यथा।
तस्मात्तव जयो नास्ति कापट्येन जयैषिणः ॥ १११
पुनश्च मन्त्रपत्राणि संविलिख्य नदीरये।
प्रक्षिपामो वयं गत्वा त्वं चागत्य तथा कुरु ॥ ११२
वेगवत्याः प्रवाहेण यानि कृष्टानि वेगतः।
हेयानि तानि पत्राणि तन्मन्त्राश्च तथाविधाः। ११३
तत्पत्रिणश्चापजिता वयं त्वं चापि बालक।
प्रतिकूलरयं नद्यां यत्पत्रं ग्राह्यमेव तत् ॥ ११४

तत्पत्रवानविजितस्सत्यं श्लाघ्यस्स एव हि।
जेतुस्तस्य भवन्त्वद्य भृत्यास्सर्वे पराजिताः ।। ११५
वयं शिष्या भविष्यामस्त्वज्जये त्वं मतो गुरुः ।
अस्मज्जये सति त्वं च भृत्यो भवितुमर्हसि ।। ११६
इति तद्वाक्यमाकर्ण्य प्राह वैदिकवारणः ।
दासापेक्षा नास्ति मम दाससङ्घवतोऽधमाः ।। ११७
शिवाज्ञयाऽहं जेता चेद्युष्मान् श्रीभस्मदूषकान्।
शूलेष्वारोपयिष्यामि सारदारुमयेष्वलम्।। ११८
तथास्त्वित्यवदंस्ते च क्षपणा विधिचोदिताः ।
अथ तान् वेदबाह्यांस्तु धिग्धिक्शब्दं प्रयुज्य सः ।। ११९
शूलांस्तीक्ष्णाननेकांश्च ज्ञानपूर्णो हसन्मुदा।
राजभृत्यैस्तक्षकाद्यैरयस्कारैरकारयत्।। १२०
आज्ञया तेऽपि शीघ्रेण क्षणाच्छूलानकल्पयन्।
अष्टसाहस्रसङ्ख्यातानधिकान् द्विगुणानपि ।। १२१
भूमौ ते रोपिताः पङ्क्त्या द्रष्टूणामतिभीतिदाः ।
पुनश्च तान् कृपाधीनो नग्नान् वैदिकवारणः ।। १२२
क्षपणान् बोधयामास सत्यया सान्त्वयन् गिरा।
अज्ञा एव भवन्तोऽद्य न जानन्ति हिताहितम्।। १२३
तस्माद्वदाम्यहं कार्यं युष्माकं हितमुत्तमम्।
वेदाः प्रमाणं शास्त्रैश्च इतरे नरकप्रदाः ।। १२४
अतिनिन्द्याः क्षपणता मुखमार्गाः सुदुःखदाः ।
तस्माद्वेदोक्तमार्गेण परलोकहिताय च ।। १२५

रक्षां रुद्राक्षमालां च बिभृद्ध्वं वचनान्मम।
मुक्त्वाऽभिमानं मद्वाक्याद्यूयं मृत्युपदप्रदम्।। १२६
तयोर्धारणमद्यैव कायेन कुरुतार्हताः।
वेदमूलेन सहितं वेदसारं षडक्षरम्।। १२७
जपन्तु भुक्तिमुक्त्यर्थं भवन्तो मन्त्रमैश्वरम्।
कुर्वन्तु सर्वधर्मार्थकाममोक्षप्रसिद्धये।। १२८
अर्हणामपि विष्ण्वाद्यैरर्चितस्य महेशितुः।
एवं वेदोक्तकर्माणि कृत्वा नित्यं विधानतः।। १२९
मुक्तिं लभध्वं परमां सत्य ज्ञानसुखात्मिकाम्।
श्रुतश्चेन्मम सद्वाक्यं विसृजामि वधं विना।। १३०
युष्मान् सर्वानन्यथा चेच्छूलेष्वारोपयाम्यहम्।
इति तद्गिरमाकर्ण्य क्षपणा वेदनिन्दकाः।। १३१
कोपावेशवशात् क्रूरैर्लोचनैस्तं विलोक्य च।
अत्यर्थं भर्त्सयामासुः ज्ञानपूर्णश्च शङ्करम्।
षडक्षरश्च रुद्राक्षं रक्षां मोक्षैकसाधनम्।। १३२
आसन्नकाला दुष्टास्ते प्राहुश्चैनं रुषान्विताः।। १३३
अरेऽर्भक ज्ञानहीन त्वां नयामो यमक्षयम्।
उत्तिष्ठ मन्त्रपत्राणि क्षेपयामो नदीरये।।
तदाह ज्ञानसम्बन्धो राजानमितरानपि।
ध्रुवमेते तु निर्भाग्या न शृण्वन्ति हितं वचः।। १३५
मन्त्रिणा वनितेश्वर्या चोदितस्तत्क्षणेन सः।
सूचीमुखसुतीक्ष्णाग्रानायसान् दारुशूलकान्।। १३६

शम्भुभक्तैरनेकैश्च भूपतेः पुरुषैरपि।
स्थापयामास सुदृढान् भूमिष्वत्यन्तभीतिदान्॥ १३७
ज्ञानपूर्णोऽथ भगवान् श्रीगुहांशः शिवं स्मरन्।
शिष्यैः प्राप नदीतीरं राज्ञा सह च मन्त्रिणा॥ १३८
नग्नास्तु प्रथमं गत्वा वेगाद्वेगवतीं नदीम्।
मन्त्रैश्च मन्त्रयामासुस्तद्वेगपरिशान्तये॥ १३९
अथ ते मन्त्रपत्राणि मन्त्रज्ञा ह्यभिमन्त्र्य च।
तन्नद्यां पातयामासुर्जलस्तम्भादिकोविदाः॥ १४०
तत्क्षणात् ज्ञानपूर्णोऽपि स्वस्य पुस्तकमध्यगम्।
पत्रं चापातयन्नद्यां मीनाक्षीशं शिवं स्मरन्॥ १४१
मीनाक्षीमपि शर्वाणीं सर्वलोकैकमातरम्।
नृपमन्त्रिमुखैस्सर्वैर्दृश्यमानं शिवाज्ञया॥ १४२
तत्पत्रं शरवेगश्च परिगृह्याविलम्बितम्।
सर्वलोकस्य रक्षार्थं प्रययौ पश्चिमां दिशम्॥ १४३
नदीरयातिकृष्टानि वायुवेगयुतानि च।
पत्राणि क्षपणानाञ्च गत्वा प्राचीं दिशं प्रति॥ १४४
जलप्रवाहैश्शीर्णानि गतान्युदधिमञ्जसा।
तं विस्मयं जना दृष्ट्वा सिंहनादं व्यधुर्मुदा॥ १४५
राजा राज्ञी च मन्त्री च शम्भुभक्ता अनेकशः।
ज्ञानपूर्णस्सशिष्याश्च ते सर्वेऽतिमुदं दधुः॥ १४६
नग्नाचार्यास्सशिष्याश्च शोकार्तिविनताननाः।
पराजिता वयमिति प्राहुस्तं वैदिकद्विपम्॥ १४७

तेषां पलायनाभावं प्रति राजाज्ञयाऽभवन्।
एकैकस्य तु चत्वारः पुरुषाः प्रतिरोधिनः ।। १४८
सोऽथ जातदयो भूत्वा दयालुर्वैदिकेश्वरः ।
समकाले प्राप्तमृत्यून् प्राहेति क्षपणान् पुनः ।। १४९
इदानीं वा मम वचो नग्नाश्शृणुत पामराः ।
भवन्तो न त्यजंत्वद्य वृथा प्राणानजा इव ।। १५०
मदुक्तं वचनं श्रुत्वा कर्म कुर्वन्तु वैदिकम्।
भवन्त्विहन्तु पिञ्छाद्यं त्यक्त्वा सर्वं ह्रिया विना ।। १५१
परमं पावनं भस्म धारयंत्वक्षमालया।
भवन्त्वथ कृतार्थाश्च तयोर्धारण मात्रतः ।। १५२
भवन्तो न द्विजा वर्णात् संकराः परमार्हताः ।
आचारे वो नाधिकारो वेदोक्तानाञ्च कर्मणाम्।। १५३
भस्माक्षधारणाद्योग्या यूयं तस्माद्ब्रवीम्यहम्।
इति तद्वाक्यमाकर्ण्य क्षपणाः पापबुद्धयः ।। १५४
जीविताशामपि त्यक्त्वा प्रोचुस्ते मृत्युचोदिताः ।
भीतिं विहाय प्रत्यस्मान् किमत्रोक्तं त्वयाऽर्भक ।। १५५
भस्मस्पृष्टिश्च नस्त्याज्या शक्यं तद्धारणं कथम्।
वदस्येवमकल्याणीं वाचं त्वं प्रभुसंश्रयात्।। १५६
प्रभत्स्यैति ज्ञानपूर्णं दयार्द्रं हितवादिनम्।
स्वयमारुरुहुस्तेऽथ शूलान्नग्नाटदेशिकाः ।। १५७
तत आरोपयामासुः शेषान्नग्नान् शिवाश्रिताः ।
तेषां शिष्याः प्रशिष्याद्या बान्धवाः परिचारकाः ।। १५८

दधुः प्राणभयात् भस्म सद्यः फालेषु लौकिकम्।
भस्माभावे भयात् केचित् तिर्यक्पुण्ड्रं च गोमयैः ॥ १५९
विधाय प्रणतिं चक्रुश्शूलैर्बाधितुमुद्यतान्।
तान् सर्वान्मुमुचुर्ज्ञानसम्बन्धस्याज्ञया भटाः ॥ १६०
अपरे गोमयाभावात् गोवत्सानंसदेशतः।
भस्महेतव इत्युक्त्वा धृत्वा चेरुश्च निर्भयाः ॥ १६१
तान्मुक्त्वा चापरान् शूलैर्बाधयामासुराज्ञया।
ज्ञानपूर्णस्य राजेन्द्रभटाश्शैवाश्च भो द्विजाः ॥ १६२
एवमन्ये बहुविधैरुपायैस्तदपायतः।
रक्षां चक्रुश्चात्मनैव बहुशश्श्रमणाश्रिताः ॥ १६३
भस्मगोमयवत्साद्यैरङ्कितान्नग्नबान्धवान्।
हित्वा स्मान्यान् बाधयन्ति सर्वान् शङ्करकिङ्कराः ॥ १६४
दन्तान्विदर्शयन्तश्च शूलेषु प्रोतवक्षसः।
क्षपणास्ते गतप्राणाः पिशाचा इव भीतिदाः ॥ १६५
शूले प्रलम्बमानाश्च स्थितास्तद्भूप्रदेशके।
खगाश्च गृध्रप्रमुखाः सृगालाद्याः पिशाचिकाः ॥ १६६
अभक्षयन्नशुचिभिर्गन्धैरत्यन्तदूषितान्॥ १६७
यत्राग्नौ ज्ञानसम्बन्धः पत्रं क्षिप्त्वाऽजयच्च तान्।
तत्स्थानमासीत्प्रथितं ज्ञानसम्बन्धमित्यपि॥ १६८
नृपाद्यास्सज्जनास्सर्वेऽसज्जनहरं गुहम्।
ननन्दुर्ज्ञानसम्बन्धं शिरःकम्पैर्हृदा गिरा॥ १६९

पाण्ड्योऽथ परया भक्त्या नत्वा वैदिकवारणम्।
त्वत्पत्रिका नदीक्षिप्ता केत्यपृच्छत्पुनश्च तम्।। १७०
नदीप्रवाहाभिमुखं याता मत्पत्रिकेति सः ।
प्राह सर्वेषु पश्यत्सु सुन्दरेशस्य चाज्ञया।। १७१
श्रुत्वा तद्वचनं ज्ञानपूर्णस्याह नृपश्च तम्।
त्वत्पत्रिकामानय द्राक् स्वामिन् मत्तुष्टये पुनः ।। १७२
स च पाण्ड्यनृपस्येत्थं श्रुत्वा तत्प्रार्थनां बुधः ।
ईशाज्ञया नयिष्यामीत्युक्त्वा पश्चिमतो ययौ।। १७३
पत्रिकाऽप्यथ तेन प्राक् प्रक्षिप्ता विपरीतगा।
अध्यर्द्धयोजनगता तिरोभूता जलान्तरे।। १७४
दृष्टा सा ज्ञानपूर्णेन श्रीगानैश्च निरोधिता।
मग्ना न दृश्यते तत्र स्थितो वैदिकवारणः ।। १७५
नृपश्च तत्स्थले सर्वैर्जनैः पश्यन् स्थितस्तदा।
ज्ञानपूर्णश्च तत्रैव स्थितश्शिष्यैः स्वयं पुनः ।। १७६
राजा तत्पत्रिकां द्रष्टुमुत्सुकोऽप्रार्थयच्च तम्।
गुरुस्सोऽपि ततोऽपश्यत्कांश्चिद्गोपालकान् सुधीः ।। १७७
अत्र देशे विशेषः किमिति तान् पृच्छति स्म सः ।
तेऽपि तद्वाक्यमाकर्ण्य वदन्ति स्म वचो गुरुम्।। १७८
वयं गाः पालयामोऽत्र विशेषः कोऽपि नेक्षितः ।
तैरेवमुक्तोऽपि तदा विस्मितो विमलाशयः ।। १७९
विशेषोऽस्तीति निश्चित्य जगौ गेयानि पङ्क्तिशः ।
महेश्वरानुग्रहेण लिङ्गं माहेश्वरं परम्।। १८०

दृष्टं तेन स्वयंभूतमारादुन्नतभूतले ।। १८१
नद्यास्तीरे चोत्तरे च दृष्टवा प्रीतिकरं शिवम् ।
तल्लिङ्गान्तिकमागत्य वटुर्वैदिकवारणः ।। १८२
भक्त्या प्रदक्षिणीकृत्य नत्वा तत्सन्निधौ स्थितः ।
पाण्ड्योऽप्यनुचरैः सार्धं मन्त्रिणा जायया सह ।। १८३
अतिष्ठत्तत्र देशे तु यत्र वैदिकवारणः ।
स्वयं भूते तत्र लिङ्गे यस्तिष्ठति परः शिवः ।। १८४
तमस्तौषीद्द्रेयवर्यैर्ज्ञानपूर्णश्शिवेक्षकः ।
तेनोक्तगानैस्तुष्टस्सन् परिपूर्णः परः शिवः ।। १८५
अशीतिवृद्धविप्रस्सन् लिङ्गादाविरभूत्तदा ।
भूतिरुद्राक्षधारी च वेदवाक्यं पठन् स्वरैः ।। १८६
तद्भालफालं भस्माङ्कं कृत्वा पञ्चाक्षरेण सः ।
वत्स तुष्टोऽस्मि किन्तेऽद्य दास्यामि वद तन्मम ।। १८७
इत्युक्ते तत्पञ्चशाखं सङ्गृह्य प्रणमन्नमुम् ।
शिव एवेति निश्चित्य महान् मज्जनको ह्ययम् ।। १८८
कम्पमानाखिलाङ्गं तमप्यालिङ्ग्य गुरुः मुदा ।
रक्ष रक्षेत्यवोचत्स ज्ञानसम्बन्धबालकः ।। १८९
आलिङ्गितः सुतेनैवं शिवो वाक्यमथाब्रवीत् ।
वत्स प्रज्ञावतां श्रेष्ठ विद्ययाऽप्यनवद्यया ।। १९०
शम्भुभक्त्या त्वतुलया त्वत्समो न जगत्त्रये ।
ज्योतिर्मयं वपुर्धृत्वा बाल्यावस्थातिकोमलम् ।। १९१

पूर्णचन्द्राभवदनो निष्कलङ्कोऽतिनिर्मलः।
भस्माभिरामफालस्त्वं प्रतिभासि गुहो यथा॥ १९२
स बालश्श्रोत्रपात्राभ्यां पीत्वा तद्वचनामृतम्।
तं वृद्धमीश्वरं ज्ञात्वा प्राह प्रज्ञावतां वरः॥ १९३
दर्शनादेव ते स्वामिन् सर्वं लब्धमभून्मया।
अथापि किञ्चिद्विज्ञाप्यमस्ति तच्छृणु सादरम्॥ १९४
क्षिप्ता नद्यां पत्रिका मे त्वन्तर्द्धिं गमिता त्वया।
मदीयपत्रिका नार्हा सून्वोस्सर्वज्ञयोस्तव॥ १९५
वृद्धस्सर्वज्ञ एव त्वं पत्रिकां तां प्रयच्छ मे।
ददस्व भक्तिं त्वत्पादयुग्मे शङ्कर सर्वदा॥ १९६
राज्ञा सम्प्रार्थितं पत्रं देहि मे शिव सत्वरम्।
कस्माच्चित्कारणाद्राज्ञे दर्शनीयैव पत्रिका॥ १९७
तामादातुं प्रदातुञ्च कः प्रवीणस्त्वया विना।
भक्तियुक्तं युक्तियुतं श्रुत्वा तद्वचनं शिवः॥ १९८
मुदा च दयया युक्तो वृद्धः स्मित्वाऽब्रवीद्वचः।
सर्वज्ञयोर्मत्सुतयोः नार्हा सा पत्रिकेति च॥ १९९
सम्यगुक्तं त्वया वत्स सत्यमेव वचस्तव।
त्वञ्च सर्वज्ञ एवासि गुहांशत्वान्महान् ध्रुवम्॥ २००
वटुस्सन् पटुरेवासि सर्वान् शत्रून्विजित्य च।
संस्थाप्य वैदिकान्धर्मान् जीव त्वं शरदां शतम्॥ २०१
अनुभूयातुलं सौख्यमन्ते गुहमवाप्स्यसि।
श्रीपूर्वज्ञानसम्बन्धमनुगृह्यानुशास्य च॥ २०२

वाङ्मनोगोचरस्तस्य सुन्दरेशः प्रियङ्करः ।
प्रदाय पत्रिकां ताञ्च तस्मिन् लिङ्गे स्वयम्भवे ॥ २०३
अन्तर्दधे वृद्धरूपः सर्वेषामपि पश्यताम् ।
ज्ञानपूर्णोऽतिहृष्टः सन्नृपं वीक्ष्य दयादृशा ॥ २०४
शिवदत्तां ददौ तस्मै पत्रिकां विस्मिताय सः ।
लिङ्गमूर्तिधरश्शम्भुः पत्रिकां वृद्धवेषधृत् ॥ २०५
अत्रागत्य ददौ मह्यमिति प्राह स पाण्ड्यपम् ।
दृष्ट्वा नृपोऽपि तत्सर्वं पत्रिकां प्राप्य वाचयन् ॥ २०६
हृष्टो बभूव नितरां ज्ञानपूर्णं स्तुवन्नमन् ।
श्रुत्वा नृपोऽथ माहात्म्यं तल्लिङ्गस्य स्थलस्य च ॥ २०७
कथापूर्वं कथयतः कस्माच्चिच्छिवयोगिनः ।
श्रीज्ञानसम्बन्धमुखात् प्राप्यानुज्ञाञ्च वै नृपः ॥ २०८
प्रासादं कारयामास राजा श्रीपत्रिकेशितुः ।
महापापप्रशान्त्यै च सर्वकामप्रसिद्धये ॥ २०९
श्रीपत्रिकापुरमिति ख्यातं तच्च महास्थलम् ।
श्रीपत्रिकापुरीशाख्यां चकारेशस्य वै नृपः ।
पुरा क्षपणसिद्धान्तदीक्षयोत्थमहैनसः ॥ २१०
शान्तये पूजयामास राजा श्रीपत्रिकेश्वरम् ।
महापाप प्रशान्त्यै च सर्वकामप्रसिद्धये ॥ २११
मृत्योर्भयविनाशाय संसेव्यः स शिवो जनैः ।
विष्णुना वैनतेयेन शेषेणापि कृतादिषु ॥ २१२

युगेषु पूजितश्शम्भुः कलौ सकलसज्जनैः ।
प्रासादं कारयामास प्राकारद्वारगोपुरैः ।। २१३
पिण्डिकामपि संयोज्य तद्विधिज्ञैर्विधानतः ।
महालिङ्गं पूजयितुं कल्पयित्वा शिवद्विजान् ।। २१४
पुरञ्च तत्र निर्माय जनैस्सर्वैस्सहोषितः ।
कृत्वा च वसतिं स्वस्य सेवयित्वा च तं शिवम् ।। २१५
ज्ञानपूर्णोऽपि भगवान्परिपूज्य च तं शिवम् ।
नतिभिर्नुतिभिर्नित्यमवात्सीत्पाण्ड्यपेन सः ।। २१६
संवत्सरान्ते तत्स्थानान्निर्गत्य सह भूभुजा ।
सम्बन्धनाथस्सम्प्राप जीवन्मुक्तिप्रदां पुरीम् ।। २१७
तत्र राज्ञा च राज्ञ्या च सचिवाद्यैश्च सज्जनैः ।
सम्यक्समाराधितस्सन्वर्तते स्माथ वत्सरम् ।। २१८
शिष्यैष्षोडशसाहस्रैः मुदायुक्तैश्च पूजितः ।
तद्देशस्था जनाः सर्वे शिवसिद्धान्तमाश्रिताः ।। २१९
रुद्राक्षमालां रक्षाञ्च अग्निहोत्रादिसंभवाम् ।
हालास्येशप्रियकरं श्रीमत्पञ्चाक्षरं मनुम् ।। २२०
कायैर्मनोभिर्वाग्भिश्च न त्यजन्ति कदाचन ।
एवं वैदिकमत्तेभः कदम्बवनमाश्रितः ।। २२१
विशेषात्प्रमदं प्राप भग्नीकृत्यार्हतद्रुमान् ।
श्रीहालास्यप्रभुं शम्भुं साम्बं सकलकामदम् ।। २२२
वेदार्थगर्भितैर्गेयैरनेकैस्संस्तुवन्नवैः ।
अवाप्याखिलकामांश्च हालास्येशप्रसादतः ।। २२३

ज्ञानविज्ञानसिद्धस्सन् जीवन्मुक्तदशां गतः ।
अथ हालास्यनाथस्य लब्ध्वाऽनुज्ञां महेशितुः ।। २२४
आपृच्छ्य पाण्ड्यभूपादीन् भक्तान् सम्बन्धनायकः ।
श्रीमद्वेणुवनं गत्वा शिवलिङ्गमयं वरम् ।। २२५
तत्रापि जैनान्निर्जित्य शिक्षयित्वा पुनश्च तान् ।
तस्मिन्नुषित्वा षण्मासान् शिष्यैस्सर्वैः प्रमोदतः ।। २२६
तोषयित्वा वैदिकांश्च स्थापयित्वा च वैदिकम् ।
मार्गमन्यं निरस्याथ शिष्टरक्षणदीक्षितः ।। २२७
सुचेन्द्रादिस्थलेष्वेवं शिवलिङ्गानि वीक्ष्य सः ।
अदृष्टान्यतिचित्राणि पवित्राणि वराणि च ।। २२८
शिवक्षेत्राण्यनन्तानि विशिष्टानि च वीक्षितुम् ।
प्रतीतो गुणविज्ञानैर्ज्ञानपूर्ण उदङ्मुखः ।। २२९
प्राग्दिशं प्राप्य रामेशं वेदारण्येश्वरं तथा ।
वल्मीकेशं त्यागराजं शोणारण्यं तथैव च ।। २३०
शरण्यपुरमासाद्य श्रीवाञ्छश्च महास्थलम् ।
तेजिनीवनमभ्येत्य तेजिनीशं प्रणम्य च ।। २३१
कुम्भघोणमवाप्याथ जप्येश्वरमतो भजन् ।
मध्यार्जुनमथासाद्य ह्यर्जुनेशं प्रणम्य च ।। २३२
वटारण्येशमासाद्य मायूरेशं प्रणम्य च ।
तथाऽमृतघटेशानं श्वेतारण्येश्वरं तता ।। २३३
एवमन्यान्यनेकानि संसेव्य प्रथितानि च ।
सम्प्राप प्रथितैश्शिष्यैः प्राज्ञैः प्रमथसन्निभैः ।। २३४

श्रीमद्ब्रह्मपुरं पुण्यं विजयी वैदिकेश्वरः ।
शिवपादाब्जहृदयं पितरं प्राप्य तं नमन् ।। २३५
तत्रैव वसतिं चक्रे शिवस्थानानि वीक्ष्य सः ।
पाण्ड्योऽपि पुत्रैर्मित्रैश्च कलत्रेण च मन्त्रिभिः ।। २३६
जीवन्मुक्तिपुरे पुण्ये जीवन्मुक्तः स्थितश्च सः ।
मधुरेश्वरपाण्ड्ये च राज्यभारं निधाय सः ।। २३७
राज्ञ्या च वनितेश्वर्या काले कैवल्यमाप्तवान् ।
इति त्रिषष्टिर्लीलेयं विष्टपत्रयविश्रुता ।। २३८
श्रीमद्धालास्यनाथस्य श्रवणाद्भुक्तिमुक्तिदा ।
शिवभक्तिप्रदात्री च हालास्येशप्रसाददा ।। २३९

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये - श्री ज्ञानसम्बन्धेन*
*नग्नानां तरुशूलारोपणं नाम*
*एकोनसप्ततितमोऽध्यायः*

★ ★ ★

## அத்தியாயம் — 69

## 63. சமணர்களைக் கழுவில் ஏற்றுதல்

*குலச் சிறையாரும் மங்கையர்க்கரசியாரும் வேத-சைவமதம் அழிவைத் தடுத்துச் சமணர்களை அடக்க வேண்டினர். சமணரோ எண்ணாயிரம் பேர்கள் கொண்ட கூட்டத்தின் துணையுடன் வசியம் ஆகர்ஷணம், ஸ்தம்பனம் முதலிய அபிசார முறைகளில் மக்களை அடக்கிவைத்துள்ளனர். இங்கு ஓர் ஆண்டு தங்கி அவர்களை அடக்கிய பின் சீர்காழி செல்வீர் என்று வேண்டினர். ஈசனின் அருள் பெற்று இப்பணியில் இறங்க முற்பட்ட ஸம்பந்தர்*

ஆலயம் சென்று பரிவாரங்களுடன் கூடிய ஸுந்தரரை வழிபட்டு வைதிகச் சைவத்தைத் தழைக்கச் செய்யத் தான் ஏற்கும் முயற்சியில் உதவியருள வேண்டினார். இறைவனும் வெற்றி பெற அருள்வாக்கு தந்து, சமணர்களின் இறுதி நேரம் நெருங்கி விட்டதால் அவர்களை வாதிற்கு அழைத்து வெல்வீர். அவர்கள் கழுவில் ஏற்றப்படுவார்கள் எனக் கூறி மறைந்தார். சமணர்களின் கொள்கை பரப்பப்பட்டு மக்களால் ஏற்கப்பட்டால், வேதமும் வேள்விகளும் இறைப்பணிகளும் தடைபெறும். தேவர்கள் வேள்வி மூலம் உணவு பெறுபவர்கள். வேள்விகள் நின்றால் மழையின்றி பஞ்ச மேற்படும். பாபச் செயல் மிகுந்து மக்கள் துன்புறுவர். அரசன் இந்நிலை ஏற்படாமல் தடுக்க முற்பட வேண்டும் என்று நிச்சயித்து அரசனிடம் தெரிவித்தனர். கூன் பாண்டியனுக்கு உதவ இயலாததால் வெளிப்பட்ட சமணரின் பலவீனத்தை மக்கள் உணர்ந்தனர். சமணர்களின் குடும்பத்தினரும் சமணரின் பலவீனத்தைச் சுட்டிக் காட்டி ஒரு சிறுவன் அவர்களை வென்றுவிட்டதை உணர்த்தி அவனை வெல்லாவிடில் வாழக் கூசி உயிர் விடுவதாகத் தெரிவித்தனர். உடன் அக்னிஸ்தம்பம் ஜல ஸ்தம்பம் முதலியவற்றால் ஸம்பந்தரை அடக்க முற்பட்டுக் கிளம்பிய சமணர்களை இரவு கண்ட கெட்ட கனவில் சமணர்களனைவரும் ஸம்பந்தருடன் நடந்த போட்டியில் தோற்றுக் கழுவேற்றப்பட்டதாகக் கண்டதால் சமணருக்குத் தோல்வி நிச்சயம் எனக் கூறி குடும்பத்தினரே சமணர்களை வாதிடச் செல்வதைத் தடுத்தனர். சமணர்களோ வெறியால் வாதிடக் கிளம்பினர். அரசனிடம் ஸம்பந்தருடன் வாதிட அனுமதிக்குமாறு வேண்ட, அரசன் அனுமதி தர ஸம்பந்தரிடம் சென்று'' ''காக்கை உட்காரப் பனம்பழம் விழுவது போன்று எதேச்சையாக கூன் பாண்டியனுக்கு உதவியதைப் பெரிதுபடுத்தாதே. சமணரும் சைவரும் தம் தம் கொள்கைக்கேற்ற மந்த்ரங்களைத் தனித் தனி ஓலையில் எழுதி நெருப்பிலிடுவோம். எது எரியாமல் நிற்கிறதோ அந்த ஓலையை எழுதியவர் வெற்றி பெற்றதாகக் கருதுவோம்'' எனக் கூறி வாதுக்கு இழுத்தனர். அவ்வாறு

செய்யப்பட்டதும் ஸம்பந்தரின் ஓலை எரியாமல் தணல் மீது நின்றது. சமணரது ஓலை சாம்பலாகியது. தோல்வியை ஏற்காமல், அவரவரது ஓலையை வைகையின் நீரோட்டத்தில் போட, எது நீரோட்டத்தை எதிர்த்துச் செல்கிறதோ அதை வென்றதாகக் கொள்ளலாம். தோற்றவர் வென்றவருக்கு அடிமை எனப் பந்தயம் போட்டனர். ஸம்பந்தரோ எனக்குப் பணியாளர் தேவை இல்லை. தோற்றவரை கழுவில் ஏற்றுவேன் என்றார். சமணர்கள் இதனை ஏற்றனர். எண்ணாயிரத்தவருக்கும் சூலங்கள் தயாரிக்கப் பெற்றன. ஸம்பந்தர் பரிவுடன் வேத வழியில் நடைமுறைகளை அமைத்துக் கொள்ளவும் விபூதி ருத்ராக்ஷம் முதலியவற்றைத் தரிக்கவும் ஈசனின் வழிபாட்டில் ஈடுபடவும் அறிவுரை தந்தும் பயனில்லை. சமணர் எறிந்த ஓலைகள் நீரில் மிதந்து கடல் அடைந்தன. சம்பந்தரின் ஓலை நீரோட்டத்தை எதிர்த்துச் சென்றது. அரசரும் அரசியும் மந்திரியும் மக்களும் பேரானந்தமடைந்தனர். சமணர் ஓடி விடாதிருக்க ஒவ்வொருவரையும் நான்கு வீரர்கள் பிடித்துக் கொண்டனர். மறுபடியும் ஸம்பந்தரின் அறிவுரை பயனில்லாமலாக, சமணர்கள் பலர் தாமே கழுவில் ஏறினர். மற்றவர்களை மக்கள் கழுவேற்றினர். சிலர் பயந்து விபூதி தரித்தனர். விபூதி கிடைக்கப் பெறாதவர் கோமயத்தையே தரித்தனர். சிலர் பசுவின் கன்றைத் தோளில் தூக்கி உயிர் தப்பினர்.

நதியில் விடப்பட்ட ஓலைகள் நீரை எதிர்த்துச் சென்ற வழியைக்காண மந்திரிகள் சென்றனர். ஓலை ஓரிடத்தில் நீரில் மறைந்துவிட்டது. சம்பந்தர் ஓலை சென்ற இடத்தைக் கண்டுபிடிக்க, சிவனைப் பதிகம்பாடி மகிழ்விக்க, அங்கு ஒரு சிவலிங்கம் தோன்றிற்று. அதனை வழிபட அதிலிருந்து ஒரு முதியவர் வெளிவந்து சம்பந்தரின் நெற்றியில் பஞ்சாக்ஷர மந்த்ரத்துடன் விபூதி பூசிச் சம்பந்தரை வரம் கேட்கச் சொன்னார். அந்த முதியவர் ஈசனே என உணர்ந்த ஸம்பந்தர் அவரை வணங்கி ''நதியில் போட்ட ஓலையை நீர் ஒளித்து வைத்துள்ளீர். அது எல்லாம் அறிந்த உமது இரு புதல்வர்களுக்கும் பயன்படாது. அதனை எனக்குத்

தந்தருள்வீர். அரசருக்கு அந்தப் பதிகத்தைப் பாடிக் கேட்க ஆசை" என்று கேட்க, அந்த ஓலையைச் சிவன் ஸம்பந்தரிடம் தந்தார். அரசர் அதைக் கண்டு ஆனந்தித்து பத்ரிகாபுரீச்வரர் என இறைவனுக்குப் பெயரிட்டு வழிபட்டார். ஏடு கிடைத்த இடமானதால் பத்ரிகாபுரம் (திரு ஏடகம்) என அந்த இடம் புகழ் பெற்றது. அரசன் அங்கு ஈசனுக்கு ஆலயம் அமைத்தான். ஓராண்டு வரை அங்கு தினந்தோறும் ஈசனை வழிபட்ட ஸம்பந்தர் அரசர், அரசி, மந்திரி முதலானவருடன் மதுரை வந்து சேர்ந்தார்.

அங்கு ஹாலாஸ்ய நாதரின் அனுமதி பெற்று, சிவ க்ஷேத்ரங்களில் பெருமானைத் தரிசித்துப் பாடிப் புகழ்ந்து ராமேச்வரம், வேதாரண்யம், திருவாரூர், திருச்செங்காடு, ஸ்ரீ வாஞ்சியம், திருவீழிமிழலை, கும்பகோணம், திருவையாறு, திருவிடை மருதூர். திருவாலங்காடு, மாயூரம், திருவெண்காடு முதலிய க்ஷேத்திரங்களில் சிவதரிசனம் பெற்றார். கடைசியில் சீர்காழி வந்து தந்தை சிவபாத இதயரை அடைந்து திருவடிகளில் வணங்கி அங்கேயே தங்கினார். ஸுந்தரபாண்டியனும் நன்கு அரசாண்டு தன் மகன் மதுரேச்வர பாண்டியனிடம் அரசை ஒப்படைத்து மங்கையர்க் கரசியுடன் சிவபதமடைந்தான். இது அறுபத்து மூன்றாவது திருவிளையாடல்.

★ ★ ★

## सप्ततितमोऽध्यायः

# ६४. वणिजः कुमार्यर्थे शमीकूपलिङ्गानयनम्

**अगस्त्यः -**

**शम्भुलिङ्गशमीवृक्षकूपान्नीपाटवीश्वरः ।**
**सर्वसाक्षी साक्षिणस्तानारादाहूय दूरगान् ।। १**
**अकरोद्वैश्यवामायाः प्रीतिं कीर्तिञ्च शाश्वतीम् ।**
**ययाऽथ लीलया ताञ्च वक्ष्यामि मुनिपुङ्गवाः ।। २**

आसीद्वैश्यवरश्श्रीमान् कान्तया कमनीयया।
सार्धं सागरतीरस्थे कस्मिंश्चित्सुमनोहरे ।। ३
कावेरीपुरनामाख्ये चोलदेशे द्विजोत्तमाः ।
सर्वाश्च सम्पदस्तस्य पुत्राख्यां सम्पदं विना ।। ४
दिने दिने समैधन्त तरुणेन्दोः कला इव ।
चिरकालतपोभिश्च दानैर्होमादिभिस्तथा ।। ५
लब्धवान् कन्यकामेकां कान्त्या नागाङ्गनामिव ।
भागिनेयः कश्चिदासीत् तस्य वैश्यवरस्य सः ।। ६
न्यवसन्मधुरापुर्यां मानिनां धनिनां वरः ।
तस्मै दातुश्च तां कन्यां स्वस्रीयाय वराय च ।। ७
बन्धुभिस्सह निश्चित्य सुखेनास्त श्रियाऽतुलः ।
कालेनाथ स जीर्णस्सन् देहं हित्वा दिवं गतः ।। ८
तमन्वगाच्च तद्भार्या देहं त्यक्त्वा हुताशने ।
सगोत्रास्सकलत्रस्य सदाचारवतो विशः ।। ९
औध्र्वदैहिककर्माणि सर्वाणि निरवर्तयन् ।
अथ तद्भागिनेयाय मधुरापुरवासिने ।। १०
पत्रिकां प्रेषयामासुरेवं संलिख्य बान्धवाः ।
श्रीमद्गुणनिधे वैश्यवंशमुक्ताफलामल ।। ११
त्वन्मातुलोऽतुलः कीर्त्या सद्गुणेन च सम्पदा ।
व्रतानि चक्रेऽपत्यार्थं सभार्यो दिष्टतत्परः ।। १२
पुत्रं न लेभे सहसा भूयसा तपसा पुनः ।
लब्धवान्कन्यकां काश्चिद्रमामिव मनोरमाम् ।। १३

तस्यान्तु जातमात्रायां ताञ्च सर्वधनानि च।
दातुं समुत्सुकस्तुभ्यमस्मान् प्रत्यवदत्सदा ।। १४
स जीर्णस्त्रिदिवं प्राप तद्भार्या च तमन्वगात्।
तत्त्वयाऽत्र समभ्येत्य तत्सुतां तद्धनानि च ।। १५
परिगृह्य च गन्तव्यं मधुरां मधुरां प्रति।
एवं वाचिकयुक्तां तां प्राप्तामाप्तेन पत्रिकाम् ।। १६
उन्मुच्य वैश्यवर्यस्य पुत्रः स्वयमवाचयत्।
सर्वोदन्तं मातुलस्य विज्ञायैवंविधं सुधीः ।। १७
पञ्चषट्पुरुषैस्सार्धं तद्देशं प्रति निर्ययौ।
दिनैः कतिपयैः प्राप्य सिन्धुतीरं गतं पुरम् ।। १८
तद्ज्ञातिबान्धवांश्चैव दृष्ट्वा सम्मानितश्च तैः।
मनोहरञ्चाध्युवास मातुलस्य तु मन्दिरम् ।। १९
विहाय बन्धुवचनैश्शोकं मातुलमृत्युजम्।
तत्रैव दिवसान् कांश्चिन्निनाय नयकोविदः ।। २०
पाणिग्रहं कुरुष्वेति तैरुक्तोऽखिलबन्धुभिः।
मधुरानगरीमस्मद्बन्धुबृन्दसमन्विताम् ।। २१
प्राप्यैव पाणिग्रहणं करिष्येऽस्या विधानतः।
इति ब्रुवन् समापृच्छ्य बन्धूंस्तान् बन्धुवत्सलः ।। २२
दासीदासगणं सर्वं गोमहिष्यादिवस्तु च।
पुरतः प्रेषयामास यूयं गच्छत चाश्विति ।। २३
प्रेषयित्वाऽथ तान् पश्चादाप्तैरन्यैस्सहैव सः।
कन्यारत्नं च कनकरत्नादीनि वसूनि च ।। २४

आदाय तद्भागिनेयः प्रतस्थे मधुरापुरीम्।
शीघ्रं यातुं न शक्ताऽहं मन्दं मन्दं मया सह ।। २५
गन्तुमर्हसि मन्नाथेत्याह कन्या विशां वरम्।
आगतानात्मना सार्धं बान्धवानपरानपि ।। २६
सत्वरं पुरतो यूयं गच्छतेति व्यसर्जयत्।
प्रत्यहं योजनं मात्रं तया सार्धं शनैश्शनैः ।। २७
गच्छता वैश्यवर्येण मार्गे प्राप्तश्शिवालयः।
तत्र सीसपुरे क्षेत्रे शिवस्यातिमनोहरे ।। २८
तस्मिन् वासं च कृतवान् कन्यापरिजनैस्सह।
लक्ष्मीशाद्यैस्सर्वदेवैः पूजितं लिङ्गमैश्वरम् ।। २९
शेषाद्यैः फणिभिश्चापि सिषेवे च स सादरम्।
तल्लिङ्गसन्निधौ कूपश्शमीवृक्षश्च विद्यते।
सर्वदेवमयो वृक्षस्सर्वतीर्थमयः प्रहिः
तत्कूपशम्बरे स्नात्वा तच्छमीवृक्षमूलगान् ।। ३१
तक्षकादीन्नमस्कृत्य नागानन्यान् बहूनपि
कारयित्वा परिजनैः पाकमन्नादिवस्तु च ।। ३२
भोजयित्वा च तां कन्यां सर्वैः परिजनैरयम्।
स्वयं च भुक्त्वा स्वजनैर्वायुसेवनतत्परः ।। ३३
शिरो निधाय देहल्यां शिश्ये वैश्यो विधेर्वशात्।
शिश्ये सा वैश्यकन्याऽपि मण्टपे स्वजनैस्सह ।। ३४
निशीथे सर्पदष्टस्सन् मृत्युमाप स वैश्यजः।
तदवस्थां गतं दृष्ट्वा मनोहरवपुर्धरम् ।। ३५

हाहेति रोदनं चक्रुः कन्यापरिजना भृशम्।
वक्त्रेषु वक्षस्स्वाताड्य शोकावेशवशेन तु ।। ३६
मुष्टिभ्यां मूर्ध्नि कुर्वन्ती ताडनं केशलुञ्छनैः ।
रुरोद दूरगा भूत्वा शोकार्ता स च कन्यका ।। ३७
प्राणभिक्षां दिशध्वं मे पत्युर्विषहरा जनाः ।
पित्रा मात्रा विहीनाया अहीनायाः कुलादिभिः ।। ३८
माङ्गल्यभिक्षां कृपया ददध्वं मे महत्तमाम्।
इति वीथ्यां रुरोदेयं कन्या श्रोत्रसु दुःखदा ।। ३९
अथ तस्यां निशायां च दैवादागत्य तत्स्थले।
सर्वज्ञो ज्ञानपूर्णाख्यश्श्रीमान् ब्रह्मपुरीं प्रति ।। ४०
गन्तुकामस्स भगवान् तत्र सीसपुरेऽवसत्।
स तु शुश्रावार्धरात्रे क्रोशनं रोदनं भृशम्।। ४१
कर्णशल्यमिवात्यन्तं दुःखदं शृण्वतामपि।
शम्भुभक्त्याऽतुलो बालः पार्वतीस्तन्यपानतः ।। ४२
सर्वज्ञश्शरजन्मैव ज्ञानपूर्णो महत्तमः ।
वैश्यकन्यावैश्यपुत्रभागधेयप्रचोदितः ।। ४३
श्रीमद्धालास्यमुख्यानि शिवक्षेत्राणि वीक्ष्य च।
तत्रागतः शिवं द्रष्टुं यत्र सीसपुरेश्वरः ।। ४४
आर्तस्वरं रोदनं च तस्याः श्रुत्वा स विस्मितः ।
किमेतदिति विज्ञातुं कश्चिच्छिष्यमचोदयत्।। ४५
सोऽपि विज्ञापयामास ज्ञात्वा रोदनकारणम्।
कारुण्यपूर्णहृदयो ज्ञानपूर्णस्त्वनुग्रहम्।। ४६

शोकार्तायाश्च कन्यायां कर्तुमुद्योगवानभूत्।
अविलम्बितमभ्येत्य स मृतं वैश्यपुङ्गवम्।। ४७
दृष्ट्वा च विगतप्राणं कन्यकाया भयङ्करम्।
सुधार्द्रवपुषं साम्बं शम्भुं ध्यात्वा हृदंबुजे।। ४८
भस्मादाय स्वहस्तेन मृत्युञ्जयमनुं जपन्।
पञ्चाक्षरजपञ्चापि नीलकण्ठमनुं स्मरन्।। ४९
मन्त्रितं भस्म चिक्षेप गतप्राणमुखेऽङ्गके।
व्यलोकयत्सुधादृष्ट्या स्वयं गुहमयस्तदा।। ५०
वैश्योऽपि लब्धप्राणस्सन् मन्त्रशक्त्या त्वमोघया।
यथा निद्रावसाने च तथोत्तस्थौ मुदा हसन्।। ५१
प्राणप्रदं प्रशंसन्तो जनास्सर्वे च कन्यया।
प्रणेमुर्दण्डववत् पादपङ्कजद्वयमादरात्।। ५२
कन्यापरिजनाः सर्वे हर्षेण महता युताः।
पुनः सञ्जातजीवस्य चक्रुरालिङ्गनं विशः।। ५३
ऊरुजा साऽभिजाता तु न पस्पर्शाविधानतः।
दृष्ट्वा तद्वंशजाचारं जनाः प्रापुर्महामुदम्।। ५४
ज्ञानेन दयया पूर्णो महान्वैदिकवारणः।
वैश्यवर्यमिति प्राह सञ्जातप्राणमात्मना।। ५५
वैश्यवंशध्वजपट वत्स मद्वचनं शृणु।
भाग्यवद्भागिनेयत्वात् भवान् भाग्यवतां वरः।। ५६
शोभने वाऽशोभने वा सम्प्राप्ते सति कर्मणि।
स्प्रष्टुं तया योग्य एव ध्रुवं मातुलकन्यया।। ५७

तस्मादत्रैव तत्पाणिं गृहाण त्वं विधानतः ।
वचनान्मम विश्वस्य कार्यमेव गुरोर्वचः ।। ५८
इति तद्गिरमाकर्ण्य गुणिनां धनिनां वरः ।
प्रत्युत्तरमुवाचेदमेवं वैदिकवारणम् ।। ५९
न सन्ति बान्धवा ह्यत्र पाणिग्रहणकर्मणि ।
साक्षिणोऽपि न हि स्वामिन् कर्तव्यं कर्म तत्कथम् ।। ६०
इति तस्य वचश्श्रुत्वा कृती वैदिकदेशिकः ।
युक्तियुक्तेन वचसा बोधयामास तं पुनः ।। ६१
जातमात्रा तु सा कन्या मनसा च गिरा पुनः ।
पितृभ्यां ते प्रदत्तेति सर्वे जानन्ति बान्धवाः ।। ६२
अत्र शम्भुशमीवृक्ष कूपास्तिष्ठन्ति साक्षिणः ।
सर्वसाक्षी सुन्दरेशस्सर्वज्ञः परिपूर्णकः ।। ६३
अस्ति सर्वत्र साक्षी सन् तवाप्युद्वाहकर्मणि ।
मधुरायां समेष्यन्ति ज्ञापनाय च साक्षिणः ।। ६४
पातिव्रत्यप्रभावेन स्त्रियास्तव विशां वर ।
त्वया नोल्लङ्घनीयाऽद्य ममाज्ञा त्वद्धितैषिणः ।। ६५
देशोऽपि शम्भोस्सान्निध्याद्विशेषतर ईरितः ।
कालोऽपि लग्नप्राबल्यात् सुतरामुत्तमोत्तमः ।। ६६
सुदेशे च सुकाले च शुभकर्म करोति यः ।
आयुरारोग्यसम्पद्भिस्सार्धं स चिरमेधते ।। ६७
तस्मात्कुरुष्व सहसा तत्पाणिग्रहणं मुदा ।
तवापि सर्वमैश्वर्यं भविष्यति न संशयः ।। ६८

इति लब्ध्वा स तस्याज्ञां तस्य सीसपुरेशितुः ।
सन्निधावकरोत्सद्यस्तत्कन्यापाणिपीडनम् ।। ६९
वेदोक्तेन प्रकारेण विधिना खिलसज्जनैः ।
वैदिकप्रवरो वैश्यं स्वाज्ञाकारिणमास्तिकम् ।। ७०
स्वां पुरीं प्रेषयामास स्वयमेव समाप्य च ।
वैवाहिकं कर्म सर्वमाशीर्भिरभिनन्द्य तम् ।। ७१
सोऽपि वैश्यवरः श्रीमान् कान्तया कमनीयया ।
प्रणिपत्य प्रतस्थे च तं गुरुं वयसा गुरुम् ।। ७२
दासीदासगणैस्सर्धं स्वर्णरत्नादिभिर्धनैः ।
मन्दं मन्दं पथि स्थित्वा सम्प्राप मधुरापुरीम् ।। ७३
तत्र मातुलकन्यायाः स्वस्य वैवाहिकीं क्रियाम् ।
ऊचे बन्धुजनेभ्यस्स तेऽपि श्रुत्वा प्रतुष्टुवुः ।। ७४
तत्र बन्धुजनैः सर्वैः पूजितः प्रीतिसंयुतः ।
प्रियया गुणवत्या च रराजातुलया श्रिया ।। ७५
मातुलस्य धनैस्सर्वैस्स्वकीयैश्च धनैरपि ।
वाणिज्यवर्धितैरन्यैर्धनदेन समोऽभवत् ।। ७६
कालेन लेभे तनयं विनयादिगुणैर्युतम् ।
वनितायां वरेण्यायां जनितायां स्वमातुलात् ।। ७७
पुरोढा वनिता तस्य वर्तते दुर्गुणैर्युता ।
सा सुतान् सद्गुणैर्हीनान् सूते दुष्टशिरोमणीन् ।। ७८
पुत्रास्ते ज्यायसीजाताः कनीयस्यास्सुतेन च ।
पांसुक्रीडां प्रकुर्वाणाः कदाचिन्मातृलालिताः ।। ७९

सज्जनं तं दुर्जनास्ते प्रहृत्यामर्षतो भृशम्।
प्रययुः प्रजवेनैव जनयित्रीं निजां प्रति ।। ८०
कनीयसीतनूजोपि रुदन्मातरमाप्य च।
प्रहारमग्रजकृतमाहाकारणमात्मनः ।। ८१
साऽशपत्त्वां प्रहर्तारो नश्यन्त्विति रुषान्विता।
ज्यायसी तद्वचः श्रुत्वा क्रुद्धा तामित्यभर्त्सयत्।। ८२
का त्वं तव तु का जातिः कस्य वा भवती सुता।
त्वान्तु को वात्र जानाति भर्त्रा त्वं प्रार्थिता न च ।। ८३
वेश्यावन्मम भर्तारं प्राप्ताऽसि विधिना विना।
मद्भर्ता तावकं पाणिं नाग्रहीदग्निसाक्षिकम्।। ८४
त्वत्पाणिग्रहणे कोऽपि साक्षी लोके न विद्यते।
अस्ति चेद्वद वेश्यावत् प्रार्थितो मे पतिस्त्वया।। ८५
त्वं दासी मद्धनं सर्वं धान्यञ्चापि गृहं मम।
स्प्रष्टुञ्च योग्या नैव त्वं पुत्रान् शपसि मे वृथा।। ८६
त्वं भर्तुर्मातुलसुता यदि भर्त्रा च ते करः ।
गृहीतश्चापि विधिना साक्षिणोऽत्रानयाशु नः ।। ८७
एवमुक्ता सपत्न्या सा गुणमुख्या कनीयसी।
मन्दं मन्दञ्च तामाह लज्जावनतकन्धरा।। ८८
प्राणप्रदानदक्षस्य ज्ञानपूर्णस्य योगिनः ।
सन्निधौ विधिवद्भर्त्रा गृहीतो यत्र मत्करः ।। ८९
तत्र सीसपुरे रम्ये समस्तदुरितापहे।
अव्ययाः साक्षिणः सन्ति शम्भुकूपशमीद्रुमाः ।। ९०

स एव सुन्दरेशानस्तत्र लिङ्गस्वरूपवान्।
गङ्गादिसर्वतीर्थैकस्वरूपः कूप उत्तमः ।। ९१
समस्तदेवरूपा सा शमी चाग्निस्वरूपिणी।
इतः परन्तु वक्तव्यं मम नास्ति त्वया सह।। ९२
सर्वं जानाति भर्ता मे क्रूरा त्वं राक्षसी ननु।
मत्पाणिग्रहणे साक्षी कोऽपि नास्तीति कत्थसे।। ९३
सुब्रह्मण्यांशसम्भूतः स च वैदिकवारणः ।
शिष्यैष्षोडशसाहस्रैर्युक्तः क्षपणशिक्षकः ।। ९४
श्रुत्वेति ज्यायसी तस्या वाक्यं प्राह पुनः स्म सा।
साक्षिभिर्मम दूरस्थैः प्रमाणं जायते कथम्।। ९५
साक्षिणश्चेत्समागत्य ते सर्वेऽत्र विशां पुरः ।
यदि व्यक्तीकरिष्यन्ति साक्षित्वं सर्वसम्मतम्।। ९६
तदा भवसि शुद्धा त्वं सतीनाञ्च शिरोमणिः ।
शिवलिङ्गं शमीवृक्षः कूपश्चायान्तु ते त्रयः ।। ९७
अन्यथा त्वन्तु वेश्यैव मम भर्तुर्न संशयः ।
तेन त्वां विधिनाऽनूढां जानन्ति सकला जनाः ।। ९८
श्रुत्वैवं बन्धुतामध्ये सपत्नीवचनं ह्रिया।
कनीयसी विशः पत्नी दुःखेनात्यानतानना।। ९९
भुक्तिं विहाय निद्रां च निनाय बहुचिन्तया।
तद्रात्रिं वत्सरमिव भर्तारं वीक्ष्य मौनिनम्।। १००
अथ प्रातस्समुत्थाय भर्तुः पादौ प्रणम्य सा।
साक्षिणोऽत्रानयिष्यामि सुन्दरेशकृपाबलात्।। १०१

कीर्तिश्च शाश्वती चास्तु मम तेऽपि कुलस्य च।
भर्तुराज्ञां पुरस्कृत्य सर्वं कार्यं स्त्रिया यतः ॥ १०२
गन्तुमीशालयं मेऽद्य देहि चानुमतिं प्रिय।
इति सम्प्रार्थयानान्तां वीक्ष्य पत्नीं यवीयसीम् ॥ १०३
सोऽपि भर्ता सुदुःखार्तस्तथेत्यनुमतिं ददौ।
भर्तुराज्ञामवाप्याथ वैश्यकन्या सुतेन च ॥ १०४
संस्नाय हेमपद्मिन्यां सुमीनाक्षीं प्रणम्य च।
श्रीहालास्यप्रभुं शम्भुं दिव्यलिङ्गाकृतिं शिवम् ॥ १०५
दयासिन्धुं च भक्तानां सर्वापद्भयहारिणम्।
भक्तायत्तं पार्वतीशं भुक्तिमुक्तिप्रदं हरम् ॥ १०६
अनन्तदुःखसिन्धूनां प्रलयानलसन्निभम्।
सत्यज्ञानानन्दमयं सर्वसाक्षिणमीश्वरम् ॥ १०७
प्रणिपत्य रुदन्ती सा प्रार्थयामास शङ्करम्।
शम्भो मन्नाथ सर्वज्ञ समस्ताभीष्टदायक ॥ १०८
कृपालय महेशान पापतूलानलाग्रिम।
श्रीमत्कदम्बकान्तारपुरन्दरविमानग ॥ १०९
त्वदनुग्रहतस्स्वामिन् यद्यहं पतिदेवता।
परिपालय मां देव मम विज्ञापनं शृणु ॥ ११०
सीसग्रामस्थिता अस्मत्पाणिग्रहणसाक्षिणः।
शम्भुकूपशमीवृक्षा अत्रायांत्वविलम्बितम् ॥ १११
श्रीज्ञानपूर्णयोगीन्द्रस्त्वद्भक्तो यदि सत्यतः।
प्रत्यक्षो भव मे स्वामिन् वरदस्सर्वसन्निधौ ॥ ११२

नागतश्चे त्त्रयश्चैतत् त्यक्ष्याम्येव कलेबरम्।
इति सम्प्रार्थितः शम्भुः पतिदेवतया तया ।। ११३
विज्ञाय तस्या व्रीलाञ्च दुःखञ्च करुणानिधिः ।
स्मृत्वाऽथ ज्ञानपूर्णञ्च तत्कृपादृष्टिपाततः ।। ११४
तेनैव स्वयमुद्वाहं कारयित्वाऽस्य वै विशः ।
प्रेषितत्वाच्च तस्यापि स्वस्याभेदत्वतः प्रभुः ।। ११५
श्रीपूर्वज्ञानसम्बन्धयोगिनस्त्वपि चात्मनः ।
कृतार्चायाश्च कन्याया विशः प्रत्यक्षतोऽभवत्।। ११६
सिद्धरूपं समास्थाय मीनाक्षीशः कृपानिधिः ।
स्वयंभूतान्महालिङ्गात् कृपादृष्ट्या विलोक्य ताम्।। ११७
दत्वा चाभयमस्याः स समाहूय पुरस्तदा।
षट्स्थूणमण्टपे तिष्ठन् स्मरन् तत्साक्षिणो मुदा ।। ११८
आहूय दर्शयामास स्वलिङ्गेशानकोणतः ।
दृष्ट्वा त्रितयमेतच्च सीसग्रामात्समागतम्।। ११९
सर्वे जना विस्मितास्ते तया साकं समागताः ।
सेवार्थमागताश्चापि प्रशशंसुः कनीयसीम्।। १२०
दयासमुद्रं मीनाक्षीरमणञ्चापि शङ्करम्।
तस्या भर्ता ज्ञातयश्च निन्दयामासुरुत्क्रुधा ।। १२१
पत्नीं ज्येष्ठां दुर्गुणाञ्च धिक्कारञ्चक्रुरञ्जसा।
शमीवृक्षस्य मूले ये नागास्तक्षकपूर्वकाः ।। १२२
तेऽप्यायातास्सुन्दरेशस्याज्ञया भक्तरक्षकाः ।
सिद्धरूपी सुन्दरेशश्चैवमानाय्य साक्षिणः ।। १२३

तिरोदधे मूललिङ्गे सर्वेषामपि पश्यताम्।
ज्यायसीं ससुतां वैश्यो धिक्कृत्य निरवद्यया ।। १२४
कनीयस्या ससुतया स्वगृहं प्राप बन्धुभिः ।
ज्येष्ठा सा दुर्गुणा सर्वैर्गर्हिता त्याजिताऽभवत् ।। १२५
कनीयसी सुन्दरेशकारुण्यार्द्रकटाक्षतः ।
वीक्षिता कांक्षितार्थांश्च सा लब्ध्वाऽत्यन्तदुर्लभान् ।। १२६
पुत्रेण सकलत्रेण भर्त्रा च श्रीमता सह।
उवास मुदिता भूत्वा कान्त्या च यशसा श्रिया ।। १२७
अन्ते भर्त्रा च सहिता शिवलोकमवाप सा।
कनीयसी पुण्यवती ज्ञानसम्बन्धवीक्षणात् ।। १२८

अगस्त्यः -

चतुष्षष्टितमा लीला चतुष्कूटपूरेशितुः ।
चतुर्दश जगत्ख्याता चतुरा गदिता मया ।। १२९
इमां लीलां चतुष्षष्टितमां भक्त्या शृणोति यः ।
तस्य पापानि नश्यन्ति वह्निना तूलराशिवत् ।। १३०
आयुरारोग्यसौभाग्यपुत्रमित्रादिसंयुतः ।
भुक्त्वाऽत्र विपुला न्भोगान् अन्ते सायुज्यमाप्नुयात् ।। १३१
मीनाक्षीरमणस्य श्रीसुन्दरेशस्य सत्कृपाम्।
लब्ध्वा भक्तिं शाम्भवीश्च ज़न्महीनः शिवं व्रजेत् ।। १३२
बहुनाऽ त्र किमुक्तेन मीनाक्षीशकृपां पराम्।
प्राप्य शम्भोः पादयोश्च निश्चलां भक्तिमाप्नुयात् ।। १३३

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां हालास्यमाहात्म्ये - शम्भुकूपशमीवृक्षानयनं नाम सप्ततितमोऽध्यायः*

★ ★ ★

## அத்தியாயம் - 70

## 64. வணிகனின் பெண்ணிற்கு வன்னிமரம் கிணறு லிங்கம் கொணர்தல்

கடற்கரையோரம் அமைந்த காவேரீ புரத்தில் (காவேரிப் பூம்பட்டினத்தில்) ஒரு வணிகன், வாழ்ந்து வந்தான். பிள்ளைப் பேறில்லாததால் ஈசனை வேண்டினான். ஒரு மகள் பிறந்தாள். அவனது ஸகோதரியின் மகன் மதுரையிலிருந்தான். அவனுக்கே தன் மகளை மணம் செய்விப்பதாக உறவினர்களுடன் கூடி முடிவெடுத்தான். திடீரென அவன் இறந்தான். அவனது மனைவியும் உடன் கட்டையேறினாள். உறவினர்கள் ஈமக் கடனை முடித்து அவனது மருமகனுக்குச் செய்தி அனுப்பி, இறந்தவரின் விருப்பம் நிறைவேற இங்கு வந்து அவரது மகளை மணந்து அவரது செல்வத்தையும் ஏற்கும்படி வேண்டினர். அந்த மருமகன் வந்து தனது உறவினர் கூட இல்லாததால் மதுரைக்குக் கன்னிகையை அழைத்துச் சென்று மணப்பதாகக் கூறினான். உறவினர் இதற்கு ஒப்பக் கொண்டு கன்னிகையை அவனுடன் அனுப்பினர். பணியாட்கள் வணிகனின் செல்வத்தைச் சுமந்து முன் செல்ல இளம் பெண்ணை அழைத்துக் கொண்டு கால் நடையாக மதுரை சென்றான். வழிநடையால் களைத்த இருவரும் நடுவில் ஸீஸபுரத்தில் (திருமருகல்) சிவாலயத்தில் தங்கினர். வன்னிமரம் ஸ்தல வ்ருக்ஷம். அங்குள்ள கிணறு ஒரு புனித தீர்த்தம். நாகர்கள் ஸ்தாபிக்கப்பட்டிருந்தனர். கிணற்று நீரில் நீராடி நாகர்களையும் லிங்கத்தையும் வணங்கி உண்டு உறங்கினர். இரவில் பாம்பு கடித்து மருமகன் இறந்தான். அந்தக் கன்னி ஈசனிடம் தனக்கு மாங்கல்யப் பிக்ஷை தரும்படி

வேண்டினள். மதுரையிலிருந்து சீர்காழி செல்லும் வழியில் திருஜ்ஞானஸம்பந்தர் இறைவனைக் காண அங்குவந்தார். அந்தப் பெண்ணிடம் இரக்கப்பட்டு ஈசனை வேண்டி வணிகனுக்கு உயிருட்டினார். மணமாகாததால் உயிர் பிழைத்து எழுந்த வணிகனைத் தொடாமல் அகன்று நின்று அந்தப் பெண் மகிழ்ந்து ஸம்பந்தரை வணங்கினாள். இதனைக் கண்ட ஸம்பந்தர் விபரமறிந்து வணிகனைக் கன்னிகையை மணக்கப் பணித்தார். உறவினர் முதலான சாட்சிகள் எவருமன்றி மணக்க அவன் விரும்பவில்லை. ''லிங்க வடிவில் உள்ள ஈசனும், தெய்விகமரமான வன்னியும் தெய்வ தீர்த்தமான கிணறுமே இந்தத் திருமணத்திற்கு சாட்சிகள். ஐயமின்றி மணப்பாய்'' என ஸம்பந்தர் கூற வணிகன் இவளை மணந்தான்.

நல்ல இடமும் நேரமும் கூடி, அந்தத் திருமணம் முறைப்படி ஸம்பந்தர் முன்னிலையில் நிகழ்ந்தது. ஸம்பந்தரை வணங்கி ஆசி பெற்று மதுரை வந்து உறவினரிடம் ஸம்பந்தர் முன்னிலையில் நிகழ்ந்த திருமணவிபரத்தை வணிகன் தெரிவிக்க மக்கள் அதனை ஏற்று வாழ்த்தினர். இவர்களுக்கு உரிய நேரத்தில் ஒரு மகன் பிறந்தான். அவன் இதற்குமுன் வேறொருவளை மணந்திருந்தான். அவளுக்கும் புதல்வர்கள் உண்டு. இரு மனைவியரின் குழந்தைகளும் ஒன்று கூடி மணலில் விளையாடினர். மூத்தவளின் பிள்ளைகள் இளையவளின் பிள்ளையை அடித்துவிட்டனர். குழந்தை அழுது கொண்டே தாயிடம் சென்று முறையிட்டதும் அவள் கோபத்தில் ''உன்னையடித்தவர் அழிவார்'' எனச் சபித்தாள். மூத்தவள் கோபமடைந்து ''முறைப்படி மணம் பெறாத வேசி நீ; நீயார், எங்கிருந்துவந்தவள் என எவரும் அறியார். வேசியான உனக்கு இந்த வீட்டில் உரிமை இல்லை. நீ ஒரு பணிப் பெண்.'' என்று நிந்தித்தாள். இளையவளோ ''என் திருமணத்தை நடத்திக் கொடுத்தவர் திருஜ்ஞான ஸம்பந்தர்.' ஸீஸபுரத்தில் (திருமருகலில்) கோவில் கொண்ட ஈசனும் வன்னிமரமும் கிணறும் சாட்சிகள்'' என்றாள். ''அப்படியானால் இங்கு அவர்கள் வந்து சாட்சி கூறட்டும். அவர்கள் வராவிடில் நீ வேசியே'' என்று மூத்தவள் கூற இளையவள் வெட்கி

உணவேற்காமல் தூக்கமின்றி அன்றிரவைக் கழித்துக் காலையில் கணவனை வணங்கிச் சாட்சிகளை அழைத்துவரக் கிளம்பினாள். ஹாலாஸ்யத்தினுட் சென்று பொற்றாமரைக் குளத்தில் நீராடி ஈசனையும் தேவியையும் வணங்கித் தன் நிலையை வெளியிட்டு உதவ வேண்டினாள். "உமது அருள் இருந்தால் ஸம்பந்தரும் லிங்கமும் வன்னிமரமும் கிணறும் இங்கு வந்து சாட்சி கூறட்டும். அவ்விதம் ஆகாவிடில் உம் எதிரிலேயே உயிரை விடுவேன்" என்றாள். திருஜ்ஞான ஸம்பந்தர் மூலமாகத் தாமே அந்தத் திருமணத்தை நடத்தியதை உணர்ந்து ஈசன் ஸித்தர் வேடத்தில் லிங்கத்திலிருந்து வெளிப்பட்டு அவளுக்குஅபயமளித்து ஆறு கால் மண்டபத்தில் இருந்து அந்த சாட்சிகளை மனத்தால் நினைத்தார். லிங்கத்தின் வட கிழக்கில் கிணறும் வன்னிமரமும் லிங்கமும் தோன்றின. அவளுடன் வந்த அவளது உறவினரும் ஊர் மக்களும் இந்த காட்சியைக் கண்டு வியந்தனர். அவளது கணவனும் மற்றவர்களும் மூத்தவளை நிந்தித்தனர். ஸித்தர் மூலலிங்கத்தினுள் மறைந்தார். இனையவள் தன் கணவனுடனும் கூடி வெகுநாட்கள் இனிது வாழ்ந்து சிவபதமடைந்தாள். இது அறுபத்து நான் காவது லீலை.

★ ★ ★

## एकसप्ततितमोऽध्यायः

# ७१. फलश्रुतिः

श्री सूतः -

इति हालास्यनाथस्य लीलास्सर्वा अनुक्रमात्।
प्रोवाच कुम्भसम्भूतो वसिष्ठादिमहात्मनाम्॥ १
ते श्रुत्वा ऋषयस्सर्वे मुक्तिमण्टपसंस्थिताः।
हालास्येशस्य कृपया तस्मिन् भक्तिं परां व्यधुः॥ २

जीवन्मुक्ता बभूवुश्च गुरुं तं कुम्भसम्भवम्।
मत्वा कृतार्था ऋषयो लोपामुद्रासमन्वितम्।। ३
गन्धैः पुष्पैस्सुमेध्यैश्च पूजयामासुरादरात्।
जाम्बूनदमयैः पुष्पैः कल्हारकमलादिभिः ।। ४
पतिव्रताशिरोरत्नं तत्कलत्रञ्च पूजितम्।
प्राज्ञैर्मुनिवरैर्दिव्यैरम्बराभरणादिभिः ।। ५
ततः स कुम्भसम्भूतो वसिष्ठादिमहात्मनाम्।
आशीर्वाग्भिरनन्ताभिरत्यन्तं प्रीतिमातनोत्।। ६
अनुगृह्य कृपादृष्ट्या सोऽन्यान् श्रोतृजनानपि।
तेभ्यः कामानपि ददाविहामुत्र सुदुर्लभान्।। ७
अथात्मनो द्वादशान्ते निष्कलेऽत्यन्तनिर्मले।
श्रीहालास्ये शिवपदे शिवप्राप्त्येकसाधने।। ८
श्री हालास्यप्रभुं शम्भुं शिवं परमकारणम्।
सर्ववेदान्तसंस्तुत्यमशेषपुरुषार्थदम्।। ९
समस्तजगदाधारं लिङ्गमूर्तिधरं हरम्।
आदिमध्यान्तरहितं विभुं सोमं परात्परम्।। १०
निश्चलेन च चित्तेन निर्मलेन विभाव्य च।
अनुभूय शिवानन्दं तन्मयोऽभूत्स कुम्भजः ।। ११
वसिष्ठाद्या मुनिश्रेष्ठा वैभवं सुन्दरेशितुः ।
श्रुत्वा तमीश्वरं द्रष्टुमौत्सुक्यं सुतरां दधुः ।।१२
अथागस्त्ये समाधिश्च विसृज्योन्मीलिते सति।
पुनस्तं प्रार्थयन्ति स्म निखिला मुनिपुङ्गवाः ।। १३

भगवन् कुम्भसम्भूत गुरुभूतस्त्वमेव नः ।
त्वद्गुरुं सुन्दरेशानं दर्शयस्व जगद्गुरुम् ।। १४
वाराणसीमहाक्षेत्रे मणिकर्ण्यास्तटे शुभे ।
हरः प्रत्यक्षतामेत्य चित्तशुद्धिं व्यधाद्धि नः ।। १५
दयावतस्तव मुखराकाचन्द्रविनिःसृतम् ।
जीवन्मुक्तिपुरेशानापदानामृतमद्भुतम् ।। १६
पीत्वा परं सुसन्तुष्टाः कृपया तव सद्गुरो ।
शृण्वतां पठतां भक्त्या जीवतामपि मुक्तिदम् ।। १७
जन्तूनां सुमहाज्ञानपाशमूलहरं परम् ।
परमामृतसम्प्राप्त्यै सर्वैस्सद्भिरुपासितम् ।। १८
श्रीहालास्यं शिवक्षेत्रं श्रवणादपि सिद्धिदम् ।
प्रवेशमात्राज्जन्तूनां जीवन्मुक्तदशाप्रदम् ।। १९
जीवन्मुक्तिपुराख्याश्च बिभ्राणं परदुर्लभाम् ।
सद्यो गन्तव्यमस्माभिर्जीवन्मुक्तिमभीप्सुभिः ।। २०
कृपालो रक्ष रक्षास्मान् दर्शयित्वा च तत्स्थलम् ।
तत्तीर्थाग्र्यं शिवाख्यं च लिङ्गानामादिमं च तत् ।। २१
तापत्रयहरं पुण्यं वसतां प्राणिनां परम् ।
इति सम्प्रार्थितस्सर्वैर्वसिष्ठादिमुनीश्वरैः ।। २२
भगवान् कुम्भसम्भूतो हालास्येशेऽतिभक्तिमान् ।
आनन्दातिशयेनाशु सानन्दाश्रुविलोचनः ।। २३
तथा करिष्य इत्यूचे हर्षगद्गदया गिरा ।
अन्येद्युः प्रातरुत्थाय नित्यकृत्यं विधाय सः ।। २४

मणिकर्ण्यां महातीर्थे विश्वनाथं प्रणम्य च।
विशालाक्षीं विश्वनाथं नत्वा डुण्डिविनायकम्॥ २५
दण्डपाणिं च नत्वाऽथ पुरीं सर्वां विलोक्य च।
नत्वा प्रदक्षिणीकृत्य सर्वैर्मुनिगणैर्वृतः॥ २६
अकरोद्गन्तुमुद्योगं शिवलोकं भुवि स्थितम्।
पतिव्रताशिरोरत्नकलत्रेण च संयुतः॥ २७
तपोविमानमारुह्य सशिष्यस्स नभोऽगमत्।
वसिष्ठादिमुनीन्द्राश्च स्वतपोभिः कृतानि च॥ २८
विमानान्यधिरुह्य द्रागनुजग्मुर्घटोद्भवम्।
आभाति कुम्भसम्भूतस्तैस्समस्तैर्मुनीश्वरैः॥ २९
तारतारापरिवृतो राकाचन्द्र इवाम्बरे।
शिष्यैरनेकैकस्तेजिष्ठैर्भूषितं कुम्भजन्मनः॥ ३०
व्योमयानं वालखिल्यैः भाति भानोर्विमानवत्।
पुष्पितान् पुण्यवृक्षांश्च सुपक्वफलसंयुतान्॥ ३१
पुण्या नदीश्च गङ्गाद्याः सरांसि विविधानि च।
तपोवनानि पुण्यानि सचित्राश्च वनस्थलीः॥ ३२
श्रीशैलप्रमुखान् शैलान् शिवेनाधिष्ठितान् परान्।
प्रासादैर्गोपुरैरुच्चैः प्राकारैश्शोभितानि च॥ ३३
शिवक्षेत्राण्यनन्तानि श्रीमत्काञ्च्यादिकानि च।
विलोक्य विस्मितो भक्त्या मुदा च परया युतः॥ ३४
तेषां माहात्म्यमखिलं वदन् तानि नमन्मुनिः।
श्रीहालास्यशिवक्षेत्रसीमां प्राप महर्षिभिः॥ ३५

श्री हालास्यमहासालं गोपुरैरतिराजितम्।
ददर्श कुम्भसम्भूतश्चक्रवालाद्रिसन्निभम्।। ३६
विमानादवरुह्याशु वसिष्ठाद्यैर्मुनीश्वरैः।
सार्धं प्रणाममकरोत्तस्मै सालवराय सः।। ३७
ततः कदम्बविपिनं शिवस्य मुनिभिस्सह।
गोपुराणि नमश्चक्रे विमानञ्च महाद्भुतम्।। ३८
ततः प्रविविशुः सर्वे जीवन्मुक्तिप्रदां पुरीम्।
जीवन्मुक्ता भवामोऽद्येत्यतिप्रीता मुनीश्वराः।। ३९
ततो वेगवतीं प्राप्य साक्षाद्गङ्गां समागताम्।
पुरा शिरसि शम्भोश्च स्थितां पश्चाच्छिवाज्ञया।। ४०
समागतां नदीरूपां भोगमोक्षप्रदायिनीम्।
समन्त्रं विधिना स्नात्वा तत्र चक्रुर्मुनीश्वराः।। ४१
तर्पणादीनि विधिवद्देवर्षिपितृतृप्तये।
अथोत्तरश्रीहालास्यलिङ्गं संसेव्य चेश्वरीम्।। ४२
नत्वा पुनः पुनःशम्भुं प्रदक्षिणविधानतः।
सप्तसागरतीर्थे च संस्नाय कृततर्पणाः।। ४३
तत्र दत्वा च दानानि भोजयित्वा द्विजानपि।
देवादीनामतिप्रीतिमकुर्वन्मुनिपुङ्गवाः।। ४४
सप्तसागरतीर्थञ्च सागरैस्समधिष्ठितम्।
शिवतीर्थे समायातं महच्छंभुविनिर्मिते।। ४५
कलेरग्रे ह्यादिकाले पूर्वस्यां दिशि चाग्रतः।
स्वस्वनामयुतं सप्तदिक्षु मुक्तिदमात्मनाम्।। ४६

सम्पूज्य प्रणतिं चक्रुस्तीर्थञ्चापि प्रदक्षिणम्।
अथ हेमाब्जिनीतीर्थं प्राप्य कुम्भभवेन ते ।। ४७
सङ्कल्प्याघहरैर्मन्त्रैः संस्नातः शुभभस्मना।
आलिप्याङ्गान्यशेषाणि धृत्वा चैव त्रिपुण्ड्रकम्।। ४८
तथा रुद्राक्षमालाश्च समस्ताघहराः पराः ।
मूर्ध्ना कण्ठेन बाहुभ्यां धृत्वा सर्वे मुनीश्वराः ।। ४९
अभीष्टसिद्धिदं सिद्धिविनायकमुपास्य च।
षडाननं बर्हिवाहं नमस्कृत्य विनुत्य च ।। ५०
सुमीनाक्षीं महादेवीं दृष्ट्वा नत्वा प्रपूज्य च।
प्रदक्षिणक्रमेणैव चण्डेशीं सम्प्रणम्य च ।। ५१
पुनः पुनर्नमस्कृत्वा स्तवैः स्तुत्वा स्तवप्रियाम्।
सुतरां प्रीणयामासुर्मीनाक्षीं मुनिपुङ्गवाः ।। ५२
साऽपि देवी ददौ तेभ्यः प्रत्यक्षीभूय शाङ्करीम्।
भक्तिं स्वपादपद्मे च ऐश्वर्यमणिमादिकम्।। ५३
अथ प्रदक्षिणीकृत्य सुन्दरेशालयं द्विजाः ।
वृषभाग्रे सम्प्रणम्य द्वारपालौ प्रणम्य च ।। ५४
नन्दिकेशाश्च सुयशां नमश्चक्रुर्मुदाऽन्विताः ।
अथ दिव्यविमानस्थं लिङ्गानाञ्च समष्टिकम्।। ५५
आदिलिङ्गं महेशस्य कैवल्याद्भुतरूपिणः ।
दृष्ट्वा भक्त्या परवशा अभवन्मुनिसत्तमाः ।। ५६
अथ प्रणम्य प्रस्तुत्य स्तुत्यं तं सोमसुन्दरम्।
विधिना पूजयामासुः षोडशैरुपचारकैः ।। ५७

पूजां समाप्य सर्वेऽपि ह्यगस्त्यमुनिना द्विजाः।
प्राकारं परिवृत्याद्यं नमस्कृत्वा मुनीश्वराः॥ ५८
श्रीरुद्रैः सम्प्रणम्येशं स्तुत्यं तं सुन्दरेश्वरम्।
स्तोत्रैर्बहुविधैः स्तुत्वा ध्यात्वा लिङ्गञ्च चिन्मयम्॥ ५९
पूजां समाप्य सर्वेऽपि ह्यगस्त्येन समन्विताः।
ईशस्याग्रे वृषेशञ्च नमस्कृत्यातिभक्तितः॥ ६०
सर्वतीर्थाश्रिताण्डञ्च[1] स्पृष्ट्वा तन्नन्दिनश्शुभम्।
मध्ये विषाणयोर्दृष्ट्वे लिंगं विश्वेशितुः शिवम्॥ ६१
हालास्यलिङ्गं मालाभिर्वेष्टितं चोत्पलादिभिः।
सतारं सर्वमन्त्राद्यं पञ्चाक्षरमघापहम्॥ ६२
हरशब्दं पुरस्कृत्य द्विवारञ्च त्रिवारकम्।
उच्चैः सर्वे पठन्ति स्म ध्यात्वा हृदि महेश्वरम्॥ ६३
तेषान्तुष्टः सुन्दरेशो मुनीनां भक्तिपूजनैः।
सुधामयात्स्वयंभूतान्महा लिङ्गाच्चिरन्तनात्॥ ६४

---

1. गौरीशानकृपातिरेकरचिताकारं ककुद्मत्पतिं
कैलासाचलसन्निभं सितरुचिं प्रोत्तुङ्गशृङ्गद्वयम्।
पुच्छप्रान्तविधूतमेघपटलं सद्रत्नघण्टान्वितम्
वन्दे धर्मवृषं वृषध्वजरथं तीर्थाश्रिताण्डं सदा॥

१. सान्तं यान्तं (ओं हर) त्रिवारं प्रणवकसहितं यो ब्रवीति प्रदोषे
पश्यन् देवेशलिङ्गं वृषवृषणकरः शृङ्गमध्ये च दृग्भ्याम्।
सर्वे वेदा अधीताः क्रमपदसहिताः मन्त्रकोटिश्च जप्ता
त्रैलोक्यं तस्य वश्यं भवति च स पुनर्धूतपापोऽनवद्ये इति स्कान्दे।

श्री हालास्यपतिः शम्भुराविरासीत्पुरस्तदा।
कोटिसूर्यप्रतीकाशः सच्चिदानन्दविग्रहः ॥ ६५
वरदाभयहस्ताभ्यां विराजिततनुः शिवः।
परश्वथैणहस्ताभ्यां दिव्यवस्त्रधरो युवा॥ ६६
मीनाक्ष्या सहितः शम्भुर्वृषभोपरि सुस्थितः।
वरदोऽस्मि प्रसन्नोऽहं युष्माकं मुनिपुङ्गवाः॥ ६७
वृणीध्वमिष्टान् दास्यामि वरान् देवसुदुर्लभान्।
इति श्रुत्वा शिवेनोक्तं वचनं मुनिपुङ्गवाः॥ ६८
हर्षाश्रुपूर्णनयनाः स्तुवन्तो नितरां शिवम्।
भक्तिमेव स्थिरतरां वव्रिरे तत्पदद्वये॥ ६९
तेषां स्तवैः शिवस्तुष्ट उवाच मुनिपुङ्गवान्।
युष्मद्भक्तिप्रभावेन भुक्तेर्मुक्तेश्च हेतुना॥ ७०
मया प्रीतेन युष्माकमिह भुक्तिः परत्र च।
दत्ता मुक्तिश्च सायुज्यरूपिणी परमामृता॥ ७१
सर्वलोकहितार्थाय रहस्यं प्रब्रवीमि वः।
भूलोकशिवलोकाख्या मदीयेयं महापुरी॥ ७२
नामतश्चार्थतश्चापि जीवन्मुक्तपुरीति च।
भुक्तिं मुक्तिश्च युगपद्ये वाञ्छन्ति महीतले॥ ७३
निवसन्तीह ते सर्वे श्री हालास्येऽतिपावने।
श्री हालास्यमिदं पापतूलकालानलोपमम्॥ ७४
पापिनोऽपि प्रविश्यात्र जीवन्मुक्ता निरेनसः।
जङ्गमत्वं गता ये च स्थावरत्वञ्च ये गताः॥ ७५

जीवन्मुक्ताश्च ते सर्वे जीवन्मुक्तिपुरीं गताः ।
काश्यादिपुण्यक्षेत्रेषु देहान्ते मुक्तिरीरिता ।। ७६
मुक्ता जीवन्त एवासन् श्री हालास्यपुरे जनाः ।
जीवन्तश्च भवन्तोऽद्य मुक्ता एव मुनीश्वराः ।। ७७
मत्समोऽगस्त्य एवायं तत्पत्नी मत्प्रियासमा ।
तयोः कृपादृग्विषयः को वा संसारदुःखभाक् ।। ७८
शास्त्रे समाधौ नियमे सर्वज्ञोऽगस्त्य एव सः ।
तत्समो न हि लोकेषु मत्स्वरूपविमर्शने ।। ७९
तस्मात्सर्वज्ञता तस्य सर्वानुग्रहकारिणी ।
तत्सर्वज्ञतया यूयं कृतार्थाः एव सत्यतः ।। ८०
मुनीश्वरानिति प्रोच्य कृपालुस्सुन्दरेश्वरः ।
वरदाभयपाणिभ्यामस्पृशत्कुम्भसम्भवम् ।। ८१
मद्भक्तानामग्रगण्य महात्मन् कुम्भसम्भव ।
श्रीहालास्ये सर्वसिद्ध्यै तिष्ठ सर्वैर्मुनीश्वरैः ।। ८२
भुक्तिं विन्दत मुक्तिञ्च त्रिदशैरपि दुर्लभाम् ।
महाक्षेत्रे निवसत हालास्ये नृत्तभूतले ।। ८३
आदिक्षेत्रे मत्स्वरूपे पराशक्तिमये मम ।
इत्युक्त्वा मीननेत्रेशः कृपादृष्ट्या विलोक्य तान् ।। ८४
स्वायम्भवे सुन्दरेशो लिङ्गेऽन्तर्धिमशिश्रयत् ।
मुनीश्वराश्च ते सर्वे कुम्भजेन मुदं पराम् ।। ८५
प्रापुर्दृष्ट्वा ब्रह्म परं सत्यं ज्ञानसुखात्मकम् ।
शिवपुण्येषु सर्वेषु शिवप्रीतिकरेषु च ।। ८६

लिङ्गप्रतिष्ठापुण्यं हि परमं मुनिपुङ्गवाः ।
तत्कुरुध्वं मम स्थान इतीशोक्तं पुरा वचः ।। ८७
स्मृत्वा संस्थापयामासुः शम्भोर्लिङ्गानि तत्स्थले ।
येषां दर्शनमात्रेण भुक्तिर्मुक्तिः करे स्थिता ।। ८८
ऋषिसंस्थापितैर्लिङ्गैः कदम्बवनमैश्वरम् ।
आनन्दकाननमिव भाति शैवपुरं त्विह ।। ८९
भगवान् कुम्भसम्भूतः कदम्बवनमध्यतः ।
प्रतीच्यां सुन्दरेशस्य लिङ्गं संस्थाप्य चार्चयत् ।। ९०
अपरे च वसिष्ठाद्याः सङ्ख्ययाऽष्टसहस्रकाः ।
स्वस्वनाम्ना स्थापितानि लिङ्गान्यभ्यर्च्य सन्ततम् ।। ९१
सुन्दरेशमहालिङ्गं सेवयित्वा त्रिकालतः ।
द्वादशान्तस्थानगतं नटेशं सम्प्रपूज्य च ।। ९२
मीनाक्षीमपि संसेव्य मुक्ताश्चान्ते मुनीश्वराः ।
नित्यत्वपदमाप्ता ये तेऽद्यापि मुनिसत्तमाः ।। ९३
वसन्ति तत्र संपूज्य मीनाक्ष्या सुन्दरेश्वरम् ।
श्रीसूतः -
एवं हालास्यमाहात्म्यं श्रुत्वा भक्त्या मुनीश्वराः ।। ९४
तत्र गत्वा कृतार्थाश्च नित्यानन्दयुजोऽभवन् ।
भवन्तोपि मुनिश्रेष्ठास्तत्र गत्वा मया सह ।। ९५
श्रीहालास्येश्वरं दृष्ट्वा कृतकृत्या भविष्यथ ।
श्रीहालास्ये शिवक्षेत्रे सुन्दरेशोऽम्बया सह ।। ९६

महाकारुणिको भूत्वा सर्वानुगृहकृत्सदा।
चतुष्षष्टिविधा लीलाः कृत्वा नैकविधास्तथा॥ ९७
लिङ्गरूपी महादेव्या मीनाक्ष्या सह राजते।
तथा चिदम्बरेशादिमूर्तिभिश्शक्तिभिस्सह॥ ९८
दक्षिणामूर्तिरूपेण सिद्धभिक्षाटनादिभिः।
तीर्थानां महतां मध्ये ब्रह्माण्डान्तरवर्तिनाम्॥ ९९
हेमपद्माकरं तीर्थं महत्तरमितीरितम्।
मध्ये महेशक्षेत्राणां तद्धालास्यं महत्तरम्॥ १००
महापापहरत्वाच्च महापुण्यप्रदानतः।
मेर्वादिक्षेत्रजातानां लिङ्गानां महतामपि॥ १०१
श्रीहालास्येश्वराख्यश्च मूललिङ्गं महत्तरम्।
परात् परतरं क्षेत्रं तीर्थं लिङ्गञ्च पावनम्॥ १०२
एतत्त्रितयमेकत्र स्थले सम्भूय वर्तते।
लोके तत्त्रितयस्यापि समं वाऽप्यधिकं न हि॥ १०३
क्षेत्रं तीर्थञ्च लिङ्गं वा सत्यं सत्यमृतं पुनः।
विशिष्टतरमाख्यातं त्रितयं सर्वभूतले॥ १०४
तस्मात्स्वात्महितापेक्षी तानि सम्यक् सदाश्रयेत्।
युष्मत्कृतस्य प्रश्नस्य मयोक्तं सम्यगुत्तरम्॥ १०५
विशिष्टतरमाख्यानं स्थलं लिङ्गञ्च शाश्वतम्।
तीर्थञ्च सर्वपापघ्नमेकैकं किं पुनस्त्रयम्॥ १०६
श्रीसूतः-
एतद्धालास्यमाहात्म्यं ये शृण्वन्ति पठन्ति च।
पत्रैः पुष्पैस्समभ्यर्च्य धूपनैवेद्यपूजनैः॥ १०७

पुस्तके नित्यमभ्यर्च्य मीनाक्षीसुन्दरेश्वरौ।
पूजयित्वा ब्राह्मणांश्च मीनाक्षीशः प्रसीदतु।। १०८
इति बुद्ध्या सुन्दरेशभक्तियुक्तसुधीमुखात्।
शृणुयुर्नियमान्नित्यं माहात्म्यं सुन्दरेशितुः ।। १०९
तेषां पापानि नश्यन्ति वह्निना तूलराशिवत्।
शिवः प्रीतो भवेद् देव्या मीनाक्ष्या सुन्दरेश्वरः ।। ११०
इह लोके महाभोगान् भुक्त्वा पुत्रादिसंयुताः।
जीवेयुर्वर्षशतकमाधिव्याधिविवर्जिताः ।। १११
अन्ते विमानमारुह्य दिव्यभोगसमन्विताः।
नन्दन्ति प्रियमोदाद्यैः कैलासेषु शिवप्रियाः ।। ११२
सारूप्यादिपदं लब्ध्वा सायुज्यमपि चाप्नुयुः।
यस्मिन्देशे च शृण्वन्ति माहात्म्यं सुन्दरेशितुः ।। ११३
करोति तत्र सान्निध्यं मीनाक्ष्या सुन्दरेश्वरः।
तं देशं समलङ्कृत्य वितानाद्यैः सुतोरणैः ।। ११४
पुष्पैश्च धूपदीपाद्यैस्तत्र संशृणुयादिदम्।
देवालये नदीतरे मठे वा शुद्धभूतले।। ११५
एकवारं द्वित्रिचतुर्वारं वा शृणुयान्नरः।
जीवन्वर्षशतं साग्रं भोगान् भुक्त्वेह बान्धवैः ।। ११६
चतुर्विधां प्राप्नुयाच्च मुक्तिं सत्यं पुनः पुनः।
हालास्येश्वरमाहात्म्यवक्तारं शिवरूपिणम्।। ११७
सम्भाव्याभ्यर्च्य पुष्पाद्यैर्भोजयित्वा च षड्रसैः।
शृणुयादेकमध्यायं द्वित्रिर्वा नियमेन तु।। ११८

अध्यायार्धं पादमपि शृणुयान्नित्यशः पुमान्।
जीवन्मुक्तो भवेत्सद्यः श्रावकः पाठकोऽपि च ॥ ११९

सुन्दरेशं शिवं ध्यात्वा समाप्तौ पाठकं पुनः।
तुलापुरुषदानाद्यैस्तोषयेद्भूमिपो यदि ॥ १२०

धनी च वित्तशाठ्यञ्च त्यक्त्वा शक्त्या प्रपूजयेत्।
सद्भूहिरण्यवस्त्रादिधनधान्यादिवस्तुभिः ॥ १२१

विचित्रकर्णाभरणैरङ्गुलीयैश्च काञ्चनैः।
पीताम्बरैः पट्टवस्त्रैर्दुकूलैर्नूतनांशुकैः ॥ १२२

पूजयेत्तं देवबुद्ध्या सुन्दरेशार्पणन्त्विदम्।
इति ताम्बूलसहितं धारापूर्वं प्रदापयेत् ॥ १२३

तस्मै दत्तं धनं सर्वं सुन्दरेशार्पितं भवेत्।
शिवस्तस्मिन् सन्निधानं करोत्येवाम्बया सह ॥ १२४

सुन्दरेशस्तस्य वाचि मीनाक्ष्या नृत्यति स्वयम्।
तस्मान्माहात्म्यवक्तारं धनाद्यैस्तोषयेत् बुधः ॥ १२५

तं गुरुं भावयित्वेशं शृणुयाद्भक्तितः कथाम्।
प्रीतो भवति तेषाञ्च सुन्दरेशोऽखिलार्थदः ॥ १२६

मीनाक्षीशप्रीतयेऽथ समाप्तौ भोजयेद्द्विजान्।
सहस्रनामभिश्चार्च्य शताष्टोत्तरनामभिः ॥ १२७

चतुष्षष्ट्या नामभिर्वा तल्लीलावाचकेन तु।
द्वादशाष्टसु सङ्ख्यातनामभिर्वार्च्य सद्द्विजान् ॥ १२८

भोजयेच्छिवभक्तांश्च सुन्दरेशः प्रसीदति।
अन्नसङ्ख्याकवर्षाणि शिवलोके वसेद्गणः ॥ १२९

भक्त्या श्रोता च वक्ता च श्रावकः पूजकस्तथा।
वृजिनानि विहायासौ शिवभक्तिमवाप्य च।। १३०
अनुभूयाखिलं सौख्यमिह लोके परत्र च।
अन्ते सायुज्यरूपाञ्च मुक्तिं सम्प्राप्नुयाद्ध्रुवम्।। १३१
पुनः पुनः फलं प्रोक्तं श्रद्धावृद्ध्यै द्विजोत्तमाः।
यस्मिन्दिने समारब्धं हालास्येश्वरवैभवम्।। १३२
तद्दिनञ्च समारभ्य तत्समाप्तिदिनावधि।
एकैकं वा द्विजं भक्त्या पाठकेन शिवप्रियम्।। १३३
भोजयित्वा च शृणुयात्श्रोता तद्भक्तिसंयुतः।
व्याख्यापीठे समास्तीर्य क्षौमाद्यं नववस्त्रकम्।। १३४
सुन्दरेश्वरमाहात्म्यपुस्तकं तस्य चालयम्।
श्रीमीनाक्ष्याश्च निलयं पट्टसूत्राद्यलङ्कृतम्।। १३५
गन्धैः पुष्पैरर्चयित्वा धूपदीपादिभिस्तथा।
परमान्नादिनैवेद्यैः फलापूपादिसंयुतैः।। १३६
निवेद्य सुन्दरेशाय साम्बं ध्यात्वा फलप्रदम्।
कर्पूरचूर्णसंयुक्तं ताम्बूलञ्च निवेद्य च।। १३७
कृत्वा प्रदक्षिणञ्चापि नमस्कारैस्सहादरात्।
माहात्म्यमखिलं भक्त्या श्रोतव्यं भोगलिप्सुभिः।। १३८
अव्यग्रः शृणुयादित्थमन्यालापविवर्जितः।
एवं संशृण्वतः श्रोत्रे नृत्यतीशस्सहाम्बया।। १३९
श्रूयमाणस्य वै विघ्नं माहात्म्यस्य करोति यः।
मध्ये स सर्वपापैश्च युक्तो निरयमेष्यति।। १४०

सुन्दरेशस्य माहात्म्य श्रोतारो बोधकाश्च ये।
शृण्वन्तमनुमोदन्ते ते सर्वे मुक्तिभागिनः ।। १४१
एवं संशृण्वतां पुंसां भविष्यति महत्फलम्।
उच्चासने गुरुं स्थाप्य श्रोता नीचासनस्थितः ।। १४२
श्रद्धया शृणुयान्नित्यं भावयन् गुरुमीश्वरम्।
एवं नियमसंयुक्तो माहात्म्यं शृणुयाद्यदि ।। १४३
सुन्दरेश्वरभक्तः सन् सर्वान् कामानवाप्नुयात्।
समष्टिविद्यानगरीनाथमाहात्म्यसंश्रवात्।
सर्वक्षेत्रस्य माहात्म्यं श्रुतमेव भवेद्ध्रुवम्।।
एकाद्ध्यायेश्रवणतोऽप्यश्वमेधाधिकं फलम्।। १४५
भविष्यति न सन्देहः श्रोतॄणां भक्तितः सकृत्।
श्लोकैकश्रवणाच्चापि अग्निष्टोमफलं भवेत्।। १४६
इदं हालास्यमाहात्म्यं श्रवणात् सर्वसिद्धिदम्।
मया युष्माकमाख्यातं विख्यातं विष्टपत्रये।। १४७
सर्वपापप्रशमनं सर्वविघ्नविनाशनम्।
सद्यस्सुखकरं पुंसां माहात्म्यं मधुरापतेः ।।
ब्रह्मघ्नो मद्यपः स्वर्णस्तेयी च गुरुतल्पगः ।
तत्संयोगी भ्रूणहन्ता मातृहा पितृहा तथा।। १४९
विश्वासघाती गरदः कृतघ्नो मित्रघातकः ।
अग्निदो गोवधकरो गुरुद्रव्यापहारकः ।। १५०
एवमादिमहापापैर्युक्तश्चाप्युपपातकैः ।
मुच्यते श्रद्धया श्रुत्वा श्रीमद्धालास्यवैभवम्।। १५१

सर्वत्र पूज्यो भवति सर्वत्र विजयी भवेत्।
सर्वत्र सुखमाप्नोति श्रुत्वा माहात्म्यमैश्वरम्।। १५२
चतुष्षष्टिविधाभिश्च लीलाभिरधिकान्द्भुतम्।
हालास्येशस्य माहात्म्यं शृणुयाद्यश्च वै सकृत्।। १५३
श्रावयेद्वापि तद्भक्तान् शम्भुभक्तिपरायणः।
सद्यो निष्पापतामेति देवादीनां प्रियो भवेत्।। १५४
इह भुक्त्वाऽखिलान् भोगान् पुत्रपौत्रादिसंयुतः।
जीवन्मुक्तिमपि प्राप्य शिवसायुज्यमेष्यति।। १५५
हालास्येश्वरमाहात्म्य श्रवणं कुरुते च यः।
पुत्रकामो लभेत् पुत्रं धनकामो धनं लभेत्।। १५६
राज्यकामो लभेद्राज्यं सर्वशत्रुविवर्जितम्।।
भूम्यां सकलतीर्थेषु स्नातस्य सकलं फलम्।। १५७
एकवारश्रवेणैव सत्यमस्य भविष्यति।
महारोगयुतश्चापि रोगात्सद्यः प्रमुच्यते।। १५८
शत्रूणां विजयार्थाय माहात्म्यं सुन्दरेशितुः।
शृणुयाद्यदि सर्वांश्च शत्रून् जेष्यति पार्थिवः।। १५९
बहुनाऽत्र किमुक्तेन यं यं कामं हृदीच्छति।
तं तं काममवाप्नोति कृपया सुन्दरेशितुः।। १६०
हालास्येश्वरमाहात्म्यवक्तारं तं गुरुं बुधः।
सर्वाभरणवस्त्राद्यैरलङ्कृत्य शिवं स्मरन्।। १६१
शिबिकायामथारोप्य गन्धमाल्यादिभूषितम्।
पुरप्रदक्षिणं कृत्वा सर्ववाद्यैस्सुघोषितम्।। १६२

गृहं प्रवेशयेत् श्रोता तस्य चाशिषमाप्य सः ।
सुन्दरेशस्य यजते यत्फलं तदवाप्नुयात् ।। १६३
श्रीमद्धालास्यमाहात्म्यं पठ्यते यत्र सद्द्विजैः ।
तत्र सान्निध्यकृच्छम्भुः सुन्दरेशः सहाम्बया ।। १६४
श्रीमीनाक्ष्या स्वशक्त्या च श्रोतॄणां फलदो भवेत् ।
शृण्वताञ्चैव युष्माकं भक्तिश्श्रीसुन्दरेशितुः ।। १६५
श्री मीनाक्ष्याः पादयोश्च निश्चलाऽस्तु द्विजोत्तमाः ।।
सर्वत्र विजयश्चास्तु युष्माकं सर्वमङ्गलम् ।। १६६
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वे सद्गतिमृच्छन्तु सर्वेषामस्तु मङ्गलम् ।। १६७
वन्दे हालास्यनगरीं वन्दे हेमाब्जिनीमपि ।
वन्दे सुमीननयनां वन्दे सुन्दरनायकम् ।। १६८
इति सम्प्रार्थ्य सर्वज्ञः सूतः सर्वान्मुनीश्वरान् ।
कृपादृष्ट्याऽनुगृह्याथ शिवध्यानपरोऽभवत् ।।

*इति श्रीस्कान्दे महापुराणे अगस्त्यसंहितायां*
*हालास्यमाहात्म्ये चतुष्षष्टिलीलाश्रवणफलकथनं*
*नामैकसप्ततितमोऽध्यायः*

* * *

## அத்தியாயம் -71

## பலனுரை

*காசியில் வஸிஷ்டர் முதலிய முனிவர்கள் பக்தியுடன் அகஸ்தியர் ஸுந்தரேச்வரரது பெருமை பற்றி விளக்கிக்*

கூறியதைக் கேட்டனர். அகஸ்தியருக்கும் அவரது மனைவி லோபாமுத்திரைக்கும் நல்லாடை முதலியவற்றைத் தந்து பாராட்டினர். அகஸ்தியர் தனது ஸஹஸ்ராரத்தில் ஹாலாஸ்யநாதனை ஸுந்தரேசப் பெருமானை சித்தம் நிலைபெற்றவராகத் த்யானித்து ஈசனைக் கண்டார். வஸிஷ்டர் முதலானோரும் இறைவனைத் தரிசிக்க விரும்பினர். அகஸ்தியர் அதனை ஏற்று மறுநாள் மணிகர்ணிகையில் நீராடி விச்வேச்வரர், விசாலாக்ஷி, டுண்டி விநாயகர், தண்ட நாதர் முதலானோரை வழிபட்டு வஸிஷ்டர் முதலானோருடன் விமானத்தில் ஏறி வானம்வழியே பல சிவ க்ஷேத்திரங்களைக் கடந்து ஹாலாஸ்யம் வந்து சேர்ந்தார். சிவனது தலையிலிருந்து பெருகிவெளிவந்த வைகையில் நீராடி வட மதுரை ஈசனை வழிபட்டு ஸப்தஸாகரதீர்த்தத்தில் நீராடி அதனை வலம் வந்து பொற்றாமரைக் குளத்தில் நீராடி விபூதியும் ருத்ராக்ஷமும் தரித்து ஸித்தி விநாயரையும் ஸ்கந்தரையும் மீனாக்ஷியையும் ஸுந்தரேசரையும் துதிகள்பாடி எல்லோரும் ஆனந்தத்துடன் வழிபட்டனர். ஈசனது முன்னுள்ள விருஷபத்தை ஓம் ஹர எனக் கூறி விருஷபத்தின் இரு கொம்புகளுக்கிடையே சிவனைத் தரிசித்துத்துத் துதித்தனர். மூலலிங்கத்திலிருந்து சிவபெருமான் தேவி மீனாக்ஷியுடன் வெளிப்பட்டு அருள்புரிந்தார். ''அகஸ்தியர் தவத்திலும் ஸமாதி நிலையிலும் எனக்குச் சமமானவர். எல்லாம் அறிந்த அவரது வாக்கால் ஹாலாஸ்யத்தின் பெருமையை உணர்ந்த நீங்கள் பாக்கியசாலிகள் எனக் கூறி அகஸ்தியரைத் தம் கைகளால் தொட்டு அருள் புரிந்தார்.

சிவ புண்ணியப் பணிகளில் லிங்கத்தை ஸ்தாபிப்பது மிக மேலானது. வஸிஷ்டர் முதலானோர் எல்லா திக்குகளிலும் லிங்கங்களை ஸ்தாபித்து வழிபட்டு மற்றவரை வழிபடச் செய்தனர்.

ஸூதர் சொல்கிறார் :— முனிவர்களே ! நீங்களும் ஹாலாஸ்யேசரைத் தரிசித்து வாழ்வில் மேனிலை பெறுவீர். அகஸ்தியர் கூறியவாறு க்ஷேத்திரச் சிறப்பும் தீர்த்தச் சிறப்பும் மூர்த்திச் சிறப்பும் கொண்ட க்ஷேத்திரம் வேறில்லை. அகஸ்தியர் கூறிய ஹாலாஸ்ய மாஹாத்ம்யமும் தனிச் சிறப்பு வாய்ந்தது. இதனைக் கேட்பவரும் சொல்பவரும் இதற்கு உதவுபவரும் இம்மையிலும் நல்வாழ்வு, நற்புகழ், ஸந்ததிச் சிறப்பு, நற்செல்வம், நல்ல குடும்பம், என எல்லாம் சிறப்பாக அமைந்து நீடுழி வாழ்ந்து சிவபெருமானது நினைவாலேயே வாழ்நாளைக் கடத்தி மறுமையில் சிவபதம் பெறுவார்கள். இதில் ஐயமில்லை. மாஹாத்ம்யம் கூறுபவரை அகஸ்தியராகப் பாவித்து வணங்கி ஆடை முதலியவற்றால் மகிழ்வித்து ச்ரத்தையும் பக்தியும் கொண்டு சரிதங்களைக் கேட்டு சிவபுண்ணியமாக அன்னதானம் முதலியவற்றால் அனைத்து உயிரினத்திற்கும் உதவி ஈசனிடம் அனைத்தையும் ஒப்படைத்து ஈசன் பணியில் வாழ் நாளைக் கழிக்க வேண்டும். ஈசன் பரிவுமிக்கவர். துன்பம் நீக்கி ஆனந்தம் தருகிற பெருங்கருணை உள்ளவர். அழைப்பவர் குரல் கேட்டு ஓடிவருபவர். அவரை பேரன்புடன் வழிபட்டு அவரது நினைவில் வாழ்வீர். இறைவன் அருள் பாலிப்பார் என்று ஸூதர் கூறி விடைபெற்றார்.

**ஹர ஹர சிவ சிவ**

**முற்றிற்று**

* * *

# अनुबन्धः

## प्रच्छन्नश्रीपुरानुवर्णनम्

(श्रीस्कान्दपुराणे गुरुगीतातः)

पार्वत्युवाच—

कष्टं कष्टं महाकष्टं गर्भवासो महाभयः।
मरणन्तु महाकष्टं पुनर्जन्म ततोऽधिकम्॥ १

संसारो दुष्टरूपः स्याच्छरीरं दुष्टरूपकम्।
संसारबद्धपापीनां मोक्षोपायं वदाशु मे॥ २

रहस्ये च प्रकाशे च कृतपापापनोदनम्।
सम्यग्ब्रूहि महादेव कृपां कुरु मयि प्रभो॥ ३

ईश्वर उवाच—

अथातः सम्प्रवक्ष्यामि पापानां मोक्षहेतुकम्।
प्रिये पापानि नश्यन्ति महादेवेति कीर्तनात्॥ ४

महादेवार्चनात्पापं नश्यते वह्नितूलवत्।
महापापानि नश्यन्ति गुरुपादाब्जवन्दनात्॥ ५

महापातकिपापस्य मोक्षोपायं श्रुतिश्रुतम्।
जम्बूद्वीपस्य मध्ये तु वर्तते मेरुपर्वतः॥ ६

परितः पर्वतेन्द्रस्य चत्वारः पर्वताः स्थिताः।
तेषां मेरोरन्तरालमिलावृतमिति स्मृतम्॥ ७

तद्दक्षिणे तु निषधः पूर्वपश्चिमवारिधिम्।
संस्पृश्य वर्तते तस्य दक्षिणे हरिवर्षकः॥ ८

तद्दक्षिणे हेमकूटाचलो निषधवत् स्थितः ।
तद्दक्षिणे किम्पुरुषवर्षाख्यद्वीप उत्तमः ।। ९

तस्य दक्षिणभागे तु हिमवान् पर्वतोत्तमः ।
तद्गिरौ मेनया सार्धं हिमवान् पर्वतोत्तमः ।। १०

हृत्पद्मे साम्बिकं शंभुं ध्यात्वा तद्गतमानसः ।
तत्काले शाम्भवो योगी दुर्वासास्तपतां वरः ।।११

हिमाचलस्थकेदारनायकं पूजितुं मुनिः ।
आगतस्तत्र तं दृष्ट्वा गिरीशो मेनया सह ।। १२

अप्रणम्याचलस्तूष्णीं स्थितो दुर्वाससं मुनिम् ।
तं शशाप सपत्नीकं गिरिं कोपान्मुनिस्तदा ।। १३

मानुष्यं युवयोर्भूयादिति शप्त्वा ययौ नगात् ।
भीत्वा पर्वतराजेन्द्रो मुनिपादे पुनः पुनः ।। १४

प्रणम्य प्रार्थयामास मुनिं दुर्वाससं गिरिः ।
दयया स मुनिश्शैलं भीतिनम्रं सदारकम् ।। १५

कृपया वीक्ष्य शैलाय प्रतिशापमदान्मुदा ।
भूमौ मनुष्यतां प्राप्य सपत्नीको मदाज्ञया ।। १६

सार्वभौमस्य नृपतेश्शाम्भवस्य सुतो भव ।
त्वत्पितुस्सदृशे वंशे मेनायाश्च जनिर्गिरे ।। १७

तामुद्वाह्य शिवं सोमैरिष्ट्वा ब्राह्मणपुङ्गवैः ।
एकोनशतसंख्याकवाजिमेधैश्शिवाज्ञया ।। १८

चिद्रूपा परमा शक्तिश्शिवस्यार्धाङ्गभागिनी ।
वह्निकुण्डात्समुद्भूय तव पुत्री भविष्यति ।। १९

ब्राह्मेणैव विवाहेन तामुद्वाह्य महेश्वरः ।
तव जामातृभावं च प्राप्य पाण्ड्यो भविष्यति ।। २०

तत्सुखान्यनुभूयान्ते स्वस्थानं प्राप्स्यसि ध्रुवम् ।
इत्यनुग्राह्य दुर्वासाः केदारेशार्चकोऽभवत् ।। २१

अथ पर्वतराजेन्द्रः स्वाचार्यं कण्वमाप्य सः ।
साष्टाङ्गं प्रणिपत्याथ सपत्नीकः स्थितः पुरः ।। २२

वृत्तान्तमखिलं ज्ञात्वा ज्ञानदृष्ट्या ततो मुनिः ।
कण्वः—

पर्वतेन्द्र प्रवक्ष्यामि शृणु वाक्यं हितावहम् ।। २३

तव शापस्तु सर्वेषां लोकानां हित एव हि ।
अद्य वाराणसीं प्राप्य दृष्ट्वाऽगस्त्यं मुनीश्वरम् ।। २४

न्त्वा तेनोक्तमार्गेण गच्छेत्युक्त्वा गुरुर्गतः ।
हिमवान्मेनया सार्धं स्नात्वा गङ्गाम्भसि द्रुतम् ।। २५

विश्वेश्वरं विशालाक्षीमन्नपूर्णाञ्च भैरवम् ।
संपूज्य विधिवद्भक्त्या नत्वा स्तुत्वा यथाविधि ।। २६

विश्वेशदक्षिणे भागे मुक्तिमण्टपमध्यमे ।
निविष्टमृषिसंघैश्च स्तूयमानं घटोद्भवम् ।। २७

लोपामुद्रापतिं दृष्ट्वा गिरिस्सुप्रीतमानसः ।
ननाम पादौ साष्टाङ्गं पञ्चाङ्गं च यथाक्रमम् ।। २८

शापादिवृत्तमखिलमुक्तवान्मुनिसन्निधौ ।
दयादृष्ट्या विलोक्याद्रिमगस्त्यः प्रत्युवाच तम् ।। २९

अगस्त्यः——

दुर्वासशापो लोकानां तव च क्षेमकारकः ।
तस्मादवश्यं भूलोके जनिर्भवतु पर्वत ।। ३०

इत्यगस्त्योदितं श्रुत्वा पर्वतः प्रत्युवाच ह ।
कस्मिन् देशे मम जनिः प्रवक्तव्यं घटोद्भव ।। ३१

इति पर्वतराजेन्द्रवाक्यं श्रुत्वाऽथ कुम्भजः ।
श्रुणु पर्वतराजेन्द्र जन्मस्थानं वदामि ते ।। ३२

लक्षयोजनविस्तीर्णजम्बूद्वीपस्य मध्यमे ।
मेरुस्तद्दक्षिणे शैल त्वच्छैलाभ्यन्तरालके ।। ३३

नवसाहस्रविस्तीर्णे वर्षे भारतसंज्ञके ।
षट्पञ्चाशत्कसंख्याकदेशास्तेषु द्विजादयः ।। ३१

नानाचारसमायुक्ता वर्णाश्रमरताः सदा ।
अग्निहोत्रादियज्ञैश्च सर्वे सोमं सदाशिवम् ।। ३५

इष्ट्वा वसन्ति स्मार्तैश्च ब्रह्मक्षत्रविशो नग ।
शूद्रा व्यासोक्तमार्गेण कुर्वन्ति ब्राह्मणोक्तितः ।। ३६

आगमस्थविधानेन स्थावरेशमुमां तथा ।
शिवार्चनं स्वस्वगे हबाणस्फटिकधातुषु ।। ३७

वैदिका वेदमार्गेण तन्त्रमार्गेण तान्त्रिकाः ।

अङ्ग वङ्ग कलिङ्गदिदेशेषूत्तमदेशकाः ।। ३८

वामनेत्रं चोलदेशो दक्षिणं चेरदेशकः ।
पाण्डयदेशो मध्यनेत्रं ज्योतिर्नेत्रमिति स्मृतम् ।। ३९

तस्मिन् देशेऽस्ति मकुटाभिषेकनृपतिः प्रभुः ।
कुलशेखरपाण्ड्याख्यः शैवाचाररतस्सदा ।। ४०

शिवलिङ्गार्चकश्शान्तः प्रजापालनतत्परः ।
सर्वक्रतुकरो यज्वा सार्वभौमः प्रतापवान् ।। ४१

पुत्रार्थं सुन्दरेशानं श्रीमीनाक्षीं दिने दिने ।
सम्प्रार्थ्य तिष्ठति मुदा मधुरायां नृपोत्तमः ।। ४२

तस्य पाण्ड्यस्य नगरं मधुरापुरनामकम् ।
तस्य माहात्म्यमखिलं मया ज्ञातं न चेतरैः ।। ४३

तस्य माहात्म्यलेशं तु प्रवक्ष्यामि मुदा शृणु ।
चतुष्षष्टिकला विद्याः सिध्यन्ति मधुरापुरे ।। ४४

विधिवाजिसवे शप्तवाण्यंशोद्भूतसज्जिनः ।
अटित्वा सर्वदेशेषु चापुस्ते मधुरापुरीम् ।। ४५

तेषां चित्तं च विद्या च नैर्मल्यमभजद्भृशम् ।
नानादेशोद्भवास्ते तु समवेताः स्थिताश्चिरम् । ४६

व्यष्टिभूतेषु देशेषु समष्टिर्मधुरापुरी ।
चतुष्षष्टिकलासिद्धिस्तपस्सिद्धिश्च जायते ।। ४७

तत्कृतान्यघबृन्दानि नश्यन्ति क्षेत्रवैभवात् ।
तत्क्षेत्रवासिनो मर्त्या जीवन्मुक्ता न संशयः ।। ४८

तद्रहस्यमहं वक्ष्ये सावधानमनाश्शृणु ।
तस्य क्षेत्रस्य पूर्वे तु पुष्पारण्यस्थलं परम् ।। ४९

तद्दक्षिणे तु सत्याद्रिः पश्चाच्छ्रीपत्रिकापुरम् ।
वृषाद्रिरुत्तरे तस्मिन् स्कन्दनूपुरजापगा ।। ५०

लोके नूपुरगङ्गेति प्रसिद्धा वृषपर्वते ।
उपत्यकायां श्रीविष्णुः परस्वामीति विश्रुतः ।। ५१

तत्र स्थितं गुहं ध्यायन् वर्ततेऽद्यापि पर्वते ।
तेषां मध्येऽस्ति मधुरानगरी लोकविश्रुता ।। ५२

तत्रैकं वच्मि शैलेन्द्र रहस्यमतिपावनम् ।
श्रीचक्राकारनगरं मध्ये बिन्दुरिति श्रुतम् ।। ५३

बिन्दुमध्ये सुमीनाक्षी श्यामलापीठमध्यगा ।
बिन्द्वीशो सुन्दरेशाख्यः कामेशो लिङ्गमध्यगः ।। ५४

तद्बहिस्स्थत्रिकोणस्य चाषाढावरणं विदुः ।
तद्बहिष्टाष्टकोणस्य चैत्रवीथीति कथ्यते ।। ५५

तद्बहिष्ट दशाश्रेस्तु श्रावणावरणं स्मृतम् ।
वीथिमध्ये स्थितस्सालस्तस्मादेका द्विधा स्मृता ।। ५६

तद्बहिः स्थितमन्वश्रेमाघावरणसंज्ञकम् ।
बिन्द्वादिमनुकोणान्तं श्रीचक्रं तद्बहिर्नृप ।।५७

दलानां वसुसंख्यानां पुष्यवीथीति कथ्यते ।
तद्बहिष्षोडशारायतनैश्शक्रादिलोकपैः ।। ५८

प्रतिष्ठितानि लिङ्गानि तद्बहिष्टेषु भूधर ।
वृत्तत्रयेषु योगिन्यो भैरवाद्याश्च संस्थिताः ।। ५९

श्रीपुरद्वारदेशेषु पुष्पारण्यादयः स्थिताः ।
श्रीपुष्पवनसत्याद्रिपत्रिकापुरगोऽचलाः ।। ६०

तदन्तः परितस्साला वाटयश्च यथास्थिताः ।
प्रच्छन्नश्रीपुरस्यास्य नामानि बहुधा बुधैः ।। ६१

प्रोक्तानि मधुरानीपविपिनादीनि पर्वत।
चिदम्बरादिक्षेत्रेषु भोगाङ्गे सुन्दरेश्वरः ।। ६२
श्रीचक्राकारहालास्ये कामेशास्सुन्दरेश्वरः ।
कामेश्वर्या सुमीनाक्ष्या नित्यमद्यापि सेव्यते ।। ६३
कालभेदेन देव्यास्तु मूर्तिभेदं वदामि ते ।
प्रातःकाले तु बालाम्बा प्रातस्सङ्गवमध्ययोः ।। ६४
भुवनाऽथ द्वित्रिकालसन्ध्ययोर्गौर्यथाद्रिप।
मध्याह्ने श्यामला मातङ्गी सायाह्नान्तकालके ।। ६५
अर्धयामे पञ्चदशी भोगाङ्गे षोडशी नग।
प्रभाते भोगनिलयाद् देवाविर्भावकालतः ।। ६६
पूर्वं महाषोडशीति विभात्येकाऽष्टधा शिवा।
तस्माद्भोगाङ्गसमये दर्शनं दुर्लभं नृणाम्।। ६७
तद्दर्शनं विना पाशमुक्तिर्नास्तीति निश्चयः ।
प्रच्छन्नश्रीपुरत्वात्तु देव्यर्चां पूर्वमाचरेत्।। ६८
नोचेत्सुन्दरकामेशो नितरां कुपितो भवेत्।
पूजाद्रव्याणि सर्वाणि द्विधा कृत्वा प्रपूजयेत्।। ६९
नैवेद्यञ्च तथा कृत्वा पूर्वं देव्यै समर्पयेत्।
शिवयोः पूजनं कर्तुमशक्तः पूजयेच्छिवाम्।। ७०
कुलागमोक्तपूजा तु हालास्याद्बहिरेव सा।
सिद्धान्तैः कामिकाद्यैश्च शिवयोः पूजनं स्मृतम्।। ७१
न्यासार्चनं प्रकर्तव्यं नवावरणपूजनम्।
अन्यत्सर्वं न कर्तव्यं कामिकाद्युक्तमाचरेत्।। ७२
इति मीनेक्षणायै कामेशेनोक्तं मयोदितम्।
तस्माद्देवीं प्रपूज्याथ सुन्दरेशं यजेत् क्रमात्।। ७३

तस्मात्तत्क्षेत्रसदृशं नास्ति नास्ति नगोत्तम।
कुलशेखरभूपस्य पुत्रो भव मुदा गिरे॥ ७४

त्वत्पत्नी चोलभूपस्य पुत्रीभवतु सत्वरम्।
तामुद्वाह्य मखैरिष्ट्वा स्वराज्यं परिपालय॥ ७५

इत्युक्त्वा कुम्भसम्भूतः शिवध्यानरतोऽभवत्।
कुलशेखरभूपस्य पुत्रत्वं प्राप्तवान् गिरिः॥ ७६

मलयाद्रिस्तस्य देशे ध्वजरूपेण वर्तते।
तद्गिरौ कुम्भसम्भूतः सदाऽऽस्ते वनितायुतः॥ ७७

कुलशेखरभूपालः सदारो ब्राह्मणैस्सह।
जातकर्मादिकं कृत्वा मलयध्वजसंज्ञया॥ ७८

नाम चक्रे द्विजाद्याश्च साधु साध्विति चाब्रुवन्।
चन्द्रवद्वृद्धिमापन्नः कुलशेखरपुत्रकः॥ ७९

गजाश्वारोहणादीनि लिपिभेदांश्च देशिकाः।
बोधयन्ति स्म सर्वं स जग्राह स्वधिया वटुः॥ ८०

राजा स्वगुरुमानीय षष्ठेऽब्दे मौञ्जिबन्धनम्।
कारयित्वाऽथ वेदादिधनुर्वेदश्च कृत्स्नशः॥ ८१

अस्त्रप्रत्यस्त्रमन्त्रांश्च बोधयित्वा यथाक्रमम्।
विवाहाय मतिश्चक्रे चोलस्य तनयां तदा॥ ८२

आनीय स्वाङ्गणे चोळं सपत्नीकं सबान्धवम्।
स्वाचार्यं ब्राह्मणानन्यात् सम्पूज्य च यथाविधि॥ ८३

स्वासनेषूपविष्टेषु ब्रह्मक्षत्रविशादिषु।
वराय मधुपर्कादीन्दत्वा सन्तुष्टमानसः॥ ८४

चोळः काञ्चनमालां तां धारापूर्वमदात्सुताम्।
तां गृहीत्वा यथाशास्त्रं सर्वं कृत्वा त्वसौ मुदा॥ ८५

सिंहासने प्रतिष्ठाप्य पट्टबन्धमथाकरोत्।
ब्रह्मक्षत्रविडादिभ्यो यथार्हं पूज्य भूपतिः ॥ ८६

पुत्रस्य सार्वभौमत्वं दत्वा मुक्तिमवाप सः ।
मलयध्वजपाण्ड्योऽथ सर्वां पृथ्वीमपालयत्॥ ८७

एकोनशतसङ्ख्याक वाजिमेधे शिवाज्ञया।
पुत्रकामेष्टिमध्येऽग्नौ त्रिस्तनी त्र्यब्दरूपिणी ॥ ८८

मीनाक्षी कन्यकारूपा जाता राज्ञोऽग्रतो मुदा।
पत्न्यै दत्वा स तां राजा सन्तोषातिशयान्वितः ॥ ८९

तटातकेति तस्यास्तु नामधेयञ्चकार ह।
राज्याभिषेकं मीनाक्ष्यै कृत्वा स्वर्गमवाप सः ॥ ९०

तटातका सुमीनाक्षी कन्याराज्यभवत्तदा।
दिशो जित्वा सुमीनाक्षी सुन्दरेशमुदूह्य च॥ ९१

कामेशसुन्दरेशाय दत्वा राज्यं स्वकं मुदा।
तस्यैवानुचरी भूत्वा मात्रा देवी स्थिता भृशम्॥ ९२

ईशस्सुन्दरपाण्ड्योऽभूत् नन्द्याद्यास्सेवका भवन्।
श्वश्र्वै काञ्चनमालायै सप्ताब्धीन् स्नातुमानयत्॥ ९३

स्वर्गाच्छ्वशुरमानीय स्नापयित्वाऽथ तौ शिवः।
संवीक्ष्य ताभ्यां सारूप्यं शैवं पदमदान्मुदा॥ ९४

अथ सुन्दरपाण्ड्यस्तु मधुरां परिपालयन्।
षट्षष्ट्यब्दसहस्रान्ते कुमारमभिषिच्य च॥ ९५

उग्रपुत्राय शक्त्यादीन् दत्वान्तर्द्धिं शिवौ गतौ।
तस्माच्छ्रीपुरहालास्यक्षेत्रस्य सदृशं न हि॥ ९६

# மறைந்துள்ள ஸ்ரீபுரம் துரை

*(ஸ்காந்த புராணத்தில் குருகீதையிலிருந்து)*

சிவன் பார்வதிக்கு உபதேசிக்கிறுர். மஹாதேவ என்று கூறுவதாலும் மஹாதேவனை வழிபடுவதாலும் குருவின் திருவடிகளை வணங்குவதாலும் அனைத்து பாபங்களும் நீங்குகின்றன.

ஜம்பூதுவீபத்தின் நடுவே மேருமலை; அதனைச் சுற்றி நான்கு பெருமலைகள். இவற்றின் இடையே இலா வ்ருதம் எனும் வர்ஷம். அதன் தென்புரத்தில் கிழக்குக் கடலுக்கும் மேற்குக் கடலுக்கும் இடையே நிஷதமலை. அதனை ஒட்டி ஹரிவர்ஷம். அதற்கு வெளியே ஹேம கூடமலை. அதற்குத் தெற்கே கிம்புருஷ வர்ஷம். அதற்குத் தெற்கே ஹிமவான்மலை. அந்த மலையில் ஹிமவான் என்ற மலையரசன் மேனை எனும் மனைவியுடன் தேவியுடன் கூடிய சிவனை உள்ளத்தில் தியானித்து வெளி நினைவின்றி இருந்தார். இமயத்திலுள்ள கேதாரேச்வரரை வழிபட வந்த துர்வாஸர் அவரது அருகில் வந்தார். ஹிமவான் அவரைக் கவனிக்கவில்லை. இருவரும் மனிதப்பிறவி பெற முனிவர் சாபமிட்டார். இதனை உணர்ந்த ஹிமவானும் மேனையும் சாபத்திலிருந்து மீள வழிகேட்டனர். ''நல்ல சிவபக்தனுக்கு மகளுகிச் சிவபக்தனுக்குப் பிறக்கிற இவளை மணப்பாய். ஈசனை வேள்விகளால் வழிபடுவாய். ஹோம அக்னி குண்டத்திலிருந்து பராசக்தி தோன்றி உன் மகளாவாள். அவளை மணக்கிற சிவன் உனக்கு மாப்பிள்ளையாகி பாண்டிய அரசனுவார். அதன்பின் இருவரும் இந்நிலை மீண்டும் பெறுவீர்'' என நல்வழி காட்டி, கேதாரம் சென்றுர்.

ஹிமவான் தன் குரு கண்வரை அணுகி வழிகேட்க, காசியில் அகஸ்தியரை அடைந்து அவர் காட்டிய வழியில் செல்ல அனுமதி தந்தார். காசி சென்ற ஹிமவான் விச்வேசனையும் விசாலாக்ஷியையும் அன்னபூர்ணா முதலானவரையும் வழிபட்டு அங்கு தவத்திலிருந்த அகஸ்தியரை வணங்கி துர்வாஸர் சாபத்தால் தாமிருவரும்

பிறக்கவிருக்குமிடத்தைப் பற்றிக் கேட்க. அகஸ்தியர் கூறினார். ''லக்ஷயோசனை பரப்பு பெற்ற ஜம்பூத்வீபத்தில் மேருவிற்கும் உன்மலைக்கும் தெற்கே ஐம்பத்தாறு தேசங்கள் கொண்ட பாரத வர்ஷத்தில் சிவனைப் பல முறைகளில் வழிபடுகின்றனர். அந்த தேசங்களில் சிவனது இடது கண் சோழநாடு. வலது கண் சேரநாடு. நடுக்கண் பாண்டிய நாடு. அது ஜ்யோதிக் கண். பாண்டிய நாட்டில் மகுடம் சூடிப்பட்டாபிஷேகம் பெற்ற குலசேகர பாண்டியனின் தலைநகரம் மதுரை. அது அறுபத்து நான்கு கலைகளும் முழு நிறைவுபெற்ற இடம். அங்கு பிரும்மாவின் அச்வமேதத்தில் பங்கு கொள்ளத் தாமதித்த ஸரஸ்வதி பெற்ற சாபத்தின் விளைவாகத் தோன்றிய சங்கப்புலவர்கள் கூடித் தூய்மைபெற்ற இடம். ஐம்பத்தாறு தேசங்களிலுமுள்ள தெய்வசக்தி ஒருங்கே கூடிய இடம். அது மிகப் புனிதமான க்ஷேத்திரம். அதன் கிழக்கில் புஷ்பாரண்யமும் (திருப்பூவணம்) தெற்கில் ஸத்யமலையும் மேற்கில் ஸ்ரீ பத்திரிகாபுரமும் (திருவேடகம்) வடக்கில் விருஷபமலையும் (திருப்பரங்குன்றம்) அங்கு கந்தரின் கால் சிலம்பிலிருந்து உண்டான நூபுரகங்கையும் உள்ளன. விருஷப மலையில் அடிவாரத்தில் விஷ்ணு பரஸ்வாமி என்ற பெயரில் கோயில் கொண்டுள்ளார். இதன் நடுவே மதுரை அமைந்துள்ளது.

மதுரை ஸ்ரீ சக்ரவடிவில் உள்ளது. அதன் நடுபிந்துவில் தேவி அமர்ந்துள்ளாள். பிந்து தேவியின் பீடங்களில் சிறந்த சியாமளா பீடமாகும். பிந்துவின் ஈசான்யத்தில் ஸுந்தரேசர் என்ற காமேசர் லிங்கத்தினுள் உள்ளார். அதன் வெளியே உள்ள திரிகோணம் ஆடி வீதியாகும். அதன் வெளியில் உள்ள அஷ்டகோணம் சித்திரை வீதியாகும். அதன் வெளியிலுள்ள இருதசாரங்களும் ஆவணி வீதிகளாகும். அதன் வெளியிலுள்ள பதினான்கு கோணம் மாசி வீதியாகும். எட்டு தளங்கள் புஷ்யவீதி. அதன் வெளியில் இந்திரன் முதலான திக்பாலகர்கள் ஸ்தாபித்து வழிபட்ட லிங்கங்கள் அமைந்துள்ள ஷோடசதளம். சுற்றியுள்ள மூன்று வட்டங்களில் யோகினிகளும் பைரவர்களும்

அமர்ந்துள்ளனர். பூபுரத்தின் துவாரங்களில் புஷ்பவனம், ஸத்யாத்ரி, ஸ்ரீ பத்திரிகா நகரம், விருஷபாசலம் அமைந்துள்ளன. இது மறைவாயுள்ள ஸ்ரீபுரம். (ப்ரச்சன்ன ஸ்ரீபுரம்) மதுரை, கடம்பங்காடு என்ற பெயருள்ளது. சிதம்பரம் முதலிய க்ஷேத்திரங்களில் போகாங்கராயிருப்பவர் ஸுந்தரேச்வரர். மதுரையில் போகாங்கர் காமேசுவரர் ஆன ஸுந்தரேச்வரர், காமேச்வரியான மீனாக்ஷி.

மீனாக்ஷி ஒவ்வொரு வேளையிலும் ஒவ்வொரு சக்தியாக விளங்குகிறாள். காலை வேளையில் அவள் பாலாம்பிகா. காலை-ஸங்கவ வேளை இடையே புவனேச்வரி, ஸங்கவ-மத்யான்ஹகால இடைவேளையில் கௌரீ, மத்யான்ன வேளையில் சியாமளா, ஸாயந்த்ர வேளையில் மாதங்கி, அர்த்த யாமவேளையில் பஞ்சதசீ திரிபுரஸுந்தரீ, போகாங்க வேளையில் ஷோடசீ த்ரிபுரஸுந்தரீ போகாங்கத்திற்கும் விடியற் காலைக்கும் இடையே மஹாஷோடசீ என்று எட்டு தோற்றங்களில் காட்சி தருகிறாள். போகாங்கவேளையில் தரிசனம் பெறுவதரிது.

ஸ்ரீபுரமானதால் முதலில் தேவிக்குப்பூஜை. ஸுந்தரேச்வர் அவ்வாறு செய்வதில் அதிகம் மகிழ்கிறார். பூஜைப் பொருளை இருபகுதிகளாக்கி முதல் பகுதியால் தேவியை வழிபட்டுப் பின் இரண்டாம் பகுதியால் சிவனை வழிபடுவர். இருவரையும் தனித்து வழிபட இயலாதபோது தேவியை மட்டும் வழிபடுவதும் போதுமானதே. குலாகம வழிபாடு மதுரைக்கு வெளியே. இங்கு ஸித்தாந்த-காமிகாகம முறைப்படி வழிபாடு. இவ்வாறு வழிபாடு பற்றிக் கூறிய அகஸ்தியர் ''ஹிமவானே ! நீ குலசேகரரின் புதல்வனாவாய். மேனை சோழ அரசனின் மகளாகட்டும் என்று வாழ்த்தி அனுப்பினார். அவ்வாறே குலசேகரனின் மகனாக ஹிமவான் தோன்றினான். மலயமலை பாண்டிய நாட்டின் கொடி போன்றது. அதனால் மலய த்வஜனானான். மலய மலையில் அகஸ்தியர் வசிக்கிறார். மலயத்வஜன் முறையே அவ்வப்போது ஜாதகர்ம முதலிய ஸம்ஸ்காரங்கள் பெற்று வளர்ந்து சோழனின் மகளான காஞ்சன மாலையை

மணந்தான். குலசேகரன் தனது முதுமையில் மலயத்வஜனுக்குப்பட்டம் கட்டி சிவனது நினைவில் சிவனுடன் கலந்தான்.

மலயத்வஜன் புத்திரகாமேஷ்டி செய்ய அதில் மூன்று வயது வளர்ந்த மீனாக்ஷியாக வெளிப்பட்டாள். தடாதகை எனப் பெயரிடப்பட்டது. அவள் வளர்ந்ததும் அவளை அரசியாக்கி மலயத்வஜன் மறைந்தான். தடாதகையை ஸுந்தரேசர் மணந்து, ஸுந்தரபாண்டியனாகி அரசாண்டார்.

★ ★ ★

श्रीशङ्करभगवत्पाद कृतं

## कदम्बवनवासिनी स्तोत्रम् ।

कदंबवनचारिणीं मुनिकदम्बकादंविनीं
नितंबजितभूधरां सुरनितंबिनीसेविताम्।
नवांबुरुहलोचनामभिनवांबुदश्यामलां
त्रिलोचनकुटुम्बिनीं त्रिपुरसुंदरीमाश्रये।। १ ।।

कदंबवनवासिनीं कनकवल्लकीधारिणीं
महार्हमणिहारिणीं मुखसमुल्लसद्वारुणीम्।
दयाविभवकारिणीं विशदलोचनीं चारिणीं
त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये।। २ ।।

कदंबवनशालया कुचभरोल्लसन्मालया
कुचोपमितशैलया गुरुकृपालसद्वेलया।
मदारुणकपोलया मधुरगीतवाचालया
कयापि घननीलया कवचिता वयं लीलया।। ३ ।।

कदंबवनमध्यगां कनकमंडलोपस्थितां
षडंबुरुहवासिनीं सततसिद्धसौदामिनीम्।

विडंबितजपारुचिं विकचचंद्रचूडामबिणिं
त्रिलोचनकुटुंबिनीं त्रिपुरसुंदरीमाश्रये ॥ ४ ॥

कुचांचितविपंचिकां कुटिलकुंतलालंकृतां
कुशेशयनिवासिनीं कुटिलचित्तविद्वेषिणीम् ।
मदारुणविलोचनां मनसिजारिसंमोहिनीं
मतंगमुनिकन्यकां मधुरभाषिणीमाश्रये ॥ ५ ॥

स्मरेत्प्रथमपुष्पिणीं रुधिरबिन्दुनीलांबरां
गृहीतमधुपात्रिकां मधुविघूर्णनेत्रांचलाम् ।
घनस्तनभरोन्नतां गलितचूलिकां श्यामलां
त्रिलोचनकुटंबिनीं त्रिपुरसुंदरीमाश्रये ॥ ६ ॥

सकुंकुमविलेपनामलिकचुंबिकस्तूरिकां
समंदहसितेक्षणां सशरचापपाशांकुशाम् ।
अशेषजनमोहिनीमरुणमाल्यभूषांबरां
जपाकुसुमभासुरां जपविधौ स्मराम्यंबिकाम् ॥ ७ ॥

पुरंदरपुरंध्रिकां चिकुरबंधसैरंध्रिकां
पितामहपतिव्रतां पटुपटीरचर्चारताम् ।
मुकुंदरमणीं मणी लसदलंक्रियाकारिणीं
भजामि भुवनांबिकां सुरवधूटिकाचेटिकाम् ॥ ८ ॥

श्रीनीलकण्ठदीक्षित कृता

## मृद्भरणलीलास्तुतिः

चूडाबद्धभुजंगपुंगवशिरोविन्यस्तपृथ्वीभर-
प्रान्तप्रस्खलितैः कणैः कतिपयैरीषत्करे पूरणे ।

मिथ्यारोपितयत्नगौरवकथाविज्ञापनाचातुरी-
संमुह्यज्जरतीगृहीतशिथिलापूपाय तुभ्यं नमः ।। १ ।।

योगक्षेमभरः समस्तजगतां न्यस्तस्तवाङ्घ्रिद्वये
कुक्षौ त्रीणि जगन्ति मूर्ध्नि शशभृद्गङ्गाकपालस्रजः ।
वोढव्यस्तदुपर्ययं यदि मृदां भारोऽपि गौरीपते
कस्ते मद्भरणे श्रमः क इव मे त्रासस्तदभ्यर्थने ।। २ ।।

हे सन्तः शृणुताधुनैव मिलितैरस्माभिरेतच्छिवे
वाच्यं वेत्रहतिं विभज्य न वयं भोक्तुं समर्था इति ।
नो चेत्पादहतिः शिलाप्रहरणं कोदण्डदण्डाहतिः
गण्डूषोदकसेक इत्यपि भवेत्सर्वं विभाज्यं हि नः ।। ३ ।।

ध्यायंध्यायमुपायकोटिभिरहं त्वत्प्राप्त्युपायं चिरं
निर्विण्णो निरचैषमेकमधुना हालास्यचूडामणे ।
दिष्ट्या वेगवतीतटे यदि पतेदेतद्वपुर्मामकं
संरोहेदपि जातु तत्तटमृदा साकं त्वदीयं शिरः ।। ४ ।।

धूलीधूसरितं शशाङ्कशकलं जम्बालिता जाह्नवी
भग्नं ब्रह्मकपालदाम फणिनो भूषोचिताः क्लेशिताः ।
मृद्भारोद्वहनं कुतोऽभ्युपगतं को वा गुणः पिष्टके
सा दुष्टा जरती किमौषधमदात्तत्रेति न ज्ञायते ।। ५ ।।

पद्भ्यां किं निहतः सुतो दिनमणेर्भग्नाश्चपेटाहतैः
दन्ताः किं तरणेः किमित्यपहृतं धातुः शिरः पञ्चमम् ।
कामं त्वं जगदीश्वरो भव ततः कर्मापि किं जीर्यति
प्रत्यक्षं खलु पाण्ड्यवेत्रलतिकाघातोऽयमासादितः ।। ६

देवा दूरतरं प्रयात मुनयो गृह्णीत मौनं क्षणं
मातुः शंसत मा चिरं गणवरा देवस्य दृष्टां दशाम्।
पुष्पैर्नन्दनसंभवैरपि सुरैर्यन्मन्दमभ्यर्च्यते
तद्दिव्यं वपुरैश्वरं विलुलितं पाण्ड्यस्य वेत्राहतैः ॥ ७ ॥

अम्ब स्विद्यति वक्त्रमम्ब किमपि श्रान्त्या गतिर्मन्थरा
मातः सीदति शंकरे प्रहृतवान्वेत्रेण पाण्ड्यो विभुः।
इत्यावेदयतां मुखादनुपदं श्रुत्वा गणानां शिवा
प्रेमोदीर्णपतिव्रतप्रशमितक्रोधा कथं वर्तते ॥ ८ ॥

त्राणे योऽधिकृतः समस्तजगतां तस्याम्बुराशौ सुखं
निद्राणस्य तथाविधेऽपि समये प्रष्टैव नालक्ष्यते।
विष्टिं कुर्वति ताम्यति श्रमभराद्वेत्राहतिस्त्वय्यभूत्
कस्याग्रे कथयिष्यसीममनयं स्वामिन्ननाथो ह्यसि ॥ ९ ॥

लीलाधारितसिन्धुतीरसिकताभारान्तरालस्थितो
भूयासं मशकोऽप्यहं पशुपते तावच्च नार्हामि किम्।
यत्कीदृग्विधमैश्वरं शिर इति प्रष्टुं प्रवृत्ते विधौ
ईदृक्तादृगिदं तदित्युपदिशंस्तस्यापि च स्यां गुरुः ॥ १०

पाण्ड्यो दण्डयितास्तु पाण्ड्यतनया द्रष्ट्री कथं वर्तते
कामं सा जननी ममैव किमतो युक्तं तु वाच्यं मया।
सव्ये स्थापय मूर्ध्नि मृड्गरममुं सव्यं वपुर्दर्शय
प्राप्ते वेत्रलताहृते च तदनु द्रक्ष्यामि देव्याः स्थितिम्॥ ११

वोढुं प्रवृत्ते त्वयि वेगवत्याः
शीर्षेण शंभो सिकतावितानम्।
भारं द्वयोः पर्यवसन्नमूहे
चित्ते यतीनां शिरसि श्रुतीनाम्॥ १२ ॥

अर्धं पौरुषमर्धमेव भवति स्त्रैणं च यत्तावकं
साम्राज्यं गृहकर्म वा किमपि तन्नायाति निर्व्यूढताम्।
त्वं राज्ञी मधुरापुरस्य दयितस्तत्रैव ते ताड्यते
त्वं मातः स्वयमन्नदासि जगतां कान्तस्तु ते भिक्षते ।। १३ ।।

आखेटधर्ममनुपालयताऽनुभूतः
पार्थप्रहार इति यत्तदवैमि युक्तम्।
आयासवृत्त्यनुगुणां भृतिमप्यविन्दन्
अङ्गीकरोषि किमपार्थममुं प्रहारम्।। १४ ।।

वेत्राहतिं विभक्तुं विश्वात्मकता प्रदर्शिता भवता।
करगतकबलग्रासे पुनरभिनीतं शिवाद्वैतम्।। १५ ।।

वेत्राहतिमतिघोरां विभज्य ये भुञ्जते जना नियतम्।
भवतापतापितेष्वपि तेषूपेक्षैव ते कथं लीला ।। १६ ।।

आनम्यानम्य मौलिं त्वयि किरति मृदं स्रंसते मूर्ध्नि गङ्गा
बद्ध्वाबद्ध्वा कपर्दं स्पृशति फणधरा दारुणं निःश्वसन्ति।
औत्सुक्यात्ताड्यमाने त्वयि जगदखिलं ताड्यते वेत्रयष्ट्या
भक्तस्यैकस्य रक्षा भवति पशुपते सर्वलोकस्य शिक्षा ।। १७ ।।

अस्मत्तो बहुधा गृहीतमधुनाप्यस्मद्भवस्रोतसां
संरोधे न किमप्ययं प्रयतते देवः प्रमाणं ततः ।
इत्यग्रे विनिपत्य पाण्ड्यनृपतेर्ब्रूमो वयं चेत्ततः
कोपात्कोपमुपेयुषः क्षितिपतेः किं भावि संभाव्यताम्।। १८ ।।

वोढव्यानि वहानि ते सुरनदीवेधःकपालादिका-
न्यात्मानं च निवेदयाम्यथ भवद्भक्त्यामृतेनाप्लुतम्।
इत्यभ्यर्थयमानमीषदपि मामप्रेक्षमाणो भवान्
पिष्टापूपकृते मृदं वहसि चेद्देवः प्रमाणं ततः ।। १९ ।।

पाण्ड्येन प्रहृतोऽसि वेत्रलतया पार्थेन गाण्डीवतः
पादेनापि किरातकेन वटुना केनापि च प्रस्तरैः ।
तत्तत्प्रत्युत तेषु तेषु तप इत्यग्राहि मत्पूजने
त्वागांस्येव पदे पदे गणयसे दैवं ममैवंविधम् ।। २१

-शिवलीलार्णवत

श्रीनीलकण्ठदीक्षितकृता

# चतुःषष्टिलीला स्तुतिः

क्व ते दया वाङ्मनसातिभूमिः क्व दुर्लभो वा त्वदवास्त्युपायः ।
अहो जितं सुन्दरनाथ मर्त्यै रहो जितं तत्र च दीनदीनैः ।। १

गुप्तं वृथा कोटिभिरागमानां गुप्तं वृथाहो गुरुभिः पुराणैः ।
कोणे यदत्र त्वमिहानुकम्पाकोशालयद्वारमपावृणोषि ।। २

अस्माभिरज्ञानपि तारयद्भिः कियान्प्रकर्षो विबुधेषु कार्यः ।
इति त्वया चिन्तयता किमीश प्रतारिताः स्मस्त्रिदिवार्पणेन ।। ३ ।।

पाण्ड्यप्रियं त्वां विदती शिवापि पाण्ड्यात्मजासीद्यदि का कथा नः ।
पाण्ड्येषु जायेमहि खञ्जरीटाः कोयष्टयः कोलकिशोरका वा ।। ४ ।।

लीलासु ते लब्धसरूपभावा ग्राम्या इमे पाण्ड्डषु चन्द्रमौले ।
जिघ्रन्ति केचिद्विलिहन्ति केचिच्चर्वन्ति केचिच्च वतंसमिन्दुम् ।। ५ ।।

त्वं तावदत्यन्तमृदुः प्रजासु त्वत्तोऽपि मृद्वी गृहिणी तवेयम् ।
अद्यायतौ वा चरतोः किलैवमात्मैकशेषो भविता ध्रुवं वाम् ।। ६ ।।

कैवल्यदानाय कृतप्रतिज्ञौ काशीपतिः पाण्ड्यपतिर्युवां द्वौ ।
शिष्यैकविश्रान्तममुष्य दानं सार्वत्रिकं तावकमेव शंभो ।। ७

विश्वस्य दीर्घां श्रवणादिभङ्गीं वीतोद्यमाः स्मश्चिरमीश मोक्षे।
संप्रत्यवाबुध्यत वाक्यशेष- पञ्चाक्षरीयं मधुरां विनेति ॥ ८

ये ये जना यद्यदिहार्थयन्ते तत्तन्निरस्तोपधि तेषु तेषु।
ओमित्यलोभादनुजानतः किमोमित्यभिख्यैव तवेयमासीत् ॥ ९

अन्वेषणीयं किमनाहृते ते तत्त्वं हृताः स्मो वयमागमौघैः।
विस्पष्टमत्राहृत एव तत्त्वं वेत्रेण पाण्ड्यस्य यदीक्षितं तत् ॥ १०

स्वरूपमेतत्तव सुन्दरेश शुद्धा दयेत्येव तु लक्षयामः।
कदम्बमूलं तु तटस्थलक्ष्म कारुण्यसिन्धो तव तर्कयामः ॥ ११

यद्धामसीमाक्रममात्र एव वृत्रद्रुहस्तत्कलुषं विलिल्ये।
सकृद्विगाह्यैव यदीयतीर्थे शापं मुनेरिन्द्रगजो मुमोच ॥ १२

नीपाटवीं यः कुलशेखरेण निर्मापयामास च राजधानीम्।
प्राप्ता शिवा पाण्ड्यकुलेऽवतारमनुज्ञया यस्य तटातकेति ॥ १३

उपायत स्वं युधि जेतुकामामुपायतस्तामपि लीलया यः।
पतञ्जलेर्भक्तिमवेत्य नृत्तं प्रादर्शयद्रूप्यसभान्तरे यः ॥ १४

कुण्डोदरस्योदरपूरणेऽपि कुण्ठोद्यमा येन कृतान्नपूर्णा।
नालं पिपासोपशमाय यस्य नदी च सा वेगवती यतोऽभूत् ॥ १५

समाहृताः काञ्चनमालिकायाः स्नानाय येनाम्बुधयः समस्ताः।
महीपतिं यो मलयध्वजं च दिवं गतं दर्शयति स्म पत्नीम् ॥ १६

मीनेक्षणायां सुतमुग्रपाण्ड्यमवाप यः सुन्दरपाण्ड्यदेवः।
तस्मै च यः शक्तिधराय वज्रं चण्डायुधं चक्रमपि व्यतारीत् ॥ १७

उद्वेलमप्यर्णवमुग्रपाण्ड्यो यद्दत्तया शोषयति स्म शक्त्या।
वज्रेण मौलिं बिभिदे मघोनश्चण्डायुधेनापि जघान मेरुम् ॥ १८

आचष्ट यश्चाशयमागमानां जिज्ञासमानेषु तपोधनेषु।
यद्दत्तरत्नाहितमौलिनैव पाण्ड्यार्भको राजपदेऽभिषिक्तः ॥ १९

कपर्दजैर्यस्य घनाघनौघैः पपे पयोधिः परिजृम्भमाणः।
प्राप्तैश्च तैर्यः पटमण्डपत्वमवारयद्वृष्टिमतिप्रवृद्धाम् ॥ २०

सिद्धात्मना यो विततार सर्वाः सिद्धीः प्रजानां मधुरानगर्याम्।
यः सुन्दरेशानविमानसक्तं शिलागजं चाशयदिक्षुकाण्डान् ॥ २१

अस्त्रेण तुर्यावतरेण शौरेर्हस्ती हतो येन तथागतानाम्।
श्वश्रूदुरालापविवासिताया यः प्रादुरासीद्द्विजकन्यकायाः ॥ २२

व्यत्यस्य नृत्तं विदधे दयालुः पाण्ड्यस्य यः प्रार्थनया महत्या।
पान्थद्विजस्त्रीवधपापवादं व्याजेन यो व्याधवटोरहार्षीत् ॥ २३

स्वमातृजारं पितृघातिनं च विप्राधमं यो विमलीचकार।
अङ्कस्य भार्याहरमस्त्रशिष्यमङ्कात्मनैवाजयदाहवे यः ॥ २४

मायोरगं यः शमयांबभूव मायागवीं यस्य पुनर्महोक्षः।
यःपाण्ड्यसेनान्यमनुग्रहीतुं संदर्शयामास चमूं नृपालम् ॥ २५

पाण्ड्याय यः प्रादित हेम यश्च वैश्याङ्गनाभ्यो वलयान्दयार्द्रः।
अष्टापि सिद्धीः प्रतिपादयन्यो यक्षाङ्गनासु प्रससाद भूयः ॥ २६

द्वारं समुद्धाट्य निशि स्वयं यश्चोलाय सेवामदिशन्निगूढम्।
पानीयदानेन च पाण्ड्यसेनामुज्जीव्य चोलेन्द्रमजापयद्यः ॥ २७

स्वर्णं दिशन्सिद्धरसं प्रयुज्य पुपोष वेश्यां शिवधर्मिणीं यः।
पाण्ड्यस्य यः स्वैकपरायणस्य सादीभवन्साधयति स्म चोलम् ॥ २८

अक्षय्यमप्यक्षतमर्पयन्यो भक्ताय भक्तार्पणमन्वगृह्णात्।
येनादृतो मातुलरूपभाजा वैश्यो वदुर्ज्ञातिजनान्विजिग्ये ॥ २९

आस्थाय यश्चार्जुननाथलिङ्गं पाण्ड्ये महत्पातकमुन्ममार्ज।
काष्ठानि मूर्ध्ना कलयन्न्यधत्त काष्ठां परां गायति यः स्वभक्ते॥ ३०

भद्राय भूरि द्रविणं दिशेति पत्रं ददौ चेरमहीभुजे यः।
भद्राय दिव्यं फलकं दिदेश वृष्टौ महत्यामपि गायते यः॥ ३१

द्वीपान्तरीयामवमापि गीत्या भद्रा विजिग्ये यदनुग्रहेण।
वाराहमास्थाय वपुर्ददौ यः स्तन्यामृतं कोलकिशोरकाणाम्॥ ३२

प्रापय्य मानुष्यकमद्भुतं यः पाण्ड्यस्य तान्मन्त्रिपदेऽभ्यषिञ्चत्।
यः खञ्जरीटं शरणं प्रपन्नं चक्रे बलिभ्यो बलिनं खगेभ्यः॥ ३३

जहार कोयष्टिमनुग्रहीतुं यादांसि यः काञ्चनपङ्कजिन्याः।
कल्पान्तलुप्तां कटकाहिना यः सीमां विवव्रे मधुरानगर्याः॥ ३४

प्राद्रावयत्पाण्ड्यकृतेऽरिसेनां बाणैः स्वनामाक्षरलाञ्छितैर्यः।
दुरासदं दुष्कविभिः स्वयं यः प्रादाद्विचित्रं फलकं कवीनाम्॥ ३५

पाण्ड्यस्य चिन्तानुगुणं निबध्य पद्यं ददौ यश्च निजार्चकाय।
विद्याविवादे विहितातिवादं कीरं कविं यः पुनरन्वगृह्णात्॥ ३६

अपि स्वयं कुम्भभवेन यस्तमबोधयद्द्रामिडसूत्रतत्त्वम्।
व्यवेचयन्मूकमुखेन यश्च तत्तत्कृता द्रामिडसूत्रवृत्तीः॥ ३७

भक्ते कवौ क्वापि विमाननेन पाण्ड्याय कुप्यन्नगराद्ययौ यः।
दाशो भवन्दाशकुलेऽवतीर्णां जग्राह पाणौ जगदम्बिकां यः॥ ३८

आचार्यमूर्तिं परिगृह्य नम्रमदीक्षयद्वातपुरीश्वरं यः।
अदर्शयद्यस्तुरगान्सृगालानभ्यर्थितो वातपुरीश्वरेण॥ ३९

प्रावर्तयद्वेगवतीमथैनं पाण्ड्येन यः पालयितुं निरुद्धम्।
विश्वात्मतां यो विशदीचकार वेत्राहतिं स्वां भुवने विवृण्वन्॥ ४०

संबन्धनाथस्य मुखादकार्षीच्छान्तं ज्वरं पाण्ड्यमहीपतेर्यः।
विद्याविवादे विजिताननेन यः शूलमारोपयति स्म बौद्धान्॥ ४१

आनीय यः कूपशमीमहेशान्वैश्याविवाहे विववार साक्ष्यम्।
लीलास्वनन्तास्वपि यस्य दृष्टा लीलाचतुःषष्टिरियं पुराणे॥ ४२

आलम्बमेकं जगतां त्रयाणामव्याजकारुण्यसुधानिधानम्।
तं तादृशं त्वामपहाय शंभो किं तावदन्यैरिह किंपचानैः॥ ४३

(शिवलीलार्णवतः)

॥ श्रीः ॥

# श्री मीनाक्षी सुप्रभातम्

श्रीस्वामिशास्त्रिणा अनन्तानन्दनाथेन विरचितम्

ओम् नमो भगवत्यै श्रीचन्द्रशेखरमूर्तये।
सच्चिदानन्दरूपिण्यै स्वात्मबोधप्रपूर्तये॥

श्रीमान् गजास्यो मधुरापुरस्थो लंबोदरो मीनदृगात्मजो यः।
त्रिप्रस्थपूर्णाकृतिमोदकाढ्यः क्रियाद्गणेशो मम सुप्रभातम्॥ १

मातंगकन्येति कवीन्द्रवन्द्या विद्यावतीपुण्यफलप्रदा या।
श्रीपाण्ड्यराजस्य सुता च साऽम्बा करोतु देवी मम सुप्रभातम्॥ २

चिदग्निजाता मधुरापुरेशी पट्टाभिषिक्ता मलयध्वजेन।
यया जिता दिक्पतयो नृपाश्च करोतु देवी मम सुप्रभातम्॥ ३

या त्रिस्तनीशानजयाय गत्वा दृष्ट्वा महेशं त्वतिसुन्दरांगम्।
संमोहिताऽभूज्जनमोहदात्री करोतु देवी मम सुप्रभातम्॥ ४

श्रीसुन्दरेशेक्षणमात्रलुप्तमध्यस्तनी शान्तमहेशयुद्धा।
मीनाम्बका श्रीमधुरापुरेशी करोतु देवी मम सुप्रभातम्॥ ५

वाक्कामशक्त्यादिमबीजपूर्वमन्त्रस्य लक्ष्यार्थतनुर्महेशी।
षडङ्गशक्त्यावृतबिन्दुवासा करोतु देवी मम सुप्रभातम्॥ ६

परप्रकाशादिमशङ्करान्त श्रीदिव्यसिद्धौघसुमानवौघैः।
सदा परीता गुरुभिः स्वचक्रे करोतु देवी मम सुप्रभातम्॥ ७

रत्यादि शक्तित्रयपञ्चबाणबाणैश्च कामादिमपञ्चमारैः।
या सेविता मीननिभस्वनेत्रा करोतु देवी मम सुप्रभातम्॥ ८

ब्राह्म्यादिशक्त्यष्टकसेविता या लक्ष्म्यादिशक्त्यष्टकसंश्रिताऽम्बा।
कदम्बकान्तारतलैकवासा करोतु देवी मम सुप्रभातम्॥ ९

वज्रादिसंशोभितहस्तपद्म वामादिभिष्षोडशशक्तिभिर्या।
समावृता सा प्रियकप्रियाम्बा करोतु देवी मम सुप्रभातम्॥ १०

त्रिशूलसंशोभिकरासितांगमुख्यैर्वृता ह्यष्टसुभैरवैर्या।
मीनाम्बका नीपवनैकवासा करोतु देवी मम सुप्रभातम्॥ ११

मातङ्गिनीपूर्वकशक्तिसंघैः गणेशपूर्वत्रिदिवैश्चतुर्भिः।
शुकप्रियाऽम्बा परिसेव्यमाना करोतु देवी मम सुप्रभातम्॥ १२

श्रीशारिकावेणुविपञ्चिकाढ्या श्रीद्वादशान्तस्थमतङ्गकन्या।
या वै लघुश्यामतनुर्झषाक्षी करोतु देवी मम सुप्रभातम्॥ १३

वाग्वादिनी या नकुलीति देवी संकीर्त्यते सिद्धजनैः प्रपंचे।
कवित्वदा कामितदा झषाक्षी करोतु देवी मम सुप्रभातम्॥ १४

सप्तस्वराणामपि लक्ष्यभूता संगीतयोगिन्यभिधीयते या।
सानन्दरूपा झषलोचनांबा करोतु देवी मम सुप्रभातम्॥ १५

सच्चित्स्वरूपा भवसंगरे मे जयप्रदा चन्द्रकलावतंसा।
गुरुस्वरूपा मधुरापुरेशी करोतु देवी मम सुप्रभातम्॥ १६

स्वर्णाब्जिनीतीरविहारशीलपदाम्बुजा वर्णतनूरपर्णा।
भवान्धतामिस्रसमावृतस्य करोतु देवी मम सुप्रभातम्॥ १७

अनन्तनागेन्द्रशयानविष्णु सहोद्भवा नीलतनुर्झषाक्षी।
अनन्तकल्याणगुणैकभूमिः करोतु देवी मम सुप्रभातम्॥ १८

* * *

## श्रीमीनाक्षीषोडशोपचारस्तुतिः

इक्षुकोदण्ड पुष्पेषु पाशाङ्कुशकरोज्ज्वलाम्।
उद्यत्सूर्यनिभां वन्दे महात्रिपुरसुन्दरीम्॥ १

श्रीमत्सुन्दरनाथस्य देवीं शफरलोचनाम्।
कलये हृदये नित्यं कदम्बवनवासिनीम्॥ २

बालार्कारुणपद्मपीठनिलयां वामादिशक्त्यावृतां
एलागन्धि सुकुन्तलां द्विनयनां हेमाम्बरालङ्कृताम्।
वामे लम्बित दोर्लतां सुचरणां दक्षेधृतेन्दीवरां
श्यामाभां शरदिन्दुचारुवदनां वन्दे सुमीनेक्षणाम्॥ ३

आगच्छ वरदे देवि सर्वसंपत्प्रदायिनि।
पूजां गृहाण सुमुखि नमस्ते शङ्करप्रिये॥ ४

श्रीमीनाक्षि महाभागे रक्षार्थं मम सर्वदा।
आवाहयाम्यहं देवि सर्वकामार्थसिद्धये॥ ५

अनेकरत्नसंयुक्तं नानामणि गणान्वितम्।
कार्तस्वरमयं दिव्यमासनं प्रतिगृह्यताम्॥ ६

गंगादि सर्वतीर्थेभ्यो मया प्रार्थनयाऽऽहृतम्।
तोयमेतत्सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम्॥ ७

निधीनां सर्वरत्नानां त्वमनर्घ्यगुणा ह्यसि।
सिंहासन स्थिते देवि गृहाणार्घ्यं नमोऽस्तु ते।। ८

कर्पूरेण सुगन्धेन सुरभि स्वादु शीतलम्।
तोयमाचमनीयार्थं देवि त्वं प्रतिगृह्यताम्।। ९

मन्दाकिन्याः समानीतैः हेमांभोरुह वासितैः।
स्नानं कुरुष्व देवेशि सलिलैश्च सुगन्धिभिः।। १०

पट्टकूलयुतं देवि कञ्चुकेन समन्वितम्।
परिदेहि कृपां कृत्वा सर्वसंपत्प्रदायिनि।। ११

स्वर्णसूत्रमयं दिव्यं ब्रह्मणा निर्मितं पुरा।
उपवीतं मया दत्तं गृहाण परमेश्वरि।। १२

श्रीकण्ठचन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्।
विलेपनं च देवेशि चन्दनं प्रतिगृह्यताम्।। १३

हरिद्रां कुंकुमं चैव सिन्दूरं कज्जलं तथा।
सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि।। १४

अक्षतान्निर्मलान्शुद्धान् मुक्तामणि समन्वितान्।
गृहाणेमान् महादेवि देहि मे निर्मलां धियम्।। १५

मांगल्य मणि संयुक्तं मुक्ताफलसमन्वितम्।
दत्तं मङ्गल सूत्रं ते गृहाण शिववल्लभे।। १६

रत्नताटङ्ककेयूर हार कङ्कणमण्डिते।
भूषणं गृह्यतां देवि नमस्ते पाण्ड्यनन्दिनि।। १७

जाजी पुन्नागमन्दार केतकीचंपकानि च।
पुष्पाणि तव पूजार्थं अर्पयामि सदा शिवे।। १८

राजमातङ्ग्यै नमः पादौ पूजयामि। कात्यायन्यै - जंघे। मङ्गलायै - जानू। हैमवत्यै - ऊरू। ईश्वर्यै - कटी। शिवप्रियायै - नाभिं। भवदायै - उदरं। क्षमायै - हृदयम्। कौमार्यै - स्तनौ। उमायै - हस्तौ। महागौर्यै - दक्षबाहुं। वैष्णव्यै - वामबाहुं। रमायै - स्कन्धौ। अपर्णायै - कण्ठं। स्कन्दमात्रे - मुखं। चण्डिकायै - नेत्रे। गिरिजायै - ललाटं। पाण्ड्यकुमार्यै - शिरः। मलयध्वजपाण्ड्य काञ्चनमालात्मजायै नमः - सर्वाण्यङ्गानि पूजयामि। (अष्टोत्तरशतनामार्चना)

दशाङ्गं गुग्गुलुं धूपं चन्दनागरु संयुतम्।
समर्पितं मया भक्त्या श्रीदेवि प्रतिगृह्यताम्॥ १९

घृतवर्ति समायुक्तं महातेजो महोज्ज्वलम्।
दर्शयाम्यनघे दीपं सुप्रीता भव सर्वदा॥ २०

अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम्।
नैवेद्यं गृह्यतां देवि भक्तिं मे ह्यचलां कुरु॥ २१

एलालवङ्ग कस्तूरीपूगपत्रेन्दुवासिताम्।
तांबूलवीटिकां हृद्यां अर्पयामि सुरेश्वरि॥ २२

नीराजनं सुमंगल्यं तारावलिसमप्रभम्।
अहं भक्त्या प्रदास्यामि स्वीकुरुष्व दयानिधे॥ २३

मन्दार पारिजाताब्ज पाटलाकेतकादिभिः।
सस्वर्णैर्देवि कलितं मन्त्रपुष्पं इदं शुभे॥ २४

शरण्ये वरदे देवि सर्वमङ्गलमङ्गले।
प्रदक्षिण नतीः कुर्वे मीनाक्षि वरदा भव॥ २५

साधु वाऽसाधु वा कर्म ज्ञानतोऽज्ञानतः कृतम्।
सर्वं सुकृतमेवास्तु कृपया ते मनस्विनि॥ २६

# श्रीमीनाक्ष्यष्टोत्तरशतनामस्तोत्रम्

मातङ्ग्यै नमः । विजयायै । श्यामायै । सचिवेश्यै । शुकप्रियायै । नीपप्रियायै । कदम्बेश्यै । मदाघूर्णितलोचनायै । भक्तानुरक्तायै । मन्त्रेश्यै । पुष्पिण्यै । मन्त्रिण्यै । शिवायै । कलावत्यै । रक्तवस्त्रायै । अभिरामायै । सुमध्यमायै । त्रिकोण मध्यनिलयायै । चारु चन्द्रावतंसिन्यै । रहः पूज्यायै नमः । (२०)

रहः केलये नमः । योनिरूपायै । महेश्वर्यै । भगप्रियायै । भगाराध्यायै । सुभगायै । भगमालिन्यै । रतिप्रियायै । चतुर्बाहवे । सुवेण्यै । चारुहासिन्यै । मधुप्रियायै । श्रीजनन्यै । शर्वाण्यै । शिवात्मिकायै । राज्यलक्ष्मीप्रदायै । नित्यायै । नीपोद्याननिवासिन्यै । वीणावत्यै । कम्बुकण्ठ्यै नमः । (४०)

कामेश्यै नमः । यज्ञरूपिण्यै । सङ्गीतरसिकायै । नादप्रियायै । नीलोत्पलद्युत्यै । मतङ्गतनयायै । लक्ष्म्यै । व्यापिन्यै । सर्वरञ्जिन्यै । दिव्यचन्दनदिग्धांग्यै । यावकार्द्रपदांबुजायै । कस्तूरीतिलकायै । सुभ्रुवे । बिंबोष्ठ्यै । मदालसायै । विद्याराज्ञ्यै । भगवत्यै । सुधापानानुमोदिन्यै । शंखताटङ्किन्यै । गुह्यायै नमः । (६०)

योषित्पुरुषमोहिन्यै नमः । किङ्करीभूतगीर्वाण्यै । कौलिन्यै । अक्षररूपिण्यै । विद्युत्कपोलफलिकायै । मुक्तारत्नविभूषितायै । सुनासायै । तनुमध्यायै । श्रीविद्यायै । भुवनेश्वर्यै । पृथुस्तन्यै । ब्रह्मविद्यायै । सुधासगरवासिन्यै । गुह्यविद्यायै । अनवद्यांग्यै । यन्त्रिण्यै । रतिलोलुपायै । त्रैलोक्यसुन्दर्यै । रम्यायै । स्रग्विण्यै नमः । (८०)

कीरधारिण्यै नमः । आत्मैक्यसुमुखीभूत जगदाह्लाद कारिण्यै । कल्पातीतायै । कुण्डलिन्यै । कलाधरायै । मनस्विन्यै । अचिन्त्यानन्तविभवायै । रत्नसिंहासनेश्वर्यै । पद्मासनायै । कामकलायै । स्वयंभूकुसुमप्रियायै । कल्याण्यै । नित्यपुष्पायै । शांभव्यै । वरदायिन्यै । सर्वविद्याप्रदायै वाच्यायै । गुह्योपनिषदुत्तमायै । नृपवश्यकर्यै । भोक्त्र्यै । जगत्प्रत्यक्षसाक्षिण्यै नमः । (१००)

ब्रह्मविष्णीशजनन्यै नमः । सर्वसौभाग्यदायिन्यै । गुह्यातिगुह्यगोप्त्र्यै । नित्यक्लिन्नायै । अमृतोद्भवायै । कैवल्यदात्र्यै । वशिन्यै । सर्वसंपत्प्रदायिन्यै नमः । (१०८)

श्रीश्यामलांबिकायैनमः । श्रीमीनाक्ष्यंबिकायै नमः ॥

## श्यामानामानि षोडश

संगीतयोगिन्यै नमः । श्यामायै । श्यामलायै । मन्त्रनायिकायै । मन्त्रिण्यै । सचिवैशान्यै । प्रधानेश्यै । शुकप्रियायै । वीणावत्यै । वैणिक्यै । मुद्रिण्यै । प्रियकप्रियायै । नीपप्रियायै । कदंबेश्यै । कदम्बवनवासिन्यै । सदामदायै । (१६)

## मातङ्गीस्तुतिः

ध्यायेयं रत्नपीठे शुककलपठितं शृण्वतीं श्यामलाङ्गीं
न्यस्तैकाङ्घ्रिं सरोजे शशिशकलधरां वल्लकीं वादयन्तीम् ।
कल्हाराबद्धमालां नियमितविलसच्चूलिकां रक्तवस्त्रां
मातङ्गीं शङ्खपत्रां मधुमदविवशां चित्रकोद्भासि फालाम् ॥ १

आराध्य मातश्चरणाम्बुजं ते ब्रह्मादयो विश्रुतकीर्तिमापुः ।
अन्ये परं वाग्विभवं मुनीन्द्राः परां श्रियं भक्तिभरेण चान्ये ॥ २

नमामि देवीं नवचन्द्रमौलेः मातङ्गिनीं चन्द्रकलावतंसाम्।
आम्नायवाग्भिः प्रतिपादितार्थं प्रबोधयन्तीं शुकमादरेण॥ ३

विनम्रदेवासुरमौलिरत्नैः नीराजितं ते चरणारविन्दम्।
भजन्ति यं देवि महीपतीनां व्रजन्ति ते सम्पदमादरेण॥ ४

मातङ्गलीलागमने भवत्याः शिञ्जानमञ्जीरमिषाद्भजन्ते।
मातस्त्वदीयं चरणारविन्दं अकृत्रिमाणां वचसां निगुम्भः॥ ५

पदात्पदं शिञ्जितनूपुराभ्यां कृतार्थयन्ती पदवीं पदाभ्याम्।
आस्फालयन्ती कलवल्लकीं तां मातङ्गिनी मद्धृदयं धिनोतु॥ ६

नीलांशुकाबद्ध नितम्बबिम्बां तालीदलेनार्पित कर्णभूषाम्।
माध्वीमदाघूर्णित नेत्रपद्मां घनस्तनीं शम्भुवधूं नमामि॥ ७

तडिल्लताकान्तमनर्घभूषं चिरेण लक्ष्यं नवरोमराज्या।
स्मरामि भक्त्या जगतामधीशे वलित्रयाङ्कं तव मध्यबिम्बम्॥ ८

नीलोत्पलानां श्रियमाहरन्तीं कान्त्या कटाक्षैः कमलाकराणाम्।
कदम्बमालाञ्चित केशपाशां मातङ्गकन्यां हृदि भावयामः॥ ९

ध्यायेयमारक्तकपोलकान्तं बिम्बाधरन्यस्तललामरम्यम्।
आलोलनीलालकमायताक्षं मन्दस्मितं ते वदनं महेशि॥ १०

स्तुत्याऽनया शङ्करधर्मपत्नीं मातङ्गिनीं वागधिदेवतां ताम्।
स्तुवन्ति ये भक्तियुता मनुष्याः परां श्रियं नित्यमुपाश्रयन्ति॥

*--शारदातिलकतः।*

## मातङ्गीध्यानम्

उन्मीलद्यौवनोद्यन्निबिडमदभरोद्वेल लीलाविलासां
रत्नग्रैवेयहाराङ्गदकनककटीसूत्रमञ्जीरघोषाम्।
आनीयार्थानभीष्टान् स्मितमधुरदृशा साधकांस्तपर्यन्तीं
देवीं वन्दे शुकाभां शुकमखिलकलारूपमस्याश्च पार्श्वे।। १

श्यामां शुभ्रांशुभालां त्रिकमलनयनां रत्नसिंहासनस्थां
भक्ताभीष्टप्रदात्रीं सुरनिकरकरासेव्यकञ्जांघ्रि युग्माम्।
नीलांभोजांशुकान्तिं निशिचरनिकरण्यदावाग्निरूपां
पाशं खड्गं दधानां भज कमलकरैः खेटकं चाङ्कुशञ्च।। २

नमस्ते मातङ्ग्यै मृदुमृदिततन्वै तनुमतां
परश्रेयोदायै कमलचरण ध्यानमनसाम्।
सदा संसेव्यायै सदसि बिबुधैः दिव्य धिषणा
दयार्द्रायै देव्यै दुरितदलनोद्दण्डमनसे।। ३

